श्रीवाजसनेयि — माध्यन्दिन —

# शतपथब्राह्मणम्

# The Śatapathabrāhmaṇa

ACCORDING TO THE
MĀDHYANDINA RECENSION
WITH THE
COMMENTARIES OF
SĀYAṆĀCĀRYA
AND
HARISVĀMIN

श्रीवाजसनेयि – माध्यन्दिन –

# शतपथब्राह्मणम्

# The Śatapathabrāhmaṇa

ACCORDING TO
THE MĀDHYANDINA RECENSION
WITH THE
COMMENTARY OF
SĀYAṆĀCĀRYA
AND
HARISVĀMIN

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथ-ब्राह्मणम् ।

तत्र

## बृहदारण्यकोपनिषत् ।

श्रीवासुदेवब्रह्मभगवत्कृत-
वासुदेवप्रकाशिकाख्यभाष्यसमेता ।
बहुभिर्विद्वद्भिः परिशोधिता च ।

चतुर्दशकाण्डात्मक उत्तरसंज्ञको
ब्रह्मविद्यानिरूपकः

पंचमो भागः ५॥

NAG PUBLISHERS

नाग प्रकाशक
११ ए/यू. ए., जवाहर नगर, दिल्ली-७

ॐ

SHRIMAD-VAJSANEYI-MADHYANDIN-

# SHATPATH - BRÂHMANAM

## BRIHADARANYAKOPANISHAT

WITH VASUDEVAPRAKASHIKA COMMENTARY

SHRI VASUDEVA BRAHMA BHAGWAT

Edited by several learned persons

**Part V.**

**Chapter XIV dealing Brahmavidya.**

NAG PUBLISHERS

NAG PUBLISHERS
11A/U. A. JAWAHAR NAGAR,
DELHI-110007 (INDIA)

॥ श्रीः ॥

# अथोत्तराख्ये भागे चतुर्दशकाण्डे षडध्याय्यां बृहदारण्यकोपनिषदि

## विषयाणामनुक्रमणिका ।

### तत्रादिमे आगमप्रधाने मधुकाण्डे–


| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

**प्रथमोऽध्यायः ।**

१ **उद्गीथब्राह्मणं वैराजब्राह्मणं वा–तत्र च प्रथमं** मृत्य्वात्मभावसाधनभूतयोः कर्मज्ञानयोर्यत उद्भवस्तस्योद्भावकस्योपास्यस्य प्राणस्य स्वरूपनिर्णायिकाया आख्यायिकायाः कथनं, तस्यां च देवा असुराश्चेति द्विप्रकाराः प्राजापत्यास्तेऽन्योन्यमस्पर्द्धन्तेत्यभिधाय तत्रासुराणां बाहुल्यात्तैरभिभूयमाना अल्पा देवाः किं कृतवन्त इत्यभिधानं, विधित्सितस्य शुद्धादिगुणविशिष्टप्राणविज्ञानस्य स्वरूपनिर्द्धारणाय परीक्षाप्रकारनिरूपणं, तत्र क्रमेण वाक्प्राणचक्षुःश्रोत्रमनोदेवतानां परीक्षाया निरूपणम्, एवं वागादयो मृत्योरतिक्रमणेऽसमर्था इति निश्चित्याशरणाः सन्तो देवा मृत्यवतिगमनाय मुख्यं प्राणमेव प्रार्थितवन्त इत्यभिधानं, वक्ष्यमाणैरयास्याङ्गिरसदूर्भिर्गुणैर्विशिष्टस्य विधानपूर्वकस्य प्राणकर्मकोपासनस्याख्यायिकां पुरस्कृत्य विविधफलस्य स्फुटीकरणं, प्राणस्य स्वतः शुद्धत्वेऽपि अशुद्धवागादिसम्बन्धादशुद्धत्वं स्यादिति शङ्कां वारयितुं पाप्महानिफलासाधारणगुणकस्य विशिष्टस्योपासनस्य निरूपणम्, अयास्यादिगुणविशिष्टप्राणविदः फलाभिधानम्, उक्तार्थस्यैव स्पष्टीकरणं, देवताभावफलाभिधानम्, एवं सामान्येनोक्तस्यातिवहनस्य प्रत्येकपरत्वेन निरूपणं, वागादीनामग्न्यादिदेवतात्वप्राप्तावपि उपासकस्य किमायातमिति तन्निरूपणं, उपास्यस्य प्राणस्य कार्यकारणसंघातविधारकत्वस्य नामगुणान्तरस्य च सहेतुकं निरूपणम्, एवं प्राणस्यैव स्वातंत्र्येणान्नकृतोपकारभाजित्वं वागादीनां तु तद्द्वारकमिति कथं निश्चेतुं शक्यमित्याशंक्य यन्निश्चयादनेनैवेत्येवकारस्य सार्थकत्वं स्यादित्यतस्तन्निर्णयार्थाभिधानम्, एतद्गुणविज्ञानफलप्रदर्शनद्वारा फलसहितस्य गुणजातस्य निरूपणं, प्राणविद्यां स्तोतुं तद्विद्याविद्वेषिणो दोषाभिधानं, प्राणविदनुरक्तस्य लाभप्रदर्शनं च, पूर्वोक्तायास्यत्वेन प्रतिज्ञातस्याङ्गिरसत्वस्य विवरणं, बृहस्पत्यादिनामराशिधर्मकं प्राणोपासनं वक्तुं तस्य प्राणस्य क्रमादृग्यजुःसामात्मत्वस्य सोपपत्तिकं प्रतिपादनं, पुनस्तत्रास्यैव प्राणस्य प्रकारान्तरेण सामत्वस्योपासनार्थं निरूपणम्, एतद्गुणकप्राणोपासनफलस्य प्रतिपादनं च, इदं चोक्तं फलं मध्यप्रदीपन्यायेनोभयतः सम्बद्धमित्यवधार्येमामेव फलश्रुतिमनुसृत्याख्यायिकयोद्गीथादिगुणान्तरस्याभिधानम्, एवमुद्गीथदेवता प्राण एवेति निर्द्धार्य

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| तस्य सार्थवादं सोपपत्तिकं स्वसुवर्णप्रतिष्ठागुणविधानम्, एवं प्राणविज्ञानवतो मंत्रत्रयजपस्य सफलं विधानम्, उक्तमंत्रत्रयस्य श्रुतिकर्तृकं व्याख्यानम्, प्राणवदुद्गातुरपि स्वार्थं गानमस्तीत्यभिधानम्, अस्योद्गातुः सर्वफलसाधकत्वकथनम्, एवं समुच्चितादुपासनात्फलसिद्धावाशंकासम्भवाभावेऽपि केवलादुपासनात्तत्सिद्धिशंका स्यात्तस्या निराकरणकथनं चेत्यादि. | १–१६ |
| २ **पुरुषविधब्राह्मणं वा आत्मब्राह्मणं वा सृष्टिब्राह्मणम्**—तत्र चैवं ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वव्याप्तिं व्याख्यायेदानीमस्य प्रजापतेः फलभूतस्य जगत्सर्जनस्थितिसंहारेषु स्वातन्त्र्यादिविभूत्युपवर्णनेन तं स्तोतुं ज्ञानकर्मणोर्वैदिकयोः फलोत्कर्षस्य वर्णनं, तत्र प्रथमं सहेतुकं प्रजापतेरुपासनार्थमहमिति यन्नाम तस्य निर्वचनं, ततः प्रजापतेः पुरुषनामनिर्वचनम्, एतद्गुणविज्ञानफलाभिधानं च, प्राजापत्यलक्षणं ज्ञानकर्मफलं संसारविषयं नैवात्यक्रामदित्यस्यार्थस्य प्रदर्शनद्वारा प्रजापतेर्भयाद्याविष्टत्वेन संसारान्तर्भूतत्वप्रतिपादनं, तत्रैवारत्याविष्टत्वे हेत्वन्तरं प्रतिपाद्य प्रजापतेस्तन्निरसनोद्योगप्रकारस्याभिधानं, लोकप्रसिद्धयोर्दम्पत्योरुक्ते निर्वचने लोकानुभवप्रदर्शनम्, उक्तेऽर्थेऽभियुक्तयाज्ञवल्क्यसम्मतिमभिधाय हेत्वन्तराभिधानं, सृष्टिर्मिथुनद्वारिकेत्यभिधाय गवादिसृष्टेरभिधानं, वक्ष्यमाणाग्निसोमेन्द्रादिसृष्टिं सिद्धवन्मत्वा सर्वस्याः सृष्टेरुपसंहरणवर्णनं, स्रष्टुरेतद्गुणविदः फलाभिधानं च, एवमनुग्राह्यसृष्टिमुक्त्वाऽनुग्राहकसृष्टेरुपक्रमनिरूपणं, तत्राविद्वन्मतप्रत्याख्यानसहितं सोपसंहारमेकस्यैव प्रजापतेर्द्विधोपास्यत्वायाग्न्यन्नसर्गयोः सोपपत्तिकं निरूपणम्, एवमनुग्राहकदेवसृष्टिमभिधाय तां प्रशस्य चैतादृशः प्रजापतेरुपासकस्य फलनिरूपणम्, एतावतोक्तस्य जगतः व्याकृतस्य सबीजसंसारोद्धरणप्रयोजनाया बीजभूताया अव्याकृतावस्थायाः सदृष्टान्तं सोपपत्तिकं विवरणम्, एवं मूलकारणं तत्कार्यं चाभिधाय तत्र कार्यस्रष्टुः प्रविष्टत्वपृथक्त्वयोः सहेतुकं प्रतिपादनं, यः कृत्स्नदर्शी स ब्रह्मात्मतत्त्वदर्शीत्याकांक्षापूर्वकं ब्रह्मविद्यासूत्रस्यावतरणं, तत्र पुनस्तस्यात्मनः सहेतुकं कृत्स्नत्वं सहेतुकं पदनीयत्वं च प्रतिपाद्य तत्र पदनीये उपायनिरूपणं, प्रोक्तविज्ञानस्य गुणफलनिरूपणं च, कुतोऽन्यत्सर्वमनादृत्यात्मतत्त्वमेव विज्ञेयमित्याशंकायां लोकदृष्टिमवष्टभ्य समाधानकथनम्, एवमात्मनि मुख्या प्रीतिरनात्मनि त्वमुख्या प्रीतिरिति स्थिते यत्फलितं तस्य निरूपणं, यदर्थो कृत्स्नाऽप्युपनिषत्तस्यैतस्य सूत्रस्य व्याचिख्यासया प्रयोजनाभिधित्सया चादावुपोद्घातत्वेन प्रश्नत्रयस्य प्रतिपादनम्, एतेषां प्रश्नानां क्रमेण सर्वदोषानागन्धितप्रतिवचननिरूपणं, तत्र प्रसङ्गाद्ब्रह्मविद्यायामग्निहोत्रादाविव मनुष्यत्वाद्यधिकारिविशेषणनियमो नास्तीत्यभिधानम्, अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः कथमित्येतस्यार्थस्य दार्ढ्याय | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |
| श्रुतिप्रदर्शितं मन्त्रमुदाहृत्य तद्द्वारा सोपपत्तिकं विद्यासूत्रं विविच्याविद्यासूत्रस्य सोपपत्तिकं विवेचनं, पूर्वमनुग्राहकदेवतासर्गं प्रक्रम्याग्नेरेवार्थाद्ब्रह्मसृष्टिरुक्तेदानीमविद्यां प्रस्तुत्य कर्मणः श्रेयसे तन्नियामकक्षत्त्रसृष्टेरभिधानं, तथा कर्माङ्गभूतद्रव्योपार्जनार्थं वैश्यसृष्टेरभिधानं परिचारकशूद्रसृष्टेरभिधानं च, ततः क्षत्त्रस्योग्रत्वात्तन्नियन्तृधर्मसर्गस्य प्रतिपादनम्, उक्तेऽर्थे लोकप्रसिद्धेरभिधानम्, इत्थं देवेषु दर्शितस्य चातुर्वर्ण्यस्य मनुष्येष्वपि योजयित्वा प्रदर्शनं, केचित्त्वाग्न्यादिसाध्यकर्मणा मोक्षमिच्छन्तीति तेषां मतमनूद्य तस्य सोपपत्तिकं प्रत्याख्यानं, तत्र तावन्मोक्षसाधनानि यानि कर्माणि तानि कानि ? के च तैर्यष्टव्या देवादयः ? तेषामुभयेषां सप्रपञ्चं निरूपणं, येन प्रयुक्तो मनुष्यो ग्रहग्रस्त इवावशः सन्स्वात्मलोकबहिर्मुखीभूतो दुःखात्मके कर्मण्येव प्रवर्तेत इति स कः प्रवर्तक इत्यपेक्षायां काम एवेति निर्णयार्थं सप्रपञ्चं निरूपणम्, अन्तेऽन्त्येज्ञस्य पांक्तत्ववद्ब्राह्मयज्ञस्यापि सफलं पांक्तत्वप्रतिपादनं चेत्यादि. | १६—३९ |
| ३ सप्तान्नब्राह्मणं वा संवर्गविद्याब्राह्मणम्—तत्र चैवं कामप्रयुक्तेन पुरुषेण पांक्तज्ञानकर्मभ्यां वा केवलज्ञानेन वाऽध्यमानत्वेन सृष्टस्यान्नभूतस्य जगत उपासनार्थं विभागेन सप्तधा निरूपणं, तत्र संक्षेपतः सविनियोगान्नप्रकाशकानां सूत्रभूतानां मन्त्राणामुदाहरणं, तत्र पयसोऽन्नत्वे हेतुं प्रतिपाद्यान्नस्याक्षयत्वे च हेतुं प्रतिपाद्यान्नस्याक्षितित्वगुणविज्ञाने फलनिरूपणम्, एतेषां मन्त्राणां तिरोहितार्थत्वेन तत्तन्मन्त्रस्य प्रतीकग्रहणपूर्वकं व्याख्यानं, तत्रोक्तसप्तान्नविनियोजकमन्त्रभागस्य व्याख्यानम्, तत्रापि विशेषतः सर्वसाधारणस्यान्नस्यासाधारणीकुर्वतो दोषप्रदर्शनम्—मनुष्याणां पशूनां च पयोरूपमेकमेवान्नमिति सकारणमभिधानं-पशूनां पयोऽन्नमस्तीत्यत्र लोकप्रसिद्धेः प्रदर्शनं-पयसि हीदं सर्वं प्रतिष्ठितमिति विधित्सितदर्शनस्तुत्यर्थं मतान्तरमुद्भाव्य तस्य निन्दार्थवादप्रतिपादनं च, एवं पाठक्रमं विहायार्थक्रमवशात्साधनभूतमन्नचतुष्टयं व्याख्यायेदानीं पांक्तस्य कर्मणः फलभूतं क्रमेणाध्यात्ममधिभूतमधिदैवमन्नत्रयं कार्यत्वाद्विस्तीर्णविषयत्वाद्यत्पूर्वस्मादन्नचतुष्टयात्पृथगुत्कृष्टं तस्य व्याख्यानं, तत्र मनोवाक्प्राणरूपेऽन्नत्रये आध्यात्मिकस्य मनसः सप्रमाणमस्तित्वं निरूप्य तत्स्वरूपस्य सोपपत्तिकं निरूपणम्, आध्यात्मिकाया वाचः स्वरूपमभिधायाध्यात्मिकस्य प्राणस्य सप्रमाणं स्वरूपनिरूपणम्, एवं वागादीनामाध्यात्मिकीं विभूतिमुक्त्वाऽऽधिभौतिक्या विभूतेर्विस्तारनिरूपणं, तत्र वागादीनां लोकत्रयात्मकत्वं वेदत्रयात्मकत्वं देवपितृमनुष्यात्मकत्वं पितृमातृप्रजात्मकत्वं चेत्यादिनिरूपणं, तथा वागादीनां पुनर्विज्ञातविजिज्ञास्याविज्ञातवस्त्वात्मकत्वनिरूपणम्, एवं वागादीनामाधिभौतिकं विस्तारमुक्त्वा आधिदैविकविस्तारस्य प्रतिपादनं, तत्राध्यात्माधिभूतं च या | |

ब्रा० विषयाः पृष्ठाङ्काः

वाक्परिच्छिन्ना तस्या आधिदैविकवागंशत्वादंशांशिनोश्च तादात्म्यात्तया सह तुल्यपरिमाणत्वप्रदर्शनम्, तथाऽध्यात्माधिभूतं च मनःप्राणयोराधिदैविकमनःप्राणांशत्वात्तादात्म्याभिप्रायेण तुल्यपरिमाणत्वप्रदर्शनं, तत्रापि विशिष्येन्द्रत्वासपत्नत्वादिगुणविशिष्टस्य प्राणस्य सफलमुपासनकथनं, तत आध्यात्मिकाधिभौतिकाधिदैविकानां वाङ्मनःप्राणानां ध्यानार्थं समत्वानन्तत्वादिगुणनिरूपणं, तत उक्तेऽर्थे वित्तकर्मणोः सम्भावनायाः प्रतिप्रादनद्वारा प्रजापतेः पांक्तं कर्मफलत्वमुक्त्वाऽमावास्यायां रात्रौ प्राणिनः प्राणं न विच्छिन्द्यादित्यस्य प्रासङ्गिकार्थस्य निषेधप्रयोजनसहितमभिधानं, यत्पूर्वमाधिदैविकत्रयात्मकप्रजापत्युपासनमुक्तं तदहमस्मि प्रजापतिरित्यहंग्रहेण कर्तव्यमिति दृष्टान्तं सफलमभिधानं, तत उक्तेऽर्थे पुत्रकर्मापरविद्यानां साध्यलोकत्रयप्राप्तिसाधनमात्रं सामान्येनावगतं तस्यैव पुनर्विशेषज्ञानार्थं विस्तरशः प्रतिपादनं, तत्र पुत्रत्वस्य क्रियात्मकत्वात्केन प्रकारेण लोकजयहेतुत्वमित्यपेक्षायां तत्प्रकारस्य सोपपत्तिकं निरूपणं, तत्र विशेषतः पितृकर्तृकं सफलं पुत्रानुशासननिरूपणं-पुत्रशब्दनिर्वचनं—पितुः पुत्रतादात्म्येनैतल्लोकावस्थाननिरूपणं च, तत एनं कृतसम्प्रात्तिकं पितरमेते दैवा वाङ्मनःप्राणाश्च मरणधर्माण आविशन्तीति सप्रकारकं निरूपणं, "ते सर्वे समाः सर्वेऽनन्ताः" इति यत्पूर्वमविशेषेण वाङ्मनःप्राणानामुपासनमुक्तं तत्र तद्गतान्यतमविशेषप्रतिपत्त्यर्थं प्राणविषयकाध्यात्मदर्शननिरूपणं, तदर्थं प्राणव्रतमीमांसाकथनं, प्राणव्रतमभग्नत्वेन धारणीयमिति निर्धारणायाख्यायिकाकथनं, तस्यां च विशेषतः करणानामन्योऽन्यस्पर्द्धाप्रकारककथनं—प्रजापतेर्वागादिषु श्रमद्वारा स्वकर्मप्रच्युतिरासीदिति सप्रमाणमभिधानम्—प्राणव्रतधारणप्रकारकथनं—करणानां प्राणनामत्वनिरूपणम्—उक्तदर्शनफलनिरूपणम्—उक्ताध्यात्मप्राणदर्शनस्योपसंहरणं चेत्याद्यंशप्रतिपादनं, ततोऽध्यात्मवत्प्राणविषयकाधिदेवतदर्शननिरूपणम्, उक्तार्थदाढर्याय मन्त्रसंवादप्रदर्शनं, श्रुतिकर्तृकं संवादमन्त्रस्य व्याख्यानं, प्रकरणार्थस्योपसंहरणं, प्राणव्रताकरणे बाधकनिरूपणं, प्राणव्रतमामरणमनुवर्तयेदिति प्रतिपादनम्, अहं च सर्वभूतेषु सूत्ररूपप्राणात्मा सर्वपरिस्पन्दकृदित्येवंप्राणोपासकस्य फलाभिधानं चेत्यादि. ३६-९३

४ **व्यन्नब्राह्मणं वा अविद्याविषयकसंसारतत्त्वप्रदर्शकं ब्राह्मणं वा उपसंहारब्राह्मणम्**—तत्र च पूर्वब्राह्मणे सूत्रिताया अविद्यायाः साध्यसाधनलक्षणो व्याकृताव्याकृतरूपो विस्तरो निरूपित इदानीं तस्यैव प्रतिपत्तिसौकर्याय नामरूपकर्मत्वेनोपसंहारस्य प्रतिपादनं, तत्र च क्रमेण देवदत्तयज्ञदत्तप्रभृतीनां नामविशेषाणां—सितासितप्रभृतीनां रूपाणां—मननदर्शनचलनप्रभृतीनां सर्वकर्मविशेषाणां सोपपत्तिकं विवरणम्, एवं नामरूपकर्म-

ब्रा० विषयाः पृष्ठाङ्काः

त्वेन संक्षिप्तस्यापि जगतः पुनः संक्षेपान्तरकथनं, एकस्मिन्नपि संघाते कार्यकारणरूपेणावान्तरविभागकथनं—तत्प्रतिपादकवाक्यस्य श्रुतिकर्तृकं व्याख्यानं चेति. ९४–९६

इति प्रथमोऽध्यायः।

## अथ द्वितीयोऽध्यायः।

१ अजातशत्रुब्राह्मणं वा पर्यङ्कविद्याब्राह्मणम्—तत्र प्रथमेऽध्याये सूत्रितयोर्विद्याविद्ययोर्मध्येऽविद्यायाः प्रपञ्चो निरूपितः, सम्प्रत्यस्मिन्नध्याये विद्यायाः प्रपञ्चस्य निरूपणम्। तत्रादौ वक्तृश्रोतृरूपाख्यायिकयाऽविद्याविषयमेव ब्रह्मत्वेनोपक्षिप्य तत्प्रत्याख्यानं, तत्रापि प्रथमं गार्ग्येण दृप्तबालाकिनाऽजातशत्रो राज्ञः श्रवणायाभिमुखीकरणप्रकारकथनं, ततः संवादेन पर्यायशः आदित्यचन्द्रविद्युदाकाशवाय्वग्न्यबादर्शदिक्षु स्थितं पुरुषं तथा गच्छतः पृष्ठदेशे समुत्पन्नं शब्दं छायामयं पुरुषं तत्तद्गुणविशिष्टतयाऽहं ब्रह्मोपास इति दृप्तबालाकिनोक्तेऽजातशत्रोस्तत्तद्गुणानुरोधेन प्रतिपर्यायमुपासनफलनिरूपणम्, एवं व्यस्तानि ब्रह्माण्युपन्यस्यात्मन्विगुणविशिष्टमात्मनिस्थितपुरुषलक्षणं समस्तं ब्रह्माहमुपास इति दृप्तबालाकिना पुनरुक्ते निरुक्तगुणानुरोधेनाजातशत्रोरस्मिन्नपि चरमे पर्याये उपासनफलनिरूपणं, ततस्तूष्णीम्भूते गार्ग्येऽजातशत्रुस्तं " किं त्वया एतावदेव ब्रह्म विज्ञातं ? नैतावता विदितं भवतीत्युक्त्वा नित्यभिधानं, ततो गार्ग्ये ब्रह्मजिज्ञासया छात्रभावेन उपसंगते त्वां ब्रह्म ज्ञपयिष्यामीत्यजातशत्रोः प्रतिज्ञाकरणाभिधानं, प्रतिज्ञातब्रह्मावबोधार्थमुपक्रमकरणप्रतिपादनं, तत्राजातशत्रुर्यथोदाहरणं व्यतिरिक्तात्मास्तित्वं प्रतिपाद्यास्यात्मनः स्वाभाविकस्वरूपं बोधयितुमधिकरणमपादानं चोभयं पृष्ट्वानित्याद्यभिधानं, ततो जागरिते कर्तृत्वभोक्तृत्वादिकं नात्मनः स्वाभाविकं किन्तु वागाद्युपाधिसम्बन्धकृतमेव स्वप्ने तद्व्यतिरेकेण कर्तृत्वादेर्व्यतिरेकदर्शनादिति दर्शयितुं प्रश्नानुवादपूर्वकं प्रथमप्रश्नस्योत्तरनिरूपणं, यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदाऽसौ स्वात्मनि वर्तते इति कथमवगम्यत इत्यपेक्षायां नामप्रसिद्ध्या इत्यादि सयुक्तिकं निरूपणं, दर्शनलक्षणायां स्वप्नावस्थायां वागादिसम्बन्धाभावेऽपि कर्तृत्वादिसंसारस्य दर्शनाद्व्यतिरेकासिद्धिरित्याशङ्क्य तत्रापि जाग्रद्वासनायाः सत्त्वात्परिकल्पितस्य स्वप्नप्रपञ्चस्य मृषात्वान्न व्यतिरेकासिद्धिरित्यतोऽस्य स्वतः—शुद्धत्वमेवेत्यभिप्रेत्य समाधाननिरूपणं, ततो वेदशब्दप्रयोगाद्व्यभिचारदर्शनाच्चैते महाराजत्वादयो लोका मृषैव नास्यात्मभूता इत्येवमुक्तस्यार्थस्य दृष्टान्तपूर्वकं कथनं, दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वादसंसारधर्मता—इत्यात्मनो विशुद्धाताऽवगता—तत्र कामवशात्परिवर्तनमुक्तम्—इष्टदृश्यसम्बन्धश्चास्य स्वाभाविक इति पुनरशुद्धतामाशंक्य तत्सम्बन्धस्य सुषुप्तौ व्यतिरेकदर्शनेनास्वा-

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | भाविकत्वाच्छुद्धत्वमेवास्य स्वाभाविकमिति यथायथमुपपादनं, तत्रोक्तशयनस्य दृष्टान्तपूर्वकं निरूपणम्, एवं प्रथमप्रश्नस्य प्रतिवचनमुक्त्वेदानीं तस्याद्वितीयत्वं प्रकटयितुं द्वितीयप्रश्नस्य प्रतिवचननिरूपणं, प्राणोपनिषदो निरूपणं चेत्यादि. | ५७–६६ |
| २ | **सर्वान्नब्राह्मणं वा शिशुब्राह्मणम्**–तत्र पूर्वब्राह्मणान्ते उपक्रान्तां प्राणोपनिषदं विशेषतया व्याख्यातुमादौ तस्याः फलार्थवादकथनम्, एवं फलश्रवणेनाभिमुखीभूताय जिज्ञासवे शरीरमध्यस्थं प्राणं शिशुत्वेन–शरीरस्य तदाधानत्वेन–शिरसः प्रत्याधानत्वेन–बलस्य स्थूणात्वेन–अन्नस्य दामत्वेन चोपवर्णनं, ततस्तस्यैव शिशोः प्रत्याधाने शिरस्यारूढस्य चक्षुषि काश्चनोपनिषदस्तासां विवरणं, तत्राक्षितीनामुपपादनपूर्वकं तत्कर्तृकप्राणोपासनस्य निरूपणम्, एवंविधोपास्तेः फलनिरूपणम्, उक्तेऽर्थे मन्त्रसम्मतिमभिधाय तस्य मन्त्रस्य सोपपत्तिकं सहेतुकं व्याख्यानं, " प्राणा वा ऋषयः " इत्युक्ते के ते प्राणा ऋषय इत्यपेक्षायां तेषामुपपादनं, प्रसङ्गादत्रिशब्दनिर्वचनम्, अत्रिनामनिर्वचनविज्ञानस्य प्राण याथात्म्यवेदनस्य च फलप्रतिपादनं चेत्यादि. | ६७–७० |
| ३ | **मूर्तामूर्तब्राह्मणम्**–तत्र च कथमेषां प्राणानां सत्यत्वं कथं वा ततोऽध्यात्मनः सत्यत्वमिति जिज्ञासायां कार्यकारणात्मकानां सत्यानां पञ्चभूतानां स्वरूपस्यावधारणं, तत्र प्रथमं " नेति नेति " अपोह्द्वारा निर्दिधारयिषितस्य ब्रह्मणो मायामयस्य रूपद्वयस्याभिधानं, के ते मूर्तामूर्ते कानि वा कस्य वा विशेषणानीत्यपेक्षायां तद्विशेषप्रतिपत्तेर्निरूपणम्, उक्तविशेषणचतुष्टयवतो भूतत्रयस्य यत्सारिष्ठं कार्यं तस्य विशेषणानुवादपूर्वकमभिधानं, तत्रामूर्तस्याधिदैविकस्य कारणात्मकस्य ब्रह्मणो रूपनिरूपणं, ततोऽध्यात्मतया मूर्तामूर्तयोर्विभागनिरूपणम् । एवमाध्यात्मिकस्य कार्यात्मकस्य ब्रह्मणो रूपं निरूप्य कारणात्मकस्य यद्रूपं तस्य निरूपणं, ततोऽस्य कारणात्मनो यद्वासनामयं रूपं तस्य निरूपणं, चरमोक्तहिरण्यगर्भवासनारूपोपासनस्य फलाभिधानम्, एवं सत्यस्येति षष्ठ्यन्तस्य स्थूलसूक्ष्मप्रपञ्चात्मकं हेयभूतं सत्यशब्दस्यार्थं व्याख्यायानन्तरमुपादेयभूतप्रथमान्तसत्यशब्दार्थस्य सोपपत्तिकं व्याख्यानम्, प्रथमब्राह्मणान्ते " तस्योपनिषत् " इति प्रतिज्ञाताया उपनिषद उपसंहारस्य निरूपणं चेति. | ७१–७४ |
| ४ | **मैत्रेयीब्राह्मणम्**–तत्र चैवं ब्राह्मणत्रयेण निरूपिताया ब्रह्मविद्याया अङ्गत्वेन सन्न्यासं विधातुमाख्यायिकाप्रतिपादनं, तस्यां चादौ याज्ञवल्क्यः स्वस्य सन्न्यासग्रहणं प्रतिज्ञाय मैत्रेय्याः कात्यायन्या सह दायं करवाणीति प्रतिज्ञातवानित्यभिधानं, तदा हे भगवन् ! मह्यमियं सर्वा ससागरा वित्तपूर्णा च पृथिवी यदि दत्ता तेन किमहममृता स्याम् ? इति तया मैत्रेय्या पृष्टो याज्ञवल्क्यस्तेनेतरधनिकवत्ते जीवितं स्याद- | |

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

मृतत्वस्य तु नाशा कर्तव्येति प्रतिवचनं ददावित्यभिधानं, येनाहममृता न स्यां किमहं तेन कुर्याम् १ येनाहममृता स्यां तन्मे ब्रूहीति मैत्रेय्याः प्रार्थनाकरणकथनम्, एवं प्रार्थितो याज्ञवल्क्यस्तस्यै मैत्रेय्यै मोक्षसाधनमात्मज्ञानं व्याख्यास्यामि निदिध्यासस्व तदिति समाश्वास्य तदुक्तवानित्यभिधानं, ततो याज्ञवल्क्योऽमृतत्वसाधनं वैराग्यमुपदिदिक्षुर्जायापतिपुत्रादिभ्यः सकलसुखसाधनेभ्यस्तत्सन्न्यासविरागमुत्पाद्यात्मदर्शनं कर्तव्यमिति विधाय च तत्र श्रवणमनननिदिध्यासनरूपोपायत्रयं दर्शयामासेति निरूपणं, ततः कथमस्मिन्नात्मनि विदितेऽन्यत्सर्वं विदितं भवेदित्याशंक्यात्मव्यतिरेकेणान्यस्याभावादिति समाधिप्रदर्शनं, कथं पुनरिदं सर्वमात्मैवेति ग्रहीतुं शक्यत इत्याशंक्य घटः स्फुरतीत्यादिप्रत्ययमाश्रित्य चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति -यत्स्वरूपव्यतिरेकेण यस्याग्रहणं तस्य तदात्मकत्वमेवेति व्याप्तौ दृष्टान्तत्रयपूर्वकं समाधिप्रदर्शनम्, एवं स्थितिकाले जगतो ब्रह्मैकत्वमवगमय्योत्पत्तिकालेऽपि तथाऽवगमयितुं कार्याणामुत्पत्तेः प्राक्कारणादभिन्नत्वप्रदर्शनं, तथा प्रलयकालेऽपि अस्य प्रपञ्चस्य ब्रह्मात्मकत्वं प्रतिपत्तव्यमिति दृष्टान्तपूर्वकमभिधानम्, एवं प्राकृतिकप्रलयप्रदर्शनेन सर्वं मूलप्रकृतिभूतमद्वयात्मतत्त्वमवगमय्य "इदं सर्वं यदयमात्मा" इति प्रतिज्ञातत्वादिदानीं ब्रह्मविद्ययाऽविद्याऽतिरोधद्वारेण योऽयमात्यन्तिकः प्रलयस्तस्य दृष्टान्तसहितं प्रदर्शनम्, अस्यां च निरूपितायां कैवल्यावस्थायां विशेषज्ञानं नास्तीत्यभिधानम्, उक्तेऽर्थे मैत्रेय्याः सन्देहं प्रदर्श्य तस्य सप्रकारकं याज्ञवल्क्यकृतनिराकरणकथनं, तत एवमुक्तं विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्यां दृढीकृत्य यत्र तु ब्रह्मविद्ययाऽविद्यानाशमुपगमिता तत्रात्मव्यतिरेकेणान्यस्याभाव इति व्यतिरेकप्रदर्शनम्, एवमन्वयव्यतिरेकाभ्यां कैवल्यावस्थायां विशेषविज्ञानाभावं प्रतिपाद्य तत्रैव कैमुतिकन्यायं दर्शयितुमविद्यावस्थायामपि साक्षिणो ज्ञानविषयत्वप्रतिपादनं, पुनर्विद्याऽवस्थस्यासंसारिण आत्मनो ज्ञानाविषयत्वप्रतिपादनं चेत्यादि. ७४–८२

५ मधुब्राह्मणम्—तत्र च पूर्वं मैत्रेयीब्राह्मणे "इदं सर्वं यदयमात्मा" इति प्रतिज्ञातस्यात्मन उत्पत्तिस्थितिलयहेतुत्वमुक्त्वा प्रतिज्ञातस्यार्थस्य निगमनार्थं मधुविद्याया निरूपणं, तत्र सर्वेषां शरीरिणां प्रत्येकं पृथिव्यादयः स्तनयित्नुवन्ता भूतगणा देवगणाश्च कार्यकारणसंघातात्मनोपकुर्वन्तो मधु भवन्तीति पर्यायशः सोपपत्तिकं निरूपणं, निरुक्ता भूतगणा देवगणाश्च येन प्रयुक्ताः शरीरिभिः सम्बध्यमाना मधुत्वेनोपकुर्वन्तीति तन्निरूपणं, तत्र पृथिव्यादिप्रयोक्तरि धर्मे सामान्यरूपेण कार्यकारणसंघातकर्तरि तु धर्मे विशेषरूपेण तत्तदारम्भिकत्वप्रतिपादनं, सत्यमपि धर्मवद्द्विविधम्—तत्र सामान्यरूपं पृथिव्यादिषु कारणत्वेनानुगतम्, विशेष-

| ब्रा० विषयाः | पृष्ठाङ्काः |
| --- | --- |

रूपं तु सत्यसंघातत्वेनानुगतमित्याद्यभिधानं, धर्मसत्याभ्यां प्रयुक्तोऽयं कार्यकारणसंघातविशेषो येन जातिविशेषेण संयुक्तो भवति तस्य बाह्याभ्यन्तरविभागपुरःसरं प्रदर्शनं, यः पुनर्मानुषादिजातिविशिष्टः कार्यकारणसंघातस्तस्य मधुत्वोपपादनम्, अस्यान्तिमपर्यायोक्तस्यात्मनः स्वरूपस्य सदृष्टान्तं निरूपणम्, एवं साकल्येन निरूपिताया ब्रह्मविद्यायाः स्तुत्यर्थं प्रवर्ग्यप्रकरणस्थिताख्यायिकासंक्षेपकयोर्मन्त्रयोः श्रुतिकर्तृकं प्रस्तावपूर्वकमवतारणं, ततो ब्रह्मविद्यार्थयोस्तु तृतीयचतुर्थाध्याययोरर्थं प्रकाशयितुं श्रुतेर्द्वयोर्मन्त्रयोस्तदभिप्रायप्रतिपादकब्राह्मणसहितमवतारणं, ततोऽस्यात्मनः पारमार्थिकस्वरूपस्योपपादनम्, अयमेव सर्ववेदान्तानामर्थ इत्युपसंहारस्य निरूपणं, ततो ब्रह्मविद्याप्रशंसार्थं मधुकाण्डस्य य एष स्वाध्यायार्थो जपार्थश्च ब्रह्मविद्याया वंशस्तस्य विस्तरशोऽभिधानं चेत्यादि. ८३-९४

इति द्वितीयोऽध्यायः ।

इत्याद्यं मधुकाण्डं समाप्तम् ।

**अथ द्वितीये उपपत्तिप्रधाने याज्ञवल्क्यकाण्डे**

**तृतीयोऽध्यायः ।**

**अश्वलब्राह्मणम्**-तत्र च प्रथमं प्रस्तावं कर्तुं ब्रह्मविद्याप्राप्त्युपायप्रदर्शनार्थाया विज्ञानस्तुत्यर्थायाश्चाख्यायिकाया निरूपणं, तस्यां च जनकस्य बहुदक्षिणाकयज्ञकरणं-तस्मिन्यज्ञे कुरुपञ्चालानां विदुषामुपसंगमनं-उपसंगतेषु ब्राह्मणेषु जनकस्यानूचानतमब्राह्मणविषयिणी जिज्ञासा जिज्ञासापूर्त्यर्थं गवां सहस्रमवरोध्य भो ब्राह्मणाः ! युष्माकं मध्ये यो ब्रह्मिष्ठः स एता गा उदजतां इत्युपायचिन्तनं तत्करणं च यदाऽन्ये सर्वे ब्राह्मणा न दधृषुस्तदा याज्ञवल्क्यः स्वशिष्यद्वारा एता गा उदाचकार तेन ते ब्राह्मणाश्चुक्रुधुः कथं त्वमेवैकोऽस्माकं मध्ये ब्रह्मिष्ठोऽसीत्याद्यंशस्य प्रतिपादनं, एवं क्रुद्धेषु ब्राह्मणेषु जनकस्य होत्राऽश्वलेन "नोऽग्रे त्वमेव खलु भो याज्ञवल्क्य ! ब्रह्मिष्ठोऽसीति किमिति" पृष्टो याज्ञवल्क्यो "वयं ब्रह्मिष्ठाय नमस्कुर्मः गोकामा वयमतो गोग्रहणं कृतवन्तः" इति प्रत्युत्तरं ददावित्यभिधानं, पूर्वत्र मधुकाण्डे व्याख्याते उद्गीथप्रकरणे आसङ्गपाप्मनो मृत्योरत्ययः समुचितेन कर्मणा संक्षेपतो व्याख्यात इदानीं तस्यैवोद्गीथदर्शनस्य योऽयं परीक्षाविषयस्तस्य वचनप्रतिवचनरूपविस्तारस्य कथनं, तत्र स्वाभाविकादज्ञानासङ्गप्रयुक्तात्कर्मलक्षणान्मृत्योरतिमुक्तेः सोपपत्तिकं विवरणं, इदानीं तस्य कर्मणः सासङ्गस्य मृत्योराश्रयभूतानां दर्शपूर्णमासादिकर्मसाधनानां विपरिणामहेतोः कालात्क्रियानुष्ठानव्यतिरेकेणापि क्रियायाः प्रागूर्ध्वं च साधनविपरिणामहेतुत्वेन कालस्य व्यापारदर्शनात्तस्मादपि कालाद्यतिमुक्तेः पृथक्पृथक्सोपपत्तिकं विवरणं, तथा तिथ्यादिलक्षणात्कालादतिमुक्तेः सोपपत्तिकं विवरणं, स च अतिमुच्यमानः केनावष्टम्भेन परिच्छेदविषयं मृत्युमतीत्य फलं प्राप्नोतीति

ब्रा० विषयाः पृष्ठाङ्काः

प्रश्नं निरूप्य तस्योत्तरनिरूपणं, ततः सम्पदामारम्भमुपपाद्य प्रश्नोत्तराभ्या-मृग्जातिषु अध्वर्युकृताहुतिषु मनसि स्तोत्रियासु च फलसम्पादनप्रकारनिरूपणं तत्र स्तोत्रियाणामधिदेवताध्यात्म-स्वरूपेण प्रतिपादनं चेति। ९९–१०२

२ आर्तभागब्राह्मणं वा जारत्कारव-ब्राह्मणम्—तत्र प्रथमं बन्धज्ञानं विना ततो विश्लेषायोगान्मुमुक्षोः सप्रयो-जकबन्धज्ञानार्थत्वेन ग्रहातिग्रहलक्षणा-द्बन्धान्मृत्योरतिमुक्तिं वक्तुमाख्यायिका-कथनं, तत्रादौ तेषामष्टानां ग्रहाणामति-ग्रहाणां च स्वरूपस्योपपादनं, यस्या देव-ताया मृत्युरप्यन्नं भवेत्सा देवता केत्यु-पपादनं तज्ज्ञानफलकथनं च, परमात्म-दर्शनेन मुक्तस्य किं प्राणा एव समवनीयन्ते उत तत्प्रयोजकं सर्वमपी-त्याशंक्यांतिमपक्षाश्रयणेन तत्समाधान-निरूपणं साक्षात्कारज्ञाने जाते विद्वान्न म्रियते -न च तस्य प्राणा अत्यन्तं समवनीयन्ते किन्तु जीवन्मुक्तत्वेन स सर्वदा तिष्ठतीत्याशङ्क्य तन्निराकरणं, ग्रहातिग्रहलक्षणं बन्धनं केन प्रयुक्तमिति प्रश्नपूर्वकं तन्निर्द्धारणं, निर्णीतार्थस्य श्रुतिमुखेन प्रदर्शनं, कर्मैव प्रधानं कारणमिति प्रशंसापदोपपादितस्य प्राधान्यस्योपसंहरणं चेति। १०२–१०७

३ भुज्युब्राह्मणम्—तत्र चादौ लाह्यायने-र्भुज्योर्याज्ञवल्क्यस्य च संवादात्मिकाया आख्यायिकायाः कथनं, तस्यां च मोक्ष-स्यापि पुरुषार्थत्वाविशेषादुत्तमेन पुण्यो-त्कर्षेण मोक्षो भविष्यतीत्याशङ्क्य तन्निरासार्थं विद्यासंयुक्तस्यापि कर्मणो मोक्षारम्भकत्वसम्भवान्न मोक्षार्थानि कर्माणीत्यतः कर्मफलानां संसारत्वप्रद-र्शनं, तत्र भुज्योः स्वविद्यायाः गुरूप-देशपूर्वकत्वज्ञापनं, गन्धर्वैर्भुज्यवे यः प्रश्नः कृतः स एव प्रश्नो भुज्युना याज्ञवल्क्याय कृतः "क्व पारिक्षिता अभवन्निति ?" प्रदर्शनं, कृतप्रश्नस्य याज्ञवल्क्यप्रदत्तोत्तरकथनं, प्रसङ्गाद्भु-वनकोशपरिमाणनिरूपणम्, एतद्विज्ञान-फलनिरूपणं चेत्यादि। १०८–११०

४ कहोडब्राह्मणं वा निर्गुणब्रह्मविद्या-ब्राह्मणम्—तत्र च कौषीतकेयस्य कहोडस्य याज्ञवल्क्यस्य च संवादा-त्मिकयाऽऽख्यायिकया संसारवतो बन्धस्य यन्मोक्षसाधनं ससन्न्यास-मात्मज्ञानं तस्य सोपपत्तिकं निरूपणम्, एतद्विज्ञानफलनिरूपणं चेति। १११–११२

५ उषस्तब्राह्मणं वा निर्गुणात्मविद्या-ब्राह्मणम्—तत्र च चाक्रायणस्योष-स्तस्य याज्ञवल्क्यस्य च संवादात्मिक-याऽऽख्यायिकया यो बद्धः संसरति सोऽस्ति नास्ति वेति अस्तित्वे च किं-लक्षणो देहादीनामन्यतमस्तेभ्यो विल-क्षणो वा–इति विमृश्ये आत्मनो देहा-दिभ्यो विवेकेनाधिगमायोपायप्रदर्शनं चेत्यादि। ११३–११४

६ गार्गीब्राह्मणम्- तत्र च वाचक्नव्या गार्ग्या याज्ञवल्क्यस्य च संवादात्मिक-याऽऽख्यायिकया पूर्वब्राह्मणयोर्निरूपि-तस्य सर्वान्तरस्यात्मनः स्वरूपाधिगमाय तदुपायभूतत्वेनानात्मभूतान्सर्वान्पदा-र्थानुक्त्वा तद्द्वारा सूत्रादर्वाक्तनस्य व्याप-कस्य निरूपणं चेति। ११५–११६

ब्रा० विषयाः पृष्ठाङ्काः

७ **उद्दालकब्राह्मणमन्तर्यामिब्राह्मणं सृष्टिप्रवेशब्राह्मणं वेति**—तत्र चारुणेरुद्दालकस्य याज्ञवल्क्यस्य च संवादात्मिकयाऽऽख्यायिकया आगमैकगम्यस्य सूत्रस्य तदन्तर्गतस्यान्तर्यामिणोऽधिदेवताधिलोकाधिवेदाधियज्ञाधिभूताध्यात्मरूपैः सोपपत्तिकं निरूपणं चेति.. ११७-१२९

८ **वाचक्नवीब्राह्मणं वा अक्षरब्राह्मणं वा सृष्टिप्रवेशब्राह्मणं वा**—तत्र च पुनर्गार्ग्या याज्ञवल्क्यस्य च संवादात्मिकयाऽऽख्यायिकयाऽशनायादिविनिर्मुक्तस्य निरुपाधिकस्य साक्षादपरोक्षात्सर्वान्तरस्य ब्रह्मणो निरूपणं, तत एवमशेषविशेषणनिषेधावधित्वेन तत्साक्षित्वेन चाक्षरास्तित्वे सिद्धेऽपि इदानीं तस्यैव अविद्यकैषितव्यसंबन्धादीश्वरात्मभूतस्यास्तित्वायानुमानप्रमाणस्योपन्यसनं तथा, यस्याज्ञानेन नियता संसारोत्पत्तिर्यद्विज्ञानेन च संसारविच्छेदस्तदस्त्यक्षरमिति साधयितुं कर्मणामेव मोक्षहेतुत्वमिति पक्षस्य निराकरणं, ततोऽग्नेर्दहनप्रकाशकत्ववत्स्वाभाविकमक्षरस्य प्रशास्तृत्वमिति प्रतिपादनं, तत एतस्य नानात्वशङ्काया निराकरणं, गार्ग्या मुखेन याज्ञवल्क्यस्य ब्रह्मोद्यमप्रतिममिति निरूपणं चेत्यादि. १२९—१३२

९ **शाकल्यब्राह्मणग्रन्थो वा शाकल्यब्राह्मणम्**—तत्र चान्तर्यामिब्राह्मणे पूर्वमव्याकृतविषये सूत्रभेदेषु पृथिव्यादिषु नियम्येषु तस्य नियन्तृत्वमभिहितमिदानीं नियन्तव्यानां देवताभेदानां प्राणान्तसङ्कोचानन्त्यपर्यन्तं वस्तुनिर्देश इत्येतस्यार्थस्य प्रदर्शनं, तत्र संख्यायाः सङ्कोचविस्तराभ्यां प्राणस्वरूपकथनं, ततस्तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा देव—लोक—पुरुषभेदेन त्रिधात्रिधाऽऽत्मानं विभज्यावस्थित एकैको देवः प्राणभेद एवेत्यष्टभेदस्य ध्यानार्थमुपदेशकथनं, ततो दिग्विभागेन पञ्चधा विभक्तस्य सर्वस्य जगतो हृदयात्मन्युपसंहारस्य श्रुतिमुखेन प्रदर्शनं ततः कार्यकारणयोर्हृदयशरीरयोरन्योऽन्यप्रतिष्ठाया निरूपणं, ततः प्राणादीनां परम्परयाऽन्तर्यामिणि तस्याप्यक्षरे कूटस्थे ब्रह्मणि प्रतिष्ठाया निरूपणम्, ततः प्राणादीनां परम्परयाऽन्तर्यामिणि तस्याप्यक्षरे कूटस्थे ब्रह्मणि प्रतिष्ठा इत्यर्थाद्दर्शितमेवेत्यभिप्रायेण श्रुतिमुखतो ब्रह्मणः स्वरूपनिरूपणं, याज्ञवल्क्येन शाकल्यं प्रति औपनिषदपुरुषविषयिणीं पृच्छां निमित्तीकृत्य शापः प्रदत्त इति सप्रकारकं निरूपणम्, शापप्रसङ्गेनाष्टाध्याय्यां निर्वृत्ताया आख्यायिकायाः संसूचनम्, यस्य ब्रह्मणो नेति नेतीत्यन्यप्रतिषेधद्वारेण पूर्वं निर्देशः कृतस्तस्यैवेदानीं विधिमुखेन निर्देशः कर्तव्यो जगतो मूलं च वक्तव्यमित्येतदर्थं श्रुतिमुखेनाख्यायिकया ब्राह्मणानुमतिमनापाद्य ब्रह्मस्वं नीयमानमनर्थाय स्यादिति न्यायं दर्शयितुं ब्राह्मणानुमतिसम्प्राप्तिहेतुभूतं पराजयं कर्तुं च याज्ञवल्क्यो ब्राह्मणान्पृष्टवानित्याद्यर्थप्रदर्शनम्, तत्र जगत्कारणं प्रष्टुं पुरुषवृक्षयोः साधर्म्यस्य श्लोकत्रयेणाभिधानम्, ततो वृक्षपुरुषयोर्वैधर्म्यकथनपुरःसरं जगत्कारणनि-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| रूपणम्, तत्र शङ्कामुद्भाव्य तस्या निराकरणं चेत्यादि. | १३२-१४८ |
| १० षडाचार्यब्राह्मणं वा उदङ्कब्राह्मणम्—तत्र च पूर्वत्र शाकल्यब्राह्मणे निर्द्धारितस्य सच्चिदानन्दलक्षणस्य ब्रह्मण एव प्राणाद्यधिष्ठात्रीषु वाय्वादिदेवतासु ब्रह्मदृष्टिद्वारा निर्णयाय उदङ्कादिषडाचार्याणां याज्ञवल्क्यस्य च संवादरूपाया आख्यायिकाया निरूपणम्, तस्यां च पर्यायषट्केन क्रमात्प्राणवाक्चक्षुःश्रोत्रमनोहृदयानां ब्रह्मत्वस्य सोपपत्तिकं निर्द्धारणम्, प्रतिपर्यायं प्राणादितत्तद्ब्रह्मोपासितुः फलकथनम्, तथा प्रतिपर्यायं जनकस्य राज्ञो विद्यानिष्क्रयार्थं प्रतिज्ञाकरणप्रदर्शनं चेत्यादि | १४९-१५१ |
| ११ कूर्चब्राह्मणम्—तत्र च पूर्वं षडाचार्यब्राह्मणे निरुक्तैर्ज्ञातसाधनैः प्राणाद्युपासनैर्ज्ञेयस्य ब्रह्मणो जागरादिद्वारा ज्ञानार्थं जनकयाज्ञवल्क्ययोः संवादस्य निरूपणम्, तत्रापि प्रथमं वैश्वतैजसप्राज्ञानुवादेन वक्तव्यतया प्रतिज्ञातं तुरीयं ब्रह्म प्रतिपादयितुमादौ वैश्वानराभिन्नस्य जाग्रदभिमानिनो वैश्वस्य प्रदर्शनम्, एकस्यैव वैश्वानरस्योपासनार्थं प्रासङ्गिकस्येन्द्रश्चेन्द्राणी चेति मिथुनस्य प्रकल्पनम्, ततस्तयोः स्वप्नाजागरितगमनमार्गस्य कथनम्, ततो वैश्वतैजसयोरन्नविवेको भोक्तुश्च सूक्ष्मता इत्येतद्दर्शयितुमिन्द्रियाश्रितानां नाड्यन्तराणां परिमाणस्य सदृष्टान्तं सोपयोगं सप्रयोजनमभिधानं, ततो वैश्वतैजसयोरेव श्रुत्या साक्षान्निर्दिष्टत्वात्तैजसप्राज्ञद्वारा तुरीयब्रह्मात्मनिलयः साक्षादेव निर्देष्टव्य इत्यभिप्रेत्य तुरीये लीनस्य तैजसस्य लयात्प्रागवस्थायां परिच्छेदहेतुभूता ये अध्यात्मप्राणास्तेषां लयानन्तरं संवृत्तावस्थोपन्यासव्याजेन तैजसस्य प्राज्ञद्वारा तुरीये लयप्रदर्शनं, तत एवं सर्वोपसंहारं कृत्वाऽवस्थितस्य पुरुषस्य विदुषः किं स्वरूपमित्यपेक्षायामविद्यातत्कार्यभावाभावसाक्षित्वेन तद्विलक्षणं निष्प्रपञ्चं स्वरूपमिति प्रदर्शनं, यदिदानीं प्रत्यगात्मस्वरूपज्ञापनार्थत्वेन ज्ञानमभिहितं तस्य ज्ञानस्यापरोक्षानुभवरूपस्य फलनिरूपणं, ततः शिष्यं कृतार्थमकृत्वा ततो दक्षिणा न ग्राह्येति मुनिमतं स्मरन्राजा दक्षिणां दित्सुर्ममानुभवपर्यन्तं ज्ञानं कृतार्थताहेतुभूतं जातमिति ज्ञापितवानित्याद्यर्थप्रदर्शनं, गवादीनां दक्षिणानामेतदुपदिष्टज्ञानाननुरूपत्वमभिप्रेत्य जनकस्य राज्ञो दक्षिणान्तरदानप्रवृत्तेः सप्रकारं निरूपणं चेत्यादि० | १५६-१६१ |

इति तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।

१ ज्योतिर्ब्राह्मणम्—तत्र च जनकयाज्ञवल्क्ययोः संवादात्मिकयाऽऽख्यायिकया प्राङ्निरूपितां जागराद्यवस्थामनुसृत्य महता तर्केणानेकविप्रतिपत्तिनिरासद्वारेण देहादिव्यतिरिक्तशुद्धस्वयंप्रकाशानतिशयानन्दस्वभावलक्षणं प्रागभिहितमेवात्मानमधिगमयितुमुपायनिरूपणं, तत्रादौ प्रसङ्गात्कर्मकाण्डनिर्वृत्ताया आख्यायिकायाः संसूचनं, ततः प्रश्नप्रतिवचनाभ्यामादित्यादिज्योतिःपर्यायैः कार्यकारणसंघातानुग्राहकमात्मज्योतिः संघातातिरिक्तं तद्विजातीयं चेत्तत् न्यायतो

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|
| निर्द्धारणं, ततो "विज्ञानमयः" इत्यादिविशेषणैरात्मज्योतिःस्वरूपस्य निर्द्धारणं, ततो नित्यमुक्तस्यात्मनोऽविद्यया बुद्ध्यादितादात्म्याध्यासादेव संसारित्वमिति दर्शयितुं सूक्ष्मदेहादिव्यतिरिक्ततयाऽऽत्मनः शुद्धत्वप्रदर्शनाय वा स्वप्नस्वरूपोपपादनं, तत्र यथैकस्मिन्देहे स्वप्नजागरिते सञ्चरत आत्मनो देहाद्व्यतिरेकस्तथेहपरलोकयोः सञ्चारोक्त्याऽपि तस्य तद्व्यतिरेक इत्यभिधानं, प्रथममुपोद्घातत्वेन स्थानभेदप्रतिपादनपुरःसरं परलोकः प्रत्यक्षसिद्धोऽस्तीति प्रतिपादनं, स्वप्नस्थानं गत आत्मा किमाश्रितः सन्केन विधिना परलोकं पश्यतीत्यपेक्षायां तत्प्रकारनिरूपणं,तथाऽऽदित्यादिज्योतिर्भिरसंस्पृष्टश्चिदात्मा यथा साक्षादेव प्रत्यग्भावेन स्वप्रकाश इत्यवगन्तुं शक्येत तादृशप्रकारप्रदर्शनं, आत्मा स्वयं ज्योतिरित्युक्तप्रपञ्चस्य फलितमित्येतत्प्रदर्शनं, ततः स्वप्नेऽपि सर्वस्यादित्यादेर्दृश्यमानत्वात्कथं परिशेषात्स्वयंज्योतिष्ट्वसिद्धिरित्याशङ्क्य तत्समाधानाय तस्य सर्वस्य वासनामात्रनिर्मितत्वात्तत्रात्मा विविक्तः स्वयंज्योतिरिति निश्चायकस्य स्वप्ने बाह्यरथाद्यभावस्य प्रतिपादनं, उक्तेऽर्थे स्वप्नप्रपञ्चावेदकमन्त्राणां तथाऽऽत्मा विविक्तः स्वयंज्योतिरित्यावेदकमन्त्रशेषस्य संवादप्रदर्शनं, ततोऽन्यदीयं मतं स्वयंज्योतिष्ट्वविघातकं दुष्टमिति बोधयितु स्वमतपरिशुद्धये च तदुपन्यसनं, ततो मोहत्रासाद्यभावप्रदर्शनपुरःसरं तत्कारणभूतः कर्मलक्षणो मृत्युर्नात्मनः स्वभाव इति दर्शयितुं स्वप्नस्थानाज्जागरितदेशागमनस्य सहेतुकं | | सोपपत्तिकं प्रतिपादनं, उक्तेऽर्थे महामत्स्यादिदृष्टान्तदार्ष्टान्तिकयोर्योजनं, श्येनादिदृष्टान्तदार्ष्टान्तिकाभ्यां सुषुप्तौ तद्विलक्षणत्वस्य प्रतिपादनं, ततो जाग्रत्स्वप्नोपाध्यपगमेन सुषुप्तिगतस्याप्यात्मनो न ब्रह्मैकत्वं तत्रापि भेदहेतोरविद्यायाः सत्त्वादित्याशङ्क्य न तावदविद्याऽऽत्मनः स्वभावः-तथा सति चैतन्यवत्तदनिवृत्तेरमोक्षापत्तेः-अस्वभावत्वे तु कामकर्मादिवत्तन्निवृत्तेर्मोक्ष उपपद्यते इत्यादिविचारपुरःसरमस्वभावत्वकथनद्वारा विद्याकामकर्मादिहीनतया निरूपितात्मस्वरूपस्य प्रत्यक्षेण प्रदर्शनं, तत्र विशेषतो धर्मसहकारिकायास्तस्याः शुभवासनात्मिकाया अनात्मभूताया अविद्यायास्तत्कार्यप्रदर्शनद्वारा निरूपणं, सत्य एवात्मनि विद्योत्कर्षवशादविद्याया विनश्यमानत्वादपि तस्या अनात्मस्वभावतेत्यभिप्रेत्यात्मविद्योत्कर्षवता सर्वात्मभावलक्षणं मोक्षफलमात्मस्वरूपमपि स्वप्ने प्रत्यक्षत अनुभूयत इत्याद्यभिधानं, ततो व्यक्ताविद्याविहीनायाः सुषुप्त्यवस्थाया दृष्टान्तदार्ष्टान्तपुरःसरं विशदीकरणं, ततः सुषुप्तिमुपेयुषः पुरुषस्य विशेषविज्ञानाभावे स्वाभाविकात्मैकत्वमेव हेतुः-न स्वयंज्योतिष्ट्वाभाव इति दृष्टान्तेनोपादानात्मनः कामादिवत्स्वयंज्योतिष्ट्वमस्वभाव इति प्रासङ्गिकं परिसमाप्याधुना प्रकृतिरूपस्य स्पष्टीकरणं, तत एवमविद्याकामादिरहितमात्मस्वरूपं प्रत्यक्षतः प्रदर्श्याधुना तद्धेतुभूतकर्माख्याविद्यासम्बन्धरहितत्वमत्यात्मनः सुषुप्तौ प्रत्यक्षमित्याद्यभिधानं, उक्तार्थस्यानुवादपूर्वकमनेकैः | |

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

पर्यायैरतिलरां स्पष्टीकरणं, ततः "यद्वै तन्न पश्यति" इत्यादिविस्तरेणोक्तरूपस्य प्राज्ञेनात्मना सम्परिष्वक्तस्यात्मन उपसंहारकरणं, यथा लोके लवणावयवैर्लवणाब्धिं लोको बोधयति तथा मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तमुत्तरोत्तरशतगुणितातिशयशालिनां परब्रह्मानन्दावयवानां प्रतिपादनद्वारेणावयविनो निवृत्तगुणितभेदस्यानतिशयस्य ब्रह्मानन्दस्य बोधनिकं सविशेषं विवरणं, विवृताया आनन्दमीमांसाया उपसंहारकरणं,एवं सुषुप्तिविषय आत्मा निरूपितः सुषुप्तौ च दार्ष्टान्तिकसम्बन्धस्यात्यन्तं स्पष्टयितुमशक्यत्वात्तदभिप्रेत्यात्मनः सुषुप्तिस्थानाज्जागरितस्थाने प्राप्तिर्भवतीति तस्य दार्ष्टान्तिकस्यातितरां स्पष्टीकरणं, ततः स्वप्नाज्जागरणप्राप्तिवल्लोकान्तरं गच्छत्यात्मा इत्यस्यार्थस्य यथा सुखेन प्रतिपत्तिः स्यात्तथा सोपोद्घातं सोपपत्तिकं सप्रयोजनं दृष्टान्तदार्ष्टान्तिकसहितमभिधानं,एवमात्मनो वर्तमानदेहं हित्वा देहान्तरं जिगमिषतस्तन्निर्माणे सहायसम्पत्तिमुक्त्वेदानीं गच्छन्तं संसारिणं केऽनुगच्छन्ति—अनुगच्छन्तं संसारिणं केऽनुगच्छन्ति अनुगच्छन्तोऽपि किं स्वातन्त्र्येणोक्तसंसारिकर्मप्रयुक्त्याऽनुगच्छन्तीति जिज्ञासायां संसारिकर्मप्रेरिता एव वागादयोऽनुगच्छन्तीति निर्णयस्य दृष्टान्तदार्ष्टान्तिकसहितं सप्रयोजनं सोपपत्तिकमभिधानं चेत्यादि· १६२-१८८

२ शारीरकब्राह्मणम्- तत्र च पूर्वत्र ब्राह्मणे प्रस्तुते संसारोपवर्णने "अयं शारीर आत्मा एभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः" इत्यादिना साकल्येन सम्प्रमोक्षणादि सूचितं तदिदानीं कस्मिन्काले कथं वेति जिज्ञासायां संसरणस्योपपत्तिसहितं वर्णनं, तत्रादौ हृदि करणोपसंहरणेन स्वात्मोपसंहरणम् अभिधाय तेन करणानुग्राहकनिवृत्तिनिमित्तकं रूपाद्यदर्शनं स्यादित्याद्यर्थस्य प्रतिपादनं, ततः करणेषूपसंहृतेषु सत्सु निष्क्रमणसाधनीभूतो योऽन्तर्व्यापारो भवति तस्याभिधानम्, उक्तप्रद्योतेन कर्मार्जितं लोकं पश्यन्नात्मा मरणकाले हृदयात्केन मार्गेण निर्गच्छतीति जिज्ञासायां तस्य मार्गस्याभिधानम्, निर्गच्छतां प्राणानां मध्ये कस्य प्राधान्यमित्यपेक्षायां तस्याभिधानम्, म्रियमाणस्य यदर्थसिद्धं तस्याभिधानम्, परलोकाय प्रस्थितस्यात्मनः पाथेयं पुनः—शरीराद्यारम्भकं च किमित्यपेक्षायां तस्य निरूपणम्, एवं सम्भृतसम्भारो देहान्तरं प्रतिपद्यमानः कथं तत्प्रतिपद्यत इत्यस्मिन्नर्थे दृष्टान्तदार्ष्टान्तिकयोरभिधानम्, योऽयमात्मनः संसारसम्बन्धः स वास्तवो न भवति-किन्त्वौपाधिक एवेति तदुपाधीन् दर्शयितुमात्मनो वास्तवस्वरूपस्याभिधानम्, तत्र विज्ञानमयादिवाक्यार्थस्य संक्षेपणाभिधानं च, पुण्यपापयोरेव संसारासाधारणकारणत्वमित्यमुं पक्षं पूर्वपक्षीकृत्य कामस्यैवासाधारणकारणत्वमिति सिद्धान्तस्योपपत्तिसहितमभिधानम्, उक्तेऽर्थे मन्त्रसंवादनिरूपणम्, ततोऽज्ञानकारणकः काम एव संसार-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|

साधारणकारणमित्युक्तमुपसंहृत्य योषिदालिङ्गनेनेव पुंसः सुषुप्तिप्राप्तस्यात्मनः कामादिहीनं रूपं मोक्षदृष्टान्तभूतं यदतिच्छन्दोवाक्येनोक्तं तस्य दार्ष्टान्तिकभूतस्य सोपायस्य मोक्षस्वरूपस्य सोपपत्तिकं निरूपणम्, अत्राप्युक्तेऽर्थे मन्त्रसंवादस्य निरूपणं, ततो विदुषः सर्वात्मविषयाऽऽत्ममात्रत्वेन प्राणादिषु बाधितेष्वपि—असौ देहे वर्तते चेत्ततोऽस्य पूर्ववद्देहं हित्वा द्विधा वैयर्थ्यमेवेत्याशङ्कायां तस्या निराकरणाय दृष्टान्तदार्ष्टान्तिकयोः प्रतिपादनम्, "अथाकामयमानः" इत्यादिब्राह्मणेन "यदा सर्वे प्रमुच्यते" इति मन्त्रेण च ज्ञानादेव मुक्तिरिति यः संक्षिप्तोऽर्थोऽभ्यधायि तस्यैव विवरणार्थं श्लोकानामुदाहरणं, तेषु विप्रतिपत्तिनिराकरणपुरःसरं मोक्षमार्गं निश्चित्य तन्निगमनं, प्रस्तुतज्ञानमार्गस्य स्तुत्यर्थं मार्गान्तरस्य निन्दाकरणं, न केवलं ब्रह्मविदो विद्यया कृतकृत्यत्वे श्रुतिसम्प्रतिपत्तिरेव किन्तु स्वानुभवसंवादोऽप्यस्तीत्यभिधानं, उक्तात्मज्ञानमार्गनिष्ठस्य कायक्लेशराहित्यं कृतकृत्यता चास्ते इत्यभिधानं, विदुषो विहिताकरणादिप्रयुक्तं भयं नास्तीति विद्यायाः प्रशंसनं, तस्य तस्यात्मनोऽमृतत्वं सर्वाधिष्ठानत्वेन सिध्यतीत्याद्यर्थस्य निरूपणं, ईश्वरोऽपि कालावच्छिन्नोऽतो न कालत्रयं प्रत्यस्येश्वरत्वसम्भव इत्याशंकायां तस्या निराकरणम्, पूर्वमन्त्रेणोक्तं यत्पञ्चजनप्रतिष्ठाभूतब्रह्मविदमृतो भवतीति—तत्कथं पुनरेवंविधब्रह्मविद्योदयः स्यादित्यपेक्षायां तदुदयप्रकारस्य निरूपणम्, भेददर्शननिन्दया नानात्वाभावस्य दृढीकरणम्, अनुदर्शनप्रकारस्योपवर्णनम्, उक्तस्य ध्रुवत्वस्य सोपस्कारमुपपादनं, यथोक्तवस्तुदर्शनस्य निगमनम्, प्रसङ्गाद्बहुशास्त्राध्ययने दोषाभिधानं च, ततो विविदिषावाक्येन ब्रह्मात्मनि कृत्स्नस्य वेदस्य काम्यराशिवर्जितस्य विनियोगकथनार्थमस्मिन्नध्याये उक्तस्य सकलस्यात्मज्ञानस्यास्यानुवादकरणम्, तत्र पूर्वं सशब्देन ज्योतिर्ब्राह्मणोक्तं विज्ञानलक्षणमयं जीवं परामृश्य तमेव वैशब्देन स्मारयित्वा तस्य "विरजः पर आकाशादज आत्मा" इत्यव्यवहितेनोक्तेन परमात्मना सहैक्यस्येतिशब्देन श्रुतिमुखतो निदर्शनम्, उक्तात्मज्ञानफलकथनं च, यदर्थमेषा विहिता सफला ब्रह्मविद्याऽस्मिन्नध्यायेऽनूदिता तस्य काम्यैकदेशवर्जितस्य कृत्स्नस्य कर्मकाण्डस्याविद्यायां परम्परया विनियोगस्य प्रदर्शनं, ततोऽर्थोक्तस्य सन्न्यासस्य मुनिप्राप्यमात्मलोकमिच्छतां तत्साधनत्वेन विधानं, तत्र कथमयं सन्न्यासे विधिरिति निश्चेतुं शक्यते "प्रव्रजन्तीति" वर्तमानोपदेशादिति संशये—अनन्यथासिद्धार्थवादवशाद्विधिरेव निश्चेय इत्यभिप्रायेण तस्य विधित्वनिर्णयहेतोरर्थवादस्याभिधानम्, एवमपि किमित्यात्मलोकार्थिनां नियमेन पारिव्राज्यं विधीयते कर्मणामपि तत्साधनत्वेनानुष्ठेयत्वादित्याशङ्कायां तस्यात्मलोकस्योत्पाद्यादिविलक्षणत्वेन कर्मासम्बन्धान्न कर्म तदर्थिनामनुष्ठेयमित्याद्यर्थस्य सफल निरूपणं, एवमुक्ते ब्रह्मविद्याफले मन्त्र-

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | संवादस्य प्रदर्शनं, एवमुपास्यस्वरूपं दर्शयित्वा तदुपासनाफलकथनं, एवं निरुपाधिकब्रह्मज्ञानात्कैवल्यफलमभिधाय सम्प्रति सोपाधिकब्रह्मध्यानादभ्युदयफलदर्शनद्वारा तत्स्वरूपस्याभिधानं, एवमुपास्यस्वरूपं दर्शयित्वा तदुपासनाफलकथनं, ततो मन्त्रब्राह्मणाभ्यामुपदिष्टायाः सफलाया विद्याया उपसंहारस्य प्रतिपादनं, एवं राजा जनको याज्ञवल्क्यादात्मज्ञानं प्राप्यात्मीयमशेषविद्यालाभं द्योतयितुं सर्वस्वदानं प्रतिजज्ञे इति प्रतिपादनं, ततः " तिष्ठमानस्य तद्विदः परायणं " इत्युक्तस्यैव ब्रह्मात्मैक्यज्ञानफलस्योपसंहाराभिधानं चेत्यादि. | १८९–२१२ |
| ३ | याज्ञवल्क्यमैत्रेयीसंवादब्राह्मणम्— तत्र च एतद्द्वयध्यायोक्तार्थस्य निगमनमथवा मधुकाण्डोक्तेन मैत्रेयीब्राह्मणेनागमबलान्मुक्तिसाधनभूता या सन्न्याससहिताऽऽत्मविद्या प्रतिपादिता सैवाधुना न्यायप्रधाने मुनिकाण्डेऽपि मुक्तिहेतुत्वेन न्यायतो मन्तव्येत्याद्यर्थस्य याज्ञवल्क्यमैत्रेय्योः संवादात्मिकयाऽऽख्यायिकया विवरणं, तत्रानेकैः पर्यायैः सर्वमात्मनः कामाय प्रियं भवतीति प्रतिपादनं, तत आत्मदर्शनं कर्तव्यतयाऽभिधाय तत्साधनत्वेन श्रवणमनननिदिध्यासानां सफलमभिधानं, ततोऽनेकैर्दृष्टान्तैरात्मतत्त्वस्य सोपपत्तिकं निरूपणं, ततोऽविद्योत्थद्वैते सत्येव विशेषविज्ञानमात्मनस्तदभावे तु तदभाव इत्यन्वयव्यतिरेकाभ्यामौपाधिकमात्मनो विशेषविज्ञानमिति प्रदर्शनं, ततः " महद्भूतमनन्तमपारं " इत्यादिना सूचितस्य ब्रह्मदर्शनस्य व्याचिख्यासया भूतोपाध्यभावेन विशेषविज्ञानलक्षणसंसाराभाव इति पुनर्व्यतिरेकस्याभिधानं, ततो याज्ञवल्कीयकाण्डप्रवर्तकगुरुशिष्यपरम्परावेदकवंशस्य प्रतिपादनं चेत्यादि. | २१३–२२४ |

इति चतुर्थोऽध्यायः।

**इति बृहदारण्यकोपनिषदि मध्यमं याज्ञवल्क्यकाण्डं मुनिकाण्डं वा परिसमाप्तम्।**

## अथ बृहदारण्यकोपनिषद्यन्तिमं द्व्यध्यायं खिलकाण्डम्।

### अथ पञ्चमोऽध्यायः।

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | शान्तिब्राह्मणम्—तत्र च तदेवं यद्विज्ञानं केवलममृतत्वसाधनं स आत्मा निरुपाधिकः अशनायाद्यतीतो यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा स सर्वान्तरो नेतिनेत्यादिलक्षणः काण्डद्वयेन निर्द्धारितोऽधुना तस्यैवोपाधिवैशिष्ट्यमापन्नस्य प्रमाणप्रमेयादिव्यवहारविषयतामुपगतस्याभ्युदयफलानां क्रममुक्तिफलानां कर्मसमृद्ध्यर्थानां चेति त्रिविधोपासनानां पूर्वत्रानुक्तानां प्रतिपादनं, तत्र सर्वोपास्यङ्गभूतानां ॐकारो दमो दानं दयेति पदार्थानां विधित्सया श्रुतिमुखेन पूर्वमात्मयाथात्म्यविज्ञानसिद्धये मिथ्याभूतकार्यकारणसम्बन्धमाश्रित्य तात्पर्येण व्याख्यातस्य ब्रह्मणो यच्छुद्धं स्वरूपं तस्य पूर्वोपात्तकार्यकारणसम्बन्धस्य हेयत्वं द्योतयितुमनुवादकरणं, तत्र लक्ष्यं तत्पदार्थं दर्शयित्वा लक्ष्यस्य त्वंपदार्थस्य प्रदर्शनं, त्वम्प- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | दार्थस्य पूर्णत्वे हेतुमभिधायैक्यज्ञानफलस्य निरूपणं, ततो ध्यानविधानार्थं तस्मिन्विनियुक्तं मन्त्रमभिधाय तद्व्याख्यानमुखेनोंकारप्रतीकं कार्यकारणोभयविधं ब्रह्म ध्येयमिति प्रतिपादनं, ततः प्रणवस्य यथोक्तब्रह्मवाचकत्वमस्तीत्युपपादनं चेत्यादि. | २२५–२२६ |
| २ | **दमदानदयेति त्रिकोपदेशब्राह्मणम्**-तत्र च बाह्यसाधनस्य दमादिसाधनत्रयस्य विधानं, तत्र तेनापि विशिष्ट एव बाह्याभ्यन्तरशुचिः सन्सर्वोपास्तिष्वधिक्रियते-अतस्तद्विधानायाख्यायिकारूपस्यार्थवादस्याभिधानं, लिङ्गदर्शनपूर्वकं देवमनुष्यासुरेभ्यः प्रजापतिना दत्तस्यानुशासनस्य विधानं चेति. | २२७–२२८ |
| ३ | **सूर्याग्न्योरुपस्थानब्राह्मणम्**-तत्र च दमादियुक्तस्यापि शरीरपाते तु नामृतत्वं आध्यात्मिकवाग्वादिदेवताप्रतिबन्धकत्वाद्देहस्यैव सूक्ष्मतां गतस्य प्रतिबन्धकत्वाच्चेत्याशङ्कायां तस्या निराकरणं, तत्र सूर्याग्न्योरुपस्थानस्य प्रतिपादनं चेति. | २२९ |
| ४ | **हृदयब्रह्मोपासनब्राह्मणम्**--तत्र च सोपाधिकस्य ब्रह्मणो निरुपाधिकस्वरूपेऽनधिकृतानां ध्यानभेदस्योपवर्णनं, तत्र प्रजापतिर्देवादीनामनुशास्तेति सामान्यतः श्रवणाद्दक्षादिष्वपि प्रजापतित्वशङ्का मा भूदिति प्रजापतेर्विशेष्यत्वेन प्रतिपादनं, तत्रोक्तहृदयस्योपास्यार्थं ब्रह्मत्वप्रतिपादनं, हृदयस्य सूक्ष्मत्वात्प्रजापतेश्च सर्वात्मकत्वात्कथं हृदयस्य प्रजापतिना सहैक्यमित्याशङ्कायां तत्समाधानकथनं, तत उपास्यत्वेन सिद्धस्य हृदयस्य प्रशंसार्थं तन्नामाक्षरैकदेशोपासनस्य निरूपणं, तत्र क्रमेण त्रयाणामक्षराणां सोपपत्तिकं विवरणं, एतद्विज्ञानफलकथनं चेति. | २३० |
| ५ | **हृदयब्रह्मणः सत्यमित्युपासनाविधिब्राह्मणम्**-तत्र चैतस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनान्तरस्य सप्रकारकं विधानं, तत्र तस्य स्वरूपकथनपूर्वकं तद्विज्ञानफलस्याभिधानं, कैमुतिकन्यायेन फलान्तरस्याभिधानं, कथमीदृग्विधज्ञानादुपासकस्येदं फलमित्यपेक्षायामुक्तोपासकस्यानुवादपूर्वकं हेतोरभिधानं चेत्यादि. | २३१ |
| ६ | **सत्यस्य ब्रह्मणः स्तुतिब्राह्मणम्**--तत्र चादौ सत्यस्य ब्रह्मणः प्रशंसार्थं प्रथमजत्वं साधयित्वाऽशब्दोपलक्षितान्मूलकारणात्सूत्रोत्पत्तिं चाभिधाय तस्य महत्त्वप्रतिपादनं, ततस्तस्य यक्षत्वं निरूपयितुमुत्पन्नाद्विराडात्मनः सकाशादिन्द्रादिदेवतासृष्टेः प्रतिपादनं, तत्र यक्षत्वं प्रसाध्य हृदयब्रह्मवदस्यापि सत्यस्य ब्रह्मणः प्रशंसार्थं वर्णत्रयात्मत्वं च प्रसाध्य सफलमक्षरत्रयस्वरूपप्रदर्शनं, एवं विशिष्टसत्योपास्तिमुक्त्वाऽधुना तस्यैवाध्यात्मिकाधिदैविकसंस्थानभेदवैशिष्ट्यं कल्पयित्वा तदुपास्तेरभिधानं, ततः कथं तावन्योऽन्यस्मिन्प्रतिष्ठितावित्यपेक्षायां परस्परोपकार्योपकारकभावेनेत्यभिधानं, ततो ज्ञातारिष्टः पुमान्कथं नाम हितमाचरेदित्यभिप्रायेण श्रुतिमुखतश्चक्षुरादित्यपुरुषप्रसङ्गागतस्यारिष्टदर्शनस्य प्रतिपादनं, उक्तस्य प्रकृतयोः परस्परोपकार्योपकारकत्वस्य निगमनं, एवं स्थानद्वय- | |

ब्रा० विषयाः पृष्ठाङ्काः

सम्बन्धि सत्यब्रह्मणो ध्यानमुक्त्वाऽधुना तस्यैवाधिदैविकव्याहृत्यवयवकत्वेन आध्यात्मिकव्याहृत्यवयवकत्वेन च ध्यानस्य सोपपत्तिकं नामविशेषाभिधानसहितं सफलं निरूपणं चेति. २३२–२३५

७ **विद्युद्ब्रह्मोपासनाब्राह्मणम्**—तत्र चैतस्यैव सत्यब्रह्मणोऽशेषपापध्वंसकस्योपासनान्तरस्याभिधानं, तत्र विद्युच्छब्दनिर्वचनं, एवं विद्युद्ब्रह्मोपासितुरुपास्यानुगुणं फलं भवतीति निरूपणं चेति. २३५

८ **शाण्डिल्यविद्याग्रन्थो वा मनोमयपुरुषोपासनाब्राह्मणम्**—तत्र चोपाधीनामनेकत्वात्प्रत्येकमनेकविशेषणत्वाच्च तथैव प्रकृतस्य ब्रह्मणो मनउपाधिकस्योपासनविधानं, तस्य ध्यानार्थमौपाधिकस्वरूपकथनद्वारा स्थानविशेषस्याभिधानम्, तत्र दृष्टान्तदार्ष्टान्तिकयोरभिधानम्, एवमुपासितुः फलनिरूपणं चेति. २३६

९ **वेदत्रयीवाग्धेनूपासनाब्राह्मणम्**—तत्र च पुनस्तस्यैव ब्रह्मणो वाङ्मयधेनुसम्बन्धेनोपासनस्य महाफलार्थत्वेन विधानम्, तत्रोपासने निमित्तभूतस्य धेनुसामान्यत्वस्य सार्वात्म्येनोपपादनम्, तत्र स्तनानां विनियोगकथनम्, वत्सत्वसम्पादनं चेति. २३७

१० **जठरस्थवैश्वानरोपासनाब्राह्मणम्**—तत्र च प्रकृतस्यैव ब्रह्मणः कौक्षेयाग्नित्वमापन्नस्यापरोक्षत्वं दर्शयितुं पुनरुपासनान्तरस्य विधानम्, तत्राग्नेः स्वरूपकथनम्, तत्सद्भावे मानकथनं च, ततः प्रासङ्गिकमरिष्टदर्शनं चेति. २३८

११ **ज्वरादिव्याध्यादेस्तपस्त्वोपासनाब्राह्मणम्**—तत्र चैवं ब्रह्मोपासनानां केषाञ्चित्फलवतां कथनानन्तरं—अब्रह्मोपासनानां केषाञ्चित्फलवतां प्रदर्शनं, तत्र व्याधौ—प्रेतस्यारण्यं प्रत्याहरणे—प्रेतस्याग्नावभ्याधाने च परमतपोबुद्धिकरणप्रतिपादनं, तत्सहैवोक्तोपासनानां फलप्रतिपादनं चेति. २३९

१२ **सर्वासामुपासनानां गतेः फलस्य च विधायकं ब्राह्मणम्**—तत्र चास्मिन्प्रकरणे उक्तानां सर्वोपासनानां गतेरनुक्तफलस्य च प्रदर्शनम्, तत्र छिद्रप्रमाणकथनम्, गन्तव्यस्थानकथनम्, गच्छतो विराडात्मा विश्रामस्थानमिति कथनं चेति. २३९–२४०

१३ **अन्नप्राणयोरेकब्रह्मोपासनाविधायकं ब्राह्मणम्**—तत्र च पुनः प्रकृतब्रह्मोपासनमेवानुसृत्य श्रुतिमुखेन "वि रम्" इति गुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनं विशिष्टफलकं विधातुमादौ तस्यैतस्यैवोपास्यत्वस्य निर्णयार्थाया युक्तेरभिधानम्, ततोऽन्नप्राणयोरेकत्वेन ब्रह्मदृष्टिः कार्येत्येतस्यार्थस्येतिहासकथनद्वारा दृढीकरणम्, ततः कथं ज्ञानात्कृतकृत्यः स्यादित्यपेक्षायामन्नप्राणयोः सशक्तिकयोरेकत्वविज्ञानात्तथा स्यान्न केवलयोरेकत्वविज्ञानादित्याशयेन तयोः शक्तिभूतस्य गुणद्वयस्य क्रमेणोपदेशकरणकथनम्, "वि-रम्" इत्येतयोर्गुणयोः सोपपत्तिकं स्वरूपप्रतिपादनम्, एवमुपासितुः फलनिरूपणं चेति. २४१–२४२

१४ **प्राणोपासनाब्राह्मणम्**—तत्र च पुनस्तस्यैव ब्रह्मण उक्थादिगुणपूगविशिष्टत्वेनोपासनस्य विधानम्, तत्रोक्थस्व-

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | रूपकथनम्, एवमुपासनस्य क्रमेण दृष्टमदृष्टं च फलं भवतीति प्रतिपादनम्, ततः प्राणस्य योक्तृतागुणवत्त्वेनोपासनस्य विधानम्, तत्र प्राणे यजुःशब्दप्रवृत्तेः प्रदर्शनम्, एवमुपासितुः पूर्ववत्फलनिरूपणम्, ततः प्राणस्य सर्वप्राणिसम्यग्गमनहेतुत्वगुणवैशिष्ट्येनोपासनस्य विधानम्, पूर्ववदत्रापि प्राणे सामशब्दप्रवृत्तेः प्रदर्शनम्, पूर्ववदुपासनफलनिरूपणम्, ततः प्राणस्य पालकगुणवत्त्वेनोपासनस्य विधानम्, तत्र प्राणस्य क्षत्त्रशब्दाभिधेयत्वप्रसाधनम्, एतद्वेदनफलनिरूपणं चेत्यादि. | २४२–२४४ |
| १५ | **गायत्रब्रह्मोपासनब्राह्मणम्**–तत्र च हृदयाद्यनेकोपाधिविशिष्टस्य ब्रह्मण उपासनाभिधानानन्तरमधुना गायत्र्युपाधिविशिष्टस्य ब्रह्मण उपासनस्य विधानं, तस्या एतस्या गायत्र्याः क्रमेण पादत्रयस्य सोपपत्तिकं स्वरूपनिरूपणं, ततः शब्दलक्षणायास्त्रिपदाया गायत्र्यास्तुरीयपादस्य स्वरूपोपपादनं, ततस्त्रैलोक्यत्रैविद्यप्राणादित्रयलक्षणपादत्रयवती गायत्री तुरीये दर्शते पदे परोरजसि प्रतिष्ठितेति सोपपत्तिकं प्रतिपादनं, तत्तुरीयं पदं सत्ये प्रतिष्ठितमित्यभिधानं, सत्यं च चक्षुरेवेत्युपपादनं, तत्सत्यं बले प्रतिष्ठितमित्यभिधानं, बलं च प्राण एवेत्युपपादनं, गायत्रीशब्दनिर्वचनं, प्रसङ्गान्मतान्तरं दृष्ट्वा बटवे उपदेश्या गायत्री इयमेव भविष्यतीति विभ्रमो माऽभूदित्यभिप्रेत्य मतान्तरं दूषयितुं तस्योपन्यसनम्, एवम्प्रासङ्गिकमुक्त्वा गायत्रीज्ञानफलकथनाभिप्रायेण गायत्रीविदः प्रशंसनं, तत एवमुक्तगायत्र्युपासनासङ्ग्रहविषयकस्यैव मन्त्रस्यैहिकफलविशेषोपायकथनार्थमवतारणं, तत्र प्रवृद्धद्वेषवन्तम्प्रति–उक्तोपस्थानमन्त्रे ऊहप्रदर्शनेनाभिचारिकस्योपस्थानान्तरस्याभिधानं, कामिनम्प्रति पुनराभिचारिकस्योपस्थानान्तरस्याभिधानं, ततो गायत्रीमुखविज्ञानमन्तरेण तद्विज्ञानं पूर्णं न भवति–अतस्तद्विधानार्थमर्थवादस्याभिधानं, तत्र गायत्र्या मुखमग्निरिति बुडिलर्षेर्जनकराजस्य च संवादेन निरूपणं, एतद्गायत्रीविज्ञानवेदनफलनिरूपणं चेत्यादि. | २४५–२५१ |
| | इति पञ्चमोऽध्यायः । | |
| | **अथ षष्ठोऽध्यायः ।** | |
| १ | **पञ्चाग्निविद्याब्राह्मणं वा श्वेतकेतुब्राह्मणम्**–तत्र च कर्मणः फलविज्ञानस्य विवक्षितत्वात्तद्द्वारेण च पञ्चाग्निविद्यादर्शनस्योत्तरमार्गप्रतिपत्तिसाधनस्याभिधानं, तत्राप्यशेषभवगत्युपसंहारः कर्मकाण्डस्यैषा निष्ठा–इत्येतस्य द्वयस्य दिदर्शयिषयाऽऽख्यायिकाया निरूपणं, तस्यां च श्वेतकेतोः पाञ्चालानां परिषदि गमनकथनं, श्वेतकेतुं प्रति प्रवाहणस्य भोः कुमारानुशिष्टोऽसि पित्रेति प्रश्नकरणं, उक्तप्रश्नस्य श्वेतकेतोरुत्तरप्रदानमोमिति, पुनः श्वेतकेतुं प्रति प्रवाहणस्य पञ्चाग्निविद्यासम्बन्धिप्रश्नपञ्चकस्य विचारणा, पञ्चस्वपि प्रश्नेषु न जाने इति श्वेतकेतोरुत्तरप्रदानं, तत्र पञ्चमप्रश्नगतमार्ग- | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| द्वयसद्भावे मन्त्रसम्मतेरभिधानं, ततो विद्याभिमानगर्वपरिहारेण क्रुद्धः श्वेतकेतुः पाञ्चालराजप्रतिश्रुतां वसतिमनादृत्य स्वपितरं प्रति प्रत्याजगामेत्याद्यंशस्य सप्रकारकं वर्णनं, ततः पित्रा पृष्टे पारिषद्ये वृत्तान्ते तस्योपवर्णनं, ततः पितुः पुत्रस्य क्रोधोपशमनकरणप्रकारवर्णनं, ततः पितुर्गौतमस्यानुपदं दर्शितप्रश्नपञ्चकस्योत्तराणां जिज्ञासया प्रवाहणं प्रति शिष्यभावेनोपसंगमनप्रकारस्य वर्णनं, ततो राज्ञो गौतमप्रार्थितं वरमङ्गीकृत्य तदनुसारेण पूर्वं स्वयं श्वेतकेतुं प्रति पृष्टस्य प्रश्नपञ्चकस्योत्तरपञ्चककथनव्याजेन सोपपत्तिकं पञ्चाग्निविद्याया निरूपणं चेत्यादि. | २९२–२६३ |
| २ ज्येष्ठश्रेष्ठब्राह्मणं वा प्राणविद्याब्राह्मणम्–तत्र च पूर्वं " प्राणो गायत्री " इत्यादिना गायत्र्याः प्राणभावोऽभिहितो न पुनर्वागादिभावः इति यस्माज्ज्येष्ठश्च श्रेष्ठश्च प्राणो न वागादयो ज्यैष्ठ्यश्रैष्ठ्यभाजः–कथं प्राणस्यैव ज्येष्ठत्वं श्रेष्ठत्वं चेत्यपेक्षायां तस्योपपादनं, ज्यैष्ठ्यश्रैष्ठ्यविज्ञानफलनिरूपणं च, ततः सफलं वाक्चक्षुःश्रोत्रमनोरेतसां क्रमेण वसिष्ठाप्रतिष्ठासम्पदायतनप्रजातित्वलक्षणविज्ञानस्य पर्यायश उपपादनं, ततो वागादयः प्राणाः ' अहं श्रेयानहं श्रेयान् " इति विवदमानाः सन्तो निर्णयार्थं ब्रह्म जग्मुरिति निरूपणं, ब्रह्मणस्तेभ्यो निर्णायकोपायस्य कथनं, ततो ब्रह्मण आदेशेन वागादीनां शरीरादुत्क्रम्यासंवत्सरं प्रोष्य पुनरागत्य मां विना यूयं कथं जीवितुं शक्नुथ इति पृच्छाकरणस्य पञ्चभिः पर्यायैः प्रतिपादनं, प्रतिपर्यायं तस्य तस्य स्वव्यापाराद्दते स्वस्वव्यापारं कुर्वन्त एव वयमजीविष्मेत्युत्तरं श्रुत्वा पुनः शरीरप्रवेशनस्य कथनं, ततो यदा च प्राण उत्क्रमणमैच्छत्तदानीमेव वागादयः स्वस्वस्थानाद्विचलिताः सन्तोऽब्रुवत हे भगवंस्त्वं मोत्क्रमीस्त्वदृते वयं जीवितुं नैव शक्ष्याम इति सदृष्टान्तं प्रतिपादनं, ततः यद्येवं भवद्भिर्मम श्रेष्ठता विज्ञाता तर्हि मे भवन्तः सर्वे करं प्रयच्छतेति प्राणस्याज्ञाकरणकथनं, ततो मुख्यस्य प्राणस्याज्ञामनुसृत्य तस्मै वागादीनां स्वस्ववसिष्ठत्वादेर्गुणस्य कररूपेण प्रदानकरणस्य कथनं, तत एवं गुणविशिष्टस्य मे किमन्नं किं वासः इति प्राणस्य पुनरनुयोगकरणकथनं, ततो यदिदं किञ्च जगत्याश्वक्रिमिकीटपतङ्गेभ्योऽन्नं तत्सर्वं तेऽन्नमापो वासश्च स्यादिति वागादीनां प्रतिवचनप्रदानकथनं, उक्तस्य प्राणान्नस्य प्रशंसार्थमर्थवादकथनं, ततः प्राणस्य यस्मादापो वासस्तस्माद्विद्वांसः श्रोत्रिया ब्राह्मणा भोजनस्यादावन्ते चाप आचामन्तीति साभिप्रायमभिधानं, एतद्विज्ञानवेदितृभिरिदानीन्तनैरपि भोजनस्यादावन्ते चापामाचमनं कार्यमिति पुरुषार्थतया विधानं, उक्तविधेरर्थवादकथनं चेत्यादि. | २६४–२७१ |
| ३ श्रीमन्थकर्मब्राह्मणम्–तत्र च कर्मार्थमप्रत्यवायकारिणोपायेन वित्तमुपार्जयितुं श्रीमन्थाख्यस्य कर्मण उपायत्वेनाभिधानं, तत्रापि विशेषतः प्रवृत्ति- | |

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | निमित्तकालसामग्रीतिकर्तव्यताप्रभृतीनां क्रमेण प्रतिपादनं, ततः प्रथमे द्वे आहुती समन्त्रके अभिधाय तृतीयस्या आहुतेर्मन्त्रप्रतीकस्याभिधानं, ततो "ज्येष्ठाय स्वाहा" इत्यारभ्य "प्रजापतये स्वाहा" इत्यन्तानामाहुतीनां सेतिकर्तव्यताकमनुक्रमणं, ततो मन्थस्य समन्त्रकमभिमर्शनविधानं, ततो मन्थस्य समन्त्रकं पात्रेण सह हस्ते ग्रहणविधानं, ततो मन्थस्य व्याहृतीभिर्मधुमतीभिर्ऋग्भिश्च सप्रकारकं भक्षणविधानं, ततोऽग्नेः पश्चाद्भागे प्राक्शिरस्कतया शयनस्य विधानं, ततः प्रातरुत्थायादित्यमुपतिष्ठेतेति समन्त्रकं विधानं, ततो यथागतमागत्य जघनेऽग्निमासीनः सवंशं जपेदिति विधानं, तत्र जपसाधनभूतस्य श्रीमन्थकर्मणो गुरुशिष्यपरम्पराद्योतकस्य वंशस्याभिधानं, तत्रापि विद्याधिगमे षट् तीर्थानि तेषां मध्येऽत्र प्राणदर्शनस्य द्वे एव तीर्थे पुत्रान्तेवासिनावित्यनुज्ञापनं, ततः श्रीमन्थकर्मसाधनभूतानां केषाञ्चित्प्रधानानां पात्राणामभिधानं, ततो मन्थस्य प्रकृतिभूतानि दश ग्राम्याणि धान्यान्यभिधाय तेषां मन्थसम्पादनेतिकर्तव्यतायाः सविशेषं निरूपणं चेत्यादि. | २७१--२७८ |
| ४ | पुत्रमन्थकर्मब्राह्मणम्—तत्र च प्रथमं यादृग्जन्मा यथोत्पादितैर्वा गुणैर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवेत्तथा सम्पादनायोपायानां प्रदर्शनं, तत्र भूतादीनां पृथिव्यादयो रसा इति प्रतिपादनद्वारा रेतसः प्रतिष्ठायै प्रजापतेः स्त्रीसृष्टिनिर्माणकथनं, ततः प्रजापतिः स्त्रीसम्बन्धेन मैथुनाख्यं ग्राम्यधर्मं सृष्ट्वानित्युपपादनं, ततो मैथुनाख्यस्य ग्राम्यधर्मस्य श्रुतिमुखेन वाजपेयसामान्यत्वोपवर्णनं, मैथुनकर्मणः प्रशंसार्थमर्थवादकथनं, तत्र मैथुनकर्मणो वाजपेयसम्पत्तिविदुषोऽविदुषश्च किं फलं भवतीत्यपेक्षायां तस्य निरूपणं, तत्राप्यविद्वत्फले उद्दालकनाककुमारहारितानां सहेतुकं मतनिरूपणं, ततः सुप्तावस्थायां जाग्रदवस्थायां वा बहु वाऽल्पं वा यदि रेतः स्कन्देत्तदा तदभिमृशेद्वाऽनुमन्त्रयेत वेति समन्त्रकं सेतिकर्तव्यताकं विधानं, ततो यदि कदाचिदात्मानमुदके पश्येत्तदाऽप्यभिमन्त्रयेतेति समन्त्रकं विधानं, ऋतुमतीं स्त्रियमभिक्रम्योपमन्त्रयेतेति विधानं, आप्लुती सत्यपि सा चेदस्मै मैथुनं कर्तुं न दद्यात्तदा तां वशीकर्तुमुपायप्रतिपादनं, तत्र मंत्रस्य प्रदर्शनं, यदा च स्त्री मूलत एवानुकूला तदोक्तमन्त्रे ऊहप्रदर्शनं च, ततः स यामिच्छेदियं मां कामयेत तदा तस्या उपस्थमभिमृशेदिति समन्त्रकं सप्रकारकं विधानं, ततः स यामिच्छेदियं मे स्त्री गर्भिणी मा भूदिति तदाऽभिप्राण्यापान्यादिति समन्त्रकं सप्रकारकं विधानं, ततः स यदीच्छेदियं मे स्त्री गर्भिणी भवत्विति तदाऽपान्याभिप्राण्यादिति समन्त्रकं सप्रकारकं विधानं, ततो यस्य जायायै जारः स्यात्तं चेद्द्विष्यात्तदा तत्प्रत्याभिचारिकोपाययोजनस्य समन्त्रकं सेतिकर्तव्यताकं विधानमुक्तोपायफलप्रदर्शनं च, ततः | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| प्रसङ्गाद्रजस्वलायाः स्त्रियो वर्तनधर्माणां निरूपणं, ततः क्रमेण गौरत्वविशिष्टस्य पुत्रस्य–कपिलत्वपिङ्गलत्वविशिष्टस्य पुत्रस्य–श्यामवर्णत्वलोहिताक्षत्वविशिष्टस्य पुत्रस्य–पांडित्यविशिष्टाया दुहितुः–पाण्डित्यप्रख्यातिप्रागल्भ्यैकपाठित्वादिविशेषगुणविशिष्टस्य पुत्रस्य चोत्पादनेच्छायां तत्तदर्थे सेतिकर्तव्यताकस्योपासनस्य पर्यायशोऽभिधानं, तत्रान्तिमे पर्यायस्थोपाये होमादिविशेषेतिकर्तव्यताया अभिधानं, तत्रापि सन्निवेशकाले "अमोऽहमस्मि" इत्यादिमन्त्रेणाभिपद्येतेति विशेषस्याभिधानं, ततः सप्रकारकं समन्त्रकं गर्भाधानकर्मणो विधानं, ततः सप्रकारकं समन्त्रकं सोष्यन्तीकर्मणो विधानं, ततः सप्रकारकं समन्त्रकं जातस्य कर्मणो विधानं, ततो जातस्य कुमारस्य सप्रकारकं समन्त्रकमायुष्यकरणनामकरणयोर्विधानं, तत्र कुमारस्य समन्त्रकमभिमर्शनविधानं, तन्मातुश्च समन्त्रकाभिमन्त्रणविधानं, ततो जातस्य कुमारस्य मात्रे प्रदानं विधाय माता च तस्मै स्तनं प्रयच्छतीति समन्त्रकं स्तन्यप्रदानविधानं, ततोऽनेन विधिना मन्त्रवद्गर्भाधानजातकर्मादिना जातः संस्कृतश्च पुत्रः पितरं पितामहं वाऽतिशेते इति तस्य पुत्रस्य प्रशंसार्थमर्थवादकथनं, ततः समस्तकर्मज्ञानोभयकाण्डात्मकस्य वेदविज्ञानस्य य आचार्यशिष्यपरम्परा-द्योतकः स्त्रीप्रधानत्वाद्गुणविशेषाभिव्यञ्जको विद्यावंशस्तस्य निरूपणं, वाजसनेयेन याज्ञवल्क्येन प्रवचनविषयीकृतानामेषां यजुषां वैशिष्ट्याभिधानं चेत्यादि. | २७८--२९१ |


इति षष्ठोऽध्यायः ।

## इति खिलकाण्डं समाप्तम् ।

### इति षडध्याय्या बृहदारण्यकोपनिषदो विषयानुक्रमणिका समाप्ता ।

### इति चतुर्दशकाण्डात्मकस्य माध्यन्दिनशतपथब्राह्मणस्य विषयानुक्रमणिका परिसमाप्ता ।

## अथ परिशिष्टसूची ।


| | |
|---|---|
| १ अथास्य बृहदारण्यकोपनिषदः स्वाध्यायप्रवचनादौ–आद्यन्तयोः पठ्यमानायाः शान्तेरभिधानम् | २९३ |
| २ स्वाध्यायप्रवचनान्ते पठ्यमानस्य स्वाध्यायानिराकरणस्याभिधानम् | २९४ |
| ३ स्वाध्यायोच्चारणपरिभाषावेदकं व्याख्यासहितं प्रतिज्ञासूत्रम् | २९५–२९९ |
| ४ स्वाध्यायस्वरपरिभाषावेदकं व्याख्यासहितं भाषिकसूत्रं चेति. | ३००–३२० |


इति परिशिष्टसूची ।

इति श्रीगोदातटिनीतटनिकटवर्तिश्रीमन्नासिकमहाक्षेत्रवासिना "वारे" इत्युपनाम्ना ज्योतिर्विज्जयरामप्रपौत्रभट्टात्याजीसूरिपौत्रवैदिकतिलकपदसंभूषिताण्णाशास्त्रिसूनुना "काव्यतीर्थमीमांसकविद्याभरण" इत्युपाधित्रयवता श्रीधरशर्मणा प्रायो भाष्यस्थावतरणिकाद्यनुसारेण क्वचित्स्वमतिवैभवेन च सम्पादिता चतुर्दशकाण्डात्मकमाध्यन्दिनशतपथब्राह्मणस्य विषयानुक्रमणिका परिसमाप्ता ।

॥ इति ॥

॥ श्रीः ॥

# अथ चतुर्दशकाण्डान्तर्गतबृहदारण्यकोपनिषदि अकाराद्यनुक्रमेण विशिष्टनाम्नां सूची.


| नामानि. | अ. ब्रा. क. |
|---|---|
| अग्निः | १।४।१५, २।२।२ |
| | ३।९।२४, ६।३।४ |
| | ६।४।१९, ६।४।२४ |
| अग्निर्वैश्वानरः | १।१।१, ५।९ |
| अजातशत्रुः ( राजा ) | २।१ |
| अत्रिः | २।२।४ |
| अथर्ववेदः | २।४।१०,४।१।२ |
| | ४।५।११ |
| अदितिः | १।२।५ |
| अध्वर्युः | ३।१।४ |
| अन्तर्यामिः | ३।७ |
| अनुमतिः | ६।४।१९ |
| अनुष्टुप् | ५।१४।५ |
| अयास्यः ( आङ्गिरसः ) | १।३।८, १९।२४ |
| अश्वमेधः | १।१।१, १।२।७ |
| | ३।४।२ इत्यादिषु |
| अश्वलः ( होता ) | ३।१।२, ५ |
| अश्विनौ | २।५।१६–१९ |
| | ६।४।२२ |
| असुराः | १।३।५।२।१ |
| अक्षरम् | ३।८।८,४।५।१४ |
| | इत्यादिषु |
| आङ्गिरसः ( अयास्यः ) | ३।३।१ |
| | १।३।८, १९।२४ |
| आथर्वणः ( दध्यङ् ) | २।५।१६–१९ |
| आथर्वणः ( कबन्धः ) | ३।७।१ |
| आत्मा | प्रायः सर्वत्र. |
| आदित्याः | १।४।१२, ३।९।५ |
| आयस्थूणः ( जानकिः ) | ६।३।१०, ११ |
| आर्तभागः ( जारत्कारवः ) | ३।२।१, १३ |

| नामानि. | अ. ब्रा. क. |
|---|---|
| आरुणिः ( उद्दालकः ) | ३।'७।१, २३ |
| | ?।३।७, ६।४।४ |
| आरुणेयः ( श्वेतकेतुः ) | ६।२।१ |
| इन्द्रः | १।४।११, २।२।२ |
| | २।५।१९, ३।९।२,६ |
| | ४।२।२, ६ . ४।२३ |
| इन्द्रगोपः | २।३।६ |
| इन्द्रलोकः | ३।६ |
| इन्धः | ४।२।२, ३ |
| इला ( डा ) | ६।४।२८ |
| उदङ्कः ( शौल्बायनः ) | ४।१।३ |
| उद्दालकः ( आरुणिः ) | ३।७।१, २३ |
| | ६।३।७, ६।४।४ |
| उद्गाता | १।३।२८,३।१।५,१० |
| उद्गीथः | १।३।१–७–२४।६।३।४ |
| उपनिषद् | २।४।१०,३।९।२६ |
| | ४।१।२,४।५।११ |
| उषस्तः ( चाक्रायणः ) | ३।४।१, २ |
| ऋग्वेदः ( ऋक् ) | १।२।५, |
| | १।५।५, २।४।१०,४।१।२, |
| | ४।५।११, ५।१४।२ |
| क्षत्रियः | २।१।१५, १।४।११, १४ |
| कबन्धः ( आथर्वणः ) | ३।७।१ |
| कश्यपः | २।२।४ |
| कहोलः ( डः ) ( कौषितकेयः ) | ३।५ इ. |
| कात्यायनी | २।४।१ |
| काप्यः ( पतञ्चलः ) | ३।३।१,३।७।१ |
| कुरुपञ्चालाः | ३।९।१९,४ |
| | ४।५।१, २, ३।१।१५ |
| कुमारहारितः | ६।४।४ |

| नामानि. | अ. ब्रा. क. |
|---|---|
| कौरव्यायणीपुत्रः | ५ । १ |
| गन्धर्वः | १ । १ । २, ३ । ३ । १ |
| गन्धर्वलोकः | ६ । ६, ४ । ३ । ३३ |
| गर्दभीविपीतः ( भारद्वाजः ) | ४ । १ । ५ |
| गायत्री ( छन्दः ) | ५ । १४ । ४–८ |
| गार्गी ( वाचक्नवी ) | ३ । ६, ३ । ८ |
| गार्ग्यः ( दृप्तबालाकिः ) | २ । १ इ. |
| गौतमः | २ । २ । ४, ३ । ७ । १,२ ६ । २ । ४ इत्यादिषु. |
| चाक्रायणः ( उषस्तः ) | ३ । ४ । १,२ |
| चाण्डालः | ४ । ३ । २२ |
| चूलः ( डः ) ( भागवित्तिः) | ६ । ३ ।९।१० |
| चैकितानेयः ( ब्रह्मदत्तः ) | १ । ३ । २४ |
| जनकः ( वैदेहः ) | ३ । १ । १, २, ४ । १, ४ । २, ४ । ३, ४ । ४।७ |
| जमदग्निः | २ । २ । ४ |
| जानकिः ( आयस्थूणः ) | ६ । ३ । १०,११ |
| जाबालः ( सत्यकामः ) | ४ । १ ।६,६।३।११ |
| जारत्कारवः ( आर्तभागः ) | ३ । २ । १,१३ |
| जित्वा ( शैलिनिः ) | ४ । १ । २ |
| जैवलिः ( प्रवाहणः पञ्चालानां राजा ) | ६ । १ । १ |
| त्वष्टा | ६ । ४ । २१ |
| त्यम् | ३ । ९ । ८ |
| दध्यङ् ( आथर्वणः ) | २ । ५ ।१६–१९ |
| दूर | १ । ३ । ९ |
| दृप्तबालाकिः | २ । १ इ. |
| धाता | ६ । ४ । २१ |
| नाकः ( मौद्गल्यः ) | ६ । ४ । ४ |
| पञ्चालाः ( कुरुपञ्चालाः ) | ६ । २ । १ इ. |
| पतञ्चलः ( काप्यः ) | ३। ३ । १, ३। ७। १ |
| पर्जन्यः | १ । ४ । ११, २ । २ ।२ |
| पारीक्षिताः | ३ । ३ । १ |
| पुरुषः | १ । ४ । १, १ । ५ । २, २ । ३ । ३–६, २। ५, ५। १५इ. |

| नामानि. | अ. ब्रा. क. |
|---|---|
| पूषा | १ । ४ । १३, ५ । १५ इ. |
| पैङ्ग्यः ( मधुकः ) | ६।३।८,९ |
| पौल्कसः | ४ । ३ । २२ |
| प्रजापतिः | १ । ३ । १, १ । ५ । १४–२१ ३ । ९ । २, ६, ५ । २ । १, ५।३, ५ । ५ । १, ६ । ३ ।३,६।४।२,२१ |
| प्रजापतिलोकः | ४ । ३ । ३३. ३ । ६ |
| प्रवाहणः ( जैबलिः ) ( पञ्चालानां राजा ) | ६ । १ । १ |
| प्रस्तोता | १ । ३ । २८ |
| प्रातृदः | ५ । १२ । २ |
| बर्कुः ( वार्ष्णः ) | ४ । १ । ४ |
| ब्रह्म | प्रायः सर्वत्र |
| ब्रह्मा | ३ । १ । ६ |
| ब्रह्मदत्तः ( चैकितानेयः ) | १ । ३ । २४ |
| ब्रह्मणस्पतिः | १ । ३ । २१ |
| ब्रह्मलोकः | ६ । २ । १५, ४।३।३३, ३ । ६, ४ । ४ । २३ |
| ब्रह्मविद् | ३ । ७ । १, ४ । ४ । ८,९ |
| ब्राह्मणः | २ । १ । १५, १ । ४।१५, ३ । ५, ४ । ४ । २३,६ । २ । ८ |
| बृहस्पतिः | १ । ३ । २० |
| भरद्वाजः | २ । २ । ४ |
| भागवित्तिः ( चूलः ) ( डः ) | ६ । ३ । ९,१० |
| भारद्वाजः ( गर्दभीविपीतः ) | ४ । १ । ५ |
| भुज्युः ( लाह्यायनिः ) | ३ । ३ । १,२ |
| मद्राः | ३ । ३ । १, ३ । ७ । १ |
| मधुकः ( पैङ्ग्यः ) | ६ । ३ । ८,९ |
| मनुः | १ । ४ । १० |
| मरुतः | १ । ४ । १२ |
| मृत्युः | १ । २, १ । ४ । ११ |
| मैत्रेयी | २ । ४ । १–३, ४ । ५ |
| मौद्गल्यः ( नाकः ) | ६ । ४ । ४ |

| नामानि. | अ. ब्रा. क. |
|---|---|
| यजुर्वेदः ( यजुः ) | १।२।९, १।९।९, २।४।९,४।१।२, ४।९।११, ९।१३।२,९।१४। २ ।,६।९।३ |
| यमः | १।४।११, ३।९।२१,९।१।१९ |
| याज्ञवल्क्यः | १।४।३, २।४, ६।३।७,८ इत्यादिषु—प्रायः सर्वत्र |
| राजसूयः | १।४।११ |
| रुद्रः | १।४।११, २।२।२ |
| रुद्राः | १।४।१२,३।९।२,४ |
| लाह्यायनिः ( भुज्युः ) | ३।३।१,२ |
| वरुणः | १।४।११,३।९।२२ |
| वसवः | १।४।१२,३।९।२,३ |
| वसिष्ठः | २।२।४ |
| वाजपेयः | ६।४।३ |
| वाजसनेयः ( याज्ञवल्क्यः ) | ६।४।३३ इ. |
| वामदेवः | १।४।१० |
| वायुः | १।९।२२, ३।७।२,६।४।२२ |
| वार्ष्णः ( बर्कुः ) | ४।१।४ |
| विदग्धः ( शाकल्यः ) | ३।९, ४।१।७ |
| विराट् | ४।२।३ |
| विश् | १।४।१२, १४ |
| विश्वामित्रः | २।२।४ |
| विश्वावसुः | ६।४।१९ |
| विश्वेदेवाः | १।४।१२ |

| नामानि. | अ. ब्रा. क. |
|---|---|
| विष्णुः | ६।४।२१ |
| वेदाः | ४।३।२२,४।९।७ |
| शाकल्यः( विदग्धः ) | ३।९,४।१।१७ |
| शूद्रः | १।४।१३, १९ |
| श्वेतकेतुः ( आरुणेयः ) | ६।२।१ |
| शैलिनिः ( जित्वा ) | ४।१।२ |
| शौल्बायनः ( उदङ्कः ) | ४।१।३ |
| सत्यकामः ( जाबालः ) | ४।१।६,६।३।११ |
| सरस्वती | ६।४।२७ |
| सविता | ६।३।६, ६।४।१९ |
| साम | १।३।२२, १।६।१,३, ९।१३।३ |
| सामवेदः | १।२।९, १।३।२२, १।९।९,२।४।१०,४।१।२, ४।९।११, ९।१४।२ |
| सामश्रवाः | ३।१।२ |
| सावित्री ( गायत्री ) | ९।१४।९,६।३।६ |
| सुधन्वा | ३।३।१ |
| सूर्यः | १।४।१० |
| सोमः ( सोमराजा ) | १।३।२४,१।४।११, २।१।१९, ३।९।२३, ६।२।९, १०, १६,३।३।३ |
| होता | ३।१।३ |

इति बृहदारण्यकोपनिषयकारानुक्रमेण
विशिष्टनाम्नां सूची समाप्ता ।

इति श्रीगोदातटिनीतटनिकटवर्तिश्रीमन्नासिकमहाक्षेत्रवासिना " वारे " इत्युपनाम्ना ज्योतिर्विज्जयरामप्रपौत्रभट्टात्याजीसूरिपौत्रवैदिकतिलकपदसंभूषिताण्णाशास्त्रिसूनुना " काव्यतीर्थमीमांसकविद्याभरण " इत्युपाधित्रयवता श्रीधरशर्मणा संकलिता माध्यन्दिनशतपथब्राह्मणस्य चतुर्दशकाण्डान्तर्गता अकाराद्यनुक्रमविशिष्टा विशिष्टनाम्नां सूची परिसमाप्ता ॥

श्रीशः शरणम् ।

# अथ बृहदारण्यकोपनिषत्स्थकाण्डाध्याय-प्रपाठकब्राह्मणकण्डिकानामनुक्रमणिका ।


| काण्डानि. | पृष्ठांकाः |
|---|---|
| १-प्रश्नाज्ञानिभागमप्रधानं द्यध्यायं मधुकाण्डम् । | १ |
| २-सुहृदुपदेशनिभोपपत्तिप्रधानं द्यध्यायं याज्ञवल्क्यकाण्डं वा मुनिकाण्डम् । | ९९ |
| ३-सारभूतं द्यध्यायं खिलकाण्डम् । | २२९ |

| अध्यायाः । | प्रपाठकाः । |
|---|---|
| १--प्रथमोऽध्यायः | १--प्रथमः प्रपाठकः |
| २--द्वितीयोऽध्यायः | २--द्वितीयः प्रपाठकः |
| ३--तृतीयोऽध्यायः | ३--तृतीयः प्रपाठकः |
| ४-चतुर्थोऽध्यायः | ४--चतुर्थः प्रपाठकः |
| ५--पञ्चमोऽध्यायः | ५--पञ्चमः प्रपाठकः |
| ६--षष्ठोऽध्यायः | |


## तत्र ब्राह्मणानामकाराद्यनुक्रमेण सूची.


| अनुक्रमांकः ब्राह्मणनामानि. | कण्डिकाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| १-अजातशत्रुब्राह्मणं वा पर्यङ्कविद्याब्राह्मणम् | २३ | ५७-६६ |
| २-अन्नप्राणयोरेकब्रह्मोपासनाविधायकं ब्राह्मणम् | ३ | २४०-२४२ |
| ३-अश्वलब्राह्मणम् | १२ | ९५-१०२ |
| ४-आर्तभागब्राह्मणं वा जारत्कारवब्राह्मणम् | १४ | १०२-१०७ |
| ५-उद्दालकब्राह्मणं वा अन्तर्यामिब्राह्मणं वा सृष्टिप्रवेशब्राह्मणम् | ३१ | ११७-१२५ |
| ६-उद्गीथब्राह्मणं वा वैराजब्राह्मणम् | ३३ | १-१६ |
| ७-उषस्तब्राह्मणं वा निर्गुणात्मविद्याब्राह्मणम् | १ | ११३-११४ |
| ८-कहोडब्राह्मणं वा निर्गुणब्रह्मविद्याब्राह्मणम् | १ | १११-११२ |
| ९-कूर्चब्राह्मणम् | ६ | १५६-१६१ |
| १०-गायत्रब्रह्मोपासनाब्राह्मणम् | १२ | २४५-२५१ |
| ११-गार्गीब्राह्मणम् | १ | ११५-११६ |
| १२-जठरस्थवैश्वानरोपासनाब्राह्मणम् | १ | २३८ |
| १३-ज्वरादिव्याधेस्तपस्त्वोपासनाब्राह्मणम् | १ | २३८-२३९ |
| १४-ज्येष्ठश्रेष्ठब्राह्मणं वा प्राणविद्याब्राह्मणम् | १५ | २६४-२७१ |
| १५-ज्योतिर्ब्राह्मणम् | ४४ | १६२-१८८ |
| १६-त्र्यन्नब्राह्मणं वा अविद्यासंसारतत्त्वप्रदर्शकं वा उपसंहारब्राह्मणम् | ३ | ५४-५६ |
| १७-दमदानदयेति त्रिकोपदेशब्रा. | ३ | २२७-२२८ |
| १८-पञ्चाग्निविद्याब्राह्मणं वा श्वेतकेतुब्राह्मणम् | १९ | २५२-२६३ |
| १९-प्राणोपासनाब्राह्मणम् | ४ | २४२-२४४ |
| २०-पुत्रमन्थकर्मब्राह्मणम् | ३३ | २७८-२९२ |
| २१-पुरुषविधब्राह्मणं वा सृष्टिब्राह्मण वा आत्मब्राह्मणम् | ३१ | १६-३५ |
| २२-भुज्युब्राह्मणम् | २ | २०८-२१० |
| २३-मधुब्राह्मणम् | २२ | ८३-९४ |
| २४-मनोमयपुरुषब्रह्मोपासनाब्राह्मणम् | १ | २३६-२३७ |
| २५-मूर्तामूर्तब्राह्मणम् | ११ | ७१-७४ |
| २६-मैत्रेयीब्राह्मणम् | १६ | ७४-८२ |
| २७-याज्ञवल्क्यमैत्रेयीसंवादब्रा० | २८ | २१३-२२४ |
| २८-वाचक्नवीब्राह्मणं वा अक्षरब्राह्मणं वा सृष्टिप्रवेशब्राह्मणम् | १२ | १२५-१३२ |
| २९-विद्युद्ब्रह्मोपासनाब्राह्मणम् | १ | २३६ |
| ३०-वेदत्रयीवाग्धेनूपासनाब्राह्मणम् | १ | २३७ |
| ३१-शाकल्यब्राह्मणं वा शाकल्यग्रन्थो वा | ३४ | १३२-१४८ |
| ३२-शान्तिब्राह्मणम् | १ | २२५-२२६ |

| अनुक्रमाङ्कः ब्राह्मणनामानि. | कण्डिकाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| ३३--शारीरकब्राह्मणम् | ३१ | २३२--१४८ |
| ३४--श्रीमन्थकर्मब्राह्मणम् | २२ | २७१--२७८ |
| ३५--षडाचार्यब्राह्मणं वा उदङ्कब्राह्मणम् | १९ | १४९--१५६ |
| ३६--सत्यस्य ब्रह्मणः स्तुतिब्राह्मणम् | ५ | २३२--२३५ |
| ३७--सत्तान्नब्राह्मणं वा संवर्गविद्याब्राह्मणम् | ३४ | ३६--५३ |
| ३८--सर्वान्नब्राह्मणं वा शिशुब्राह्मणम् | ६ | ६७--७० |
| ३९--सर्वासामुपासनानां गतेः फलस्य च विधायकं ब्राह्मणम् | १ | २३९--२४० |
| ४०--सूर्याग्न्योरुपस्थानब्राह्मणम् | १ | २२९ |
| ४१--हृदयब्रह्मोपासनम् | १ | २३० |
| ४२--हृदयब्रह्मणः सत्यमित्युपासनाविधिब्राह्मणम् | १ | २३१ |


**तत्रैकैकस्य ब्राह्मणस्य नेके पर्याया-स्तेषामप्यकाराद्यनुक्रमेण सूची.**


| अनुक्रमाङ्कः ब्राह्मणनामानि. | कण्डिकाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| १--अन्तर्यामिब्राह्मणम् | ३१ | ११७--१२५ |
| २--अविद्यासंसारतत्त्वप्रदर्शकं ब्राह्मणम् | ३ | ५४-५६ |
| ३--अक्षरब्राह्मणम् | १२ | १२५--१३२ |
| ४--आत्मब्राह्मणम् | ३१ | १६-३५ |
| ५--उदङ्कब्राह्मणम् | १९ | १४९--१५६ |
| ६--उपसंहारब्राह्मणम् | ६ | ५४--५६ |
| ७--जारत्कारवब्राह्मणम् | १४ | १०२--१०७ |
| ८--निगुणब्रह्मविद्याब्राह्मणम् | १ | १११--११२ |
| ९--निर्गुणात्मविद्याब्राह्मणम् | १ | ११३--११४ |
| १०--पर्यङ्कविद्याब्राह्मणम् | २३ | ५७--६६ |
| ११--प्राणविद्याब्राह्मणम् | १५ | २६४--२७१ |
| १२--वैराजब्राह्मणम् | ३७ | १--१६ |
| १३--शाकल्यग्रन्थः | ३४ | १३२--१४८ |
| १४--शाण्डिल्यविद्याग्रन्थः | | २३६--२५१ |
| १५--शिशुब्राह्मणम् | ६ | ६७--७० |
| १६--श्वेतकेतुब्राह्मणम् | १९ | २५२--२६३ |
| १७--संवर्गविद्याब्राह्मणम् | ३४ | ३६--५३ |
| १८--सृष्टिब्राह्मणम् | ३१ | १६--३५ |
| १९--सृष्टिप्रवेशब्राह्मणम् | ३१ | १०७--१२५ |
| २०--सृष्टिप्रवेशब्राह्मणम् | १२ | १२९--१३२ |


**इति बृहदारण्यकोपनिषत्स्थब्राह्मणानामकाराद्यनुक्रमणिका समाप्ता ।**

इति श्रीगोदातटिनीतटनिकटवर्तिश्रीमन्नासिकमहाक्षेत्रवासिना “ वारे ” इत्युपनाम्ना श्रीमद्वैदिकतिलकपदभागण्णाशास्त्रिसूनुना “ काव्यतीर्थमीमांसकविद्याभरणा ” इत्युपाधित्रयभाजा श्रीधरशर्मणा संकलिता बृहदारण्यकोपनिषत्स्थ-ब्राह्मणानामकाराद्यनुक्रमणिका परिसमाप्ता ।

श्रीः

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

तत्र

## चतुर्दशे काण्डे १४-

वासुदेवप्रकाशिकाख्यभाष्यसमेता

बृहदारण्यकोपनिषत् ।

# अथोत्तराख्ये भागे चतुर्दशे काण्डे[1] षडध्यायी बृहदारण्यकोप[2]निषत् ।

## तत्रादिमं द्व्यध्यायं मधुकाण्ड[3]म् ।

### अथ प्रथमोऽध्यायः प्रारभ्यते ।

तत्र प्रथमेऽध्याये प्रपाठके च प्रथमं ब्राह्मणम् ।

**द्वया ह प्राजापत्याः । ( ० ) देवाश्चासुराश्च ततः कानीयसाऽएव देवा ज्यायसाऽअसुरास्तऽएषु लोकेष्वस्पर्द्धन्त ॥ १ ॥**

---

उद्गीथब्राह्मणम् । वैराजब्राह्मणं वा ।

द्वया ह प्राजापत्याः । देवाश्चासुराश्च । ततः कानीयसा एव देवाः । ज्यायसा असुराः । त एषु लोकेष्वस्पर्धंत ॥ १ ॥

---

### श्रीमद्वासुदेवब्रह्मभगवत्कृतं वासुदेवप्रकाशिकाख्यं भाष्य[4]म् ।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः ॥

**द्वया ह प्राजापत्या** इत्येवमाद्या षडध्यायी माध्यन्दिनीयब्राह्मणोपनिषत् । तस्या इयमल्पग्रंथा वृत्तिरारभ्यते । उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैव वाच्या । उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणां सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रंथस्तु विद्यासमर्थकत्वेनोपचारादुपनिषदित्युच्यते । बृहत्त्वञ्चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनामिहोपदेशात् अर्थतो ग्रंथपरिमाणतश्च बहुत्वात् । आरण्यकत्वञ्चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात् । अथ कर्मकाण्डज्ञानकाण्डयोर्नियतपौर्वापर्ये संबन्धोऽभिधीयते । विद्योत्पत्त्यपेक्षितविवेकवैराग्यशमदमादिमुमुक्षुत्वसम्पत्तिहेतुसत्त्वशुद्धिसम्पादकतया कर्मकाण्डस्य प्राथम्यम् । तज्जनितशुद्ध्यपेक्षया तत्त्वज्ञानजनकत्वात् ज्ञानकाण्डस्य नियतमुत्तरभावित्वमित्युपायोपेयभावः काण्डयोः संबन्ध

---

१–अस्य " उत्तरकाण्डम् " इत्यपि नामान्तरम् । " ततः षष्टिपथं कृत्स्नं सरहस्यं ससंग्रहम् । चक्रे सपरिशेषं च सोत्तरं च प्रहर्षतः " ॥ इति ( म. भा. शां. प. मो. ध. ४३ । १६ ) इत्यत्र प्रतिपादितम् ॥

२–इयमुपनिषन्माध्यन्दिनब्राह्मणोपनिषदिति नाम्नाऽपि प्रसिद्धा ।

३–अनयोर्द्वयोरध्याययोर्मधुविद्याप्रतिपादकत्वान्मधुकाण्डमिति संज्ञा व्यवहारार्था ।

४–अस्या बृहदारण्यकोपनिषदः श्रीमत्सायणाचार्यकृतं भाष्यं विद्यत इति " उषा वा अश्वस्य० "–" नैवेह किञ्चनाग्रे० " ( श. प. १० । ६ । ४ । ५ । ) इत्येतद्ब्राह्मणद्वयमधिकृत्य–" अक्षरार्थस्तु–उत्तरत्र बृहदारण्यके " तथा प्रवर्ग्ये–घर्मभेदप्रायश्चित्तं प्रकृत्य–" एतच्चोत्तरस्मिन्नध्याये स्पष्टयिष्यते " ( श. प. १४ ( १ ) ३ । २ । १६ ) इति श्रीसायणाचार्यैरेवासकृदुक्तत्वाज्ज्ञायते । परं तच्चान्विष्यापि नोपलभामहे स्म । यदि केषांचन महाभागानां सविधेऽस्ति, तर्हीयेत चेत्पुनर्मुद्रणावसरेऽवश्यं संयोजयिष्यामः । इति ॥

ते ह देवाऽऊचुः । ( हं ) हन्तासुरान्यज्ञऽउद्गीथेनात्ययामेति ॥ २ ॥

ते ह व्वाचमूचुः । ( स्त्वं ) त्वन्नऽउद्गायेति तथेति तेभ्यो व्वागुदगाय-
द्यो व्वाचि भोगस्तन्देवेभ्यऽआगायद्यत्कल्याणम्वदति तदा᳚त्मने तेऽविदु-

---

ते ह देवा ऊचुः । हंत ! असुरान् यज्ञ उद्गीथेनात्ययामेति ॥ २ ॥

ते ह वाचमूचुः । त्वं न उद्गायेति । तथेति । तेभ्यो वागुदगायत् । यो वाचि भोगः । तं देवेभ्य

---

इति क्रमः ॥ पूर्वमग्निरहस्यकाण्डसमाप्तावश्वमेधाग्निब्राह्मणाभ्यां ( श. प. १० । ६ । ४ । ९ । ) समुच्चितयोः केवलयोर्वा ज्ञानकर्मणोर्मृत्युत्वात्मभावः परं फलमित्युक्तम् । अथेदानीम्मृत्युत्वात्मभावसाधनभूतयोः कर्मज्ञानयोर्थत उद्भवः तस्योद्भावकस्योपास्यस्य प्राणस्य स्वरूपनिर्णयार्थमुद्गीथब्राह्मणमारभ्यते । प्राणोपास्तिर्हि ज्ञानकर्मोत्पत्तिप्रतिबंधकीभूतरागाद्यपध्वस्तिहेतुः । तस्याः पाप्ममृत्युत्वतिक्रमणावान्तरफलत्वात् । कोऽसौ पाप्मा मृत्युः, कुतो वा तस्योद्भवः, केन वा तस्यातिक्रमणं कथं वेति वीक्षायामेतत्सर्वं स्पष्टयितुमाख्यायिकामनुसृत्य द्वया हेत्यादिश्रुतिः प्रवर्तते । अत्र हशब्दः पूर्ववृत्तार्थद्योतकः । प्रजापतिशब्दश्च भविष्यद्वृत्तिमाश्रित्य यजमानविषयकः। तथा च ' द्वयाः ' द्विप्रकाराः ' ह ' किल ' प्राजापत्याः ' प्रजापतेर्हिरण्यगर्भस्य अतीतजन्मनि यजमानावस्थस्य अपत्यभूता गोलकावस्था वागादयः प्राजापत्याः । के ते द्विप्रकारा इत्यत आह—देवाश्चासुराश्चेति । शास्त्रीयज्ञानकर्मवासनावासिताः द्योतनात्मका देवाः । प्रत्यक्षानुमानजनितदृष्टप्रयोजकस्वाभाविकज्ञानकर्मवासनावासिता असुराः । स्वेष्वेवासुषु रमणात् देवेभ्योऽन्यत्वाद्वा असुराः । नेन्द्रविरोचनादयः प्राणाधिकारादित्यर्थः । ' चौ ' समुच्चये । मिथः यस्माद्वागादीनामासुरी वृत्तिर्बहुला । ततस्तस्मात् ' देवाः कानीयसा एव ' अल्पीयांस एव कनीयांस एव । कानीयसाः । स्वार्थेऽणि वृद्धिः । अल्पा एव देवाः शास्त्रप्रवृत्तेरत्यंत यत्नसाध्यत्वात् । ' ज्यायसाः ' ज्यायांसो बहुतराः ' असुराः ' शास्त्रानाधेयस्वाभाविकप्रवृत्तेर्बहुलत्वात् । ' ते ' देवासुराः ' एषु लोकेषु ' ब्रह्मादिस्थावरान्तेषु शास्त्रीयाशास्त्रीयज्ञानकर्मसाध्येषु निमित्तभूतेषु सत्सु ' अस्पर्द्धंत ' स्पर्द्धां कृतवन्तः । तेषां देवासुराणां सात्त्विकतामसत्वानुसारेण कामकामादिवृत्त्युद्भवाभिभवौ स्पर्द्धा । कदाचित्प्राणानां शास्त्रजनितवृत्त्युद्भवाद्देवानाञ्जये सति धर्मवृद्धेर्वागाद्युपहितस्य यजमानस्य धर्मप्राधान्यादामानुषादाप्रजापतेश्चोत्कर्षः । तद्विपरीतवृत्त्युद्भवाच्चासुराणां जये सति अधर्मवृद्धेरामानुषादास्थाणोश्चापकर्षः । साम्ये च मनुष्यत्वप्राप्तिरित्यर्थः ॥ १ ॥

असुराणां बाहुल्यात् तैरभिभूयमाना अल्पा देवाः किं कृतवन्त इत्यत आह—ते ह देवा ऊचुरित्यादिना । ' ते देवाः ' असुरैरभिभूयमानाः ' ह ' किल ' ऊचुः ' उक्तवन्तः । हन्तेदानीमस्मिन्यज्ञे ज्योतिष्टोमाख्ये उद्गीथेनोद्गीथकर्मपदार्थकर्तृप्राणस्वरूपाश्रयणेनासुरानत्ययामातिगच्छामः । असुरानभिभूय स्वं देवभावं प्रतिपद्यामहे इत्यन्योन्यमुक्तवन्त इत्यर्थः । उद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणञ्च ज्ञानकर्मभ्यां भवति । तत्र कर्म " तदेतानि जपेत् " ( श. प. बृ. १४ । १ । १ । ३० ) इति विधास्यमानं मन्त्रजपलक्षणम् । ज्ञानं तु इहाख्यायिकया परीक्ष्यमाणमशुद्धवागादिप्रत्याख्यानेन प्राणोपासनरूपमित्यर्थः ॥ २ ॥

इह शुद्धादिगुणविशिष्टप्राणविज्ञानस्य विधित्सितत्वात् तस्य स्वरूपनिर्द्धारणाय परीक्षाप्रकार आरभ्यते—ते ह वाचमित्यादिकण्डिकाषट्केन । तत्र प्रथमं वाग्देवतापरीक्षामाह—ते ह वाचमूचुरिति । ' ते ' पूर्वोक्ता

रनेन वै नऽउद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपम्वदति सऽएव स पाप्मा ॥ ३ ॥

( प्मऽथ ) अथ ह प्राणमूचुः । ( स्त्वं ) त्वन्नऽउद्गायेति तथेति तेभ्यः प्राणऽउदगायद्यः प्राणे भोगस्तन्देवेभ्यऽआगायद्यत्कल्याणञ्जिघ्रति तदा-

---

आगायत् । यत्कल्याणं वदति । तदात्मने । ते अविदुः-अनेन वै न उद्गात्रा अत्येष्यंतीति । तमभिद्रुत्य पाप्मना अविध्यन् । स यः स पाप्मा । यदेवेदमप्रतिरूपं वदति । स एव स पाप्मा ॥ ३ ॥

अथ ह प्राणमूचुः । त्वं न उद्गायेति । तथेति । तेभ्यः प्राण उदगायत् । यः प्राणे भोगः । तं

---

देवाः 'ह' उक्तप्रकारेण विनिश्चित्य 'वाचं' वागभिमानिनीमग्न्याख्यामेवोद्गानकर्त्रीं "असतो मा सद्गमय" ( श. प. बृ. १४ । १ । १ । ३० ) इत्यादिमन्त्रप्रकाश्यां च देवतां मत्वा 'त्वं' नोऽस्मभ्यं 'उद्गाय' औद्गात्रं कर्म कुरु 'इत्यूचुः' उक्तवन्तः । एवं देवैर्नियुक्ता वाग्देवता 'तथेति' तथाऽस्त्विति तान्नियोक्तॄन् प्रति उक्त्वा स्वसामर्थ्यमविचार्य उद्गानकर्तृत्वं मन्त्रप्रकाश्यत्वं चात्मनोऽङ्गीकृत्य तेभ्योऽर्थिभ्योऽर्थाय उदगायदुद्गानं कृतवती । कः पुनरनेन कर्मणा कार्यविशेषः कृत इत्यपेक्षायां-यथा प्रकृते ज्योतिष्टोमे द्वादशस्तोत्रात्मके उद्गात्रा त्रिषु पवमानाख्येषु स्तोत्रेषु यजमानार्थमुद्गानं क्रियते । अवशिष्टेषु नवसु स्तोत्रेषु वाचनिकार्त्विज्यफलकं स्वार्थं तद्वदत्रापि द्विविधमुद्गानमिति कथयितुं तं तं कार्यविशेषमाह-**यो वाचि भोग** इति । 'यो वाचि' निमित्तभूतायां सत्यां वागादिसमुदायस्य 'भोगः' सुखविशेषः । 'तं' 'देवेभ्यः, अर्थिभ्योऽर्थाय 'आगायत्' उद्गानेन प्रापितवती । यत्पुनः 'कल्याणं' शोभनं 'वदति' यथाशास्त्रं वर्णानभिनिर्वर्त्तयति 'तदात्मने' स्वार्थमेव । तद्धि असाधारणं वह्निवाग्देवतायाः कर्म-यत्सम्यग्वर्णोच्चारणम् । एवं वाग्देवतायाः कल्याणवदनरूपासाधारणविषयासङ्गलक्षणं रंध्रस्यावसरं प्रतिलभ्यासुराः स्वकार्योद्युक्ता जाता इत्याह-**तेऽविदुरिति** । 'ते' असुराः कामादिप्रवृत्तेः देवैः शमादिना कृत्वा प्रच्याव्यमानाः देवहृद्गतमविदुर्विदितवन्तः । किन्तदित्यत आह-**अनेन वै नऽ उद्गात्राऽत्येष्यन्तीति** । 'अनेन वै उद्गात्रा' शास्त्रजनितकर्मज्ञानरूपेण नोऽस्मान् स्वाभाविककर्मज्ञानात्मकान् देवाः 'अत्येष्यंति' अतिगमिष्यन्ति इत्येवं विदित्वा तमुद्गातारं वाग्रूपं 'अभिद्रुत्य' वेगेनाभिगम्य स्वेनासङ्गलक्षणेन 'पाप्मना अविध्यन्' ताडितवन्तः संयोजितवन्त इति यावत् । एवमसुरैः प्रजापतेर्वाचि पाप्मा क्षिप्त इति कुतो गम्यते ? तत्राह-**स यः स पाप्मेति** । 'यः स पाप्मा' साधकावस्थस्य प्रजापतेर्वाचि प्रक्षिप्तः । 'सः' एषः अनुमानेन प्रत्यक्षीक्रियते । कोऽसौ 'यदेव' येनैव प्रयुक्ता सती इयं वाग् इदमप्रतिरूपमननुरूपं शास्त्रप्रतिषिद्धं असभ्यस्त्रीवर्णनप्रेतादिवर्णनानृतादि 'वदति'-'स एव' । य एवं प्रजासु प्रतिकूलवदनहेतुत्वेनानुमितः 'स एव पाप्मा' । सः कारणभूतप्रजापतिवाचिगतः । तथा च-आद्यसकाराभ्यां कारणस्थं पाप्मानमनूद्य तस्यैव कार्यस्थत्वमुच्यते । उत्तराभ्यां तु कार्यस्थं पाप्मानमनूद्य तस्यैव कारणस्थत्वमुच्यत इति भावः । कारणानुविधायि हि कार्यमिति ॥ ३ ॥

'अथ ह प्राणं'-प्राणदेवतां-'ऊचुः' इत्यारभ्य ( कं. ४ ) 'एवमु खलु' ( कं. ७ ) इत्यतः प्राक्तनो ग्रंथः समानार्थकः ॥ ४ ॥

---

१-स यः स पाप्मेति । स एव स पाप्मा इति । तृतीयादि कंडिकासु आद्यावुत्तरौ च सकारौ अवगंतव्यौ ।

त्मन॒ तेऽविदुरने॒न वै॒ नऽउद्गात्राऽत्येष्यन्ती॒ति त॒मभिद्रु॒त्य पा॒प्मनाऽविध्यन्त्स यः स॒ पाप्मा य॒देवेदम॒प्रतिरूपञ्जिघ्रति स॒ऽएव स॒ पाप्मा ॥ ४ ॥

( प्मा॒ऽथ ) अ॒थ ह च॒क्षुरूचुः । ( स्त्वं॒ ) त्वन्न॒ऽउद्गायेति तथे॒ति ते॒भ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तन्देवे॒भ्यऽआगायद्य॒त्कल्याणम्पश्यति त॒दात्मन॒ तेऽविदुरने॒न वै॒ नऽउद्गात्राऽत्येष्यन्ती॒ति त॒मभिद्रु॒त्य पा॒प्मनाऽविध्यन्त्स यः स॒ पाप्मा य॒देवेदम॒प्रतिरूपम्पश्यति स॒ऽएव स॒ पाप्मा ॥ ५ ॥

( प्मा॒ऽथ ) अ॒थ ह श्रोत्रमूचुः । ( स्त्वं॒ ) त्वन्न॒ऽउद्गायेति तथे॒ति ते॒भ्यः श्रोत्रमु॒दगायद्यः श्रोत्रे भोगस्तन्देवे॒भ्यऽ आगायद्य॒त्कल्याणꣳ शृणोति त॒दात्मन॒ तेऽविदुरने॒न वै॒ नऽउद्गात्राऽत्येष्यन्ती॒ति त॒मभिद्रु॒त्य पा॒प्मनाऽविध्यन्त्स यः स॒ पाप्मा य॒देवेदम॒प्रतिरूपꣳ शृणोति स॒ऽएव स॒ पाप्मा॥६॥

( प्मा॒ऽथ ) अ॒थ ह म॒नऽऊचुः । ( स्त्वं॒ ) त्वन्न॒ऽउद्गायेति तथे॒ति ते॒भ्यो म॒नऽ उ॒दगायद्यो म॒नसि भोगस्तन्देवे॒भ्यऽआगायद्य॒त्कल्याणꣳ सङ्कल्प-

---

देवेभ्य आगायत् । यत्कल्याणं जिघ्रति । तदात्मने । ते अविदुः—अनेन वै न उद्गात्रा अत्येष्यंतीति । तमभिद्रुत्य पाप्मना अविध्यन् । स यः स पाप्मा । यदेवेदमप्रतिरूपं जिघ्रति । स एव स पाप्मा ॥ ४ ॥

अथ ह चक्षुरूचुः । त्वं न उद्गायेति । तथेति । तेभ्यश्चक्षुरुदगायत् । यश्चक्षुषि भोगः । तं देवेभ्य आगायत् । यत्कल्याणं पश्यति । तदात्मने । ते अविदुः—अनेन वै न उद्गात्रा अत्येष्यंतीति । तमभिद्रुत्य पाप्मना अविध्यन् स यः । स पाप्मा । यदेवेदमप्रतिरूपं पश्यति । स एव स पाप्मा ॥ ५ ॥

अथ ह श्रोत्रमूचुः । त्वं न उद्गायेति । तथेति । तेभ्यः श्रोत्रमुदगायत् । यः श्रोत्रे भोगः । तं देवेभ्य आगायत् । यत्कल्याणं शृणोति । तदात्मने । ते अविदुः—अनेन वै न उद्गात्रा अत्येष्यंतीति । तमभिद्रुत्य पाप्मना अविध्यन् । स यः स पाप्मा । यदेवेदमप्रतिरूपं शृणोति । स एव स पाप्मा ॥ ६ ॥

अथ ह मन ऊचुः । त्वं न उद्गायेति । तथेति । तेभ्यो मन उदगायत् । यो मनसि भोगः । तं देवेभ्य आगायत् । यत्कल्याणं संकल्पयति । तदात्मने । ते अविदुः अनेन वै न उद्गात्रा

---

अथ ह चक्षुरूचुः ॥ ५ ॥

अथ ह श्रोत्रमूचुः ॥ ६ ॥

अथ ह मनऽ ऊचुः । एताः कण्डिकाः स्पष्टार्थाः । कल्याणाकल्याणकार्यदर्शनात् अनुक्तेषु त्वगादिष्वपि

यति तदात्मने तेऽविदुरनेन वै नऽ उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपᳬं सङ्कल्पयति सऽ एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मना-ऽविध्यन् ॥ ७ ॥

( अथ ) अथ हेममासन्यम्प्राणमूचुः । ( त्त्वं ) त्वन्नऽउद्गायेति तथेति तेभ्यऽ एष प्राणऽउदगायत्तेऽविदुरनेन वै नऽउद्गात्राऽत्येष्यन्तीति तम-भिद्रुत्य पाप्मनाऽविव्यत्सन्त्स यथाऽश्मानमृत्वा लोष्टो विध्वᳬंसेतै-वᳬं हैव विध्वᳬंसमाना विष्वञ्चो विनेशुस्ततो देवाऽअभवन्परा-ऽसुरा भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति यऽएवम्वेद ॥ ८ ॥

---

अत्येष्यन्तीति । तमभिद्रुत्य पाप्मना अविध्यन् । स यः स पाप्मा । यदेवेदमप्रतिरूपं संकल्पयति । स एव स पाप्मा । एवमु खल्वेता देवताः पाप्मभिरुपासृजन् । एवमेनाः पाप्मना-ऽविध्यन् ॥ ७ ॥

अथ ह इममासन्यं प्राणमूचुः । त्वं न उद्गायेति । तथेति । तेभ्य एष प्राण उदगायत् । ते अविदुः—अनेन वै न उद्गात्रा अत्येष्यंतीति । तमभिद्रुत्य पाप्मनाऽविव्यत्सन् । स यथा अश्मानमृत्वा लोष्टो विध्वंसेत । एवं हैव विध्वंसमाना विष्वंचो विनेशुः । ततो देवा अभवन् । पराऽसुराः । भवत्यात्मना । पराऽस्य द्विषन् भ्रातृव्यो भवति । य एवं वेद ॥ ८ ॥

---

असुरवेधोऽनुमीयते, इत्याह—एवमु खल्वेता देवताः पाप्मभिरुपासृजन्निति । ' एवं ' वागादिवदेव ' खलु ' अनुक्ता अपि ' एताः ' त्वगादिदेवताः कर्मभूताः ' पाप्मभिः ' स्वैः स्वैरिन्द्रियासङ्गैरुपासृजन् संसर्गिकृतवन्तः असुरा इति शेषः । तेषामपि कल्याणाकल्याणस्पर्शवत्त्वात् । भेदभ्रमव्यावृत्त्यर्थमेतदेव व्याचष्टे—एवमेनाः पाप्मनाऽविध्यन्निति । एनास्त्वगादिदेवताः कर्मभूताः ' एवं ' वागादिवत्पाप्मना ' अविध्यन् ' विद्धवन्तोऽसुरा इत्यर्थः ॥ ७ ॥

एवं वागादयो मृत्योरतिक्रमणे असमर्था इति निश्चित्य अशरणाः सन्तो देवाः मृत्य्वतिगमनाय मुख्यं प्राणं प्रार्थितवन्त इत्याह—अथ हेममासन्यम्प्राणमूचुरिति । ' अथ ' वागादिषु नैराश्यानन्तरं ' ह इमं ' इत्यभिनयप्रदर्शनार्थम् । ' आसन्यं ' आस्नि आस्ये भवमासन्यं मुखान्तर्बिलस्थं मुख्यम्प्राणमूचुः इत्यादि समानम् । ततस्ते असुराः पूर्वाभ्यासवशात् मुख्यं प्राणमभिद्रुत्य ' पाप्मना ' उक्तलक्षणेन ' अविव्यत्सन् ' व्यधनं कर्तुमिष्टवन्तः । ते च दोषासंसर्गिणं सन्तं मुख्यं प्राणं स्वेनासङ्गदोषेण संसिसृक्षमाणाः सन्तः ' विष्वञ्चः ' नानागतयो विनेशुर्विनष्टा विध्वस्ताः इत्यन्वयः । तत्र कथमिवेति—' सः ' प्रसिद्धो दृष्टान्तः । ' यथा ' लोके पाषाणचूर्णनाय प्रक्षिप्तः ' लोष्टः ' पांसुपिण्डः ' अश्मानं ' पाषाणं ' ऋत्वा ' गत्वा प्राप्य स्वयं ' विध्वंसेत ' विचूर्णीभवेत् ' एवं हैव ' एवमेव खलु ' विध्वंसमानाः ' विशीर्यमाणाः ' असुराः '

ते होचुः । क्व नु सोऽभूद्यो नऽइत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्यऽ आङ्गिरसोऽङ्गानाᳬ हि रसः ॥ ९ ॥

सा वाऽएषा देवता दूर्न्नाम । दूरᳬ ह्यस्या मृत्युर्दूरᳬ ह वाऽ अस्मान्मृत्युर्भ्भवति यऽएवम्वेद ॥ १० ॥

---

ते होचुः । क्व नु सोऽभूत् । यो न इत्थमसक्तेति । अयमास्येऽन्तरिति । सोऽयास्यः । आंगिरसः । अंगानां हि रसः ॥ ९ ॥

सा वा एषा देवता दूर्नाम । दूरं ह्यस्या मृत्युः । दूरं ह वा अस्मान्मृत्युर्भवति । य एवं वेद ॥ १० ॥

---

अपि विनष्टाः । असुरविनाशे सति यत् वृत्तं तदाह–ततो देवाऽअभवन्पराऽसुरा इति । ततस्तस्मादसुरविनाशात् देवत्वप्रतिबन्धकपाप्मभ्यो वियोगात् मुख्यप्राणाश्रयबलात् 'देवाः' वागादयो वक्ष्यमाणस्वस्वरूपेणाग्न्याद्यात्मकेन 'अभवन्' । 'असुराः' 'परा' अभवन् इत्यनुषंगः । पराभूता विनष्टाः न पुनः प्ररोहिण इत्यर्थः । उक्ताख्यायिकाक्रमेण यजमानावस्थप्रजापतिवत् अन्योऽप्याधुनिकस्तत्प्रातिकाशः ( कं. १७ ) श्रुतिप्रकाशितेन मार्गेण मुख्यं प्राणमात्मत्वेनोपगम्य "अहमस्मि प्राणः" इत्युपासीतेति सफलामुपासनां विदधाति–भवत्यात्मना, पराऽस्य द्विषन्भ्रातृव्यो भवति य एवं वेदेति । 'एवं' यथोक्तं वक्ष्यमाणदूर्नामादिगुणं च प्राणं 'यो वेद' उपास्ते । सः 'आत्मना' प्रजापतिस्वरूपेण 'भवति' । अस्योपासकस्य प्रजापतित्वप्रतिपक्षभूतः पाप्मा 'द्विषन् भ्रातृव्यः' द्वेष्टा शत्रुर्यः स च पराभवति लोष्टवत् विशीर्यते इत्यर्थः ॥ ८ ॥

एवं वक्ष्यमाणत्वेन स्थितैः अयास्याङ्गिरसदूर्भिर्गुणैर्विशिष्टं प्राणकर्मकमुपासनं विधानपूर्वकं "भवत्यात्मना" ( कं. ८ ) इत्यादिनोक्तम् । अथाख्यायिकामेवानुसृत्य विविधं फलं स्फुटयति–ते होचुः इत्यारभ्य ( कं. ९ ) अथात्मनेऽन्नाद्यम् ( कं. १८ ) इत्यतः प्राक्तनेन ग्रंथेन । तत्र देवताभावफलासाधारणगुणकथनार्थमाह–ते इति । 'ते' देवाः वागादयः प्रजापतिप्राणाः मुख्येन प्राणेन परिप्रापितदेवस्वरूपाः फलावस्थाः सन्तः 'ह' इत्येवं ऊचुरुक्तवन्तः । किमित्याह–क्व न्विति । 'नु' इति वितर्के, 'यः' नोऽस्मानित्थं असक्त संयोजितवान् देवभावायात्मत्वेनोपगमितवान् । 'स क्व' कस्मिन् अभूदित्येवं लोकवदेवोपकारिणं स्मरन्तो विचारयमाणाः सन्तः 'अयं' प्राणः 'आस्ये' मुखे य आकाशः तस्मिन्नन्तर्मध्ये प्रत्यक्षो वर्तत इति अध्यवस्यन्ति स्म । अनया आख्यायिकया गुणद्वयं सिद्धमित्याह–सोऽयास्य इति । यस्मादेवं वागादयः प्राणं 'आस्ये' अन्तरुपलभ्य अयमास्येऽन्तरिति व्याजह्रुः । तस्मात्स अयास्यः । अत एवाङ्गिरसः कार्यकारणानामात्मा । तत्र हेतुः–'हि' यस्मात् 'अङ्गानां' कार्यकारणानां 'रसः' सारः । तस्मादाङ्गिरस इत्यर्थः ॥ ९ ॥

प्राणस्य स्वतःशुद्धत्वेऽपि अशुद्धवागादिसंबंधादशुद्धत्वं स्यादिति शङ्कां वारयितु पाप्महानिफलासाधारणगुणकं विशिष्टोपासनमाह–सेति । यां प्राप्यासुरा विनष्टाः । वै इति "अयमास्येऽन्तरिति" ( कं. ९ ) निर्द्धारिता

---

१–अभवन्नित्याख्यातस्योभयत्र संबंध इत्यर्थः ॥

**सा वाऽएषा देवता । ( तै ) एतासान्देवतानाम्पाप्मानम्मृत्युमपहत्य यत्रासान्दिशामन्तस्तद्गमयाञ्चकार तदासाम्पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानंमृत्युमन्ववायानीति ॥ ११ ॥**

**सा वाऽएषा देवता । ( तै ) एतासान्देवतानाम्पाप्मानम्मृत्युमपहत्या-थैना मृत्युमत्यवहत् ॥ १२ ॥**

**( त्स ) स वै व्वाचमेव प्रथमामत्यवहत् । ( त्सा ) सा यदा मृत्युमत्य मुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १३ ॥**

---

सा वा एषा देवता, एतासां देवतानां पाप्मानं मृत्युमपहत्य, यत्रासां दिशामंतः, तद्गमयां-चकार । तदासां पाप्मनो विन्यदधात् । तस्मान्न जनमियात् । नांतमियात् । नेत् पाप्मानं मृत्युम न्ववायानीति ॥ ११ ॥

सा वा एषा देवता, एतासां देवतानां पाप्मानं मृत्युमपहत्य, अथैना मृत्युमत्यवहत् ॥ १२ ॥

**स वै वाचमेव प्रथमामत्यवहत् । सा यदा मृत्युमत्यमुच्यत । सोऽग्निरभवत् । सोऽयमग्निः परेण मृत्युमतिक्रांतो दीप्यते ॥ १३ ॥**

---

' सा वै एषा ' वर्तमानोपासकशरीरस्था प्राणरूपा ' देवता ' ' दूर्नाम '—दूरित्येवं ख्याता । अतः शुद्धा । कथं दूर्नामत्वमित्यत आह—**दूरं** ह्यीति । ' हि ' यस्मात्, ' अस्याः ' प्राणदेवतायाः सकाशात् मृत्युरासङ्गलक्षणः पाप्मा ' दूरं ' दूरे भवति । एतद्गुणविशिष्टप्राणविदः फलमाह—**दूरं** हेति । ' यः ' एवमुक्तप्रकारेण विशुद्धि-गुणं प्राणं वेदोपास्ते । अस्मादुपासकात् ' मृत्युः ' दूरं ह वै दूरे एव किल भवतीत्यर्थः ॥ १० ॥

एतदेव स्पष्टयति—**सा वा एषा देवतेति** । उक्तार्था । ' एतासां ' वागादीनां देवतानां पाप्मानं ' मृत्यु-मपहत्य ' अपच्छिद्य यत्रासान्दिशामन्तः शास्त्रीयज्ञानकर्मसंस्कृतजनाधिष्ठितो देशो मध्यदेशः तस्मादतिरिक्तो देशो ' दिशां ' प्राच्यादीनामन्तः परा काष्ठा । तत्तत्र दिशामन्ते तदन्तस्थे जने च ' गमयाञ्चकार ' गमनं कृतवती । तत्तत्र दिगन्तस्थेऽन्त्यजने च ' आसां ' वागादीनां 'पाप्मनः' कर्मभूतान् ' विन्यदधात् ' विविधं न्यग्भावेनादधात् स्थापितवती । तस्मात्तमन्त्यजनं ' न इयात् ' दर्शनसंभाषणादिभिर्न संसृज्येत । तथा ' अंतं ' तज्जननिवास-स्थानं नेयान्न गच्छेत् । ' नेदिति ' परिभयार्थो निपातः । यदि अहं गच्छेयम् तदा ' पाप्मानं मृत्युं ' ' अन्व-वायानि ' अनुगच्छेयम् इति भीत्या जनमन्तं वा ' नेयात् ' न गच्छेत् शिष्टमात्र इत्यर्थः ॥ ११ ॥

संप्रति देवताभावफलमाह—**सा वा एषेति** कण्डिकया । ' अथ ' पापविमोकानन्तरं ' एनाः ' वागादि देवताः कर्मभूताः ' मृत्युं ' पूर्वोक्तमतीत्य अवहत्प्रापयत् स्वस्वमपरिच्छिन्नमग्न्यादिदेवताऽऽत्मरूपं प्रापितवतीत्यर्थः ॥ १२ ॥

एवं सामान्योक्तमतिवहनं प्रत्येकमाह—**स वै वाचमिति** । ' सः ' प्राणः ' वाचमेव ' वाग्देवतामेव ' प्रथमां ' उद्गातुरत्यन्तसंनिहितत्वात्प्रधानभूतामत्यवहत् प्रापयत् वहनं कृतवान् । 'सा' वाक् ' यदा ' यस्मिन् काले 'मृत्युं'

( तेऽथ ) अथ प्राणमुत्यवहत् । ( त्स ) स यदा मृत्युमत्यमुच्यत स
व्वायुरभवत्सोऽयम्वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १४ ॥

( तेऽथ ) अथ चक्षुरत्यवहत् । (त्त) तद्यदा मृत्युमत्यमुच्यत सऽआदि-
त्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १५ ॥

( त्य ) अथ श्रोत्रमुत्यवहत् । ( त्त ) तद्यदा मृत्युमत्यमुच्यत ता
दिशोऽभवँस्ताऽइमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १६ ॥

( न्ताऽअ ) अथ मनोऽत्यवहत् । ( स ) तद्यदा मृत्युमत्यमुच्यत स
चन्द्रमाऽअभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवꣳ ह वाऽ
एनमेषा देवता मृत्युमतिवहति यऽएवम्वेद ॥ १७ ॥

---

अथ प्राणमत्यवहत् । स यदा मृत्युमत्यमुच्यत । स वायुरभवत् । सोऽयं वायुः परेण मृत्युमतिक्रांतः पवते ॥ १४ ॥

अथ चक्षुरत्यवहत् । तद्यदा मृत्युमत्यमुच्यत । स आदित्योऽभवत् । सोसावादित्यः परेण मृत्युमतिक्रांतस्तपति ॥ १५ ॥

अथ श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्यत । ता दिशोऽभवन् । ता इमा दिशः परेण मृत्युमतिक्रांताः ॥ १६ ॥

अथ मनोऽत्यवहत् । तद्यदा मृत्युमत्यमुच्यत । स चंद्रमा अभवत् । सोसौ चंद्रः परेण मृत्युमतिक्रांतो भाति । एवं ह वा एनमेषा देवता मृत्युमतिवहति । य एवं वेद ॥ १७ ॥

---

पाप्मानं अतीत्यामुच्यत मोचिता स्वयं तदा वागेव पूर्वमप्यग्निरेव सती ' सः ' प्रसिद्धः ' अग्निरभवत् ' । तर्हि पूर्वस्मात्को विशेष इत्यत आह—सोऽयमिति । सोऽयमतिक्रान्तः पाप्माऽतिक्रान्तोऽग्निः ' परेण ' मृत्योः परस्तात् ' दीप्यते ' राजते प्राङ्मोक्षादध्यात्मं वागात्मना मृत्युप्रतिबद्धो नेदानीमिव दीप्तिमानासीदित्यर्थः ॥ १३ ॥

अथानन्तरं ' प्राणं ' नासिकान्तःसञ्चारिणं घ्राणम् । ' सः वायुरभवत् ' । स तु मृत्योः परस्तात् ' पवते ' तिर्यग्गच्छतीत्यर्थः । अन्यत्सर्वमुक्तार्थम् ॥ १४ ॥

चक्षुरादित्योऽभवत् । स तु ' तपति ' द्योतते ॥ १५ ॥

तथा ' श्रोत्रं ' ' दिशः ' ' अभवन् ' दिशः प्राच्यादिविभागेनावस्थिताः ॥ १६ ॥

तथा मनश्चन्द्रमाः ' भाति ' । वागादीनामग्न्यादिदेवतात्वप्राप्तावपि उपासकस्य किमायातमित्यत आह—एवमिति । ' यः ' उपासकः एवमग्न्याद्यात्मकवागादिपञ्चकविशिष्टं प्राणं आत्मत्वेन ' वेद ' प्राणोऽहमित्युपास्ते तमेनमुपासकं ' एवं ह वै ' यजमानवदेव ' एषा ' प्राणदेवता मृत्युमतीत्य ' वहति ' वैराजं पदं प्रापयतीति यावत् । " तं यथायथोपासते तदेव भवति " ( श. प. १०।५।२।२० ) इति श्रुतेः ॥ १७ ॥

( इाथा ) अथात्मनेऽन्नाद्यमागायत् । ( द्य ) यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यतऽइह प्रतितिष्ठति ॥ १८ ॥ शतम् ॥ ७१०० ॥

ते देवाऽअब्रुवन् । ( न्ने ) एतावद्वाऽइदꣳ सर्व्वं यदन्नन्तदात्मनऽआगासीरनु नोऽस्मिन्नन्नऽआभजस्वेति ते वै माऽभिसम्विशतेति तथेति तꣳ समन्तम्परिण्यविशन्त तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वाऽएनꣳ स्वाऽअभिसम्विशन्ति भर्त्ता स्वानाꣳ श्रेष्ठः पुरऽएता भवत्यन्नादोऽधिपतिर्य्यऽएवम्वेद ॥ १९ ॥

---

अथात्मने अन्नाद्यमागायत् । यद्धि किंचान्नमद्यते । अनेनैव तदद्यते । इह प्रतितिष्ठति ॥ १८॥

ते देवा अब्रुवन् । एतावद्वा इदं सर्वम् । यदन्नम् । तदात्मन आगासीः । अनु नोऽस्मिन्नन्न आभजस्वेति । ते वै माऽभिसंविशतेति । तथेति । तं समंतं परिण्यविशंत । तस्माद्यदनेनान्नमात्ति - तेनैतास्तृप्यंति । एवं ह वा एनं स्वा अभिसंविशंति । भर्ता स्वानां श्रेष्ठः पुरएता भवत्यन्नादोऽधिपतिः । य एवं वेद ॥ १९ ॥

---

उपास्यस्य प्राणस्य कार्यकारणसंघातविधारकत्वं नामगुणान्तरं वक्तुमाह—अथेति । यथा वागादिभिरात्मार्थमागानंकृतम् । तथा मुख्योऽपि प्राणः त्रिषु पवमानेषु सर्वप्राणसाधारणमागानंकृत्वा अथानन्तरं शिष्टेषु नवसु स्तोत्रेषु आत्मने आत्मार्थं ' अन्नाद्यं आगायत् ' आगीतवान् । अन्नञ्च तत् आद्यञ्चान्नाद्यं अद्यमानमन्नमित्यर्थः । कथं पुनस्तदन्नाद्यं प्राणेनात्मार्थमागीतमिति गम्यते इत्यत्र हेतुमाह—यद्धीति । किञ्चेति सामान्यान्नमात्रपरामर्शार्थः । हीति हेतौ । ' हि ' यस्मात् लोके प्राणिभियंत्किञ्चन सामान्यतः अन्नमात्रमद्यते भक्ष्यते तदन्नमात्रमनेनैव प्राणेनैवाद्यते तस्मात्स्वार्थमेतदागानम् । अन इति प्राणस्याख्या प्रसिद्धा । अनःशब्दः सान्तः शकटवाची । यस्त्वन्यः स्वरांतः स प्राणपर्यायः । अनितेर्धातोर्व्युत्पन्नत्वात् । एतेन इदंशब्दशङ्काऽप्यपास्ता । ननु-तर्हि एतस्यापि वागादिवत्स्वार्थमागानादासङ्गपाप्मवेधः स्यादित्यत आह -इहेति । इहास्मिन् देहाकारपरिणते प्राणः ' प्रतितिष्ठति ' तदनुसारिणश्च वागादयः स्थितिभाजः अतस्तत्स्थित्यर्थं प्राणस्यान्नम् । अतो न पाप्मवेधस्तस्मिन्नस्तीत्यर्थः ॥ १८॥

नन्वेवं प्राणस्यैव स्वातंत्र्येणान्नकृतोपकारभाजित्वं वागादीनां तु तद्वारकं इति कथं निश्चेतुं शक्यते ? यन्निश्चयादनेनैवेत्येवकारस्य सार्थकत्वं स्यादिति अतस्तन्निर्णयार्थमाह—ते देवा इति । ' ते ' वागादयः स्वविषयद्योतनाः ' देवाः ' ' अब्रुवन् ' उक्तवन्तः मुख्यं प्राणम । ' इदं सर्वं वै ' प्रसिद्धं ' यदन्नं ' प्राणिस्थितिकरं तदेतावत् । नातोऽधिकमस्ति । यत्पुनस्त्वं ' आत्मने ' आत्मार्थं आगासीरागीतवानसि आगानेनात्मसात्कृतवानसीत्यर्थः । वयञ्चान्नमन्तरेण स्थातुं नोत्सहामहे । अतः ' अनु ' पश्चात् नोऽस्मान् ' अन्ने ' आत्मार्थे तवान्ने ' आभजस्व ' आभाजयस्व । णिचो लोपश्छान्दसः । अस्मांश्चान्नभागिनः कुरु इति तैरुक्तः प्राणः ' ते ' यूयं यदि अन्नार्थिनो वै तर्हि ' मा ' मां ' अभिसंविशत ' अभिमुखेन समन्ततो निविशत इति अब्रवीदिति शेषः । एवमुक्तवति प्राणे ते देवास्तथाऽस्त्वित्यंगीकृत्य ' तं ' प्राणं ' समन्तं ' समन्तात् परिवेष्ट्य ' न्यविशन्त ' निश्चयेनाविशन्त । तं प्राणं परिवेष्ट्य निविष्टवन्तो यस्मात् तस्माल्लोको यदन्नमनेन प्राणेनात्ति भक्षयति तेनैव

यऽउ हैवंविदᳬं स्वेषु प्रति प्रतिर्बुभूषति । न हैवालम्भार्य्येभ्यो भवत्यथ यऽ एवैतमनु भवति यो वैतमनु भार्य्यान्बुभूर्षति स हैवालं भार्य्येभ्यो भवति ॥ २० ॥

सोऽयास्यऽ आङ्गिरसः । ( सोऽङ्गा ) अङ्गानाᳬं हि रसः प्राणो वाऽ अङ्गानाᳬं रसः प्राणो हि वाऽअङ्गानाᳬं रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राणऽ उत्क्रामति तदेव तच्छुष्यत्येष हि वाऽअङ्गानाᳬं रसः ॥२१॥

---

य उ हैवंविदं स्वेषु प्रति प्रतिर्बुभूषति । न हैवालं भार्येभ्यो भवति । अथ य एवैतमनु भवति । यो वै तमनु भार्यान् बुभूर्षति । स हैवालं भार्येभ्यो भवति ॥ २० ॥

सोऽयास्य आंगिरसः । अङ्गानां हि रसः । प्राणो वा अंगानां रसः । प्राणो हि वा अंगानां रसः । तस्माद्यस्मात्कस्माच्चांगात्प्राण उत्क्रामति । तदेव तच्छुष्यति । एष हि वा अंगानां रसः२१॥

---

प्राणान्नेनैवैता वागादयो देवतास्तृप्यन्ति । न स्वातंत्र्येण वागादीनामन्नसंबंधः । अतः अनेनैवेत्यवधारणं (कं. १८) सार्थकम् । एतद्गुणविज्ञानफलं दर्शयन्ती श्रुतिः सफलं गुणजातमुपदिशति—**एवमिति** । ' यः ' उपासको वागादयः प्राणाश्रयाः स च प्राणोऽहमेवेति वेदोपास्ते । तमेनमुपासकं ' एवं ह वै ' यथा प्राणं वागादयः एवमेव खलु ' स्वाः ' ज्ञातयोऽभिसंविशन्ति आश्रयन्ति ज्ञातीनामाश्रयणीयो भवतीत्यभिप्रायः । तथैवमभिसन्निविष्टानां ज्ञातीनां प्राणवदेव वागादीनां स्वान्नेन ' भर्ता ' ' भवति ' । ' श्रेष्ठः ' पूज्यः । ' पुरएता ' अग्रतो गन्ता ' अन्नादः ' व्याधिरहितः दीप्ताग्निः अधिपतिरधिष्ठाय पालयिता स्वतन्त्रः पतिर्भवतीति प्राणवदेव वागादीनामिति च प्रत्येकं बोध्यम् ॥ १९ ॥

संप्रति प्राणविद्यां स्तोतुं तद्विद्याविद्विद्वेषिणो दोषमाह—**यऽ उ हेति** । ' उ ' आश्चर्ये । ' ह ' निश्चयेन 'यः' ' एवंविदं ' प्राणविदं 'प्रति' 'स्वेषु' ज्ञातिषु मध्ये 'प्रतिः' प्रतिकूलः 'बभूषति' प्रतिस्पर्द्धीभवितुमिच्छति । ' सः ' प्राणप्रतिस्पर्द्धिनोऽसुरा इव ' भार्येभ्यः ' भरणीयेभ्यः आत्मीयेभ्यः ' न हैवालं ' समर्थो भवति, भरणीयान् भर्तुं नैव पर्याप्तो भवतीत्यर्थः । अथ प्राणविदनुरक्तस्य लाभन्दर्शयति—**अथेति** । ' अथ ' पुनर्य एव ज्ञातीनां मध्ये ' एतं ' प्राणविदं वागादय इव प्राणमनुगतः अनुरक्तः ' भवति ' ' यो वा ' अपि एतमेवंविदमनु एवानुवर्तयन्नेव आत्मीयान् ' भार्यान् ' ' बुभूर्षति ' भर्तुमिच्छति । यथैव प्राणानुवृत्त्या वागादय आत्मबुभूर्षव आसन् । ' सः एवं ' ' ह ' निश्चयेन ' भार्येभ्यः ' भर्तुमलं पर्याप्तो भवतीति समानमित्यर्थः ॥ २० ॥

पूर्वोक्तायास्यत्वेन प्रतिज्ञातं यदाङ्गिरसत्वं तदेव " सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः " इत्यनेनानूद्य 'प्राणो वै' प्रसिद्धः 'अङ्गानां रसः' इति प्रतिज्ञायते । तत्कथमिति हेत्वपेक्षायां प्राणो हीत्यादि वाक्यम् । अत्रैवमन्वयः । ' यस्मात्कस्माच्चाङ्गात् ' यतः कुतश्चित् अनिर्द्धारिताच्छरीरावयवात् ' प्राण उत्क्रामति ' अपसर्पति । ' तदेव ' तत्रैव तदङ्गं ' शुष्यति ' शोषमुपैति नीरसं भवति । नान्यत् । इत्यन्वयव्यतिरेकाभ्यां ' हि ' यस्मात् प्राणो वै एव अंगानां रसः प्रसिद्धः । तस्मात् ' एष वै ' प्राणोऽङ्गानां कार्यं स्थूलशरीरं प्रत्यक्षतो रूप्यमाणं रूपात्मकं कारणञ्च ज्ञानक्रियाशक्तिमत् कर्म्मभूतम् । तयोरात्मा प्राणः इति समुदायार्थः ॥ २१ ॥

( स॒ऽए॒ ) ए॒षु॒ऽ उ॒ऽ ए॒व ब्बृ॒ह॒स्पु॒तिः । ( व्वा॑ ) व्वाग्वै॒ ब्बृ॒ह॒ती तु॒स्याऽए॒ष प॒ति॒स्तु॒स्मा॒दु ब्बृ॒ह॒स्पु॒तिः ॥ २२ ॥

( ति॒रे॒ ) ए॒षु॒ऽ उ॒ऽ ए॒व ब्ब्रु॒ह्म॒ण॒स्पु॒तिः । ( ति॒व्वा॑ ) व्वाग्वै॒ ब्ब्रु॒ह्म तु॒स्या ऽए॒ष पु॒ति॒स्तु॒स्मा॒दु ब्ब्रु॒ह्म॒ण॒स्पु॒तिः ॥ २३ ॥

(ति॒रे॒) ए॒षु॒ऽउ॒ऽ ए॒व सु॒ाम । व्वाग्वै॒ सु॒ाऽमै॒षु सा चु॒ाम॒श्चे॒ति त॒त्सा॒म्नः सा॒म॒त्वं य॒द्वे॒वु स॒मः प्लु॒षि॒णा स॒मो॒ म॒शु॒के॒न स॒मो॒ ना॒गे॒न स॒मु॒ऽ ए॒भि॒स्त्रि॒भि॒र्ल्लो॒कै॒ः स॒मो॒ऽने॒न सु॒र्व्वे॒ण तु॒स्मा॒द्वे॒व सु॒ामा॒ऽश्नु॒ते॒ सु॒ाम्नः सु॒ायु॒ज्य॑ᳪ स॒लो॒कु॒तां य॒ऽए॒वु॒मे॒त॒त्सु॒ाम व्वे॒द ॥ २४ ॥

---

एष उ एव बृहस्पतिः । वाग्वै बृहती । तस्या एष पतिः । तस्माद्धु बृहस्पतिः ॥ २२ ॥

एष उ एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म । तस्या एष पतिः । तस्माद्धु ब्रह्मणस्पतिः ॥ २३ ॥

एष उ एव साम । वाग्वै सा । अमैषः । सा चामश्चेति तत्साम्नः सामत्वम् । यत् उ एव समः प्लुषिणा । समो मशकेन । समो नागेन । सम एभिस्त्रिभिर्लोकैः । समोऽनेन सर्वेण । तस्मात् उ एव साम । अश्नुते साम्नः सायुज्यं सलोकताम् । य एवमेतत्साम वेद ॥ २४ ॥

---

अथ बृहस्पत्यादिनामराशिधर्मकं प्राणोपासनं वक्तुं " एष उ एव " इत्यादि कण्डिकाचतुष्टयम् २२–२५ । तत्र न केवलं रूपकर्मभूतयोः कार्यकारणयोरेवात्मा प्राणः । किं तर्हि ? नामभूतानामृग्यजुःसाम्नामात्मेति सर्वात्मकतया प्राणं स्तुवंस्तत्र तावत् ऋगात्मत्वं प्राणस्य तत्त्वेनोपास्यत्वायाह–एष ऽउ एव इति । उरप्यर्थः । ' एषः ' प्रकृत आङ्गिरसः । " बृहस्पतिर्देवानां पुरोहित आसीत् " ( तै. सं. ६।४।१० ) इति श्रुतिप्रसिद्धं देवपुरोहितत्वं व्यावर्तयितुमाह–व्वाग्वै बृहतीति । सप्त हि गायत्र्यादीनि प्रधानानि छन्दांसि । तेषां मध्यमं छन्दो बृहतीत्युच्यते । सा च बृहती षट्त्रिंशदक्षरा प्रसिद्धा । " वाग्वाऽअनुष्टुप् "–( श. प. ७।१।२।१८ )–इति चयनप्रकरणे उक्तत्वात् अनुष्टुभोऽपि वाक्त्वं प्रसिद्धम् । सा द्वात्रिंशदक्षरा अष्टाक्षरैश्चतुर्भिः पादैः (८–४) षट्त्रिंशदक्षरायां बृहत्यामन्तर्भवति । अवान्तरसंख्यायाः महासंख्यायामन्तर्भावात् । इत्येवं वागनुष्टुब्बृहत्योरैक्येन वागात्मिका बृहती । " स ऋचो व्यौहद्द्वादश बृहतीसहस्राण्येतावत्यो हर्चो याः प्रजापतिसृष्टाः "–( श. प. १०।४।२।२२ ) इति श्रुतबृहत्यां सर्वा ऋचोऽन्तर्भवन्ति । ' तस्याः ' बृहत्या वाग्रूपायाः ' एषः ' प्राणः ' पतिः ' स्थित्युत्पादनहेतुत्वात् । तस्माद्धु बृहस्पतिरित्युपसंहारः ॥ २२ ॥

तथा यजुर्वेदात्मकत्वमाह–एष उ एवेति । ' ब्रह्मणः ' यजुर्वेदस्य ' पतिः ' । कथं ' व्वाग्वै ' वाग्विशेषरूपं यजुरेव ' ब्रह्म ' वेदः । वेदाधिकारात्–तस्या एष पतिरित्यादि समानम् ॥ २३ ॥

अथास्य सामवेदात्मकत्वमाह–एष उ एव सामेति । कथं ' वाग्वै ' ' सा ' सर्वस्त्रीलिङ्गशब्दाभिधेयवस्तुविषयो हि सर्वनामसाशब्दः । ' सा वै वाक् सर्वपुंल्लिङ्गशब्दाभिधेयवस्तुविषयोऽमशब्दः । ' अम एषः ' प्राणः । " केन मे पौंस्नानि नामान्याप्नोषीति प्राणेनेति ब्रूयात्केन मे स्त्रीनामानीति वाचा " (   ) इति श्रुत्यंतरात् वाक्प्राणाभिधानभूतौ सामशब्दौ । तथा सति प्राणनिर्वर्त्य-

( दैषु ) एषुऽउ वुाऽउद्गीथुः । प्प्राणो वाऽउत्प्राणेनु ह्रीदꣳ सुर्व्वमुत्तब्ध-म्वुागेव गीथोच्च गुीथा चेुति सुऽउद्गीथुः ॥ २९ ॥

( थुस्त ) तद्धापि ब्रह्मदत्तश्चैकितानेयः । ( यो ) गुजानम्भक्षयन्नुवाचा-यन्त्युस्य गुजा मूर्द्धानम्विुपातयताद्युदितोऽयुास्यऽआङ्गिरुसोऽन्येुनोदु-गायदिुति व्वाचुा चु ह्येव सु प्प्राणेुन चोदुगायदिुति ॥ २६ ॥

---

एष उ वा उद्गीथः । प्राणो वा उत् । प्राणेन हीदं सर्वमुत्तब्धम् । वागेव गीथा ! उच्च गीथा चेति । स उद्गीथः ॥ २९ ॥

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाच । अयं त्यस्य राजा मूर्द्धानं विपातयतात् यदितोऽयास्य आंगिरसोऽन्येनोदगायदिति ।वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २६ ॥

---

स्वरपदवाक्यादिसमुदायमात्रं गीतिः सामशब्देनाभिधीयते । ननु—एतावता कस्य सामत्व मुख्यमित्यत आह—सा चामश्चेति । एतद्व्युत्पत्तेर्वागुपसर्जनः प्राण एव मुख्यसामशब्दवाच्यः, एकवचननिर्देशा-दिति भावः । यस्माद्वागुपसर्जनस्य प्राणस्य सामत्वं मुख्यं तत्तस्मादध्येतृप्रसिद्धस्यापि साम्नो मुख्यसामशब्द-वाच्यप्राणनिर्वर्त्यत्वेन गौणमेव सामत्वम् । अस्यैव प्राणस्य प्रकारान्तरेण सामत्वमुपासनार्थमाह—यद्वेवेति । यत् उ एवेति च्छेदः । उशब्दो विकल्पार्थः प्रकारान्तरद्योतकः । यद्यस्मात् वा अयं प्राणः सूत्रात्मा लिङ्गात्मना 'प्लुषिणा' पुत्तिकाशरीरेण समस्तुल्यः । 'मशकेन' मशकशरीरेण 'समः' । 'नागेन' हस्तिशरीरेण 'समः' । 'एभिस्त्रिभिर्लोकैः' त्रैलोक्यात्मकप्राजापत्यशरीरेण 'समः' । 'अनेन सर्वेण' हिरण्यगर्भ-जगद्रूपेण समस्तुल्य एव । पुत्तिकादिशरीरेषु गोत्वादिवत् कार्त्स्न्येन परिसमाप्तः । तस्मादेव साम । एवं प्राणस्य सामत्वं सिद्धमित्यर्थः । एतद्गुणकप्राणोपासनफलमाह—अश्नुत इति । 'य एवं 'यथोक्तं एतत्सामगुणकं प्राणं वेदोपास्ते । सः 'साम्नः' प्राणस्य 'सायुज्यं' सयुग्भावं समानदेहेन्द्रियाभिमानितामश्नुते व्याप्नोति । 'सलो-कतां' प्राणसमानलोकतां वा 'अश्नुते' । भावनाविशेषतः फलविशेष इति भावः ॥ २४ ॥

इदं च फलं मध्यप्रदीपन्यायेन उभयतः संबद्धमवधेयमिति इमामेव फलश्रुतिमनुसृत्य गुणान्तरमाह—एष उ वा उद्गीथ इति । 'एषः' प्राणः 'वै' 'उद्गीथः' । उद्गीथो नाम सामावयवो भक्तिविशेषः नोद्गानम्, सामाधिकारात् । कथमुद्गीथः प्राणः ? 'हि' यस्मात् 'प्राणेनेदं सर्वं' जगत् 'उत्तब्धं' उदूर्ध्वं स्तब्ध मुत्तंभितं विधृतमिति यावत् । तस्मात्प्राणो वा उत् । तथा 'वागेव गीथा' अभिव्यक्तिरूपा गायतेः शब्दार्थ त्वात् सा वागेव गीथा । उद्गीथाशब्दाभ्यां प्राण एव वाच्य इत्याह—उच्च गीथा चेति । एतद्विग्रहात् स वागुप सर्जनः प्राण एव उद्गीथ इत्यर्थः ॥ २९ ॥

अथ "तद्धापि" इत्यादिवाक्यस्य प्रकृतानुपयोगमाशङ्क्य उद्गीथदेवता प्राण एव न वागादिः इत्युक्तार्थदार्ढ्याय आख्यायिकामाह—तद्धापीति । तत्तत्र एतस्मिन्नुक्तेऽर्थे 'ह' आख्यायिकाऽपि श्रूयते ह स्म । चिकितानस्यापत्यं चैकितानिः तस्यापत्यं युवा 'चैकितानेयः' ब्रह्मदत्तनामा विश्वसृजां पूर्वे-षीणां सत्रे 'राजानं' सोमं भक्षयन्नुवाचोक्तवान् । किं ? अत्रायास्याङ्गिरसशब्देनोद्गातोच्यते । एतादृक्प्राणो-

तस्य हैतस्य साम्नो यः स्वम्वेद भवति हास्य स्वन्तस्य वै स्वरऽ एव स्वन्तस्मादार्त्विज्यङ्करिष्यन्वाचि स्वरमिच्छेत तया व्वाचा स्वरसम्पन्नयाऽऽर्त्विज्यङ्कुर्य्यात्तस्माद्यज्ञे स्वरवन्तन्दिदृक्षन्तऽएवाथो यस्य स्वम्भवति भवति हास्य स्वं यऽएवमेतत्साम्नः स्वम्वेद ॥ २७ ॥

तस्य हैतस्य साम्नो यः सुवर्णम्वेद । भवति हास्य सुवर्णन्तस्य वै स्वरऽएव सुवर्णम्भवति हास्य सुवर्णं यऽएवमेतत्साम्नः सुवर्णम्वेद॥२८॥

---

तस्य हैतस्य साम्नो यः स्वं वेद । भवति हास्य स्वम् । तस्य वै स्वर एव स्वम् । तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत । तया वाचा स्वरसंपन्नया आर्त्विज्यं कुर्यात् । तस्माद्यज्ञे स्वरवंतं दिदृक्षंत एव । अथो यस्य स्वं भवति । भवति हास्य स्वम् । य एवमेतत्साम्नः स्वं वेद ॥ २७ ॥

तस्य हैतस्य साम्नो यः सुवर्णं वेद । भवति हास्य सुवर्णम् । तस्य वै स्वर एव सुवर्णम् । भवति हास्य सुवर्णम् । य एवमेतत्साम्नः सुवर्णं वेद ॥ २८ ॥

---

पासकत्वात्तस्य । 'यत्' यदि सः 'अयास्य आङ्गिरसः' उद्गाता विश्वसृजां पूर्वर्षीणां सत्रे इतोऽस्मात्पूर्वोक्तात् वागुपसर्जनात्प्राणात् ' अन्येन ' देवतान्तरेणोदगायत् उद्गानं कृतवान् ' इति ' यदि स्यात्तदा ' त्यस्य ' तस्यानृतवादी स्यामित्यर्थः । तस्यानृतवादिनो मम ' मूर्द्धानं ' शिरः ' अयं ' भक्ष्यमाणः सोमः ' राजा ' ' विपातयतात् ' विस्पष्टं पातयतु । ' विपातयतादिति ' आशिषि तोः स्थाने तातङ्ङादेशः । एवमुद्गीथदेवता प्राण एव इत्याख्यायिकया निर्द्धारितमर्थं श्रुतिः स्वेन वचसोपसंहरति–**वाचेति** । सोऽयास्य आङ्गिरस उद्गाता ' वाचा च ' प्राणप्रधानया ' प्राणेन च ' स्वस्यात्मभूतेनोदगायदित्येषोऽर्थः शपथेन निर्द्धारित इत्यर्थः २६ ॥

एवमुद्गीथदेवता प्राण एवेति निर्द्धार्य तस्य स्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरकण्डिकात्रयम् ( २७–२९ ) अवतारयति–**तस्येत्यादिना** । ' तस्य ' विशुद्ध्यादिगुणवत्तया प्रकृतस्य ' ह एतस्य ' बृहस्पत्यादिगुणवत्तया निरूपितस्य ' साम्नः ' सामशब्दवाच्यस्य प्राणस्य ' स्वं ' धनं ' यः वेद ' ' अस्य ' विज्ञातुः ' ह ' ' स्वं ' धनं ' भवति ' । एवं फलेन प्रलोभ्याभिमुखीकृतं शुश्रूषुं प्रत्याह–**तस्य वै** इति । ' वै ' साम्नः ' स्वर एव ' कण्ठगतमाधुर्यमेव ' स्वं ' विभूषणम् । तेन हि भूषितमुद्गानमृद्धिमल्लक्ष्यते । यस्मादेवं तस्मादार्त्विज्यमृत्विक्कर्म्मोद्गानं ' करिष्यन् ' वाचि ' विषये ' स्वरमिच्छेत ' । इच्छामात्रेण सौस्वर्यासंभवात् तद्धेतुदन्तधावनतैलपानादि कुर्यादित्यर्थादवगम्यते । एतत्तु प्रासङ्गिकं फलम् । ' तया ' एवं संस्कृतया ' स्वरसम्पन्नया वाचा ' आर्त्विज्यमृत्विक्कर्म्म कुर्यात् । सौस्वर्यस्य सामभूषणत्वे गमकमाह–**तस्मादिति** । यस्मात् स्वभूतेन स्वरेण भूषितं साम ' **तस्माद्यज्ञे** ' स्वरवन्तमुद्गातारं ' दिदृक्षन्त एव ' द्रष्टुमिच्छन्त एव धनिनमिव जनाः । प्रसिद्धं हि लोके ' अथो ' अपि ' यस्य स्वं ' धनं ' भवति ' तं धनिनं दिदृक्षन्ते लौकिका इति । एवं गुणविज्ञानफलसंबंधमुपसंहरति–**भवति हास्य स्वमिति** । ' य एवमेतत्साम्नः स्वं वेद ' इत्युक्तार्थमेव । एतच्च कण्ठनिष्ठमाधुर्यं बाह्यं धनं सौस्वर्यस्य ध्वनिगतत्वादित्यर्थः ॥ २७ ॥

इदानीं लाक्षणिकवर्णज्ञानपूर्वकं वर्णोच्चारणं वर्णनिष्ठत्वादान्तरं धनमित्याह–**तस्येति** । ' तस्य ह एतस्य

तस्य हैतस्य साम्नो यः प्रतिष्ठाम्वेद । प्रति ह तिष्ठति तस्य वै व्वागेव प्रतिष्ठा व्वाचि हि खल्वेषऽएतत्प्राणः प्प्रतिष्ठितो गीयतेऽन्नऽइत्यु हैकऽ आहुः ॥ २९ ॥

( २ ) अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्प्रस्तौति स यत्र प्प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतङ्गमयेति ॥ ३० ॥

---

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद । प्रति ह तिष्ठति । तस्य वै वागेव प्रतिष्ठा । वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयते । अन्ने इत्यु हैक आहुः ॥ २९ ॥

अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति । स यत्र प्रस्तुयात् । तदेतानि जपेत्–" असतो मा सद्गमय ( १ ) तमसो मा ज्योतिर्गमय ( २ ) मृत्योर्माऽमृतं गमय ( ३ ) " इति ॥ ३० ॥

---

साम्नः सुवर्णं '–कण्ठयोऽयं दन्त्योऽयं इति लक्षणज्ञानपूर्वकं सुष्ठुवर्णोच्चारणं सामशब्दवाच्यस्य प्राणस्य आन्तरं धनमिति ' यो वेद ' अस्योपासकस्य ' सुवर्णं ' लोकप्रसिद्धमेव हिरण्यं ' भवति ' । किं तत्सुवर्णमिति शुश्रूषवे प्राह–**तस्येति** । ' तस्य ' साम्नः ' स्वर एव ' कण्ठयादिलक्षणव्याख्यातः ' सुवर्णं ' । ' भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ' इति पूर्ववदुपसंहारः ॥ २८ ॥

प्रतितिष्ठति अस्यामिति ' प्रतिष्ठा ' वाक् तां प्रतिष्ठां साम्नो गुणं ' यो वेद ' ' स प्रतितिष्ठति ह ' । पूर्ववत्फलेन प्रलोभिताय का प्रतिष्ठा इति शुश्रूषवे आह–**तस्य वै** इति । ' तस्य वै ' साम्नो ' वागेव ' जिह्वामूलादीन्यष्टौ स्थानानि ' प्रतिष्ठा ' वागिति जिह्वामूलादीनां स्थानानामाख्या । सैव प्रतिष्ठा । ' हि ' यस्मादेष ' प्राणः ' ' वाचि ' जिह्वामूलोरःशिरःकण्ठदन्तोष्ठनासिकाताल्वुषु स्थानेषु ' प्रतिष्ठितः ' सन् ' खलु ' निश्चितं एतद्गानं ' गीयते ' गीतिभावमापद्यते! तस्मात् साम्नो वागेव प्रतिष्ठेति संबन्धः । मतान्तरमाह । **अन्न** इति । ' अन्ने ' अन्नपरिणामे देहे प्रतिष्ठितो गीयते ' इत्येके ' अन्ये ' उ ह ' खलु ' आहुः ' । इत्येकीयपक्षस्यानिंदितत्वाद्विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्यात् । वाग् वा प्रतिष्ठा अन्नं वेति ॥ २९ ॥

इदानीमेवं प्राणविज्ञानवतो मन्त्रजपविधित्सया आह–**अथात** इति । ' अथ ' प्राणविज्ञानकथनानन्तरम् । यस्माच्च एवं विदुषा प्रयुज्यमानं जपकर्म्म देवभावाभ्यारोहफलम् अतस्तस्मात्तद्विधीयते–तस्य चोद्गीथसंबंधात् सर्वत्रोद्गानकाले प्राप्तौ " पवमानानामेवाभ्यारोहः " इति वचनात् पवमानेषु त्रिष्वपि कर्तव्यतायां प्राप्तायां पुनः कालसङ्कोचं करोति । स वै खलु प्रस्तोता साम प्रस्तौतीति । वै एतत्प्रसिद्धम् । ततः । किं सिद्धमित्यत आह–**स** इति । ' सः ' प्रस्तोता ' यत्र ' यस्मिन् काले साम ' प्रस्तुयात् ' प्रारभेत । तत्तस्मिन् काले ' एतानि जपेत् ' । अस्य च जपकर्मणोऽभ्यारोह इत्याख्या । आभिमुख्येनारोहत्यनेन जपकर्मणा एवंवित् देवभावं इत्यभ्यारोहः । एतानीति बहुवचनात् त्रीणि यजूंषि द्वितीयानिर्देशात् ब्राह्मणोत्पन्नत्वाच्च यथापठित एव स्वरः प्रयोक्तव्यः । न मांत्रः । एतच्च जपकर्म याजमानम् । एतानि कानीत्यपेक्षायामाह–" असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतङ्गमय " इति । गमयेति शब्दो मन्त्रत्रयसमाप्तिद्योतकः ॥ ३० ॥

स यदाहासतो मा सुद्गमयेति । मृत्युर्व्वाऽअसत्सुदमृतं मृत्योर्माऽमृतङ्ग-मयामृतम्मा कुर्व्वित्युेवैतुदाह ॥ ३१ ॥

तुमसो मा ज्योतिर्ग्गमयेति । मृत्युर्व्वै तुमो ज्योतिरमृतम्मृत्योर्माऽमृतङ्ग-मयामृतं मा कुर्व्वित्युेवैतुदाह मृत्योर्माऽमृतङ्गमयेति नात्र तिरोहित-मिवास्ति ॥ ३२ ॥

( स्त्यु ) अुथ यानीतराणि स्तोत्राणि । तेुष्वात्मुनेऽन्नाद्यमुागायेत्तुस्मादु तेुषु व्वुरम्वृणीत यङ्कामङ्कामयेत तथ्ँ सुऽएषुऽएवम्विुदुद्गुाताऽत्मुने

---

स यदाऽह–असतो मा सद्गमयेति । मृत्युर्वा असत् । सदमृतम् । मृत्योर्मा अमृतं गमय । अमृतं मा कुरु । इत्येवैतदाह ॥ ३१ ॥

तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमः । ज्योतिरमृतम् । मृत्योर्मा अमृतं गमय । अमृतं मा कुरु । इत्येवैतदाह । मृत्योर्मा अमृतं गमयेति । नात्र तिरोहितमिवास्ति ॥ ३२ ॥

अथ यानीतराणि स्तोत्राणि । तेषु आत्मने अन्नाद्यमागायेत् । तस्माद्धु तेषु वरं वृणीत । यं कामं कामयेत । तं स एष एवंविदुद्गाता आत्मने वा यजमानाय वा कामं कामयते । तमागायति । तद्धैतल्लोकजिदेव । न हैवालोक्यताया आशाऽस्ति । य एवमेतत्साम वेद ॥ ३३ ॥

---

मन्त्रार्थस्य तिरोहितत्वात् ब्राह्मणप्रतीकग्रहणपूर्वकं श्रुतिः स्वयमेव व्याचष्टे–स यदिति । 'सः' मन्त्रः "असतो मा सद्गमय" इति 'यदाह' यदुक्तवान् । कोऽसावर्थ इत्युच्यते–**मृत्युर्वा असदिति** । स्वाभाविक-कर्मविज्ञानं मृत्युरित्युच्यते । अत्यन्ताधोभावहेतुत्वात् असच्छब्दवाच्यता । 'सदमृतं' सच्छास्त्रीयकर्मविज्ञान-मुच्यते । अमरणधर्महेतुत्वादमृतम् । पदार्थमुक्त्वा वाक्यार्थमाह–**मृत्योरिति** । 'मृत्योः' स्वाभाविककर्मज्ञाना-त्मकात् 'मा' मां 'अमृतं' शास्त्रीयकर्मविज्ञानं 'गमय' देवभावसाधनात्मभावमापादयेत्यर्थः । अथ तात्पर्यार्थमाह–**अमृतमिति** । 'मा' माममृतं अमृतत्वसाधनयोग्यस्वभावं 'कुरु' संपादय–इत्येवैतन्मंत्रवाक्यमाह ॥ ३१ ॥

तथा द्वितीयं मन्त्रं व्याचष्टे–**तमसो मा ज्योतिर्गमयेति** । अस्मिन्मन्त्रे तमःशब्देनाशास्त्रीयकर्मज्ञानमूलमज्ञान-मुच्यते आवरणात्मकत्वात्तस्य । तदेव 'मृत्युर्वै' मरणहेतुत्वात् । 'ज्योतिरमृतं' पूर्वोक्ततमोविपरीतं दैवस्वरूप-ज्ञानं ज्योतिरुच्यते प्रकाशत्वादेव । 'अमृतं' अविनाशात्मकत्वात् । इति पदार्थमुक्त्वा वाक्यार्थमाह–**मृत्योरिति** । मृत्योरज्ञानात्मकादसुरभावात् 'अमृतं' ज्ञानात्मकं देवभावं 'गमय' । तात्पर्यार्थमाह–**अमृतमिति** । 'अमृतं' देवं 'मा' मां 'कुरु' प्राजापत्यं फलभावमापादयेत्यर्थः । एवमुक्तमन्त्रद्वयेनानतिरिक्तार्थतया तृतीयमन्त्रार्थस्या-व्याख्येयत्वमाह–**मृत्योरिति** । 'मृत्योः' असाधनभावादसाध्यभावाच्च 'अमृतं' साधनभावं साध्यभावं च 'गमयेति' प्रसिद्धार्थतयैव अत्रास्मिन् तृतीये मन्त्रे तिरोहितमिवांतर्हितमिवार्थरूपं पूर्वयोरिव मन्त्रयोः अप्रकटं अपूर्वं 'नास्ति' । पूर्वयोरेव मन्त्रयोः समुच्चितोऽर्थस्तृतीयेन मन्त्रेणोक्त इत्यर्थः ॥ ३२ ॥

प्राणवदुद्गातुरपि स्वार्थं गानमस्तीत्याह–**अथ यानीति** । 'अथ' त्रिषु पवमानेषु यजमानोद्गानकरणानंतरं यानीतराण्यवशिष्टानि नव 'स्तोत्राणि' 'तेषु' स्तोत्रेषु प्राणविदुद्गाता 'आत्मने' आत्मार्थं अन्नाद्यमन्ना

वा यजमानाय वा कामङ्कामयते तमागायति तद्धैतल्लोकजिदेव न हैवा-
लोक्यताया आशाऽस्ति यऽएवमेतत्साम वेद ॥ ३३ ॥

इति चतुर्दशे काण्डे तृतीये प्रपाठके बृहदारण्यकोपनिषदि प्रथमे
प्रपाठके प्रथमं ब्राह्मणम् ॥ १४ । ( ३ ) १।१ ॥ ( ४ ) १-१ ॥

आत्मैवेदमग्रऽआसीत् । ( त्पु ) पुरुषविधः सोऽनुवीक्ष्य नान्यदात्म-
नोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाऽभवत्तस्मादप्येतर्ह्या-
मन्त्रितोऽहमयमित्येवाग्रऽउक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति ॥ १ ॥

---

पुरुषविधब्राह्मणम् ।

आत्मैवेदमग्र आसीत् । पुरुषविधः सोऽनुवीक्ष्य, नान्यदात्मनोऽपश्यत् । सोऽहमस्मीत्यग्रे व्याहरत् । ततोऽहं नामाऽभवत् । तस्मादप्येतर्हि, आमन्त्रितोऽहमयमित्येवाग्र उक्त्वा, अथान्यन्नाम प्रब्रूते । यदस्य भवति ॥ १ ॥

---

च तदाद्यं चान्नाद्यमागायेत् आगानेन संपादयेत् । अस्योद्गातुः सर्वफलसाधकत्वमाह—तस्मादिति । यस्मात् ' स एषः ' ' उद्गाता ' ' एवंवित् ' यथोक्तप्राणवित् प्राणवदेवात्मने आत्मार्थं वा ' यजमानाय वा ' यं 'कामं' ' कामयते ' इच्छति ' तमागायति ' आगानेन साधयति । ' तस्मादु ' तस्मादेव यजमानः ' तेषु ' नवसु स्तोत्रेषु प्रयुज्यमानेषु ' यं कामं कामयेत ' इच्छेत । तं कामं ' वरं वृणीत ' प्रार्थयेदित्यन्वयार्थः । एवमेवं समुच्चितादुपासनात् फलसिद्धौ आशंकासंभवाभावेऽपि केवलादुपासनात्तत्सिद्धिशंका स्यात् तां निरस्यति—तद्धैतदिति । ' यः ' ' एतत्साम ' प्रागं यथोक्तं निर्द्धारितमहिमानं आ एवं अभिमानाभिव्यक्तेः "हमस्मि प्राणः" इति ' वेद ' उपास्ते । तस्य कर्मानधिकृतस्यापि ' तद्ध एतत् ' प्राणदर्शनं केवलमपि 'लोकजिदेव' लोकसाधनमेव । ' न ह एवालोक्यतायै ' अलोकत्वाय 'आशाऽस्ति' आशंसनं प्रर्थना नैवास्ति । तथा चोपासनासहितं कर्म सकृदेवानुष्ठितं सत् अदृष्टद्वारा फलसाधनम् । केवलोपासनं तु नैरंतर्येण असकृदनुष्ठितं तत्साधनमित्यर्थः ॥ ३३ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य
श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोप-
निषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां आद्ये मधुकांडे प्रथमेऽध्याये
प्रथममुद्गीथब्राह्मणं परिसमाप्तम् ॥ १४ । ( ४ ) १ । १ ॥

एवं ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वव्याप्तिर्व्याख्याता । इदानीं अस्य प्रजापतेः फलभूतस्य जगत्सर्जनस्थितिसंहारेषु स्वातंत्र्यादिविभूत्युपवर्णनेन तं स्तोतुं ज्ञानकर्मणोर्वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थं आत्मैवेदमग्रऽ आसीदिति पुरुषविधब्राह्मणमारभ्यते—वक्ष्यमाणब्रह्मविद्याऽधिकारहेतुभूतवैराग्यो-

---

१–इदं ब्राह्मणं–आत्मब्राह्मणं, सृष्टिब्राह्मणमित्यपि व्यवह्रियते प्राज्ञैः ।

स यत्पूर्व्वोऽस्मात्सर्व्वस्मात् । ( त्स ) सर्व्वान्पाप्मनऽऔषत्तस्मात्पुरुषऽओषति ह वै स तं योऽस्मात्पूर्व्वो बुभूषति युऽएवम्वेद ॥ २ ॥

सोऽबिभेत् । ( त्त ) तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मुदन्यन्नास्ति कुस्मान्नु बिभेमीति ततऽएवास्य भयम्वीयाय कस्माद्ध्यभेष्युद्द्वितीयाद्वै भयम्भवति ॥ ३ ॥

---

स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वात्पाप्मन औषत् । तस्मात्पुरुषः । ओषति ह वै स तम् । योऽस्मात्पूर्वो बुभूषति । य एवं वेद ॥ २ ॥

सोऽबिभेत् । तस्मादेकाकी बिभेति । स हायमीक्षांचक्रे । यन्मदन्यन्नास्ति । कस्मान्नु बिभेमीति । तत एवास्य भयं वीयाय । कस्माद्धि अभेष्यत् । द्वितीयाद्वै भयं भवति ॥ ३ ॥

---

त्पादनाय । आत्मैवेति । तत्रात्मशब्देन प्रजापतिः प्रथमोऽण्डजः शरीरी वैदिकज्ञानकर्मफलभूतोऽभिधीयते । 'इदं' दृश्यमानं शरीरभेदजातं तेन प्रजापतिशरीरेणाविभक्तं 'अग्रे' शरीरान्तरोत्पत्तेः प्राक् 'आत्मैवासीत्'। कस्यात्मनोऽत्र ग्रहणमित्यत आह—पुरुषविध इति । 'पुरुषविधः' पुरुषाकारः शिरःपाण्यादिलक्षणो मन्वादीनां स्रष्टा विराड्—'सः' प्रथमः संभूतः 'अनुवीक्ष्य' कोऽहं किंलक्षणो वाऽस्मीति अन्वालोच्य 'आत्मनः' स्वशरीरात् 'अन्यत्' वस्त्वन्तरं 'नापश्यत्' न ददर्श । केवलं तु आत्मानमेव सर्वत्रात्मानमपश्यत् । आलोचनकार्यमाह—सोऽहमिति । पूर्वजन्मश्रौतविज्ञानसंस्कृतसाधकावस्थप्रजापतिवत् फलावस्थोऽपि विराडात्मा 'सः अहमस्मि' सर्वात्मा 'इत्यग्रे' प्रथमं 'व्याहरत्' व्याहृतवान् यस्मात् ततस्तस्मात् 'अहन्नामाऽभवत्'। यस्मात्कारणात्प्रजापतावेवं वृत्तं तस्मात्तत्कार्यभूतोऽपि लोकः 'एतर्हि' एतस्मिन्नपि काले 'आमन्त्रितः' कस्त्वमिति पृष्टः—'अहमयमित्येवाग्रे' प्रथममुक्त्वा कारणात्माभिधानेनात्मानमभिसंधाय—अथानंतरं अन्यद्विशेषपिण्डाभिधानं—'यदस्य' पुरुषस्य मातापितृकृतं देवदत्तो यज्ञदत्त इति वा नाम भवति तन्नाम 'प्रब्रूते' कथयति ॥ १ ॥

एवमुपासनार्थं प्रजापतेरहं नामोक्त्वा इदानीं पुरुषनामनिर्वचनमाह—स यदिति । 'सः' प्रजापतिः पूर्वस्मिन् जन्मनि साधकावस्थायां सम्यक्कर्मज्ञानभावनाऽनुष्ठानैरहमहमिकया अस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्सर्वस्मात् 'पूर्वः' प्रथमः सन् सम्यक्कर्माद्यनुष्ठानैः कृत्वा असङ्गाज्ञानलक्षणान् 'सर्वान् पाप्मनः' प्रजापतित्वप्रतिबन्धकारणभूतान् यद्यस्मात् औषददहत् तस्मात्पुरुषः । एतद्गुणविज्ञानफलमाह—ओषतीति । प्रजापतिवत् अन्योऽपि 'यः' कश्चित्, 'एवं वेद' पुरुषगुणः प्रजापतिरहमस्मीति उपास्ते । 'स वै' सोऽपि 'ओषति हतं' दहत्येव अभिभवत्येव । तं कं ? 'यः' अस्मादेवंभूतोपासकात् 'पूर्वः' प्रथमः सन् प्राजापत्यात्वमात्मनः 'बुभूषति' भवितुमिच्छति तमित्यर्थः ॥ २ ॥

यदिदं स्तोतुमभिप्रेतं प्राजापत्यलक्षणं ज्ञानकर्मफलं तदपि नैव संसारविषयमत्यक्रामत् इतीममर्थं प्रदर्शयिष्यन्नाह—सोऽबिभेदिति । योऽयं प्रथमः शरीरी पुरुषविधो व्याख्यातः—'सः' प्रजापतिः अबिभेद्भीतवान् । अहमेकाकी कोऽपि मां हनिष्यतीति आत्मनाशविषयविपरीतज्ञानवत्त्वात् भयं प्राप्तवान् इति अत्र कार्यगतेन

स वै नैव रेमे । तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमाᳪंसौ सम्परिष्वक्तौ ॥ ४ ॥

सऽइममेवात्मानन्द्वेधाऽपातयत् । ( त्र ) ततः पतिश्च पत्नी चाभवताम्तस्मादिदमर्द्धबृगलमिव स्वऽइति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्य्यतऽ एव ताᳪं समभवत्ततो मनुष्याऽअजायन्त ॥ ५ ॥

---

स वै नैव रेमे । तस्मादेकाकी न रमते । स द्वितीयमैच्छत् । स हैतावानास । यथा स्त्रीपुमांसौ संपरिष्वक्तौ ॥ ४ ॥

स इममेवात्मानं द्वेधाऽपातयत् । ततः पतिश्च पत्नी चाभवताम् । तस्मादिदमर्द्धबृगलमिव स्वः ।

---

भयलिङ्गेन कारणेन प्रजापतौ तदप्युल्लेयमित्याह–तस्मादिति । यस्मादयं पुरुषविधः शरीरकारणवान् आत्मनाशविपरीतदर्शनवत्त्वात् प्रजापतिरबिभेत् तस्मादेकाकित्वाविशेषात् अद्यतनोऽप्येकाकी स्वविनाशमाशङ्क्य 'बिभेति'। यथा अस्मदादिभी रज्जुस्थाण्वादौ सर्पपुरुषादिभ्रमजनितभयनिवृत्तये विचारेण तत्त्वज्ञानं संपाद्यते । तथा प्रजापतिरपि भयस्य तद्धेतोश्च विपरीतधियो ध्वस्तिहेतुं तत्त्वज्ञानं विचार्य संपादितवान् इति । अतोऽप्यस्य संसारांतर्भूतत्वमित्याशयेनाह–स हेति । 'ह' किल 'सोऽयं' प्रजापतिः 'ईक्षाञ्चक्रे' विचारयामास । कथं–यद्यस्मात् मन्मत्तः–अन्यदात्मव्यतिरेकेण वस्त्वन्तरं प्रतिद्वंद्वीभूतं 'नास्ति' । तस्मादहं प्रत्यक्चैतन्याद्वितीयब्रह्मरूपः–'कस्मान्नु बिभेमि' इति । एवं विचारोत्पन्नफलमाह–तत इति । 'तत एव' यथाभूताद्वितीयात्मदर्शनादेव 'अस्य' प्रजापतेर्भयं सकारणं 'वीयाय' विस्पष्टं गतवत् । तस्य प्रजापतेर्यद्भयं तत्केवलाविद्यानिमित्तमेव परमार्थदर्शने अनुपपन्नमित्याह–कस्मादिति । 'द्वितीयाद्वै' द्वितीयादेव 'भयं भवति' । न तु स्वस्मात् स्वस्य भयम् । द्वितीयं च वस्त्वंतरं अविद्याप्रत्युपस्थापितमेव । न हि अदृश्यमानं द्वितीयं भयजन्महेतुः । "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः"–( वा. सं. अ. ४० कं. ७ ) इति मंत्रवर्णात् । "मायामात्रमिदन्द्वैतमद्वैतम्परमार्थतः" । इति माण्डूक्यश्रुतेश्च । तत्त्वज्ञाने सति अज्ञानाभावात् तन्मूलद्वैतदर्शनानुपपत्तेः । अयं 'कस्माद्धयमेष्यत्' कुतो हि भीतिमलप्स्यत । परमार्थनिरूपणावस्थायां न कुतश्चिद्भीतवानित्यर्थः ॥ ३ ॥

एवं प्रजापतेर्भयाद्याविष्टत्वेन संसारान्तर्भूतत्वमुक्तम् । इदानीं तत्रैवारत्याविष्टत्वं हेत्वंतरमाह–स वै नैवेति । 'स वै' प्रजापतिः 'नैव रेमे' रतिं नान्वभवत् अरत्याविष्टोऽभूत् अस्मदादिवदेव यतः । तस्मादाधुनिकोऽपि एकाकित्वादिधर्मवत्त्वादेव 'एकाकी' असहायः सन् 'न रमते' रतिं नानुभवति । रतिर्नाम इष्टार्थसंयोगजा क्रीडा तत्प्रसङ्गिन इष्टवियोगात् मनस्याकुलीभावोऽरतिरित्युच्यते । अरत्याविष्टस्य प्रजापतेः तन्निरसनोद्योगप्रकारमाह–स द्वितीयमिति । 'सः' प्रजापतिः द्वितीयं अरत्यपनोदसमर्थं स्त्रीवस्तु 'ऐच्छत्' इष्टवान् । तस्य चैवं स्त्रीविषयं गृद्धवतोऽतिविषयासक्तस्य स्त्रिया परिष्वक्तस्येव आत्मन्यभिमाने संजाते 'सः ह' प्रजापतिः तेनैवाभिमानेन सत्यसङ्कल्पत्वात्–'एतावान्' एतावत्परिमाणः 'आस' बभूव । कियत्परिमाण इत्यपेक्षायामाह–यथेति । यथा लोके 'स्त्रीपुमांसौ' अरत्यपनोदनाय 'सम्परिष्वक्तौ' अन्योऽन्यं गाढमालिङ्गितौ यत्परिमाणौ स्यातां तथा तत्परिमाणो बभूवेत्यर्थः ॥ ४ ॥

'सः' विराडात्मा विराट्स्वरूपानुपमर्दनेनैव 'इमं' परिष्वक्तस्त्रीपुंसपरिमाणमात्मानं शरीरं एतावत्परिमाणं

सो हेयमीक्षाञ्चक्रे । कथन्नु माऽऽत्मनऽएव जनयित्वा सम्भवति हन्त तिरोऽसानीति ॥ ६ ॥
सा गौरभवत् । ( द्वु ) वृषभऽइतरस्ताᳬं समेवाभवत्ततो गावोऽजायन्त ॥ ७ ॥

---

इति ह स्माह याज्ञवल्क्यः । तस्मादयमाकाशः स्त्रिया पूर्यत एव । तां समभवत् । ततो मनुष्या अजायंत ॥ ५ ॥

सा उ ह इयमीक्षांचक्रे । कथं नु मा आत्मन एव जनयित्वा संभवति । हंत ! तिरः असानीति ॥ ६ ॥

सा गौरभवत् । वृषभ इतरः । तां समेवाभवत् । ततो गावोऽजायंत ॥ ७ ॥

---

'द्वेधा अपातयत्' द्विप्रकारं पातितवान् । इममेवेत्यवधारणात् सशब्देन कर्तृतया विराड्ग्रहणमविरुद्धम् । क्षीरस्य सर्वोपमर्दनेन दधिभावापत्तिवत् न विराट् सर्वोपमर्दनेन एतावानास । किं तर्हि ? आत्मना व्यवस्थितस्यैव विराजः सत्यसङ्कल्पत्वात् आत्मव्यतिरिक्तं तु परिष्वक्तस्त्रीपुंसपरिमाणं शरीरान्तरं बभूवेति तद्विधाकरणे कर्मेति बोध्यम् । ततस्तस्मात्पातनात् पतिर्मन्वाख्यः 'पत्नी च' शतरूपाख्या चाभवतां बभूवतुः । लोकप्रसिद्धयोर्दंपत्योरुक्ते निर्वचने लोकानुभवमनुकूलयति–**तस्मादि**ति । यस्मात्पतिपत्न्यावेकशरीरविभक्ते । तस्मात् 'स्वः' स्वस्यात्मनः 'इदं' शरीरं प्राक् स्त्र्युद्वहनात् 'अर्द्धबृगलमिव'–बृगलं विदलं–अर्द्धं च तत् बृगलं च–अर्द्धबृगलम् । शुक्त्यादिविभागवत् अर्द्धविदलमेवेत्यर्थः ॥

अत्राभियुक्तसम्मतिमाह–**इति हे**ति । यज्ञस्य वल्को वक्ता यज्ञवल्कः तस्यापत्यं याज्ञवल्क्यो दैवरातिर्नामा ब्रह्मणो वाऽपत्यमित्यर्थः । सः 'ह' किल इतीत्थं 'आह' स्मोक्तवान्, द्वेधा पातने सति एको भागः पुरुषः अपरस्तु स्त्रीति । अत्रैव हेत्वंतरमाह–**तस्मादयमि**ति । यस्मादुद्वहनात्प्राक् अवस्थायां 'अयमाकाशः' पुरुषार्द्धं स्त्र्यर्द्धं शून्यः असंपूर्णो वर्तते–तस्मात् पुनः उद्वहनादनंतरं स्त्रिया प्राप्तस्त्र्यर्द्धेनेतरो भागः 'पूर्यत एव'। यथा विदलार्द्धोऽसंपूर्णः संपुटीकरणेन पुनः संपूर्णः क्रियते तद्वदिति ॥

अथ मिथुनद्वारिकां सृष्टिमाह–**तां समभवदि**ति । स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां 'समभवत्' मिथुनभावमुपगतवान् । ततस्तस्मात् तथाविधोपगमनात् 'मनुष्याः' अजायन्तोत्पन्ना इत्यर्थः ॥ ५ ॥

इदानीं गवादिसृष्टिं प्रस्तौति–**सो हेयमि**ति । 'सेयं' शतरूपा 'उ ह' किल "न सगोत्रां समानप्रवरां भार्यां विंदेत" इति दुहितृगमने स्मार्तं प्रतिषेधमनुस्मरंतीक्षाञ्चक्रे विचारयामास । कथं न्विदमकृत्यं–यत् 'मा' मां 'आत्मनः' स्वस्मादेव जनयित्वोत्पाद्य संभवत्युपगच्छति यद्यपि अयं निर्घृणः स्मार्तं प्रतिषेधमस्मरन् मां न मुञ्चति । अहं तु तं स्मरंती 'हंत' इदानीं 'तिरोऽसानि' जात्यंतरेण तिरोभूता भवानीति ॥ ६ ॥

एवं विचार्य 'सा' शतरूपा 'गौरभवत्' । उत्पाद्यप्राणिकर्मभिश्चोद्यमानायाः शतरूपायाः मनोश्च पुनः सैव मतिरभवदिति बोध्यम् । 'इतरः' मनुः 'वृषभः' भूत्वा 'तामेव' गां 'समभवत्' पूर्ववत्संभोगं कृतवान् । ततस्तस्माद्गोवृषभसंबंधात् 'गावोऽजायन्त' ॥ ७ ॥

वडवेतराऽभवत् । ( द ) अश्ववृषऽइतरो गर्द्दभीतरा गर्द्दभऽइतरस्ताथ्ँ समेवाभवत्ततऽएकशफमजायत ॥ ८ ॥

( ता ) अजेतराऽभवत् । ( द्व ) बस्तऽइतरोऽविरितरा मेषऽइतरस्ताथ्ँ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमा पिपीलिकाभ्यस्तत्सर्व्वमसृजत ॥ ९ ॥

सोऽवेत् । ( द ) अहम्वाव सृष्टिरस्म्यहथ्ँ हीदथ्ँ सर्व्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याथ्ँ हास्यैतस्याम्भवति यऽएवम्वेद ॥ १० ॥

---

वडवेतराऽभवत् । अश्ववृष इतरः । गर्दभीतरा । गर्दभ इतरः । तां समेवाभवत् । तत एकशफमजायत ॥ ८ ॥

अजेतराऽभवत् । बस्त इतरः । अविरितरा । मेष इतरः । तां समेवाभवत् । ततोऽअजावयोऽजायंत । एवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यः तत्सर्वमसृजत ॥ ९ ॥

सोऽवेत् । अहं वाव सृष्टिरस्मि । अहं हीदं सर्वमसृक्षीति । ततः सृष्टिरभवत् । सृष्ट्यां हास्यैतस्यां भवति । य एवं वेद ॥ १० ॥

---

'इतरा' शतरूपा 'वडवा' अश्वा अभवत् । 'इतरः' मनुः अश्ववृषोऽभवत् । अश्वश्चासौ वृषश्च अश्ववृषः प्रजननसमर्थोऽश्व इत्यर्थः । 'इतरा' शतरूपा 'गर्दभी'–'इतरः' मनुः–'गर्दभः' 'अभवदिति प्रत्येकं संबन्धः । 'तामेव' वडवां गर्दभीं च 'समभवत्' ततो वडवाऽश्वसंयोगात् गर्दभीगर्दभसंयोगात् गर्दभाश्वजातीययोर्दांपत्याच्च एकशफमेकखुरं अश्वाश्वतरगर्दभाख्यं त्रयमजायत ॥ ८ ॥

'इतरा' शतरूपाऽजाऽभवत् 'इतरः' मनुः बस्तश्छागः । 'इतरा' शतरूपा 'अविः'–'इतरः' मनुर्मेषः तामेवाजामविं च 'समभवत्' । ततस्तस्मात्संभवनादजावयः अजाश्च अवयश्च अजावयः जातिविशेषाः 'अजायन्त' । विशेषाणामानंत्यात् प्रत्येकमुपदेशासंभवं मन्वानस्तिर्यक्सृष्टिं संक्षिप्योपसंहरति–एवमेवेति । 'यदिदं किञ्च'–यत्किंचेदं 'मिथुनं' स्त्रीपुंसलक्षणं द्वंद्वं 'आ पिपीलिकाभ्यः' पिपीलिका अभिव्याप्य 'तत्सर्वं' जगत् 'एवमेव' पशुन्यायेनैव 'असृजत' सृष्टवानित्यर्थः ॥ ९ ॥

वक्ष्यमाणाग्निसोमेन्द्रादिसृष्टिं सिद्धवत्कृत्य सर्वां सृष्टिमुपसंहति–सोऽवेदिति । 'सः' प्रजापतिरिदं सर्वं जगत सृष्ट्वा अवेदवगतवान् । कथं ? 'अहं वाव सृष्टिरस्मि' । सृज्यत इति सृष्टिः । यन्मया सृष्टञ्जगत् मद्भेदत्वादहमेवास्मि–न मत्तो व्यतिरिच्यते कर्तृक्रिययोरभेदोपचारादिति भावः । इदं सृष्टं जगदहमेव कुत इत्यत आह–अहं हीति । 'हि' यस्मात् 'इदं' सर्वं जगत् 'अहमेवासृक्षि'–इति सृष्टिशब्देनात्मानमेवाभ्यधात्प्रजापतिः । ततस्तस्मात्प्रजापतिः 'सृष्टिरभवत्' सृष्टिनामा बभूव । स्रष्टुरेतद्गुणविदः फलमाह–सृष्ट्यां हीति । एवं प्रजापतिवत् अन्योऽपि 'यः' कश्चित् साध्यात्माऽधिभूताधिदैवजगदहमेवास्मीति स्वात्मनोऽनन्यत्वेन वेदोपास्ते । अस्योपासकस्य 'एतस्यां सृष्ट्यां' एतस्मिन् जगति 'ह' खलु स्रष्टृत्वं भवतीत्यर्थः ॥ १० ॥

( द्दा ) अथेत्युभ्यमन्थत् । ( त्स ) स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः ॥ ११ ॥

( स्त ) तद्यदिदमाहुः । ( र ) अमुं यजामुं यजेत्येकैकन्देवमेतस्यैव सा विसृष्टिरेषऽउ ह्येव सर्व्वे देवाः ॥ १२ ॥

( ऽ ) अथ यत्किञ्चेदमार्द्रम् । ( न्त ) तद्रेतसोऽसृजत तदु सोमऽएतावद्वाऽइदꣳ सर्व्वमन्नञ्चैवान्नादश्च सोमऽएवान्नमग्निरन्नादः ॥ १३ ॥

---

अथेत्यभ्यमंथत् । स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत । तस्मादेतदुभयमलोमकमंतरतः । अलोमका हि योनिरंतरतः॥ ११ ॥

तद्यदिदमाहुः । अमुं यजामुं यजेति एकैकं देवम् । एतस्यैव सा विसृष्टिः । एष उ ह्येव सर्वे देवाः ॥ १२ ॥

अथ यत्किंचेदमार्द्रम् । तद्रेतसोऽसृजत । तदु सोमः । एतावद्वा इदं सर्वम् । अन्नं चैवान्नादश्च । सोम एवान्नम् । अग्निरन्नादः ॥ १३ ॥

---

एवमनुग्राह्यसृष्टिमुक्त्वा अनुग्राहकसृष्टिं प्रस्तौति—**अथेती**ति । अथशब्दोऽनुग्राह्यसर्गानंतर्यार्थः । इति-शब्दो मंथनप्रकाराभिनयप्रदर्शनार्थः । मुखे हस्तौ निक्षिप्य ' अभ्यमन्थत् ' आभिमुख्येन मन्थनमकरोत् । एवं मुखं हस्ताभ्यां मथित्वा स प्रजापतिः ' मुखाच्च योनेर्हस्ताभ्यां च ' योनिभ्यां ' अग्निं ' ब्राह्मणजातेरनुग्रहकर्तारं 'असृजत' सृष्टवान् । मुखादेः अग्निं प्रति योनित्वे गमकमाह—**तस्मादेतदुभय**मिति । यस्माद्दाहकस्याग्नेर्हस्तौ मुखं च एतदुभयं योनिः 'तस्मादेतदुभयमपि ' अन्तरतोऽभ्यन्तरे 'अलोमकं' लोमवर्जितम् । **अलोमके**ति । या हि स्त्रीणां ' योनिः ' सा ' हि अन्तरतोऽलोमका '—इत्येतत्सामान्यादुभयस्यास्याग्नियोनित्वम् । तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापतेः । तस्मादेकयोनित्वात् ज्येष्ठेनेवानुजोऽनुगृह्यते अग्निना ब्राह्मणः । तस्माद्ब्राह्मणोऽग्निदेवत्यो मुख-वीर्यश्च इति श्रुतिस्मृतिसिद्धम् ॥ ११ ॥

क्षत्रादिदेवतासर्गमिहानुक्तं वक्ष्यमाणमपि उक्तवदुपसंहरति सृष्टिसाकल्यानुकीर्त्यै । सृष्टस्य स्रष्टुरनन्यत्वात् सृष्टं प्रजापतिरेव इत्युक्तार्थस्य श्रुत्यभिप्रायेण अविद्वन्मतं निंदितुमुपन्यस्यति—**तद्यदिद**मिति । तत्तत्र कर्मप्रकरणे केवलयाज्ञिकाः यागकाले यदिदं वचः ' आहुः ' 'अमुं' अग्निं यज—अमुमिन्द्रं 'यज'—इत्यादि । नामशस्त्रस्तोत्र-कर्मादिभिन्नत्वात् भिन्नमेवाग्न्यादिदेवमेकैकम्मन्यमाना आहुरित्यभिप्रायः । तन्न तथा विद्यादिति वाक्यशेषः । एतस्यानादरणीयत्वे हेतुं वदन् अनुग्राहकसृष्टिमुपसंहरति—**एतस्यैवे**ति । यस्माद्यः सर्वो देवभेदः एतस्यैव प्रजापतेरेव ' सा विसृष्टिः ' । ' उ ' पुनः । हीत्यवधारणे । ' एषः ' प्रजापतिः प्राण एव ' सर्वे देवाः ' । नान्यदेवताऽन्तरमस्तीत्यर्थः ॥ १२ ॥

एकस्यैव प्रजापतेः द्विधोपास्यत्वाय अग्निसर्गमुक्त्वा अन्नसर्गमाह—**अथ यत्किंचेद**मिति । अथाग्निसर्गा-नंतरं यत्किंचेदं लोके ' आर्द्रं ' द्रवात्मकं तत्प्रजापती रेतस आत्मनो बीजादसृजत सृष्टवान् । द्रवात्मकश्च

सैषा ब्रह्मणोऽतिसृष्टिः । ( र्ष्व ) यच्छ्रेयसो देवानुसृजताथ यन्मर्त्यः सन्नमृतानुसृजत तस्मादतिसृष्टिरतिसृष्ट्याᳫँ हास्यैतस्यां भवति यऽ एवम्वेद ॥ १४ ॥

तद्धेदन्तर्ह्यव्याकृतमासीत् । ( त्रु ) तन्नामरूपाभ्यामेव व्याक्रियतासौ-नामाऽयमिदᳫँरूपऽइति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियते-ऽसौनामाऽयमिदᳫँरूपऽइति ॥ १५ ॥

---

सैषा ब्रह्मणोऽतिसृष्टिः । यत् श्रेयसो देवानसृजत । अथ यन्मर्त्यः सन्नमृतानसृजत । तस्माद-तिसृष्टिः । अतिसृष्ट्यां हास्यैतस्यां भवति । य एवं वेद ॥ १४ ॥

तत् ह इदं तर्हि अव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियत । असौनामाऽयम् इदंरूप इति । तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियते । असौनामाऽयम् इदंरूप इति ॥ १५ ॥

---

सोमः । तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्टं तदु सोम एव । स्रष्टव्यांतरशंकां वारयति—एतावद्वा इदं सर्वमिति । 'इदं सर्वं' दृश्यमानं जगत्—'एतावद्वै' एतावदेव । कियत् । 'अन्नं चैवान्नादश्च' नातोऽधिकम् । कस्य सोमत्वमग्नित्वं चेत्यपेक्षायामाह—सोम एवान्नमिति । यदद्यतेऽन्नं तदेव सोमः । य एवान्नादः सोऽग्निरेव । अर्थबलाद्धि अवधारणम् अग्नेरपि चकोरपक्षिणं प्रति अन्नत्वदर्शनात्—अद्भिरद्यमानत्वदर्शनाच्च । सोमस्यापि क्वचित् इज्यमानतया अत्तृत्वावगमाच्च अग्निरपि संहार्यश्चेत्—सोम एव । सोमोऽपि संहर्ता चेदग्निरेवेत्यर्थः ॥ १३ ॥

अनुग्राहकदेवसृष्टिं सृष्ट्वा तदुपासकस्य फलोक्त्यर्थं आदौ देवसृष्टिं स्तौति—सैषेति । 'सा एषा' सृष्टिः 'ब्रह्मणः' प्रजापतेः 'अतिसृष्टिः' आत्मनोऽप्यधिकतरा । का सा इत्यत आह—यच्छ्रेयसो देवानसृज-तेति । 'यत्' यस्मात् 'श्रेयसः' प्रशस्यतरात् आत्मनः सकाशात् 'देवानसृजत' । तस्मात्सैषा देवसृष्टि-रतिसृष्टिः । ननु—अग्निर्मूर्द्धेत्यादि ( वा. सं.अ. ३कं. १२ ) श्रुतेः अग्न्यादयोऽस्यावयवाः—तत्कथं तत्सृष्टिस्ततोऽप्य-तिशयवतीत्याशङ्क्य प्रजापतेर्यजमानावस्थापेक्षया देवसृष्टेरुत्कृष्टत्ववचनमविरुद्धमित्याशयेन परिहर्तुमाह—अथ यन्मर्त्यः सन्नमृतानसृजतेति । 'अथ' यद्यस्मात् यजमानावस्थः प्रजापतिर्मर्त्यो मरणधर्मा सन् अमृतान-मरणधर्मिणो देवान् कर्मज्ञानवह्निना सर्वान् स्वस्य पाप्मनः ओषित्वा 'असृजत' । तस्मादियं देवसृष्टिरति-सृष्टिः उत्कृष्टज्ञानकर्मणोः फलमित्यर्थः । एतादृशः प्रजापत्युपासकस्य फलमाह—अतिसृष्ट्यां हेति । य एवं सृष्ट्यात्मा प्रजापतिरहमेवेति वेद । अस्योपासकस्य 'एतस्यामतिसृष्ट्यां' देवादिप्रपंचे—'ह' किल भवति । प्रजापतिवत् स्रष्टृत्वं इति शेषः ॥ १४ ॥

एतावतोक्तस्य व्याकृतस्य जगतः अव्याकृतावस्थां बीजभूतां—सबीजसंसारोद्धरणायाह—तद्धेदं तर्हीति । तदिदं व्याकृतं जगत् 'तर्हि' तदा उत्पत्तेः प्राक्काले अव्याकृतमनभिव्यक्तनामरूपं—'ह' किल—आसीद्बभूव । तदव्याकृतं जगत् 'नामरूपाभ्यां' नाम्ना रूपेण च स्वयमेव 'व्याक्रियत' । व्याक्रियत—इति कर्मकर्तृ प्रयोगात् आत्मनैव विस्पष्टं नामरूपविशेषाववारणमर्यादं व्यक्तिभावमापद्यत । तदेव स्पष्टयति—असौनामेति ।

सऽएषऽइह प्रविष्टः। ( घृऽआ ) आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽव॑हितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तन्न पश्यन्त्यकृत्स्नो हि सः॥१६॥

( स ) प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यंश्चक्षुः शृण्वञ्छ्रोत्रम्मन्वानो मनस्तान्यस्यैतानि कर्म्मनामान्येव स योऽतऽएकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽतऽएकैकेन भवति ॥ १७ ॥

---

स एष इह प्रविष्ट आ नखाग्रेभ्यः । यथा क्षुरः क्षुरधाने अवहितः स्यात् । विश्वंभरो वा विश्वंभरकुलाये । तं न पश्यंति । अकृत्स्नो हि सः ॥ १६ ॥

प्राणन्नेव प्राणो नाम भवति । वदन् वाक् । पश्यन् चक्षुः । शृण्वन् श्रोत्रम् । मन्वानो मनः । तान्यस्यैतानि कर्मनामान्येव । स यः अतः एकैकमुपास्ते न स वेद । अकृत्स्नो ह्येषः । अतः एकैकेन भवति ॥ १७ ॥

---

अयं पुरुषादिपदार्थः असौनामा देवदत्तो यज्ञदत्त इति वा नामास्येत्यसौनामा । इदं शुक्लं कृष्णं वा रूपमस्येत्यसाविदंरूप इत्येवं-व्याक्रियतेति संबंधः । असौशब्दः श्रौतोऽतोऽव्ययत्वेन ज्ञेयः । अव्याकृतमेव व्याकृतात्मना व्यक्तं इत्येतत्सुप्तप्रबुद्धदृष्टांतेन स्पष्टयति-तदिदमप्येतर्हीति । 'तदिदं' सुप्तमव्याकृतं वस्तु 'एतर्हि' एतस्मिन्नपि काले नामरूपाभ्यामेव व्याक्रियते । 'असौनामाऽयमिदंरूपः' इति उक्तार्थम् ॥ १९ ॥

तद्धेदमि ( कं. १९ ) त्यत्र मूलकारणमुक्त्वा तन्नामरूपाभ्यामि ( कं.१९) त्यादिना तत्कार्यमुक्तम् । इदानीं तस्मिन् कार्यस्रष्टुः प्रवेशमाह-स एष इह प्रविष्ट इति । 'स एषः' स्रष्टा परमात्मैव 'इह' ब्रह्मादिस्तंबपर्यंतेषु-देहेषु अव्याकृते नामरूपे व्याकुर्वन् 'प्रविष्टः' । यथा जलादौ सूर्यादेः प्रतिबिंबलक्षणः प्रवेशो दृश्यते तथाऽऽत्मनोऽपि सृष्टे कार्ये काल्पनिकः प्रवेश इत्यर्थः । का पुनरस्य प्रवेशस्य मर्यादा इत्याशंक्याह-आ नखाग्रेभ्य इति । 'आ नखाग्रेभ्यः' नखाग्रं मर्यादीकृत्य प्रविष्टः । नखाग्रमर्यादं हि आत्मनश्चैतन्यमुपलभ्यते । तत्र कथमिव प्रविष्ट इत्याकांक्षापूर्वकं दृष्टांतद्वयमुत्थापयति-यथेति । यथा लोके 'क्षुरधाने' क्षुरो धीयतेऽस्मिन्निति क्षुरधानं तस्मिन् नापितोपस्कराधाने क्षुरः एकदेशे 'अवहितः' प्रवेशितोऽवस्थितः स्यात् ( १ ) ' यथा वा जाठरत्वेन विश्वस्य भरणात् 'विश्वंभरोऽग्निः' 'विश्वंभरकुलाये' अग्न्याधारभूतकोष्ठादिलक्षणे नीडे सर्वतो व्याप्यावस्थितः ( २ ) तथाऽऽत्मा सामान्यतो विशेषतश्च सुषुप्त्यादौ देहं व्याप्य अवस्थित इत्यर्थः । इदानीं व्याकृताजगतः आत्मानं पृथक्कर्तुं-तन्न पश्यन्तीति वाक्यम् । 'तं' प्राणनादिक्रियाविशिष्टमात्मानं तत्रैव प्रविष्टं संतं पश्यंतोऽपि केवलं पूर्णमात्मानं 'न पश्यंति' नोपलभंते । तत्र प्राणनादिक्रियाविशिष्टस्यादर्शने हेतुमाह-अकृत्स्नो हीति । 'हि' यस्मात् 'सः' प्राणनादिक्रियाविशिष्ट आत्मा 'अकृत्स्नः' असमस्तः असंपूर्ण इति यावत् ॥ १६ ॥

कुतः पुनस्तस्याकृत्स्नत्वमित्यत आह-प्राणन्नेवेति । 'प्राणन्नेव' प्राणनक्रियामेव कुर्वन्नात्मा 'प्राणो नाम' प्राणाभिधानो भवति । नान्यां क्रियां कुर्वन्, प्राणितीति व्युत्पत्तेः । 'वदन्' वदनक्रियां कुर्वन्नात्मा 'वाक्' वक्तीति

( त्या ) आत्मेत्येवोपासीत । ( त्रा ) अत्र ह्येते सर्व्वेऽएकम्भवन्ति तदेतत्पदनीयमस्य सर्व्वस्य यदयमात्माऽनेन ह्येतत्सर्व्वम्वेद यथा ह वै पदेनानुविन्देदेवङ्कीर्त्तिᳫँ श्लोकम्विन्दते यऽएवम्वेद ॥ १८ ॥

---

आत्मेत्येवोपासीत । अत्र ह्येते सर्वे एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य । यदयमात्मा । अनेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविंदेत् । एवं कीर्तिं श्लोकं विंदते । य एवं वेद ॥ १८ ॥

---

व्युत्पत्तेः । प्राणनवदनाभ्यामनूक्तकर्मेन्द्रियव्यापार उपलक्ष्यते । 'पश्यन्' दर्शनक्रियां कुर्वन् आत्मा 'चक्षुः'– चष्टे इति व्युत्पत्तेः । 'शृण्वन्नात्मा' 'श्रोत्रं' शृणोतीति व्युत्पत्तेः । दृष्टिश्रुतिभ्यां अनूक्तज्ञानेन्द्रियव्यापार उपलक्ष्यते । 'मन्वानः' मननक्रियां कुर्वन्नात्मा 'मनः' मनुत इति व्युत्पत्तेः । तान्येतानि प्राणादिनामानि– अस्यात्मनः 'कर्मनामान्येव' कर्मजानि नामान्येव पाचकपाठकादिवत् न वस्तुविषयाणि । अतो न कृत्स्नवस्त्ववद्योतकानि । अकृत्स्नदर्शी नात्मदर्शीत्याह–**स योऽत** इति । 'स यः' अतोऽस्मात् प्राणनादिक्रिया समुदायात् 'एकैकं' प्राणमिति वा चक्षुरिति वा विशिष्टं अनुपसंहृतेतरविशिष्टक्रियात्मकमात्मानं मनसा अयमात्मेति 'उपास्ते' चिंतयति–'स न वेद' न जानाति कृत्स्नमात्मानम् । कुत इत्यत आह–**अकृत्स्नो हीति** । 'हि' यस्मात् एष आत्मा अतोऽस्मात् प्राणनादिसमुदायात् प्रविभक्तः 'एकैकेन' प्राणादिविशेषणेन विशिष्टो 'भवति' । तस्मादकृत्स्नोऽसमस्तः इतरधर्मानुपसंहारात् । अकृत्स्नदर्शी तु न ब्रह्मात्मतत्त्वदर्शीत्यर्थः ॥ १७ ॥

कथं पुनर्ब्रह्मात्मतत्त्वदर्शीत्याकाङ्क्षापूर्वकं विद्यासूत्रमवतारयति–**आत्मेत्येवोपासीतेति** । यस्य प्राणादीनि विशेषणानि यान्युक्तानि स तानि सर्वाण्याप्नुवन् आत्मेत्युच्यते । तं 'आत्मा इत्येवोपासीत' । न केनचिद्विशेषणेन विशिष्टमात्मानं चिंतयेदित्यर्थः । एवं हि असौ स्वेन वस्तुरूपेण गृह्यमाणः कृत्स्नो भवति । कृत्स्नत्वे हेतुमाह–**अत्र हीति** । 'हि' यस्मात् अत्रास्मिन्निरुपाधिके आत्मनि 'एते सर्वे' प्राणनादिकर्मजनामाभिधेयाः प्राणाद्युपाधिकृता विशेषाः 'एकं भवन्ति' अभिन्नतां प्रतिपद्यन्ते । जलसूर्यप्रतिबिंबभेदा इवादित्ये । तस्मादात्मेत्येवोपासीत । ननु–अनात्मनोऽपि विद्यमानत्वात् कथमात्मन एवोपासने नियमविधानं क्रियते इत्यत आह–**तदेतादिति** । 'अस्य सर्वस्य' अनात्मपदार्थस्य तदेतत्प्रकृतमात्मस्वरूपं 'पदनीयं' गमनीयं अन्वेषणीयमिति यावत् । नान्यत् । अस्य सर्वस्येति निर्द्धारणार्था षष्ठी । अस्मिन् सर्वस्मिन्नित्यर्थः । किं तत् ? 'यदयमात्मा' यदेतदात्मतत्त्वम् । अस्यैव पदनीयत्वे हेतुमाह–**अनेन ह्येतदिति** । अनेनेतीयमित्थंभावे तृतीया । अनेनात्मज्ञानेन 'हि' यस्मात् सर्वमनात्मजातमन्यत् 'एतत्सर्वं' समस्तं 'वेद' जानाति । कथं ? पुनरेतत्पदनीयमित्यत आह–**यथा ह वा** इति । 'यथा ह वै' लोके गवादिखुरांकितो देशः पदमित्युच्यते । तेन पदेनान्विष्यमाणो नष्टं विवित्सितं गोसुवर्णादिवस्तु अनुविंदेल्लभेत । अयमनेन प्रकारेण श्रुत्यादिना आत्मनि लब्धे सर्वमनुलभते इत्यर्थः । इदानीं विज्ञानस्य गुणफलमाह–**कीर्तिं श्लोकमिति** । 'य एवं' यथोक्तं नामरूपानुप्रवेशेन ख्यातिं गतं आत्मेत्यादिनामरूपाभ्यां प्राणनादिसंगतिं श्लोकं च प्राप्तवन्तमात्मानं 'वेद' । स तद्वदेव 'कीर्तिं' प्रख्यातिं 'श्लोकं' च मित्रैः सह संघातं 'विंदते' लभते इत्यर्थः ॥ १८ ॥

तदेतत्प्रेयः पुत्रात् । ( स्प्रे ) प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्व्वस्मादन्तर-
तरं यदयमात्मा स योऽन्यमात्मनः प्रियम्ब्रुवाणम्ब्रूयात्प्रियꣳ रोत्स्य-
तीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स यऽआत्मानमेव
प्रियमुपास्ते न हास्य प्रियम्प्रमायुकं भवति ॥ १९ ॥

तदाहुः । ( स्र्मु ) यद्ब्रह्मविद्यया सर्व्वम्भविष्यन्तो मनुष्या मन्यन्ते किमु
तद्ब्रह्मावेद्यस्मात्तत्सर्व्वमभवदिति ॥ २० ॥

---

तदेतत्प्रेयः पुत्रात्, प्रेयो वित्तात्, प्रेयोऽन्यस्मात्सर्वस्मात् । अंतरतरम्–यदयमात्मा । स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् । प्रियं रोत्स्यतीति । ईश्वरो ह । तथैव स्यात् । आत्मानमेव प्रियमुपासीत । स य आत्मानमेव प्रियमुपास्ते । न हास्य प्रियं प्रमायुकं भवति ॥ १९ ॥

तदाहुः–यत् ब्रह्मविद्यया सर्वं भविष्यंतो मनुष्या मन्यन्ते । किमु तत् ब्रह्मावेत् ? यस्मात्तत्सर्वमभवदिति ॥ २० ॥

---

कुतोऽन्यत्सर्वमनादृत्यात्मतत्त्वमेव विज्ञेयमित्याशंकायां लोकदृष्टिमवष्टभ्याह–तदेतदिति । तदेतदात्मतत्त्वं ‘ पुत्रात् ’ प्रियत्वेन प्रसिद्धात् ‘ प्रेयः ’ प्रियतरम् । पुत्रो हि लोके प्रियः प्रसिद्धः । तस्मादपि प्रियतरमिति निरतिशयप्रियत्वं दर्शयति । तथा ‘ वित्तात् ’ दैवमानुषादपरोऽक्षज्ञानहिरण्यरत्नादेः ‘ प्रेयः ’ प्रियतरम् । तथा पुत्रादेः अन्यस्मात्प्रियत्वेन प्रसिद्धात् ‘ सर्वस्मात् प्रेयः ’ प्रियतरम् । तत्कस्मादात्मतत्त्वमेव प्रियतरं न प्राणादीति । उच्यते–‘ अंतरतरम् ’ बाह्यात् पुत्रवित्तादेः प्राणपिण्डसमुदायो हि अंतरोऽभ्यंतर आत्मनः सन्निकृष्टः तस्मादप्यंतरातिशयेनांतरमन्तरतरं ‘ यदयमात्मा ’ यदेतदात्मतत्त्वम् । यो हि लोके निरतिशयप्रियः स सर्वप्रयत्नेनोपलब्धव्यो भवति । तथा अयमात्मा सर्वलौकिकप्रियेभ्यः प्रियतमः । तस्मात्तल्लाभे महान् यत्न आस्थेय इत्यर्थः । ननु–अनात्मनोऽपि पुत्रवित्तादेः प्रियत्वमनुभूयते इति । कस्मात्पुनरात्मप्रियोपादानेनैव इतरहानं क्रियत इत्यत आह–स योऽन्यमिति । ‘ यः ’ कश्चिदात्मप्रियवादी ‘ सः ’ ‘ अन्यं ’ अनात्मविषयं पुत्रादिकं ‘ आत्मनः ’ सकाशात् ‘ प्रियं ब्रुवाणं ’ प्रति ‘ ब्रूयात् ’ वदेत् । किं ? तव पुत्रादिलक्षणं प्रियमभिमतं तर्हि मन्दोऽसि । यतस्तत्प्रियं ‘ रोत्स्यति ’ आवरणं प्राणसंरोधं प्राप्स्यति विनंक्ष्यतीति यावत् । स कस्मादेवं ब्रवीतीत्यपेक्षायामाह–ईश्वरो हेति । यस्मादेवं वक्तुं असौ ‘ ईश्वरो ह ’ समर्थः पर्याप्त एव । तस्मादेवं वदेत् । कुतोऽस्येश्वरत्वमवगम्यते इत्याशंकायां यथार्थवादित्वादित्याह–तथैवेति । यस्मात्प्रियत्वेन कल्पितमनात्मवस्तु विनंक्ष्यतीति यत्तेनोक्तं तत्तथैव स्यात् । अविसंवाद्येव भवेत् । यथाभूतार्थवादी हि सः–तस्मादस्येश्वरत्वमवगम्यते । एवमनात्मनि अमुख्या प्रीतिरिति स्थिते फलितमाह–आत्मानमेवेति । तस्मादन्यत्प्रियमुज्झित्वा ‘ आत्मानमेव प्रियमुपासीत ’ चिंतयेत् । तत्फलमाह–स य आत्मानमेवेति । अस्योपासकस्य ‘ प्रियं ’ प्राणादिकं ‘ प्रमायुकं ’ प्रमरणशीलं ‘ ह ’ किल ‘ न भवति ’ इत्येतत्प्रियगुणफलविधानार्थं मुख्यस्य फलस्य सर्वभावापत्तेर्वक्ष्यमाणत्वादित्यर्थः ॥ १९ ॥

“ आत्मेत्येवोपासीत ” ( कं. १८ ) इति सूत्रिता ब्रह्मविद्या । यदर्था कृत्स्नाऽप्युपनिषत् तस्यैतस्य सूत्रस्य

ब्रह्म वाऽइदमग्रऽआसीत् । (त्) तदात्मानमेवावेदहम्ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानाम्प्रत्यबुध्यत स सऽएव तदभवत्तथर्षीणान्तथा मनुष्याणाम् ॥ २१ ॥

---

ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेत्–" अहं ब्रह्मास्मि "–इति । तस्मात् तत्सर्वमभवत् । तत् यो यो देवानां प्रत्यबुध्यत । स स एव तदभवत् । तथा ऋषीणाम् । तथा मनुष्याणाम् ॥ २१ ॥

---

व्याचिख्यासुः श्रुतिः प्रयोजनाभिधित्सयोपोद्घातङ्करोति–तदाहुरिति । ' तदिति ' अनंतरवाक्ये । अत्रेदित्यंतं वक्ष्यमाणं वस्तु । ब्रह्म विविदिषवो नित्यनिरतिशयश्रेयः प्रतिपित्सवो ब्राह्मणा ' आहुः ' । किमाहुरित्याह–यद्ब्रह्मविद्यया इति । यद्ब्रह्म परमात्मा तद्यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया ' सर्वं ' निरवशेषं–' भविष्यन्तः ' सर्वात्मका भविष्याम इत्येवं ' मनुष्याः ' यन्मन्यन्ते संभावयन्ति । मनुष्यग्रहणं विशेषतोऽधिकारिज्ञापनार्थम् । मनुष्या एव हि विशेषतः अभ्युदयनिःश्रेयससाधने अधिकृता इत्यभिप्रायः । तत्र विप्रतिषिद्धं वस्तु लक्ष्यते अतः पृच्छामः–किमु तद्ब्रह्मेति । ' उ ' इति प्रश्ने । ' तद्ब्रह्म ' किं ? यस्य विज्ञानात् सर्वं भविष्यन्तः ' मनुष्या मन्यन्ते ' । तद्ब्रह्म किमवेत् किमज्ञासीत् यस्माद्विज्ञानात् तद्ब्रह्म सर्वमभवत् इति त्रयः प्रश्नाः । तद्ब्रह्म किमात्मस्वरूपमतिरिक्तं वेति प्रथमः ( १ ) । किं वा अवेत् इति स्वरूपं तदतिरिक्तं वा अज्ञासीदिति द्वितीयः ( २ ) । यस्मात्तत्सर्वमभवदिति सर्वभावापत्तिरपि किं विद्यमानैवाऽभिव्यज्यते नूतना वोत्पद्यते इति तृतीयः ( ३ ) इत्यर्थः ॥ २० ॥

एतेषां प्रश्नानां क्रमेण सर्वदोषानाघ्रातं प्रतिवचनमाह–ब्रह्म वा इदमिति । ' अग्रे ' प्राक् प्रतिबोधादपि ' इदं ' शरीरस्थं प्रमात्रादिसाक्षिभूतं त्वंपदलक्ष्यं ' ब्रह्म वै ' ब्रह्मैवासीत् । वैशब्दः अवधारणार्थः । तत् ब्रह्मविद्याविशिष्टतया अधिकारित्वेन व्यवस्थितम् । नासि त्वं संसारी । किंतु सकलधर्मरहितं चिदानंदैकरसं ब्रह्मैवासि । इति दयालुना आचार्येण कथंचित्प्रतिबोधितं ' आत्मानमेव '–' अहं ब्रह्म ' प्रमात्रादिसाक्षि अशनायाद्यतीतं नेति नेति अस्थूलादिलक्षणं ' अस्मि ' भवामि इत्येवमवेत् अज्ञासीत् । ' तस्मात् ' एवं विज्ञानात् तद्ब्रह्म ' सर्वमभवत् ' । अब्रह्मारोपणाविद्यापगमात्तत्कार्यस्यासर्वत्वस्य निवृत्त्या स्वाभाविकं सर्वत्वं प्राप्तवदित्यर्थः । " यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते " इति यत्पृष्टं " किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति " इति च तन्निर्णीतम् । ब्रह्मविद्यायां अग्निहोत्रादाविव मनुष्यत्वाद्यधिकारिविशेषणनियमो नास्ति, इत्याह–तद्यो यो देवानामिति । तत्तत्र ' देवानां ' मध्ये ' यो यः ' देवः ' प्रत्यबुध्यत ' प्रतिबुद्धवान् आत्मानं यथोक्तेन विधिना आत्मबोधनादेव ' स स एव ' देवः तद्ब्रह्म सर्वात्मकमभवत् । न साधनांतरेणेति । ' तथा ऋषीणां तथा मनुष्याणां ' मध्ये यो यः प्रत्यबुध्यत स स तद्ब्रह्म अभवदिति पूर्वेण संबंधः ॥ २१ ॥

---

१–इदमेव शुक्लयजुषां महावाक्यम् इति बोध्यम् ॥

(न्तु) तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे । (देऽहं) अहम्मनुरभवꣳ सूर्यश्चेति तदिदमप्येतर्हि यऽएवम्वेदाहम्ब्रह्मास्मीति सऽइदꣳ सर्वम्भवति तस्य ह न देवाश्चनाभूत्याऽईशतऽआत्मा ह्येषाꣳ स भवत्यथ योऽन्यान्देवतामुपास्तेऽन्याऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ स देवानां यथा ह वै बहवः पशवो मनुष्यम्भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियम्भवति किमु बहुषु तस्मादेषान्तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ २२ ॥

---

तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे—"अहं मनुरभवं सूर्यश्च"–( ऋ. सं. ४।१६ । १ ) इति । तदिदमप्येतर्हि य एवं वेद । अहं ब्रह्मास्मीति । स इदं सर्वं भवति । तस्य ह न देवाश्चनाभूत्या ईशते । आत्मा ह्येषां स भवति । अथ योऽन्यां देवतामुपास्ते । अन्याऽसौ । अन्योऽहमस्मीति । न स वेद । यथा पशुः । एवं स देवानाम् । यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युः । एवमेकैकः पुरुषो देवान् भुनक्ति । एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति । किमु बहुषु ? तस्मादेषां तन्न प्रियम् । यदेतन्मनुष्या विद्युः ॥ २२ ॥

---

अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः कथमित्येतस्यार्थस्य दार्ढ्याय श्रुतिर्मंत्रमुदाहरति—**तद्धैतत्पश्यन्नि**ति । तद्ब्रह्म 'एतत्' आत्मानमेव "अहं ब्रह्मास्मि" इति 'पश्यन्' एतस्मादेव ब्रह्मणो दर्शनादृषिर्वामदेवाख्यः "अहंमनुरभवं सूर्यश्च" ( ऋ. सं. ४ । १६ । १ ) इति मन्त्रं 'प्रतिपेदे' प्रतिपन्नवान् 'ह' किल । स एतस्मिन् ब्रह्मात्मदर्शने अवस्थितः एतं मन्त्रं ददर्श । तदेतद्ब्रह्म पश्यन्निति ब्रह्मविद्या परामृश्यते, सर्वात्मभावफलं च प्रतिपेदे इत्यर्थः । ननु—महतां देवादीनां वीर्यातिशयत्वात् ब्रह्मविद्यया सर्वभावापत्तिर्युज्यते । कथं ? पुनरिदानीं कलिकालवर्तिनां मनुष्याणां विशेषतोऽल्पवीर्यत्वात् सर्वभावापत्तिः इत्यत आह—**तदिदमप्येतर्हीति** । 'तदिदं' प्रकृतं यत् सर्वभूतानुप्रविष्टं ब्रह्म 'एतर्हि' एतस्मिन्नपि वर्तमाने काले यः कश्चित् व्यावृत्तबाह्यौत्सुक्यः आत्मानमेव उपाधिजनितभ्रांतिविज्ञानाध्यारोपितविशेषवर्जितं सकलसंसारधर्मातीतं ब्रह्मैवाहमस्मि—इति 'वेद' अनुसंधत्ते । स एतादृक् ब्रह्मविज्ञानात् अविद्याकृतासर्वत्वनिवृत्त्या 'इदं सर्वं भवति' । ननु—अविद्यावतः कर्मिणः अमृतत्वप्राप्तिमुद्दिश्य कर्मभ्यो व्युत्थानमिच्छतो देवकृतविघ्नसंभववत् विद्यावतोऽपि वर्तमानिकस्य पुरुषस्य देवकृतविघ्नसंभवान्न फलप्राप्तिरित्यत आह—**तस्य ह नेति** । 'तस्य' यथोक्तप्रकारेण ब्रह्मात्मज्ञानवतो देवाश्च न महावीर्या देवा अपि—'अभूत्यै' सर्वात्मकब्रह्मभावस्याभवनाय 'नेशते' 'ह' किल न पर्याप्ताः । किमुतान्ये ? ब्रह्मविद्याफलप्राप्तौ विघ्नकरणे देवादय ईशते इति का शंकेत्यर्थः । तत्र हेतुः । 'हि' यस्मात् ब्रह्मवित् 'एषां' देवानां 'आत्मा' शास्त्रप्रकाशितब्रह्मस्वरूपः 'भवति' । एवं सोपपत्तिकंविद्यासूत्रमुक्त्वा संप्रति अविद्यासूत्रमाह—**अथ योऽन्यामि**ति । 'अथ' सोपपत्तिकविद्यासूत्रकथनानन्तरं 'यः' कश्चित् अब्रह्मवित् स्वात्मनि कर्तृत्वमङ्गीकृत्य अन्यामात्मनो व्यतिरिक्तां 'देवतां' अन्योऽहमुपास्यदेवतायाः सकाशादस्मि अन्योऽसौ मत्त उपासनीयो देवः इत्येवं भेददृष्ट्योपास्ते स्तुतिनमस्कारयागबल्युपहारप्रणिधान-

( ब्रं ) ब्रह्म वाऽइदमग्रऽआसीत् । ( दे ) एकमेव तदेकꣳ सन्न व्यभवत्तच्छ्रेयोरूपमत्यसृजत क्षत्त्रं यान्येतानि देवत्रा क्षत्त्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानऽइति तस्मात्क्षत्त्रात्परन्नास्ति तस्माद्ब्राह्मणः क्षत्त्रियमधस्तादुपास्ते राजसूये क्षत्त्रऽएव तद्यशो दधाति सैषा क्षत्त्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमताङ्गच्छति ब्रह्मैवान्ततऽउपनिश्रयति स्वां योनिं यऽउऽएनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥ २३ ॥

---

ब्रह्म वा इदमग्र आसीदेकमेव । तदेकं सन्न व्यभवत् । तत् श्रेयोरूपमत्यसृजत क्षत्त्रम् । यान्येतानि देवत्रा क्षत्त्राणि । इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात् क्षत्त्रात्परं नास्ति । तस्मात् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये । क्षत्त्र एव तद्यशो दधाति । सैषा क्षत्त्रस्य योनिः । यत् ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति । ब्रह्मैवांतत उपनिश्रयति स्वां योनिम् । य उ एनं हिनस्ति । स्वां स योनिमृच्छाति । स पापीयान् भवति यथा श्रेयांसं हिंसित्वा ॥ २३ ॥

---

ध्यानादिना, ‘ सः ’ उपासकः ‘ न वेद ’ उपास्योपासकयोस्तत्त्वं न विजानाति । न केवलं एवंभूतोपासकः अविद्यादोषवानेव—किं तर्हि पशुसदृशोऽपि भवतीत्याह—**यथा पशुरिति** । ‘ यथा ’ पशुर्गवाश्वादिः दोहनवाहनाद्युपकारैरुपभुज्यते एवमेव सोऽविद्वान् ‘ देवानां ’ मध्ये एकैकस्यापि देवस्य पशुवदनेकैरुपकारैरुपभोग्यो भवति । लोकपशोर्मनुष्यपशौ यथोक्तं विशेषं वक्तुं श्रुतिः स्वयमेवाह—**यथा ह वा** इति । ‘ यथा ह वै ’ लोके ‘ बहवः ’ गवाश्वादयः ‘ पशवः ’ मनुष्यमात्मनोऽधिष्ठातारं स्वामिनं दोहनवाहनादिना ‘ भुञ्ज्युः ’ पालयेयुः । ‘ एवं ’ बहुपशुस्थानीयोऽयङ्कर्मी पुरुषः ‘ एकैकः ’ एव ‘ देवान् ’ इन्द्रादीन् स्तुतिनमस्कारादिक्रियया ‘ भुनक्ति ’ पालयति । देवग्रहणमृषिपित्रादीनामप्युपलक्षणपरम् । अत एव मनुष्याणां पशुभावात् व्युत्थानं देवा द्विषंतीत्याह—**एकस्मिन्नेवेति** । यथा लोके बहुपशुमतोऽपि एकस्मिन्नपि ‘ पशौ ’ व्याघ्रादिना आदीयमाने ’ अपहृियमाणे ‘ अप्रियं भवति ’ ‘ किमु बहुषु ’ तथा बहुषु बहुपशुस्थानीये एकैकस्मिन्पुरुषे पशुभावात् व्युत्तिष्ठति देवानामप्रियं भवतीति किमु वक्तव्यम् । अत एवाविद्यावतां पशुभावात् व्युत्थानसाधनं तत्त्वज्ञानमपि देवा द्विषंतीत्याह—**तस्मादेषामिति** । यस्मात् मनुष्याणां पशुभावात् व्युत्थानं देवानामप्रियं ‘ तस्मात् ’ कारणात् यदेतद्ब्रह्मात्मतत्त्वं ‘ मनुष्याः ’ कथंचन विद्युर्विजानीयुः । तदेषां देवानां न प्रियं नेष्टमित्यर्थः ॥ २२ ॥

“ अथेत्यभ्यमन्थत् ” ( ब्रा. २ कं. ११ ) इत्यत्रानुग्राहकदेवतासर्गं प्रक्रम्याग्नेरेव सृष्टिरुक्ता । नेन्द्रादीनाम् । अत्र तु—अविद्यां प्रस्तुत्य तेषां सृष्टिरुच्यते—**ब्रह्म वा इदमग्रऽ आसीदेकमेव** इत्यादिना । अविद्वान् कैः कर्मभिः केषां देवानां भोग्य इति—“ अथोऽयं वाऽआत्मा ” ( ब्रा. २ कं. २९ ) इत्यादिना विशेषतो दर्शयितुं “ आत्मैवेदमग्रऽ आसीत् ” ( ब्रा. २ कं. १ ) इत्यत्र यदात्मशब्देनोक्तं स्रष्टृ ब्रह्म तदग्निं सृष्ट्वा—अग्निरूपापन्नं ब्राह्मणजात्यभिमानवत् अस्मिन् वाक्ये ब्रह्मशब्देनाभिधीयते । ‘ वै ’ निश्चितं ‘ अग्रे ’

स॒ नैव॒ व्य॑भवत् । ( तस ) स वि॒शम॑सृजत य॒ान्येता॒नि दे॒वजा॒ता॒नि ग॒णश॑ऽआख्या॒यन्ते व॒सवो॑ रु॒द्राऽआ॑दि॒त्या वि॒श्वे दे॒वा म॒रुत॑ऽइ॒ति ॥२४॥

---

स नैव व्यभवत् । स विशमसृजत । यान्येतानि देवजातानि गणश आख्यायन्ते । वसवो रुद्रा आदित्या विश्वे देवा मरुत इति ॥ २४ ॥

---

क्षत्रादिसर्गात्पूर्वं–' इदं ' क्षत्त्रादिभेदजातं ब्रह्मैवैकमभिन्नमासीत्, नासीत् क्षत्त्रादिभेदः । ' तत् ' ब्राह्मणजात्यभिमानि अग्न्यात्मकं ब्रह्म ' एकं ' केवलं परिपालयितृक्षत्त्रादिभेदशून्यं सत्–' न व्यभवत् ' न विभूतवत् । कर्मणे नालमासीदित्यर्थः । ' तत् ' ब्रह्म ब्राह्मणः अस्मिन्ममेत्यं कर्तव्यं इत्यात्मनो ब्राह्मणजातिनिमित्तकर्मकर्तृत्व-विभूत्यै ' श्रेयोरूपं ' प्रशस्तरूपं ' अत्यसृजत ' अतिशयेन सृष्टवत् । किं तत् यत् सृष्टवत् ? ' क्षत्त्रं ' क्षत्रियजातिम् । तदेव क्षत्त्रं व्यक्तिभेदेन प्रदर्शयति । ' यान्येतानि ' प्रसिद्धानि ' देवत्रा ' देवेषु ' क्षत्त्राणीति ' जात्याख्यापेक्षया बहुवचनस्मरणात् व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनम् । कानि पुनस्तानीत्यपेक्षायां तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते–**इन्द्रो वरुणः सोम** इत्यादिना । 'इन्द्रः' देवानां राजा । 'वरुणः' यादसाम् । ' सोमः ' ब्राह्मणानाम् । ' रुद्रः ' पशूनाम् । ' पर्ज्यन्यः ' विद्युदादीनाम् । ' यमः ' धर्मराजः पितॄणाम् । ' मृत्युः ' यमदूतो रोगादीनाम् । 'ईशानः' ईश्वरो भासां राजा । इत्येवमादीनि देवेषु क्षत्त्राणि । तदनु इंद्रादि-क्षत्त्रदेवताऽधिष्ठितानि मनुष्यक्षत्त्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि । तदर्थ एव हि देव-क्षत्त्रसर्गः प्रवृत्तः । यस्मात् ब्रह्मणा ब्राह्मणेभ्योऽप्यतिशयेन क्षत्त्रं सृष्टं तस्मात्कारणात् क्षत्त्रात्परमुत्कृष्टं नास्ति । क्षत्त्रस्य नियंतृत्ववदुत्कर्षे हेत्वंतरमाह–**तस्माद्ब्राह्मण** इति । यस्मात् क्षत्त्रं ब्राह्मणजातेरपि नियंतृ । तस्मात् ' ब्राह्मणः ' क्षत्रियस्य कारणभूतोऽपि 'अधस्तात्' व्यवस्थितः सन् 'राजसूये' यज्ञे उपरिस्थितं क्षत्रियमुपास्ते । ब्राह्मणस्तदात्मीयं ब्राह्मणाख्यं ' यशः ' ख्यातिरूपं ' क्षत्त्रे ' एवं ' दधाति ' स्थापयति । राजसूयाभिषिक्तेन आसन्द्यां स्थितेन राज्ञा–"स ब्रह्मन्नित्येव प्रथममामंत्रयते"–इत्यादिना आमंत्रितः ऋत्विक् " राजँस्त्वं ब्रह्माऽसि–इतीतरः प्रत्याह "–( श. प. ५ । ४ । ४ । १ ) इति । यत् तदेतदभिधीयते–**क्षत्त्र एव तद्यशो दधातीति** । नन्वेवं क्षत्त्रे स्वकीयं यशः समर्पयतो ब्राह्मणस्यापकृष्टत्वं स्यात् इत्यत आह–**सैषेति** । ' यत् ब्रह्म ' ब्राह्मणजातिः–' सैषा ' ' क्षत्त्रस्य योनिः ' उत्पत्तिकारणम् । अत उत्कृष्ट एव ब्राह्मणः ' तस्मात् यद्यपि राजा ' राजसूया-भिषेककाले ' परमतां ' राजसूयाभिषेकगुणं परमत्वं ' गच्छति ' प्राप्नोति तथापि ' अंततः ' अंते कर्मसमाप्तौ ' ब्रह्मैव ' ब्राह्मणजातिमेव ' स्वां योनिं ' पुरोहितं उपनिश्रयत्याश्रयसि । पुर एनं दधातीति पुरोहित इति व्युत्पत्तेः । ' य उ ' ' यः ' पुनः बलाभिमानात् प्रमादाद्वा ' एनं ' स्वयोनिभूतं ब्राह्मणं ' हिनस्ति ' तिर्यग्भावेन पश्यति । ' सः ' स्वामात्मीयामेव ' योनिं ऋच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति । स एतत्कर्म्म-कृत्वा ' पापीयान् ' पापतरः ' भवति ' पूर्वमपि क्षत्रियः क्रूरत्वात्पाप एव आत्मप्रसवहिंसया तु सुतरां पाप इति तरबर्थस्य ईयसुनः प्रयोगः सार्थकः । यथा लोके ' श्रेयांसं ' प्रशस्ततरं ' हिंसित्वा ' परिभूय पापतरो भवति तद्वदित्यर्थः ॥ २३ ॥

कर्मांगभूतद्रव्योपार्जनार्थं वैश्यसृष्टिमाह–**स नैवेति** । ' सः ' ब्राह्मणाभिमानी अग्निपुरुषः क्षत्त्रसर्गात् पूर्वमिव कर्म्मणे समर्थो ' नैव व्यभवत् ' वित्तोपार्जयितुरभावात् । तदर्थं ' सः ' ब्राह्मणाभिमानी अग्निर्विशमसृजत । कः

स नैव व्यभवत् । ( ३स ) स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्वं पुष्यति यदिदं किञ्च ॥ २९ ॥

स नैव व्यभवत् । ( ३त ) तच्छ्रेयोरूपमत्यसृजत धर्मन्तदेतत्क्षत्त्रस्य क्षत्त्रं यद्धर्मस्तस्माद्धर्मात्परन्नास्त्यथोऽअबलीयान्बलीयाꣳसमाशꣳसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तꣳ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ २६ ॥

---

स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणम् । इयं वै पूषा । इयं हीदं सर्वं पुष्यति । यदिदं किञ्च ॥ २९ ॥

स नैव व्यभवत् । तत् श्रेयोरूपमत्यसृजत धर्मम् । तदेतत् क्षत्त्रस्य क्षत्त्रम् । यद्धर्मः । तस्माद्धर्मात्परं नास्ति । अथो अबलीयान् बलीयांसमाशंसते धर्मेण । यथा राज्ञैवम् । यो वै स धर्मः । सत्यं वै तत् । तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति । धर्मं वा वदंतं सत्यं वदतीति । एतद्ध्येवैतदुभयं भवति ॥ २६ ॥

---

पुनरसौ विट् । 'यान्येतानि देवजातानि'—ये एते देवजातिभेदा इत्यर्थः । देवजातानीति स्वार्थे निष्ठा । य एते 'गणशः' गणं गणं कृत्वा 'आख्यायन्ते' कथ्यन्ते । गणप्राया हि विशः प्रायेण संहता हि वित्तोपार्जने समर्थाः । नैकैकशः । 'वसवः'—अष्टसंख्यो गणः ८ । एकादश 'रुद्राः' ११ । द्वादश 'आदित्याः' १२ । दश 'विश्वे देवाः' १० विश्वाया अपत्यानि सर्वे वा देवाः । 'मरुतः' सततसप्तसंख्याताः सप्त गणा ७—४९ ॥ २४ ॥

परिचारकसृष्टिमाह—**स नैव व्यभवदिति** । पूर्ववत् परिचारकाभावात् 'स शौद्रं वर्णमसृजत' । शूद्र एव शौद्रः । स्वार्थेऽणि वृद्धिः । कः पुनरसौ शौद्रवर्णेयः सृष्टः ? तं देवशूद्रमाह—**पूषणमिति** । पुष्यतीति पूषा तं पूषणम् । कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति—**इयमिति** । 'इयं वै' पृथिवी 'पूषा' । कथमित्यपेक्षायां स्वयमेव निर्वचनमाह—**इयं हीति** । 'इयं' पृथिवी 'हि' खलु 'इदं सर्वं' 'यदिदं किञ्च' यत्किंचेदं प्राणिजातं 'तत्पुष्यति' पुष्णातीत्यर्थः ॥ २९ ॥

क्षत्रस्योग्रत्वात् तन्नियन्तृधर्मसर्गमाह—**स नैवेति** । स चतुरो वर्णान् सृष्ट्वाऽपि 'नैव व्यभवत्' । तत् स्रष्टृ ब्रह्म क्षत्रस्य उग्रत्वात् अनियताशंकया 'श्रेयोरूपं' धर्ममत्यसृजत अतिशयेन सृष्टवत् । 'तदेतत्' सृष्टं श्रेयोरूपं 'क्षत्रस्य क्षत्रं' क्षत्रस्यापि नियंतृ उग्रादप्युग्रं 'यद्धर्मः' यो धर्मश्चेतनभूतो देवात्मकः 'तस्मात्' क्षत्त्रस्यापि नियंतृत्वाद्धर्मात् 'परं' नियंतृभूतं किंचिन्नास्ति । धर्मेण हि नियम्यन्ते सर्वे । तत्कथमित्यत आह—**अथो अबलीयानिति** । 'अथो' अपि 'अबलीयान्' दुर्बलतरः बलीयांसमात्मनो बलवत्तरमपि 'धर्मेण' बलेन जेतुमाशंसते कामयते । इच्छतीति यावत् । तथैवोदाहरति—**यथा राज्ञैवमिति** । 'यथा' लोके 'राज्ञा' सर्वबलवत्तमेनापि स्पर्द्धमानः कुटुंबिकः—एवं तस्माद्धर्मस्य सर्वबलवत्तरत्वात् सिद्धं सर्वनियंतृत्वम् । धर्मस्योत्कृष्टत्वेन नियंतृत्वे सत्यात् अभिन्नत्वं हेत्वन्तरमाह—**यो वै स धर्म्म इति** । 'यो वै स धर्मः' शास्त्रार्थत्वेनानुष्ठीयमानः

तुदेतद्ब्रह्म क्षत्त्रम्विट्छूद्रः । ( स्तु ) तुदग्निनैव देवेषु ब्रह्माऽभवद्ब्राह्मणो मनुष्येषु क्षत्त्रियेण क्षत्त्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तुस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याᳪं हि रूपाभ्याम्ब्रह्माऽभवत् ॥ २७ ॥

---

तदेतत् ब्रह्म क्षत्त्रं विद् शूद्रः । तदग्निनैव देवेषु ब्रह्माऽभवत् ब्राह्मणः । मनुष्येषु क्षत्त्रियेण क्षत्रियः । वैश्येन वैश्यः । शूद्रेण शूद्रः । तस्मादग्नावेव देवेषु लोकमिच्छन्ते । ब्राह्मणे मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माऽभवत् ॥ २७ ॥

---

शास्त्रार्थत्वेन ज्ञायमानः तत्प्रसिद्धं 'सत्यमेव' । अत्र यथोक्ते विवेके लोकप्रसिद्धिं प्रमाणयति—**तस्मात्सत्यमिति** । यस्माद्धर्म्मसत्ययोरभेदः तस्मात् व्यवहारकाले ' सत्यं ' यथाशास्त्रं ' वदंतं ' पुरुषं 'धर्मं' लोकानुष्ठेयत्वेन प्रसिद्धं लौकिकं न्यायं वदति इत्याहुः धर्मसत्यविवेकज्ञाः समीपस्थाः । तथा पूर्वोक्तवदनवैपरीत्येन धर्मं लौकिकं व्यवहारं वदन्तं ' सत्यं वदति ' शास्त्रादनपेतं वदतीत्याहुः । उक्तमभेदमुपसंहरति—**एतद्धीति** । ' हि ' यस्मादेवं तस्मादेतदुभयं सत्यधर्माख्यं ज्ञायमानमनुष्ठीयमानं च एतद्धर्म्म-एव भवति । तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः । शास्त्रज्ञानतश्च सर्वानेव विनियमयति । तस्मात् क्षत्त्रस्यापि क्षत्त्रमित्यर्थः ॥ २६ ॥

ननु—पुनरुक्तिर्व्यर्थेत्याशंकायां पूर्वत्र देवेषु दर्शितस्य वर्णविभागस्य मनुष्येषु योजनार्थं उक्तानुवादपूर्वकं देवसर्गमुपसंहरति—**तदेतद्ब्रह्मेति । ब्रह्म क्षत्रं विद् शूद्र** इति । तदेतच्चातुर्वर्ण्यं सृष्टं सृष्टवर्णचतुष्टयनिविष्टमवांतरविभागमभिधातुमारभते—**तदग्निनैवेति** । तदग्निरूपापन्नं स्रष्टृ ' ब्रह्म ' ' अग्निनैव ' नान्यदेवतांतरस्वरूपेण क्षत्त्रादिविकारप्राप्तिमन्तरेण केवलमग्निरूपेणैव ' देवेषु ब्रह्म ' ब्राह्मणजातिरभवत् । तदेवाग्निरुपापन्नं स्रष्टृ ब्रह्म तेनैव रूपेण ' मनुष्येषु ब्राह्मणः ' ब्राह्मणजातिरभवत् इत्यनुषज्यते । इतरेषु वर्णेषु तु अग्निब्राह्मणलक्षणं विकारांतरं प्राप्य स्रष्टृ ब्रह्माभवदिति दर्शयति—**क्षत्रियेण क्षत्रिय** इत्यादिना । ' क्षत्रियेण ' इंद्रादिदेवक्षत्रियेण नियंत्रितोऽनुगृहीतश्च ' क्षत्रियः ' मनुष्यः क्षत्रियः सोमसूर्यवंश्यः पुरूरवइक्ष्वाकुप्रभृतिको दैवमानुषब्राह्मणरूपेण विकृतात् स्रष्टृब्रह्मणः सकाशादभवत् । तथा ' वैश्येन ' वस्वादिदेववैश्येनाधिष्ठितो ' वैश्यः ' मनुष्यवैश्यः अभवत् । एवं ' शूद्रेण ' देवशूद्रेण पूष्णा अधिष्ठितः ' शूद्रः ' मनुष्यशूद्रोऽभवदित्यर्थः । यस्मात् क्षत्त्रादिषु विकारापन्नं स्रष्टृ ब्रह्म अग्नौ ब्राह्मणे एव चाविकृतं ' तस्माद्देवेषु ' देवानां मध्ये ' अग्नावेव ' अग्निसंबद्धं कर्म्म कृत्वैव ' लोकं ' कर्मफलं—' इच्छन्ते ' प्रार्थयंते । कर्म्मफलदानार्थमेव हि तद्ब्रह्म कर्म्माधिकरणत्वेनाग्निरूपेण व्यवस्थितं तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयंते इत्युपपन्नम् । मनुष्याणां मध्ये कमपि मनुष्यमवलंब्य कर्मफलभोगापेक्षायां अग्न्यादिनिमित्तक्रियापेक्षामंतरेणापि ' ब्राह्मणे ' ब्राह्मणजातौ ब्राह्मण्यप्रयुक्तजप्यादिकर्ममात्रेण लोकमिच्छंते इति संबध्यते । कथमग्निब्राह्मणयोरेव कर्मफलमिच्छंति इत्यत्र हेतुमाह—**एताभ्यां हीति** । ' हि ' यस्मात्—यत् स्रष्टृ ब्रह्म तत् ' एताभ्यां ' अग्निब्राह्मणलक्षणाभ्यां ' रूपाभ्यां ' साक्षात् रूपवदभवत् ॥ २७ ॥

( इ ) अथ यो ह वाऽअस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति । सऽएनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्म्माकृतं यदु ह वाऽअप्यनेवंविन्महत्पुण्यङ्कर्म्म करोति तद्धास्यान्ततः क्षीयतऽएवात्मानमेव लोकमुपासीत स यऽआत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥ २८ ॥

( तेऽथो ) अथोऽअयम्वाऽआत्मा । सर्व्वेषाम्भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेनऽऋषीणामथ यत्प्रजा-

---

अथ यो ह वा अस्माल्लोकात्स्वलोकमदृष्ट्वा प्रैति । स एनमविदितो न भुनक्ति । यथा वेदो वा अननूक्तः । अन्यद्वा कर्माकृतम् । यद्दु ह वा अपि । अनेवंवित् महत् पुण्यं कर्म करोति । तद्धास्यांततः क्षीयत एव । आत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते । न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते । तत्तत्सृजते ॥ २८ ॥

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः । स यज्जुहोति । यद्यजते । तेन देवानां लोकः । अथ यदनुब्रूते । तेन ऋषीणाम् । अथ यत्प्रजामिच्छते । यत्पितृभ्यो निपृणाति । तेन पितॄणाम् ।

---

केचित् अग्न्यादिसाध्यकर्मणा मोक्षमिच्छंति, तान्प्रत्याह–अथ यो ह वा इति । अथशब्दः पूर्वपक्षव्यावृत्त्यर्थः । 'यो ह वै' 'यः' कश्चित् 'स्वं लोकं' परमात्माख्यं "अहं ब्रह्मास्मि" इति 'अदृष्ट्वा' अस्माल्लोकात्सांसारिकात् पिण्डग्रहणलक्षणात् 'प्रैति' म्रियते । तमेनं 'सः' स्वो लोकः परमात्मा 'अविदितः' अविद्यया व्यवहितः सन् शोकमोहभयादिदोषापनयनेन 'न भुनक्ति' न पालयति । अत्र दृष्टांतमाह–यथा वेद इति । 'यथा' लोके 'वेदः' 'अननूक्तः' अनधीतः कर्माद्यवबोधकत्वेन न भुनक्ति 'अन्यद्वा' कृष्यादि कर्म्म 'अकृतं' स्वात्मना अनभिव्यंजितं आत्मीयफलप्रदानेन न भुनक्ति । तद्वदात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितोऽविद्यादिप्रहाणेन न भुनक्त्येव । तथापि अश्वमेधादेर्महतः कर्म्मणोऽनुष्ठानान्मोक्षो भविष्यतीत्यत आह-यदु ह वा अपीति । 'उ' पुनः 'ह' किल 'वै' निश्चितं संसारमण्डले यः कश्चिन्महात्माऽपि 'अनेवंवित्' यथोक्तेन विधानेन स्वं लोकमविद्वान् यत् महद्वहु अश्वमेधादि 'पुण्यं कर्म' प्रकृष्टफलमेव नैरंतर्येण 'करोति' । अनेनैवानंत्यं मम भविष्यतीति तत्कर्म अस्याविदुषः ह' निश्चितं 'अंततः' फलभोगस्यावसाने 'क्षीयत एव' कृतकत्वात् स्वप्नविभूतिवत् । तस्मादात्मानमेव 'लोकं'–प्रत्यग्ब्रह्मैकत्वलक्षणं 'उपासीत' । अशेषानात्मदृष्टिपरिहारेण निरंतरमनुसंदधीत । तत्फलमाह–स य आत्मानमेवेति । 'स यः' कश्चित् उक्तरीत्या 'आत्मानमेव' लोकं 'उपास्ते' । अस्योपासकस्य 'ह' निश्चितं 'कर्म न क्षीयते' कर्माभावादेव । किंच स आत्मोपासको यद्यदिष्टं 'कामयते'–'तत्तत्' 'अस्मात् हि एव' आत्मनः सकाशात्सृजते न साधनांतरमपेक्षते इत्यर्थः ॥ २८ ॥

अत्राविद्वान् वर्णाश्रमाद्यभिमानी धर्म्मेण नियम्यमानो देवादिकर्मकर्तव्यतया पशुवत्परतंत्र इत्युक्तम् । कानि पुनस्तानि कर्म्माणि यत्कर्तव्यतया परतंत्रो भवति । के वा ते देवादयः येषां कर्मभिः पशुवदुपकरोतीति तदुभयं

मिच्छते ऽथ यत्पितृभ्यो निपृणाति तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्यो-ऽशनन्ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकम्विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाथँस्या पिपीलिकाभ्यऽउपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवथँ हैवम्विदे सर्व्वदा सर्व्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वाऽएतद्विदितम्मीमाथँसितम् ॥ २९ ॥

अथ यन्मनुष्यान् वासयते । यदेभ्योऽशनं ददाति । तेन मनुष्याणाम् । अथ यत्पशुभ्यस्तृणोदकं विंदति । तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयांसि आ पिपीलिकाभ्य उपजीवन्ति । तेन तेषां लोकः । यथा ह वै स्वाय लोकायारिष्टिमिच्छेत् । एवं हैवंविदे सर्वदा सर्वाणि भूतान्यरिष्टिमिच्छन्ति । तद्वा एतद्विदितं मीमांसितम् ॥ २९ ॥

प्रपंचयति–अथो अयं वा आत्मेति । ' अथो ' इति अयं वाक्योपन्यासार्थः । ' अयं '–यः प्रकृतो गृही कर्म्माधिकृतोऽविद्वान् शरीरेन्द्रियसंघातविशिष्टः पिण्ड आत्मेत्युच्यते । अयं वै ' सर्वेषां ' देवादीनां पिपीलिकांतानां ' भूतानां ' प्राणिनां ' लोकः ' भोग्य आत्मेत्यर्थः । सर्वेषां वर्णाश्रमादिविहितैः कर्म्मभिः उपकारित्वात् । कैः पुनः कर्म्मविशेषैरुपकुर्वन् केषां भूतविशेषाणां लोक इत्याह--स यज्जुहोतीति । ' सः ' गृही ' यज्जुहोति ' ' यद्यजते ' यागो देवतामुद्दिश्य द्रव्यपरित्यागः । स एवाज्यासेचनादिको होमः । ' तेन ' होमयागलक्षणेन कर्म्मणा अवश्यकर्तव्यत्वेन प्रतिबद्धः सन् पशुवत्परतंत्रो देवानामिंद्रादीनां ' लोकः ' भोग्यः । अथापि–' यदनुब्रूते '–स्वाध्यायमधीतेऽहरहः–' तेन ऋषीणां ' लोकः । लोक इति प्रत्येकं संबध्यते । ' अथ यत्प्रजामिच्छते '–प्रजार्थमुद्यमं करोति । इच्छा चोत्पत्त्युपलक्षणार्था । प्रजामुत्पादयतीत्यर्थः । ' यत्पितृभ्यो निपृणाति ' पिण्डोदकादि प्रयच्छति तेनोभयविधकर्म्मणा अवश्यकर्तव्यत्वेन ' पितॄणां ' भोज्यत्वेन परतंत्रः । ' अथ यन्मनुष्यान् '–गृहे भूम्युदकादिदानेन ' वासयते ' । यच्च ' एभ्यः ' वसद्भ्योऽर्थिभ्यो वा ' अशनं ' भोजनं ' ददाति ' । तेनोभयविधकर्मणा ' मनुष्याणाम् ' । ' अथ यत्पशुभ्यस्तृणोदकं विन्दति ' लंभयति ' तेन पशूनाम् ' । ' यदस्य ' कार्मिणः ' गृहेषु ' ' आ पिपीलिकाभ्यः ' पिपीलिकाभिः सह ' श्वापदाः ' मार्जारादयः ' वयांसि ' पक्षिणश्च कणबलिभांडप्रक्षालनादिकं ' उपजीवन्ति ' । ' तेन तेषां लोकः ' उपभोग्यः । एवमुपकारिणं देवादयोऽप्युपकुर्वंतीत्याह–यथा ह वा इति । ' यथा ह वै ' लोके ' स्वाय लोकाय ' स्वस्मै देहाय ' अरिष्टिं ' अविनाशं ' इच्छेत् ' पोषणरक्षणादिभिः सर्वतः परिपालयेत् । ' एवं ह ' एवमेव ' एवंविदे ' सर्वभूतभोग्योऽहं अनेन प्रकारेण मया अवश्यमृणिवत् प्रतिकर्तव्यं इत्येवमात्मानं परिकल्पितवते ' सर्वाणि भूतानि ' देवादीनि यथोक्तानि ' अरिष्टिं ' अविनाशमिच्छंति सर्वतः संरक्षन्ति कुटुंबिनः पशूनिव । ननु–तथापि नास्य होमादेरवश्यकर्तव्यत्वमित्यत आह–तद्वा एतदिति । ' तद्वै एतत् ' तदेतदेव यथोक्तानां कर्म्मणां ऋणवदवश्यकर्तव्यत्वम् " भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञः " ( श. प. ११ । ७ । २ । १ । ) इति पंचमहायज्ञप्रकरणे ' विदितं ' विज्ञातम् । ननु–श्रुतमपि अविचारितं नानुष्ठेयमित्यत आह–मीमांसितमिति । " ऋणं ह वै जायते योऽस्ति स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः " ( श. प. ११ । ७ । २ । १ । ) इत्यादिना अर्थवादेन एतदवश्यकर्तव्यत्वं अवदानप्रकरणे विचारितमित्यर्थः ॥ २९ ॥

( ग्रा ) आ॒त्मैवे॒दम॒ग्रऽआ॑सीत् । ( दे ) एक॒ऽए॒व सो॑ऽकामयत जा॒या मे॑ स्याद॒थ प्र॒जा॑येया॒थ वि॒त्तम्मे॑ स्याद॒थ क॒र्म्म कु॒र्वी॒येत्ये॒ता॒वा॒न्वै का॒मो नेच्छं॒श्च॒ना॒तो भू॒यो वि॒न्दे॒त्त॒स्मा॒द॒प्ये॒त॒र्ह्ये॒का॒की का॒मय॑ते जा॒या मे॑ स्याद॒थ प्र॒जा॑येया॒थ वि॒त्तम्मे॑ स्याद॒थ क॒र्म्म कु॒र्वी॒येति॒ स या॒व॒द॒प्ये॒ते॒षा॒मे॒कै॒कन्न प्रा॒प्नो॒त्य॒कृ॒त्स्न॒ऽए॒व ता॒व॒न्म॒न्य॒ते त॒स्यो॒ कृ॒त्स्न॒ता ॥ ३० ॥

---

आत्मैवेदमग्र आसीदेक एव । सोऽकामयत । जाया मे स्यात् । अथ प्रजायेय । अथ वित्तं मे स्यात् । अथ कर्म कुर्वीयेति । एतावान्वै कामः । नेच्छंश्चनातो भूयो विंदेत् । तस्मादप्येतर्ह्येकाकी कामयते । जाया मे स्यात् । अथ प्रजायेय । अथ वित्तं मे स्यात् । अथ कर्म कुर्वीयेति । स यावदप्येतेषामेकैकं नाप्नोति । अकृत्स्न एव तावन्मन्यते । तस्य उ कृत्स्नता ॥ ३० ॥

---

ननु–येन प्रयुक्तो मनुष्यो ग्रहग्रस्त इवावशः स्वात्मलोकबहिर्मुखीभूतो दुःखात्मके कर्मण्येव प्रवर्तत इति स कः प्रवर्तक इत्यपेक्षायां काम एव इति निर्णयार्थमाह–आत्मैवेदमग्रऽआसीदिति । अत्रात्मशब्देन स्वाभाविक्या अविद्यया युक्तः कार्यकारणसंघातलक्षणो ब्रह्मचार्यभिधीयते । तया भार्ये दारसंबन्धात्प्राक् इदं प्रसिद्धं जायादिभेदरूपं ब्रह्मचार्यात्मा 'एक एवासीत्' । नासीत्पृथग्भूतम् । 'सः' ब्रह्मचार्यात्मा स्वाभाविक्या अविद्यावासनया वासितः 'अकामयत' कामितवान् । कथमित्यत आह–जाया मे स्यादिति । 'जाया' कर्म्माधिकारहेतुभूता 'मे' मम कर्तुः 'स्यात्' तया विना अहमनधिकृत एव कर्म्मणि । अतः कर्म्माधिकारसंपत्तये जाया मे भवेत् । 'अथ' पुत्रसाधनभूतजायासंपत्त्यनंतरं 'प्रजायेय' प्रजारूपेणाहमेवोत्पद्येय । 'अथ' कर्मानुष्ठानसाधनभूतं गवादिलक्षणं 'वित्तं मे' मम 'स्यात्' । 'अथ' पुत्रगवादिलक्षणमानुषवित्तसंपत्त्यनंतरं नित्यनैमित्तिककाम्याख्यं त्रिविधमपि कर्म्माहं 'कुर्वीय' । 'एतावान् वै' प्रसिद्धजायापुत्रवित्तकर्म्माण्येव हि 'कामः' कामयितव्यो विषयः । यद्यपि फलैषणाऽप्यस्ति तथापीयं साधनैषणैव मनुष्यलोकपितृलोकदेवलोकरूपफलविषयाऽपि भवति । साधनेऽपि कामानामानंत्यात् कथमवधारणमित्यत आह--नेच्छंश्च नेति । यस्मादिच्छंश्चनेच्छन्नपि 'अतः' तत्फलं तत्साधनलक्षणात् 'भूयः' अधिकतरं न विंदेन्न लभेत । अतोऽवधारणं युक्तम् । तथा च एवमविदुषः एषणाऽपरपर्यायः काम एव कर्ममार्गप्रवृत्तिहेतुः इति निश्चितेऽर्थे आधुनिकामपि कामपूर्वकप्रवृत्तिं प्रमाणयति–तस्मादप्येतर्हीति । यस्मादेवमविदुषः प्रजापतेश्च "स वै नैव रेमे" ............... "स द्वितीयमैच्छत्" ( श. प. १४ । ४ । २ । ३ ) इत्यादिना स्त्र्यादिविषयेच्छा आसीत्–तस्मादप्येतर्हि' एतस्मिन्नपि काले स्वाभाविक्या अविद्यया युक्तः प्राक् दारक्रियातः 'एकाकी' सन् 'कामयते' "जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्व्वीय"–इति । उक्तार्थं वाक्यम् । 'सः' एवं कामयमानः संपादयंश्च जायादीन् 'यावदेतेषां' यथोक्तानां जायादीनां मध्ये एकैकमपि 'न प्राप्नोति' तावदकृत्स्नोऽसंपूर्णः अहमित्येवमात्मानं 'मन्यते' । पारिशेष्यात्समस्तानेव एतान् यदा संपादयति तदा 'तस्य कृत्स्नता' । यदा तु कृत्स्नतां संपादयितुं न शक्नोति--तदा तस्य कृत्स्नत्वसंपादनोपायमाह--तस्यो कृत्स्नतेति । 'उ' पुनः तस्याकृत्स्नत्वाभिमानिनः कृत्स्नतैवं भवति ॥ ३० ॥

मुन॑ऽएवास्यात्मा । वाग्जाया प्राणः प्रजा चक्षुर्म्मानुषं वित्तञ्चक्षुषा हि तद्विन्दति श्रोत्रन्दैवᳬं श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्म्मात्मना हि कर्म्म करोति सऽएष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदᳬं सर्वं यदिदं किञ्च तदिदᳬं सर्व्वमाप्नोति यदिदं किञ्च यऽएवम्वेद ॥ ३१ ॥

इति चतुर्दशकाण्डे तृतीयप्रपाठके बृहदारण्यकोपनिषदि प्रथम प्रपाठके द्वितीयं ब्राह्मणम् ॥ १४। ( ३ ) ३।२ ॥ (४) १-२ ॥

---

मन एवास्यात्मा । वाक् जाया । प्राणः प्रजा । चक्षुर्मानुषं वित्तम् । चक्षुषा हि तद्विंदति । श्रोत्रं दैवम् । श्रोत्रेण हि तत् शृणोति । आत्मैवास्य कर्म । आत्मना हि कर्म करोति । स एष पांक्तो यज्ञः । पांक्तः पशुः । पांक्तः पुरुषः । पांक्तमिदं सर्वम् । यदिदं किंच । तदिदं सर्वमाप्नोति । यदिदं किंच । य एवं वेद ॥ ३१ ॥

---

कथमित्यत आह--मन इति । अस्याकृत्स्नत्वाभिमानिनः 'मन एव' आत्मेवात्मा । मनोऽनुवृत्ति हि इतरत् सर्वं कार्यकारणजातमिति मनसः प्रधानत्वात् । यथा कुटुंबपतिर्जायादीनामात्मा एवं जायादिचतुष्टयस्य तदनुकारित्वात् । एवमिहापि 'मन एवात्मा' परिकल्प्यते कृत्स्नतायै । तथा 'वाक् जाया' वाचो मनोऽनुवृत्तित्वसामान्यात् । वागिति चोदनालक्षणशब्दव्यापारवती मनसा श्रोत्रद्वारेण गृह्यते अवधार्यते प्रयुज्यते च इति मनसो जायेव वाक् । प्राणः प्रजेति । वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राणः कर्मार्थं इति 'प्राणः' चक्षुर्दर्शनक्रियावत्-'मानुषं' मनुष्यसंबंधि 'वित्तम्' । कुतः ? 'हि' यस्मात् 'चक्षुषा' तत्प्रकृतं गवादिलक्षणं मानुषं वित्तं-'विंदति' लभते । 'श्रोत्रं' श्रवणक्रियावत्-'दैवं' देवसंबंधि 'वित्तम्' कुतः ? 'हि' यस्मात् 'तत्' दैवं वित्तं देवतादिविषयविज्ञानलक्षणं 'श्रोत्रेण शृणोति' । विज्ञानस्य श्रोत्राधीनत्वात् श्रोत्रमेव तदिति । एवं साधनं संपादितवतोऽस्य अकृत्स्नत्वाभिमानिनः 'आत्मैव' शरीरमेव आत्मादिवित्तांतेनिर्वर्त्यं 'कर्म्म' । 'हि' यस्मात् 'आत्मना' शरीरेण 'कर्म्म करोति' । एवं कृत्स्नता संपन्ना । तस्मात् 'स एष पाङ्क्तः' पंचभिर्निर्वृत्तो दर्शनात्मकः 'यज्ञः' । कथं ? पुनरस्य पंचत्वसंपत्तिमात्रेणैव यज्ञत्वं इत्याशंकायां बाह्ययज्ञस्यापि पाङ्क्तत्वमाह--पाङ्क्तः पशुरिति । 'पशुः' पशुसाध्यो यज्ञः 'पाङ्क्तः' । 'पाङ्क्तः पुरुषः' । पुरुषसाध्यो यज्ञः पाङ्क्त एव । पशुर्गवादिपशुत्वेऽप्यधिकृतत्वेन विशेषः पुरुषस्येति पृथग्ग्रहणम् । यथोक्तमनआदिपंचत्वयोगात् उभावपि पाङ्क्तौ । किं बहुना पंचभूतात्मकं हैरण्यगर्भं जगदपि पाङ्क्तमेवेत्याह--पाङ्क्तमिदं सर्वमिति । 'इदं सर्वं' कर्म्मफलसाधनात्मकं 'यदिदं किंच' यत्किंचिदस्ति तत्सर्वं पाङ्क्तमेव । एतत्संपादनफलमाह--तदिदं सर्वमिति । 'यः' एवमुक्तप्रकारेण पाङ्क्तं यज्ञम् आत्मानं 'वेद' संपादयति--सः 'तदिदं' सर्वं जगत् आत्मत्वेन 'आप्नोति' सर्वकर्म्मफलं प्राप्नोतीति यावत् ॥ ३१ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायाम् आद्ये मधुकाण्डे प्रथमेऽध्याये द्वितीयमात्मब्राह्मणं परिसमाप्तम् (॥ १४ । ( ४ ) । १ । २ ॥)

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधारणन्द्वे देवानभाजयत् ॥ त्रीण्यात्मनेऽकुरुत पशुभ्यऽएकम्प्रायच्छत् । तस्मिन्त्सर्व्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्व्वदा । यो वै तामक्षितिम्वेद सोऽन्नमत्ति प्रतीकेन । स देवानपिगच्छति सऽऊर्ज्जमुपजीवतीति श्लोकाः ॥ १ ॥

( ० ) यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति । मेधया हि तपसा-

---

सप्तान्नब्राह्मणं वा संवर्गविद्याब्राह्मणम् ।

" यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधारणम्, द्वे देवानभाजयत् ॥ त्रीण्यात्मनेऽकुरुत, पशुभ्य एकं प्रायच्छत् । तस्मिन् सर्वं प्रतिष्ठितम्, यच्च प्राणिति, यच्च न ॥ कस्मात्तानि न क्षीयन्ते, अद्यमानानि सर्वदा । यो वै तामक्षितिं वेद, सोऽन्नमत्ति प्रतीकेन । स देवानपिगच्छति, स ऊर्जमुपजीवति ॥ "– इति श्लोकाः ॥ १ ॥

यत् सप्तान्नानि मेधया तपसाऽजनयत्पितेति । मेधया हि तपसाऽजनयत्पिता । एकमस्य

---

एवं कामप्रयुक्तेन गृहस्थेन अन्येन वा पाङ्क्तज्ञानकर्म्मभ्यां वा केवलज्ञानेन वा अद्यमानत्वेन सृष्टस्य अन्नभूतस्य जगत उपासनार्थं विभागेन सप्तधा निरूपयितुं च सप्तान्नब्राह्मणं प्रवर्तते । तत्र संक्षेपतः सविनियोगान्नप्रकाशकान् सूत्रभूतान् मन्त्रान् उदाहरति–**यत्सप्तान्नानीति** । 'पिता' क्षेत्रज्ञो ज्ञानकर्म्माधिकारी 'मेधया' प्रज्ञया पाङ्क्तोपासनया 'तपसा' जायादिसाधनपाङ्क्तकर्म्मणा 'सप्तान्नानि' 'यत्' प्रसिद्धं 'अजनयत्' । यदिति पदं अजनयदिति क्रियाविशेषणम् । अत्र ज्ञानकर्म्मणी एव हि मेधातपःशब्दवाच्ये । तयोः प्रकृतत्वात् । तन्मध्ये यत् क्षुच्छांतिकरं सर्वैरद्यते–तदेकमन्नं 'अस्य' सर्वस्यात्तृवर्गस्य साधारणम् । 'द्वे' अन्ने वक्ष्यमाणे हुतप्रहुताख्ये हविःप्रक्षेपबलिहरणलक्षणे दर्शपूर्णमासाख्ये वा 'देवानभाजयत्' देवसात्कृतवान् । 'त्रीणि' मनोवाक्प्राणलक्षणानि अन्नानि 'आत्मने' स्वार्थमेवाकुरुत । 'एकं' पयोघृतरूपमन्नं 'पशुभ्यः' चतुष्पाद्द्विपादात्मकेभ्यः 'प्रायच्छत्' दत्तवान् । पयसोऽन्नत्वे हेतुमाह–**तस्मिन् सर्वमिति** । 'यच्च प्राणिति' प्राणनचेष्टां करोति । 'यच्च न' प्राणनचेष्टां न करोति । तत्सर्वं तस्मिन्पयसि प्रतिष्ठितम् अग्निहोत्रादौ हूयमानस्य पयसः सर्वजगत्कारणत्वात् । 'तानि' सर्वैः 'सर्वदा' 'अद्यमानानि' अन्नानि 'कस्मान्न क्षीयन्ते' इति प्रश्नरूपो मन्त्रः । तत्र पुरुषेणानवरतमुत्पाद्यमानत्वात् अन्नक्षयो न भवति इत्युत्तरमभिप्रेत्य अन्नाक्षयहेतुत्वेन पुरुषस्याक्षितित्वगुणविज्ञाने फलमाह–**यो वै तामिति** । 'यः' 'वै' निश्चितं 'तामक्षितिं' अन्नाक्षयकारणं 'वेद' । 'सः प्रतीकेन' मुखेन मुख्यया वृत्त्या 'अन्नमत्ति' । 'सः' विज्ञाता 'देवानपिगच्छति' देवत्वं प्राप्नोति । 'सः' ऊर्जममृतं चोपजीवति । अमृतभोक्ता भवतीति । 'इति श्लोकाः' मन्त्रा उक्तार्था इत्यर्थः ॥ १ ॥

एतेषां मन्त्राणां तिरोहितार्थत्वेन प्रतीकग्रहणपूर्वकं तदर्थव्याख्यानाय ब्राह्मणं प्रवर्तते–**यत्सप्तान्नानि मेधया**

ऽजनयात्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते
स यऽएतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रꣳ ह्येतत् ॥ २ ॥

( द्वे ) द्वे देवानभाजयदिति । हुतञ्च प्रहुतञ्च तस्माद्देवेभ्यो जुह्वति च प्र
च जुह्वत्यथोऽआहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥

---

साधारणमिति । इदमेवास्य तत्साधारणमन्नम् । यदिदमद्यते । स य एतदुपास्ते । न स पाप्मनो व्यावर्तते । मिश्रं हि एतत् ॥ २ ॥

द्वे देवानभाजयदिति । हुतं च प्रहुतं च । तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वति । अथो आहुः । दर्शपूर्णमासाविति । तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥

---

**तपसाऽजनयदिति** । तत्र भागः ' मेधया तपसा च ' ' पिता ' पूर्वोक्तः । ' अजनयदिति ' ' हि ' प्रसिद्धावद्योतकेन हिशब्देन व्याख्यातः । प्रसिद्धं हि उक्तार्थयोर्मेधातपसोर्जगत्कारणत्वम् । उक्तसप्तान्नविनियोजकं मन्त्रभागं प्रतीकपूर्वं व्याचष्टे--**एकमस्य साधारणमिति** । मन्त्रे ' अस्य ' भोक्तृसमुदायस्य ' तत् ' साधारणमन्नं ' इदमेव ' । किं ? ' यदिदं ' सर्वं प्राणिभिरहन्यहनि ' अद्यते ' भुज्यते । एतस्य सर्वसाधारणस्यान्नस्य असाधारणीकुर्वतो दोषं दर्शयति--**स य एतदिति** । ' स यः ' कश्चित् एतत्साधारणं सर्वप्राणभृत्स्थितिकरं भुज्यमानमन्नं ' उपास्ते ' तत्परो भवतीत्यर्थः । उपासनं हि नाम तत्परत्वम् । दृष्टं हि लोके " गुरूनुपास्ते, राजानमुपास्ते " इत्यादौ । तस्मात् शरीरस्थित्यर्थान्नोपयोगप्रधानो नादृष्टार्थकर्मप्रधान इत्यर्थः । ' सः ' एवंभूतः ' पाप्मनः ' अधर्मान्न व्यावर्तते न विमुच्यते । तथा च स्मृतिः " नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ॥ न चैकः स्वयमश्नीयाद्विधिवर्जं न निर्वपत् " इति । " इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः " ( भ. गी. ३ । १२ ) इति । " अदत्त्वा तु य एतेभ्यः पूर्वं भुंक्तेऽविचक्षणः । स भुंजानो न जानाति श्वगृध्रैर्जग्धिमात्मनः " ( म. स्मृ. ३ । ११५ ) इत्यादि । कुतः पुनः पाप्मनो न व्यावर्तत इत्याह-**मिश्रं हीति** । ' हि ' यस्मादेतदन्नं मिश्रं सर्वप्राणिसाधारणम् ॥ २ ॥

**द्वे देवानभाजयदिति** मंत्रपदम् । ' ये द्वे ' अन्ने सृष्ट्वा पिता देवानभाजयत् । के ते द्वे इत्याह-' हुतं च ' हुतमित्यग्नौ हवनं ' प्रहुतं च ' हुत्वा बलिहरणम् । यस्मात् द्वे एते अन्ने हुतप्रहुते ' पिता देवानभाजयत् ' । तस्मादेतर्ह्यपि काले गृहिणः ' देवेभ्यो जुह्वति '-देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वानाः जुह्वति । प्रजुह्वति च हुत्वा बलिहरणं च कुर्वत इत्यर्थः । एतस्य पूर्वपक्षत्वं सूचयितुं पक्षांतरमाह-**अथो इति** । ' अथो ' अपि अन्ये ' आहुः '-ये द्वे अन्ने पित्रा देवेभ्यः प्रत्ते न ते ' हुतप्रहुते ' । किं तर्हि दर्शपूर्णमासौ श्रौतयोरेव दर्शपूर्णमासयोर्देवान्नत्वं प्रसिद्धतरम् । यस्मात् द्वे देवानभाजयदिति देवार्थमेते दर्शपूर्णमासाख्ये अन्ने पित्रा प्रत्ते तस्मात्तयोर्देवार्थत्वाविघाताय इष्टियाजुकः इष्टियजनशीलो न स्यात् न भवेत् । इष्टिशब्देन किल काम्या इष्टयः । ताच्छील्ये प्रत्ययस्यात्र प्रयोगात् । काम्येष्टियजनप्रधानो न स्यादित्यर्थः ॥ ३ ॥

( त्प ) पशुभ्य॒ऽएक॒म्प्राय॑च्छदि॒ति । तत्पय॑ः प॒यो॑ ह्ये॒वाग्रे॑ मनु॒ष्या॑श्च पश॒वश्चो॑पजी॒वन्ति तस्मा॑त्कुमा॒रञ्जा॒तङ्घृ॒तम्वै॒वाग्रे॒ प्राति॑लेह॒यन्ति स्त॒नन्वा॒ऽनु॑धापयन्ति ॥ ४ ॥

( न्त्यु ) अथ॑ व॒त्सञ्जा॒तमा॑हुः । ( र ) अतृणा॒दऽइ॑ति तस्मि॑न्त्स॒र्वम्प्रति॑ष्ठितं यच्च॒ प्राणि॑ति यच्च॒ नेति॑ प॒यसि॒ हीदꣳ स॒र्वम्प्रति॑ष्ठितं यच्च॒ प्राणि॑ति यच्च॒ न ॥ ५ ॥

---

पशुभ्य एकं प्रायच्छदिति । तत्पयः । पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवंति । तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयंति । स्तनं वाऽनुधापयंति ॥ ४ ॥

अथ वत्सं जातमाहुरतृणाद इति । तस्मिन् सर्वं प्रतिष्ठितम्—यच्च प्राणिति यच्च नेति । पयसि हीदं सर्वं प्रतिष्ठितम् । यच्च प्राणिति । यच्च न ॥ ५ ॥

---

पश्वन्नविषयं मंत्रपदमादाय तदर्थं कथयति—" पशुभ्यः इति । ' पशुभ्यः ' द्विपाच्चतुष्पाद्भ्यः यदेकमन्नं पिता ' प्रायच्छदिति ' मंत्रे उक्तं तदन्नं ' पयः ' । कुत एतदवगम्यते इत्यत्राह—पयो हीति । ' हि ' यस्मात ' अग्रे ' प्रथमं ' मनुष्याः पशवश्च ' ' पय एवोपजीवंति ' । यस्मात्तेनैवान्नेन वर्तन्ते । यथा आदौ पित्रा विनियोगः कृतः । ' तस्मात् ' इदानींतना अपि त्रैवर्णिकाः—जातमुत्पन्नमात्रं ' कुमारं ' बालं ' अग्रे ' ' घृतं वैव ' घृतमेव सुवर्णयुक्तया अनामिकया अंगुल्या ' प्रतिलेहयंति ' प्राशयंति ' स्तनं वा ' स्तनं च ' अनुधापयंति ' पश्चात्पाययंति । अत्रैवर्णिकानां तु यथासंभवं स्तनमेवाग्रे धापयंतीति बोद्धव्यम् ॥ ४ ॥

पशूनां पयोऽन्नं इत्यत्र लोकप्रसिद्धिं प्रमाणयति—अथ वत्सं जातमिति । द्विपात्पश्वधिकारविच्छेदार्थोऽथशब्दः । ' जातं वत्समाहुः ' कियत्प्रमाणो वत्सः इत्येवं पृष्टाः संतः ' अतृणादः ' ' इत्याहुः ' । तृणमत्तीति तृणादः न तृणादोऽतृणादः नाद्यापि तृणमत्ति पयसैवाद्यापि वर्तत इत्यर्थः । यच्चाग्रे जातकर्मादौ घृतमुपजीवन्ति यच्च इतरे पय एव तत्सर्वमपि पय एव घृतस्यापि पयोविकारत्वात् । कस्मात्पुनः सप्तमं यत् पश्वन्नं चतुर्थत्वेन व्याख्यायते । अग्निहोत्रादि कर्म्म हि पयःसाधनाश्रयमिति पयसः साधनत्वाविशेषात् पश्वन्नं चतुर्थत्वेन व्याख्यातं तस्मिन् ' सर्वं प्रतिष्ठितम् ' । " यच्च प्राणिति यच्च न " इति मन्त्रभागः । तस्मिन्पश्वन्ने ' पयसि ' ' सर्वं ' अध्यात्माधिभूताधिदैवलक्षणं कृत्स्नं जगत् ' प्रतिष्ठितम् ' । ' यच्च प्राणिति ' प्राणनचेष्टावत् मनुष्यपश्वादि । ' यच्च न ' यच्च न प्राणिति स्थावरं शैलादि । तच्च हिशब्देनैव प्रसिद्धावद्योतकेन व्याख्यातम् । अग्निहोत्राहुतिविपरिणामात्मकं च जगत् कृत्स्नमिति " ते वाऽ एतेऽ आहुती हुतेऽ उत्क्रामतस्तेऽ अंतरिक्षमाविशतः " ( श. प. ) इत्यादयः श्रुतिवादाः क्रमेणाग्निहोत्राहुत्योर्गर्भाकारप्राप्तिं दर्शयन्ति । " अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः " ( म. स्मृ. ३ । ७६ ) इत्यादयः स्मृतिवादाश्च । इति पयसः सर्वत्र जगदाधारत्वं श्रुतिस्मृतिप्रसिद्धम् ॥ ५ ॥

तद्यदिदमाहुः । सम्वत्सरम्पयसा जुह्वदप पुनर्म्मृत्युञ्जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्म्मृत्युमपजयत्येवम्विद्वान्त्सर्व्वꣳ हि देवेभ्योऽन्नाद्यम्प्रयच्छति कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्व्वदेति ॥६॥

पुरुषो वाऽअक्षितिः । स हीदमन्नम्पुनः पुनर्ज्जनयते यो वै तामक्षितिम्वेदेति पुरुषो वाऽअक्षितिः स हीदमन्नन्धिया धिया जनयते कर्म्मभिर्य्यद्धैतन्न कुर्य्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखम्प्रतीकम्मुखेनेत्येतत्स देवानपिगच्छति सऽऊर्ज्जमुपजीवतीति प्रशꣳसा ॥ ७ ॥

---

तद्यदिदमाहुः । संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति । न तथा विद्यात् । यदहरेव जुहोति । तदहः पुनर्मृत्युमपजयति । एवं विद्वान् सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति । कस्मात्तानि न क्षीयंते अद्यमानानि सर्वदा इति ॥ ६ ॥

पुरुषो वा अक्षितिः । स हीदमन्नं पुनः पुनर्जनयते । यो वै तामक्षितिं वेदेति । पुरुषो वा अक्षितिः । स हीदमन्नं धिया धिया जनयते कर्मभिः । यद्धैतन्न कुर्यात् । क्षीयेत ह । सोऽन्नमत्ति प्रतीकेनेति । मुखं प्रतीकम् । मुखेनेत्येतत् । स देवानपिगच्छति । ऊर्जमुपजीवति । इति प्रशंसा ॥ ७ ॥

---

पयसि हीदं सर्वं प्रतिष्ठितमिति विधित्सितदर्शनस्तुतये मतांतरं निंदितुमुद्भावयति—तद्यदिदमिति । 'संवत्सरं' वर्षपर्यंतं—' पयसा जुह्वत् ' अग्निहोत्रं कुर्वन् ' पुनः ' ' मृत्युं ' ' अपजयति ' पुनर्मरणाय न जायते इति यदिदं ब्राह्मणवादा ' आहुः '। ' तन्न तथा विद्यात् ' तन्न तथा द्रष्टव्यम् । संवत्सरेण किल षष्ट्युत्तरत्रिशतानि ( ३६० ) आहुतीनां सप्तशतानि विंशतिश्चे ( ७२० ) ति यजुष्मतीरिष्टका अभिसंपद्यमानाः संवत्सरस्य वाऽहोरात्राणि संवत्सरमग्निं प्रजापतिमाप्नुवंति । एवं कृत्वा ' संवत्सरं जुह्वत् अपजयति पुनर्मृत्युं ' इतः प्रेत्य देवेषु संभूतः पुनर्न म्रियत इत्यर्थः । तर्हि कथं विद्यादित्यत आह—यदहरेवेति । यदुक्तं—" पयसि हीदं सर्वं प्रतिष्ठितं " पयआहुतिविपरिणामात्मकत्वात् सर्वस्य जगत इति । ' एवं विद्वान् ' सन् ' यदहरेव ' यस्मिन्नेव दिवसे ' जुहोति ' आहुतिप्रक्षेपं करोति । ' तदहः ' तस्मिन्नेव दिवसे ' पुनर्मृत्युं ' पुनर्मरणं ' अपजयति ' । सकृन्मृत्वा शरीरेण वियुज्यमानः पुनर्मरणाय परिच्छिन्नं शरीरं न गृह्णातीत्यर्थः । न संवत्सराभ्यासमपेक्षते 'एवं विद्वान्' एकेनैवाह्ना जगदात्मत्वं प्रतिपद्यत इति भावः । तत्र हेतुमाह—सर्वं हीति । ' हि ' यस्मात् ' सर्वं ' समस्तं ' देवेभ्यः ' सर्वेभ्यः ' अन्नाद्यं ' अन्नं च तत् आद्यं चान्नाद्यं सायंप्रातराहुतिप्रक्षेपेण ' प्रयच्छति ' ददाति । तस्माद्युक्तं सर्वमाहुतिमयमात्मानं कृत्वा सर्वदेवान्नरूपेण सर्वैर्देवैरेकात्मभावं गत्वा सर्वदेवमयो भूत्वा पुनर्न म्रियत इति भावः । " कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा " इति मन्त्रेण यदा पित्रा अन्नानि सृष्ट्वा सप्त पृथक् पृथक् भोक्तृभ्यः प्रत्तानि । तदाप्रभृत्येव तैर्भोक्तृभिः ' सर्वदा ' नैरंतर्येण ' अद्यमानानि कस्मात्पुनर्न क्षीयन्ते ? इति प्रश्ने कृते ब्राह्मणमुत्तरमाह ॥ ६ ॥

पुरुषो वा इति । 'पुरुषो वै' योऽन्नानां भोक्ता स एव 'अक्षितिः' अन्नाक्षयहेतुः । ननु—प्रत्युत क्षयहेतुर्भोक्ता कथमस्याक्षये हेतुत्वं इत्यत आह—स हीदमिति । ' हि ' यस्मात्स पुरुषो भोक्ताऽपि ' इदं ' भुज्यमानं सप्तविधं

त्रीण्यात्मनेऽकुरुतेति । मनो व्वाचम्प्राणन्तान्यात्मनेऽकुरुतान्यत्रमनाऽअभूवन्नादर्शमन्यत्रमनाऽअभूवन्नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति ॥ ८ ॥

कामः सङ्कल्पः । (ल्पो) व्विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वम्मनऽएव तस्मादपि पृष्ठतऽउपस्पृष्टो मनसा व्विजानाति॥९॥

---

त्रीण्यात्मनेऽकुरुतेति । मनो वाचं प्राणम् । तान्यात्मनेऽकुरुत । अन्यत्रमना अभूवम् । नादर्शम् । अन्यत्रमना अभूवम् । नाश्रौषमिति । मनसा ह्येव पश्यति । मनसा शृणोति ॥ ८ ॥

कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिर्ह्रीर्धीः भीः इत्येतत्सर्वं मन एव । तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति ॥ ९ ॥

---

कार्यकारणलक्षणं क्रियाकलापात्मकमन्नं 'पुनः पुनः' भूयोभूयः 'जनयते' उत्पादयति । यथा पूर्वं पिता मेधया प्रज्ञया जायादिसंबंधेन च पांक्तेन कर्म्मणा च अन्नानां स्रष्टा भोक्ता चासीत् तथा येभ्यो दत्तानि अन्नानि तेऽपि तेषामन्नानां भोक्तारोऽपि संतः पितर एव मेधया तपसा च तानि अन्नानि यतो जनयंति । तस्मात्पितुरिव पुरुषस्य जनकत्वसंभवात् भवत्येव पुरुषोऽक्षये हेतुः । "यो वै तामक्षितिं वेदेति" मंत्रभागे पुरुषो वै भोक्तैवाक्षितिरक्षयहेतुरुच्यते । 'हि' यस्मात्स पुरुषो भोक्ताऽपि 'इदमन्नं' सप्तविधं 'धिया धिया' तत्तत्कालभाविन्या तया तथा प्रज्ञया 'कर्म्मभिश्च' वाङ्मनःकायचेष्टितैः 'जनयते'। यद्धैतदिति । 'यत्' यदि 'ह' यदेतत्सप्तविधमन्नमुक्तं तत्प्रज्ञया कर्म्मभिश्च क्षणमात्रमपि 'न कुर्यात्' न संपादयेत् । तर्हि सातत्येन भुज्यमानत्वात् 'क्षीयेत ह' विच्छिद्येत किल यस्माद्यथैवाऽयं पुरुषो नैरंतर्येणान्नानां भोक्ता यथाप्रज्ञं यथाकर्म्म चान्नं करोत्यपि ततः सातत्येन कर्तृत्वात्पुरुषोऽक्षितिः । तस्मात् भुज्यमानान्यपि अन्नानि न क्षीयंत इति भावः । "सोऽन्नमत्ति प्रतीकेन" इति मंत्रे 'प्रतीकं' मुखं मुख्यत्वं प्राधान्यं इति प्राधान्येनैवान्नानां पितुः पुरुषस्याक्षितित्वं यो वेद स 'मुखेन' मुख्यत्वेन प्राधान्येनान्नमत्ति । नान्नं प्रति गुणभूतः स भोक्तैव भवति । न भोज्यतामापद्यते । "स देवानपिगच्छति स ऊर्जमुपजीवति" इति मंत्रे देवात्मभावं प्रतिपद्यते "ऊर्जममृतं चोपजीवति" इति यदुक्तं सोपासनप्रशंसा प्रशस्तिमात्रं नापूर्वोऽर्थोऽस्तीत्यर्थः ॥ ७ ॥

एवं पाठक्रममुल्लंघ्यार्थक्रमवशात् साधनभूतमन्नचतुष्टयं व्याख्याय इदानीं पाङ्क्तस्य कर्म्मणः फलभूतमन्नत्रयं कार्यत्वात् विस्तीर्णविषयत्वाच्च पूर्वेभ्य एतेभ्यः पृथगुत्कृष्टं तद्व्याख्यानाय उत्तरो ग्रन्थ आब्राह्मणपरिसमाप्तेः "त्रीण्यात्मनेऽकुरुत" इति मंत्रेण 'मनो वाचं प्राणं' इत्येवं 'तानि' त्रीण्यन्नानि पिता सृष्ट्वा आदावात्मने आत्मार्थमकुरुत कृतवान्'। तेषां मध्ये मनसः अस्तित्वं प्रति संशये प्रमाणमाह—अन्यत्रमना इति । "पुरोऽवस्थितं गजं त्वं दृष्टवानसि" इति केनचित्पृष्टो वदति । अन्यत्र विषयांतरे गतं मे मनो यस्य स अहमन्यत्रमनाः अभूवमासम् । अतो नादर्शं न दृष्टवानस्मि । "तयेदं मदीयं वचः श्रुतवानसीति" पृष्टः आह—'अन्यत्रमनाः अभूवम्'। अतो 'नाश्रौषं' न श्रुतवानस्मीति । 'हि' यस्मात्सर्वो लोकः आत्मसाक्षिकं मनसैव 'पश्यति' मनसैव 'शृणोति' । तद्व्यग्रत्वे दर्शनाद्यभावात् । तस्मात्सिद्धं प्रत्यक्षादिप्रमाणिकं मनसोऽस्तित्वम् ॥ ८ ॥

किं पुनर्मनसः स्वरूपमित्यतस्तदाह—काम इति । 'कामः' स्त्रीव्यतिकरऽभिलाषादिः । 'संकल्पः' प्रत्यु-

यः कश्च शब्दो वागेव सा । ( सै ) एषा ह्यन्तमायत्तैषा हि न प्राणो-ऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा-अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ १० ॥

---

यः कश्च शब्दः । वागेव सा । एषा हि अंतमायत्ता । एषा हि न प्राणोऽपानो व्यान उदानः समानः । अन इति एतत्सर्वं प्राण एव । एतन्मयो वा अयमात्मा । वाङ्मयो मनोमयः प्राणमयः ॥ १० ॥

---

पस्थितविषयविकल्पनं शुक्लनीलादिभेदेन । ' विचिकित्सा ' संशयज्ञानम् । ' श्रद्धा ' अदृष्टार्थेषु कर्मसु देवतादिषु च आस्तिक्यबुद्धिः । ' अश्रद्धा ' तद्विपरीता बुद्धिः । धृतिर्धारणं देहाद्यवसादे सति उत्तंभनम् । अधृतिस्तद्विपर्ययः । ह्रीर्लज्जा । ' धीः ' प्रज्ञा । भीर्भयम् इत्येतदेवमादिकं ' सर्वं मन एव ' । मनसोऽन्तःकरणस्य रूपाण्येतानि वृत्तिवृत्तिमतोरभेदात् । पुनरपि मनसोऽस्तित्वे कारणमाह—तस्मादपीति । यस्मात् चक्षुषो हि अगोचरे ' पृष्ठतोऽपि ' केनचिदुपस्पृष्टः कश्चित् हस्तस्यायं स्पर्शः जानुनोऽयं स्पर्श इति ' मनसा विजानाति ' विवेकेन प्रतिपद्यते । तस्मादस्ति विवेकप्रतिपत्तिकारणं मन इति ॥ ९ ॥

इह कर्म्मणां फलभूतानि त्रीण्यन्नानि मनोवाक्प्राणाख्यानि अध्यात्ममधिभूतमधिदैवं च व्याचिख्यासितानि । तत्राध्यात्मिकानां वाङ्मनःप्राणानां मनो व्याख्यातम् । अथेदानीं आध्यात्मिकाया वाचः स्वरूपमाह—यः कश्च शब्द इति । लोके ' यः कश्च शब्दः ' प्राणिभिस्ताल्वादिव्यङ्ग्यः वर्णादिलक्षणः इतरो वादित्रमेघादिनिर्मितः सर्वो वर्णावर्णात्मको ध्वनिः ' सा ' प्रकृता 'वागेव' । इदं तावद्वाचः स्वरूपमुक्तम् । अथ तस्याः कार्यमुच्यते—सैषा हीति । 'हि' यस्मात् 'एषा' प्रकाशमात्रस्वरूपा वाक् ' अंतं ' अभिधेयावसानं अभिधेयनिर्णयं ' आयत्ता ' अनुगता । अत एव पुनः स्वयं न अभिधेयवत् प्रकाश्या किंतु प्रदीपादिवत् प्रकाशात्मकत्वात् प्रकाशिकैव । यथा प्रदीपादिप्रकाशः प्रकाशांतरेण न प्रकाश्यते तद्वत् वाक् स्वयं प्रकाशिकैव । न प्रकाश्या इत्यनवस्थां श्रुतिः परिहरति—एषा हि नेति । प्रकाश्यात्मकत्वमेव वाचः कार्यमित्यर्थः । अथाध्यात्मिकप्राणविषयं वाक्यमवतारयितुं प्राणास्तित्वे प्रमाणं कथयन् प्राणस्वरूपमाह—प्राण इति । ' प्राणः ' मुखनासिकाऽभ्यन्तरचारी हृदयवृत्तिः प्रणयनात्प्राणः । १ । मूत्रपुरीषादेरपनयनात् नाभिमर्यादोऽधोवृत्तिरपानः । २ । हृदयादारभ्य नाभिपर्यंतं वर्तमानो व्यायच्छत्कर्म्मा वीर्यवत्कर्महेतुश्च ' व्यानः ' । प्राणापानयोर्नियमनकर्मेत्यर्थः । ३ । उत्कर्षोर्ध्वगमनादिहेतुः आपादतलमस्तकस्थानः ऊर्ध्ववृत्तिरुदानः । ४ । भुक्तस्य पीतस्य च समं नयनात्समानः कोष्ठस्थानः अन्नपक्ता । ५ । ' अनः ' । ६ । इति एतेषां वृत्तिविशेषाणां सामान्यभूता सामान्यदेहचेष्टाऽभिसंबंधिनी वृत्तिरुच्यते । ' एतत्सर्वं ' प्राणादिवृत्तिजातं आध्यात्मिकः साधारणासाधारणवृत्तिमान् ' प्राण एव ' । वृत्तिवृत्तिमतोरभेदात् । व्याख्यातानि आध्यात्मिकानि मनोवाक्प्राणाख्यानि अन्नानि । अतस्तेषां वागादीनां समुचितं स्वरूपं दर्शयति—एतन्मय इति । ' अयमात्मा ' प्राजापत्यैर्वाङ्मनःप्राणैरारब्धः कार्यकारणसंघातः पिण्डः ' एतन्मयः ' एतद्विकारः । विकारे मयट् । एतदेव विवृणोति—वाङ्मयो मनोमयः प्राणमय इति । 'एतन्मयः' इत्यस्य स्फुटीकरणम् ॥ १० ॥

( ३ ) त्रयो लोकाऽएतऽएव । वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ११ ॥

( ४ ) त्रयो वेदाऽएतऽएव । वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ १२ ॥

( दो ) देवाः पितरो मनुष्याऽएतऽएव । वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ १३ ॥

पिता माता प्रजैतऽएव । मनऽएव पिता वाङ्माता प्राणः प्रजा ॥ १४ ॥

विज्ञातं विजिज्ञास्यमविज्ञातमेतऽएव । यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥ १५ ॥

यत्किञ्च विजिज्ञास्यम् । ( म्मु ) मनसस्तद्रूपं मनो हि विजिज्ञास्यं मनऽएनं तद्भूत्वाऽवति ॥ १६ ॥

---

त्रयो लोका एत एव । वागेवायं लोकः । मनः अंतरिक्षलोकः । प्राणोऽसौ लोकः ॥ ११ ॥

त्रयो वेदा एत एव । वागेव ऋग्वेदः । मनो यजुर्वेदः । प्राणः सामवेदः ॥ १२ ॥

देवाः पितरो मनुष्या एत एव । वागेव देवाः । मनः पितरः । प्राणो मनुष्याः ॥ १३ ॥

पिता माता प्रजैत एव । मन एव पिता । वाक् माता । प्राणः प्रजा ॥ १४ ॥

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव । यत्किञ्च विज्ञातम् । वाचस्तद्रूपम् । वाग् हि विज्ञाता । वागेनं तद्भूत्वाऽवति ॥ १५ ॥

यत् किञ्च विजिज्ञास्यम् । मनसस्तद्रूपम् । मनो हि विजिज्ञास्यम् । मन एनं तद्भूत्वाऽवति ॥ १६ ॥

---

एवं वागादीनामाध्यात्मिकीं विभूतिमुक्त्वा आधिभौतिकीं विस्तृतिमाह—त्रयो लोका इति । 'त्रयो लोकाः' भूर्भुवःस्वरित्याख्याः, 'एत एव' वाङ्मनःप्राणा एव । एतदेव विशेषतो विवृणोति—वागेवायं लोक इति । 'वागेवायं' भूर्लोकः । 'मनोऽन्तरिक्षलोकः' । 'प्राणः असौ' परोऽक्षः स्वर्लोकः ॥ ११ ॥

एषामेव वागादीनां 'त्रयो वेदाः' इति वेदत्रय्यात्मकत्वमुक्तम् ॥ १२ ॥

'देवाः पितरो मनुष्याः' इति देवपितृमनुष्यात्मकत्वम् ॥ १३ ॥

'पिता माता प्रजा' इति पितृमातृप्रजात्मकत्वम् ॥ १४ ॥

विज्ञातविजिज्ञास्याविज्ञातवस्त्वात्मकत्वं चाह—विज्ञातं विजिज्ञास्यमविज्ञातमिति । तत्र विशेषः । 'यत्किंच विज्ञातं' विस्पष्टं ज्ञातं 'वाचस्तद्रूपम्' । तत्र स्वयमेव हेतुमाह-वाग्घीति । 'हि' यस्मात् 'वाक्—विज्ञाता' प्रकाशात्मकत्वात् । या अन्यानपि विज्ञापयति सा कथमविज्ञाता भवेत् इति भावः । एवं वाग्विशेषविदः फलमाह—वागेनमिति । 'एनं' वाग्विभूतिविदं 'वाक्' तद्विज्ञातं 'भूत्वा अवति' प्रतिपालयति । विज्ञातरूपेणैवास्यान्नत्वं भोज्यत्वं प्रतिपद्यते इत्यर्थः ॥ १५ ॥

तथा 'यत्किञ्च विजिज्ञास्यम्' विस्पष्टं ज्ञातुमिष्टं 'तत्' सर्वं—'मनसो रूपम्' । 'हि' यस्मात्

यत्किञ्चाविज्ञातम् । ( म्प्रा ) प्प्राणुस्य तुद्रूपुम्प्राणो ह्युविज्ञातुः प्प्राणुऽएनन्तुद्भूत्वाऽवति ॥ १७ ॥

तुस्यै व्वाचुः पृथिवी शुरीरम् । ( ञ्ज्यो ) ज्योतीरूपुमयुमग्निस्तद्युावत्येव व्वाक्तावती पृथिवी तुावानयुमाग्निः ॥ १८ ॥

( ३ ) अुथैतुस्य मुनसो द्यौः शुरीरम् । ( ञ्ज्यो ) ज्योतीरूपुमसुावादित्यस्तद्युावदेव मुनस्तुावती द्यौस्तावानसुावादित्यस्तौ मिथुनꣳ समैतान्तुतः प्प्राणोऽजायत सऽइुन्द्रः सुऽएुषोऽसपत्नुो द्वितुीयो वुै सपुत्नुो नास्य सपुत्नो भवति युऽएवम्वुेद ॥ १९ ॥

---

यत्किञ्चाविज्ञातम् । प्राणस्य तद्रूपम् । प्राणो ह्यविज्ञातः । प्राण एनं तद्भूत्वाऽवति ॥ १७ ॥

तस्यै वाचः पृथिवी शरीरम् । ज्योतीरूपमयमग्निः । तद्यावत्येव वाक् । तावती पृथिवी । तावानयमग्निः ॥ १८ ॥

अथैतस्य मनसो द्यौः शरीरम् । ज्योतीरूपमसावादित्यः । तद्यावदेव मनः । तावती द्यौः ।

---

'मनः' संदिह्यमानाकारत्वात् 'विजिज्ञास्यम्' । पूर्ववत् मनोविभूतिविदः फलमाह—'मन एनं तत्' विजिज्ञास्यं 'भूत्वा अवति' । विजिज्ञास्यरूपेणैवान्नत्वमापद्यते ॥ १६ ॥

तथा 'यत्किञ्चाविज्ञातं' विज्ञानागोचरं न च संदिह्यमानं—'प्राणस्य तद्रूपं' 'हि' यस्मात् 'प्राणः अविज्ञातः' अविज्ञातरूपः । पूर्ववत् प्राणविभूतिविदः फलमाह—प्राण एनं तद्भूत्वाऽवतीति । अविज्ञातरूपेणैवास्य प्राणोऽन्नं भवतीत्यर्थः । यथा शिष्यैरविवेकिभिः संदिह्यमानोपकारा अपि गुरवः पुत्रादिभिश्चातिबालैः अविज्ञातोपकाराः पित्रादयः तेषां भोग्यत्वमापद्यन्ते । तथा मनःप्राणयोरपि संदिह्यमानाविज्ञातयोरन्नत्वोपपत्तिरिति भावः ॥ १७ ॥

एवं वाङ्मनःप्राणानां आधिभौतिकं विस्तारमुक्त्वा आधिदैविकं विस्तारमाह—तस्यै वाच इति । 'तस्यै' तस्याः प्रजापतेरन्नत्वेन प्रस्तुतायाः 'वाचः' 'पृथिवी शरीरं' बाह्य आधारः । 'ज्योतीरूपं' प्रकाशात्मकं करणं आधेयभूतं अयं पार्थिवोऽग्निः । आधाराधेयभूतमुभयं पृथिव्यग्नी प्रजापतेर्वागेव । अध्यात्ममधिभूतं च या वाक् परिच्छिन्ना तस्या आधिदैविकवागंशत्वात् अंशांशिनोश्च तादात्म्यात् तया सह तुल्यपरिमाणत्वं दर्शयति—तद्यावतीति । तत्तत्र अध्यात्माधिभूतभेदभिन्ना सती 'वाक्' 'यावत्येव' यावत्परिमाणैव भवति । तत्र सर्वत्राधारत्वेन व्यवस्थिता कार्यभूता 'पृथिवी'—''तावत्येव' तावत्परिमाणैव भवति । अयं च पार्थिवोऽग्निः आधेयः करणभूतः ज्योतीरूपेण पृथिवीमनुप्रविष्टः तावानेव भवति ॥ १८ ॥

अध्यात्ममधिभूतं च मनःप्राणयोः आधिदैविकमनःप्राणांशत्वात्तादात्म्याभिप्रायेण तुल्यपरिमाणत्वमाह—अथैतस्य मनस इति । अथाधिदैविकवाग्विभूतिव्याख्यानानंतरं 'एतस्य' प्राजापत्यान्नत्वेनोक्तस्य

( तृऽथै ) अथैतस्य प्राणस्यापः शरीरम् । ( ज्यो ) ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्यऽआपस्तावानसौ चन्द्रः ॥ २० ॥

( स्त ) तऽएते सर्व्वऽएव समाः । सर्व्वेऽनन्ताः स यो हैतानन्तवतऽउपास्तेऽन्तवन्तँ स लोकञ्जयत्यथ यो हैताननन्तानुपास्तेऽनन्तँ स लोकञ्जयति ॥ २१ ॥

---

तावानसावादित्यः। तौ मिथुनं समैताम्। ततः प्राणः अजायत। स इन्द्रः। स एषोऽसपत्नः। द्वितीयो वै सपत्नः। नास्य सपत्नो भवति। य एवं वेद ॥ १९ ॥

अथैतस्य प्राणस्यापः शरीरम्। ज्योतीरूपमसौ चन्द्रः। तद्यावानेव प्राणः। तावत्य आपः। तावानसौ चन्द्रः ॥ २० ॥

त एते सर्व एव समाः। सर्वे अनंताः। स यो हैतानंतवत उपास्ते। अंतवंतं स लोकं जयति। अथ यो हैताननंतानुपास्ते। अनंतं स लोकं जयति ॥ २१ ॥

---

'मनसः' 'द्यौः' द्युलोकः 'शरीरं' कार्यमाधारः। 'असावादित्यो ज्योतीरूपं' करणमाधेयः। 'सत्' तत्र यावत्परिमाणमेव अध्यात्ममधिभूतं वा 'मनः'—'तावती' तावद्विस्तारा तावत्परिमाणा ज्योतीरूपस्य करणस्य मनसः आधारत्वेन व्यवस्थिता 'द्यौः'। 'असावादित्यः' ज्योतीरूपं करणमाधेयं 'तावान्' तावत्परिमाण एव। तत्र "मन एवास्यात्मा वाग् जाया प्राणः प्रजा"—इत्यध्यात्मम्। "मन एव पिता वाक् माता प्राणः प्रजा"—इत्यधिदैवतं च वाङ्मनसयोः प्रजात्वं प्राणस्योक्तम्। तथा अधिदैवेऽपि प्राणस्य तत्प्रजात्वं वाच्यमित्यभिप्रेत्याह—तौ मिथुनमिति। तावग्न्यादित्यौ आधिदैविकौ वाङ्मनसे मातापितरौ—'मिथुनं' मैथुनं इतरेतरसंसर्गं—'समैतां' समगच्छेताम्। ननु—कथम् आदित्यस्य मनसः—प्राणं प्रति पितृत्वं, वाचो वा अग्नेः मातृत्वं कथम्? उच्यते। सावित्रं पाकं आग्नेयं च प्रकाशमृते कार्यसिद्धि दर्शनात्। तयोर्जनकत्वं सिद्धं इति बोध्यम्। ततस्तयोरेव सङ्गमनात् 'प्राणः' वायुरजायत परिस्पंदनाय कर्मणे जातः। वायोः इंद्रत्वासपत्नत्वगुणविशिष्टस्योपासनमभिप्रेत्याह—सऽ इंद्र इति। 'सः' प्राणः 'इंद्रः' परमेश्वरः। तथा 'स एषः' प्राणः 'असपत्नः'—अविद्यमानः सपत्नो यस्यासावसपत्नः। कः पुनः सपत्नो नाम प्रतिपक्षत्वेनोपगतः। 'द्वितीयो वै सपत्नः'—शत्रुरित्युच्यते। तेन द्वितीयत्वे सति वाङ्मनसे न सपत्नत्वं भजेते। असपत्नगुणकप्राणोपासने फलवाक्यं प्रमाणयति—नास्येति। 'य एवं' असपत्नं यथोक्तं 'प्राणं वेद' अस्योपासकस्य 'सपत्नः' प्रतिपक्षो 'न भवति' ॥ १९ ॥

अथाधिदैविकयोर्वाङ्मनसयोर्विभूतिनिर्देशानंतरं—'एतस्य' प्रकृतस्य प्राजापत्यान्नस्य 'प्राणस्य' 'आपः शरीरं' आधारः। पूर्ववत् 'असौ चंद्रः' 'ज्योतीरूपं' करणमाधेयः। तत्राध्यात्मादिभेदेषु 'प्राणो यावानेव' यावत्परिमाणः तावत्यः तावद्व्याप्तिमत्यस्तावत्परिमाणाः 'आपः'। तास्वप्सु अनुप्रविष्टः करणभूतः 'असौ चंद्रः' आधेयः अध्यात्ममधिभूतं च 'तावान्' तावद्व्याप्तिमानेव ॥ २० ॥

इदानीमेषामाध्यात्मिकाधिभौतिकाधिदैविकानां वाङ्मनःप्राणानां ध्यानार्थं समत्वादिगुणमाह—तऽएत इति।

सुऽएषु सम्वत्सरुः प्प्रजापतिः षोडशकलः । ( स्तु ) तुस्य रात्रयऽएव पुञ्चदश कलुा ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्य्यतेऽप च क्षीयते सोऽमावास्याथ्ँ रात्रिमेतुया षोडश्या कलुया सुर्व्वमिदम्प्राणभृद्नुप्रविश्य तुतः प्प्रातुर्ज्जायते तुस्मादेताथ्ँ रात्रिम्प्राणभृतः प्प्राणन्न विच्छिन्द्यादुपि कृकलासुस्यैतुस्याऽएवु देवुतायाऽअपचित्यै ॥ २२ ॥

---

स एष संवत्सरः प्रजापतिः षोडशकलः । तस्य रात्रय एव पंचदश कलाः । ध्रुवैवास्य षोडशी कला । स रात्रिभिरेवा च पूर्यते, अप च क्षीयते । सोऽमावास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य, ततः प्रातर्जायते । तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यात् । अपि कृकलासस्य । एतस्या एव देवताया अपचित्यै ॥ २२ ॥

---

'ते एते' वाङ्मनःप्राणाः 'सर्वे एव' समास्तुल्याः सर्वे व्याप्तिमंतो यावत्प्राणिगोचरं साध्यात्माधिभूतं व्याप्यावस्थिताः अतः एवानन्ताः यावत्संसारभाविनः कार्यकरणात्मका इत्यर्थः । तेषु परिच्छिन्नत्वेन ध्याने दोषमाह—स इति । 'स यः' कश्चित् 'ह एतान्' प्रजापतेः पितुरात्मभूतान् 'अंतवतः' परिच्छिन्नान् अध्यात्मरूपेण वा अधिभूतरूपेण वा 'उपास्ते'। स च तदुपासनानुरूपमेव फलं 'अंतवंतं लोकं जयति' परिच्छिन्न एव जायते । नैतेषामात्मभूतो भवतीत्यर्थः । 'अथ' पुनः—'यो ह' 'एतान्' वागादीन् 'अनंतान्' सर्वात्मकान् सर्वप्राण्यात्मभूतान् अपरिच्छिन्नानुपास्ते । 'सः' 'अनंतमेव लोकं जयति' अनंतो भवतीत्यर्थः ॥ २१ ॥

ननु—फलवद्ध्यानविषये अन्नत्रये व्याख्याते वक्तव्याभावात् किमुत्तरग्रन्थेन इत्याशंकायामुच्यते "पिता पाङ्क्तेन कर्म्मणा सप्तान्नानि सृष्ट्वा त्रीण्यन्नानि आत्मार्थमकरोत्" इत्युक्तम् । तान्येतानि पाङ्क्तकर्म्मफलभूतानि व्याख्यातानि । तेषु त्रिष्वप्यन्नेषु पाङ्क्तत्वावाप्तये आत्मा जाया प्रजा वित्तं कर्म चेति पंचकं सङ्ग्रहीतव्यम् । तत्र पृथिव्यग्नी माता । दिवादित्यौ पिता । योऽयमनयोरंतरा प्राणः स प्रजा । इति व्याख्यातम् । तत्र वित्तकर्म्मणी संभावयितव्ये इत्येतदर्थ उत्तरो ग्रन्थ आरभ्यते—सऽ एष संवत्सर इति । यः अयं त्र्यन्नात्मा 'प्रजापतिः' प्रकृतः 'स एष संवत्सरः' संवत्सरात्मना विशेषतो निर्दिश्यते । 'षोडशकलः' । षोडश कला अवयवा यस्य स षोडशकलः संवत्सरात्मा कालरूपः । ता एव षोडश कला आह—तस्य रात्रय एवेति । 'तस्य' कालात्मनः प्रजापतेः 'रात्रय एव' अहोरात्राणि तिथय एव प्रतिपदाद्याः 'पंचदश कलाः'। 'ध्रुवैव' नित्यैव व्यवस्थिता 'अस्य' प्रजापतेः—'षोडशी' षोडशानां पूरणी कला । एतासां कलानां वित्तत्वं वक्तुं तत्साधर्म्यमाह—स रात्रिभिरेवेति । 'सः' चंद्रात्मा प्रजापतिः 'रात्रिभिरेव' प्रतिपदाद्याभिस्तिथिभिः उक्तकलारूपाभिः उपचीयमानाभिः शुक्लपक्षे 'आपूर्यते' वर्द्धते । कृष्णपक्षे ताभिरेवापचीयमानाभिः कलाभिः 'अपक्षीयते'। सोऽमावास्यां रात्रिमिति । 'सः' कालात्मा प्रजापतिः 'अमावास्यां' 'रात्रिं' रात्रौ या ध्रुवा कला व्यवस्थितोक्ता । 'एतया षोडश्या कलया सर्वमिदं प्राणभृत्' प्राणिजातं स्थावरजंगमात्मकं 'अनुप्रविश्य' यदपः पिबति यच्चौषधीरश्नाति—तत्सर्वमोषध्यात्मना व्याप्य अमावास्यां रात्रिमवस्थाय 'ततः'

यो वै स सम्वत्सरः प्रजापतिः षोडशकलः। (ओऽयु) मयमेव स योऽयु-मेवम्वित्पुरुषस्तस्य वित्तमेव पञ्चदश कलाऽआत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्य्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्त-न्तस्माद्यद्यपि सर्वज्यानिञ्जीयतऽआत्मना चेज्जीवति प्रधिना ऽगा-दित्याहुः ॥ २३ ॥

---

यो वै स संवत्सरः प्रजापतिः षोडशकलः। अयमेव सः। यः अयमेवंवित्पुरुषः। तस्य वित्तमेव पंच-दश कलाः। आत्मैवास्य षोडशी कला। स वित्तेनैवा च पूर्यते। अप च क्षीयते। तदेतन्नभ्यम्। यदयमात्मा। प्रधिर्वित्तम्। तस्माद्यद्यपि सर्वज्यानिं जीयते। आत्मना चेज्जीवति प्रधिनाऽगात् इत्याहुः ॥ २३ ॥

---

अपरेद्युः 'प्रातर्जायते' द्वितीयया कलया संयुक्तो भवति। एवमसौ प्रजापतिः पाङ्क्तात्मकः संवत्सरः। एवं प्रजापतेः पाङ्क्तं कर्मफलत्वमुक्त्वा प्रासङ्गिकमर्थमाह—तस्मादेतां रात्रिमिति। यस्मादेव चन्द्र एतां रात्रिं सर्व-प्राणिजातं अनुप्रविष्टो ध्रुवया कलया वर्तते। तस्माद्धेतोरेताममावास्यां रात्रिं 'प्राणभृतः' प्राणिनः 'प्राणं' 'न विच्छिन्द्यात्' प्राणिनं न प्रमापयेत् इति। किं बहुना कृकलासस्यापि सरटस्यापि प्राणं न विच्छिद्यात्। स हि पापात्मा दृष्टोऽप्यमंगलः इति कृत्वा स्वभावेनैव प्राणिभिर्हिंस्यते। निषेधप्रयोजनमाह—'एतस्या एव देवतायाः' सोमदेवतायाः—'अपचित्यै पूजार्थमित्यर्थः' ॥ २२ ॥

यत्पूर्वमाधिदैविकत्र्यन्नात्मकप्रजापत्युपासनमुक्तं, तदहमस्मि प्रजापतिरित्यहंग्रहेण कर्तव्यमित्याह—यो वा इति। 'यो वै' परोक्षः अभिहितः 'संवत्सरः प्रजापतिः षोडशकलः'—'सः' नैवात्यंतं परोक्षो मन्तव्यः। यस्मात् 'अयमेव सः' प्रत्यक्ष उपलभ्यते। कोऽसौ 'यः अयं' पुरुषः—'एवंवित्' यो यथोक्तं त्र्यन्नात्मकं प्रजापतिमात्मभूतं वेत्ति सोऽयं प्रत्यक्षः प्रजापतिः। केन सामान्येन प्रजापतिरित्यत आह—तस्येति। 'तस्य' एवंविदः पुरुषस्य गवादि 'वित्तमेव पंचदश कलाः' कलावत् उप-चयापचयधर्मित्वात्। 'अस्य' विदुषः 'आत्मैव' पिण्ड एव 'षोडशी कला' ध्रुवास्थानीया। 'सः' विद्वान् चंद्रवत् 'वित्तेनैव' 'आपूर्यते' 'अपक्षीयते च'। आत्मैव ध्रुवा कला इत्युक्तम्। तदेव रथचक्रदृष्टांतेन स्पष्टयति—तदेतन्नभ्यमिति। नाभिश्चक्रपिण्डिका नाभ्यै हितं नाभिमर्हतीति वा 'नभ्यम्'। एतल्लोके प्रसिद्धं चक्रपिंडिकास्थानीयम्। किं तत्? 'यदयमात्मा' योऽयं पिण्डः शरीरम्। 'प्रधिः' परिवारस्थानीयं बाह्यं 'वित्तं' चक्रस्येवारनेम्यादि। एवं सति फलितमाह—तस्माद्यद्यपीति। यस्माच्छरीरं रथचक्रपिण्डिकास्थानीयं 'तस्माद्यद्यपि' 'सर्वज्यानिं' सर्वस्वापहरणं जीयते हीयते ग्लानिं प्राप्नोति। तथाऽपि 'चेत्' यदि 'आत्मना' शरीरेण नाभिस्थानीयेन 'जीवति' तदा 'प्रधिना' बाह्येन परिवारेण अयं 'अगात्' क्षीणोऽयं यथा चक्रमरनेमिविमुक्तं एवमाहुर्लौकिकाः। जीवंश्चेत् तर्हि अरनेमिस्थानीयेन वित्तेन पुनरुपचीयते इति वाक्यार्थः ॥ २३ ॥

( र ) अथ त्रयो वाव लोकाः । (०) मनुष्यलोकः पितृलोको देवलोक-ऽइति सोऽयम्मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्म्मणा कर्म्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाᳬं श्रेष्ठस्तस्माद्विद्याम्प्रशᳬंसन्ति ॥ २४ ॥

( न्त्य ) अथातः सम्प्रत्तिः । ( र्ध ) यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वम्ब्रह्म त्वं यज्ञस्त्वं लोकऽइति स पुत्रः प्रत्याहाहम्ब्रह्माहं यज्ञोऽहं लोकऽइति ॥ २५ ॥

---

अथ त्रयो वाव लोकाः—मनुष्यलोकः पितृलोको देवलोक इति । सोऽयं मनुष्यलोकः पुत्रेणैव जय्यः । नान्येन कर्मणा । कर्मणा पितृलोकः । विद्यया देवलोकः । देवलोको वै लोकानां श्रेष्ठः । तस्माद्विद्यां प्रशंसंति ॥ २४ ॥

अथातः संप्रत्तिः । यदा प्रैष्यन्मन्यते । अथ पुत्रमाह । त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याह । अहं ब्रह्माऽहं यज्ञोऽहं लोक इति ॥ २५ ॥

---

ननु—अन्नत्रयात्मनि प्रजापतौ अहंग्रहोपासनफलस्योक्तत्वात् वक्तव्याभावात् उत्तरग्रंथवैयर्थ्यमित्याशंकाया मुच्यते—एवं पाङ्क्तेन देववित्तविद्यासंयुक्तेन कर्म्मणा अन्नात्मकः प्रजापतिभावो व्याख्यातः । अनंतरं च जायादि वित्तं परिवारस्थानीयमित्युक्तम् । तत्र पुत्रकर्मपरविद्यानां लोकप्राप्तिसाधनमात्रं सामान्येनावगतम् । न पुनः पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसंबंधनियमः अवगतः । स वक्तव्य इति तत्प्रदर्शनार्थं **अथ त्रयो वाव** इति कण्डिका प्रणीयते । अथशब्दो वाक्योपन्यासार्थः । वावेत्यवधारणार्थः । शास्त्रोक्तसाधनार्हा लोकास्त्रय एव । न न्यूना नाधिका वा । के ते इत्यत आह—**मनुष्यलोकः पितृलोको देवलोक** इति । केन कः साध्य इत्यपेक्षायामाह—**सोऽयमिति** । तेषां मध्ये ‘ सोऽयं मनुष्यलोकः ’ ‘ पुत्रेणैव ’ साधनेन ‘ जय्यः ’ जेतव्यः साध्यः । ‘ नान्येन कर्म्मणा ’ विद्यया वेति वाक्यशेषः । ‘ कर्म्मणा ’ अग्निहोत्रादिलक्षणेन केवलेन ‘ पितृलोकः ’ जेतव्यः । न पुत्रेण नापि विद्यया । ‘ विद्यया ’ अपरविद्यया ‘ देवलोकः ’ जेतव्यः । न पुत्रेण नापि विद्यया न कर्मणेत्यनुषज्यतें । ‘ देवलोको वै ’ प्रसिद्धः—‘ लोकानां ’ त्रयाणां मध्ये ‘ श्रेष्ठः ’ प्रशस्यतमः । ‘ तस्मात् ’ देवलोकसाधनत्वात् ‘ विद्यां प्रशंसन्ति ’ स्तुवन्ति ॥ २४ ॥

एवं साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्मविद्याऽऽख्यानि त्रीणि साधनानि । जाया तु पुत्रकर्मार्थत्वात् न पृथक् साधनम् इति पृथक् नाभिहिता । वित्तं च कर्मसाधनत्वात् न पृथक् साधनम् । विद्याकर्मणोर्लोक-जयहेतुत्वं स्वात्मप्रतिलाभेनैव भवतीति प्रसिद्धम् । पुत्रत्वस्य क्रियात्मकत्वात् केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायते । अतस्तद्वक्तव्यमित्यथानंतरमारभ्यते—**अथात** इति । ‘ अथ ’ पुत्रकर्मविद्याऽऽख्यानां साधनानां साध्य-विशेषसंबंधकथनानंतरं यतः पुत्रस्य एतल्लोकसाधनत्वं कथमिति न ज्ञायते । अतस्तत्कथयितुं ‘संप्रत्तिः’ संप्रदान-मारभ्यते । पुत्रेहि पिता वक्ष्यमाणप्रकारेण स्वात्मव्यापारसंप्रदानं करोति । तेन संप्रत्तिसंज्ञकमिदङ्कर्म्म । सम् प्र-

यद्वै किञ्चानूक्तम् । (न्तु) तुस्य सुर्व्वस्य ब्रह्मेत्येकता ये वै के च यज्ञा-
स्तेषाᳫं सुर्व्वेषां यज्ञऽइत्येकुता ये वै के च लोकास्तेषाᳫं सुर्व्वेषां लोकऽ
इत्येकुतैतावद्वाऽइदᳫं सुर्व्वमेतुन्मा सुर्व्वᳫं सुन्नयुमितोऽभुनजदिति
तुस्मात्पुत्रमुनुशिष्टं लोक्यमाहुस्तुस्मादेनमनुशासति स युदैवम्विदुस्मा-
ल्लोकात्प्रैत्युथैभिरेव प्राणैः सह पुत्रमाविशति स युद्यनेन किञ्चिदक्ष्ण-
याऽकृतम्भुवति तुस्मादेनᳫं सुर्व्वस्मात्पुत्रो मुञ्चति तुस्मात्पुत्रो नाम स
पुत्रेणैवास्मिँल्लोके प्रुतितिष्ठत्युथैनमेते दैवाः प्राणाऽअमृताऽआवि-
शन्ति ॥ २६ ॥

---

यद्वै किञ्चानूक्तम् । तस्य सर्वस्य ब्रह्मेत्येकता । ये वै के च यज्ञाः । तेषां सर्वेषां यज्ञ इत्येकता । ये वै के च लोकाः । तेषां सर्वेषां लोक इत्येकता । एतावद्वा इदं सर्वम् । एतन्मा सर्वं सन्नयमितोऽभुनजदिति । तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः । तस्मादेनमनुशासति । स यदा एवंविदस्माल्लोकात्प्रैति । अथैभिरेव प्राणैः सह पुत्रमाविशति । स यदि अनेन किञ्चिदक्ष्णया अकृतं भवति । तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति । तस्मात्पुत्रो नाम । पुत्रेणैवास्मिन् लोके प्रतितिष्ठति । अथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥ २६ ॥

---

इत्युपसर्गद्वयपूर्वकाद्दाधातोः–"स्त्रियां क्तिन्"–(पा.सू. ३।३।९४) इति क्तिनि "अच उपसर्गात्तः" (पा.सू. ७।४।४७) इति सूत्रेण आत्तं प्रत्तमितिवत् संप्रत्तिरिति बोद्धव्यम् । तत्कर्म कस्मिन् काले कर्तव्यमित्यपेक्षायामाह–यदा प्रैष्यन्निति । स पिता 'यदा' यस्मिन् काले 'प्रैष्यन्' प्रव्रजिष्यामि मरिष्यामीति वा अरिष्टदुःस्वप्नादिदर्शनेन 'मन्यते'। 'अथ' तदा पुत्रमाहूयाह–त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । 'सः' एवमुक्तः 'पुत्रः' पूर्वमेवानुशिष्टत्वात् 'प्रत्याह' प्रतिवचनमाह–'अहं ब्रह्माऽहं यज्ञोऽहं लोकः' 'इति'॥ २५ ॥

एतद्वाक्यत्रयस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्तते–यद्वै किञ्चेति । यत्किञ्चानूक्तमवशिष्टमधीतमनधीतं च । 'तस्य सर्वस्यैव' 'ब्रह्म' इत्येतस्मिन्पदे 'एकता' एकत्वपदार्थः । य अध्ययनव्यापारो मम कर्तव्य आसीत् एतावंतं कालं वेदविषयः । स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्त्विति वाक्यार्थः । तथा 'ये वै के च यज्ञाः' अनुष्ठेयाः सन्तो मया अनुष्ठिता अननुष्ठिताश्च 'तेषां' 'सर्वेषां' यज्ञ इत्येतस्मिन् पदे 'एकता' एकत्वं मत्कर्तृका यज्ञा ये आसन् ते इत ऊर्ध्वं त्वं यज्ञः त्वत्कर्तृका भवंत्वित्यर्थः । तथा 'ये वै के च लोकाः' मया जेतव्याः संतो जिता अजिताश्च । 'तेषां सर्वेषां लोकः' इत्येतस्मिन्पदे 'एकता' । ते इत ऊर्ध्वं–त्वं लोकः त्वया जेतव्या इत्यर्थः । इत ऊर्ध्वं मया कर्तव्याध्ययनयज्ञलोकजयहेतुभूतक्रियासङ्कल्पस्त्वयि समर्पितः । अहं तु कर्तव्यताबंधनविषयात् संकल्पान्मुक्तोऽस्मीति वदितुः पितुरभिप्रायं श्रुतिराह–एतावद्वा इति । यद्गृहिणा कर्तव्यं यदुत वेदा अध्येतव्याः–यज्ञा यष्टव्याः लोकाश्च जेतव्याः 'इदं सर्वमेतावद्वै' एतत्परिमाणमेव । 'एतत्' सर्वं 'सन्नयं' पुत्रः 'सर्वं' हीमं भारं मदधीनं मत्तोऽपच्छिद्य आत्मनि निधाय 'इतः' अस्माद् बन्धहेतुभूताल्लोकात्–'मा' मां–'अभुनजन्' पालयिष्यतीति । "छन्दसि

पृथिव्यै चैनमग्नेश्च दैवी वागाविशति । सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥ २७ ॥

दिवश्चैनमादित्याच्च दैवम्मनऽआविशति । तद्वै दैवम्मनो येनानन्द्येव भवत्यथो न शोचति ॥ २८ ॥

---

पृथिव्यै चैनमग्नेश्च दैवी वागाविशति । सा वै दैवी वाक् । यया यद्यदेव वदति । तत्तद्भवति॥२७॥

दिवश्चैनमादित्याच्च दैवं मन आविशति । तद्वै दैवं मनः । येनानन्द्येव भवति । अथो न शोचाति ॥ २८ ॥

---

लुङ्लङ्लिटः " (पा. सू. ३।४।६) इति छंदसि कालनियमाभावात् लृडर्थे लङ् । इदानीं पुत्रानुशासनस्य फलवत्त्वमाह—तस्मात्पुत्रमिति । यस्मादेवं संपन्नः पुत्रः पितरमस्माल्लोकात्कर्तव्यताबंधनतो विमोचयिष्यति । तस्मात्पुत्रमनुशिष्टं लोक्यं ' पितुर्लोकहितमाहुर्ब्राह्मणाः । ' तस्मात् ' उक्तहेतोरेव इदानींतना अपि पितरः ' एनं ' पुत्रं ' अनुशासति ' शिक्षयंति लोक्योऽयमस्माकं स्यात् इति मन्वानाः । कृतसंप्रत्तिकः पिता किं करोतीत्यपेक्षायामाह—स यदेति । ' सः ' पुत्रसमर्पितकर्तव्यताकः पिता अहमस्मि अनंताः आध्यात्मादिभेदविस्तराः वाङ्मनःप्राणा इत्येवंवित् एवंभावनः ' यदा ' यस्मिन् काले ' अस्माल्लोकात्प्रैति ' म्रियते ' अथ ' तदा ' एभिरेव प्राणैः ' प्रकृतैर्वाङ्मनःप्राणैरेव ' सह ' सार्द्धं ' पुत्रं ' ' आविशति ' व्याप्नोति । मृतोऽपि पिता अनुशिष्टपुत्रात्मना अस्मिन्नेव लोके वर्तते । नास्मादत्यंतं व्यावृत्तः । फलरूपेण च परत्र वर्तत इति भावः । इदानीं पुत्रनिर्वचनमाह—स यद्यनेनेति । ' सः ' पुत्रः ' यदि ' कदाचित्—' अनेन ' पित्रा ' अक्ष्णया ' कोणच्छिद्रतः अंतरा कर्तव्यं किंचिदकृतं कस्मिंश्चित् कर्मैकदेशे कर्तव्यं सत् विस्मृतं ' अकृतं भवति ' तस्मादकृतात् कर्तव्यतारूपात् ' सर्वस्मात् ' सर्वलोकप्रातिबंधरूपात् ' एनं ' पितरं— ' मुञ्चति ' मोचयति । तत्सर्वं स्वयमनुतिष्ठन् पितुश्छिद्रं पूरयित्वा पितरं त्रायते । ' तस्मात्पुत्रो नाम ' । इदं तत्पुत्रस्य पुत्रत्वम् । इदानीं पितुः पुत्रतादात्म्येन एतल्लोकावस्थानमुक्तं निगमयति—स पुत्रेणैवेति । ' सः ' पिता मृतोऽपि सन् एवंविधेन पुत्रेण अमृतोऽस्मिन् लोके ' प्रतितिष्ठति ' वर्तते । एवं प्रासंगिकं निरूप्य प्रकृतं पितरमेवाधिकृत्याह—अथैनमिति । पुत्रप्रकरणविच्छेदार्थः अथशब्दः । ' एनं ' कृतसंप्रत्तिकं पितरं एते वागादयः ' प्राणाः ' ' दैवाः ' हैरण्यगर्भाः ' अमृताः ' अमरणधर्माणः ' आविशन्ति ' ॥ २९ ॥

कथमित्यपेक्षायां तेषामावेशनप्रकारमाह—पृथिव्यै चैनमिति । ' पृथिव्यै ' पृथिव्याः ' अग्नेश्च ' सकाशात् ' दैवी ' आधिदैवात्मिका ' वाक् ' ' एनं ' कृतसंप्रत्तिकं पितरं ' आविशति ' । सा हि दैवी वाक् पृथिव्यग्निलक्षणाऽऽध्यात्मिकासङ्गादिदोषैर्निरुद्धा विदुषस्तद्दोषापगमे आवरणभङ्गे सति उदकमिव प्रदीपे प्रकाशवच्च व्याप्नोतीत्यर्थः । सा पुनः कीदृग्विधेत्यत आह—सा वै दैवी वागिति । ' सा ' च दैवी वाक् अनृतादिदोषरहिता शुद्धा ' यया ' दैव्या वाचा ' यत् यदेव ' आत्मने परस्मै वा ' वदति ' । ' तत्तद्भवति ' । अमोघा अप्रतिबद्धा अस्य वाग्भवतीत्यर्थः ॥ २७ ॥

तथा ' दिवः ' द्युलोकात् ' आदित्याच्च ' ' दैवं मनः ' ' एनं ' पितरं ' आविशति ' । किन्तदित्यत

( त्य ) अद्भ्यश्चैनञ्चन्द्रमसश्च दैवः प्प्राणऽआविशति । स वै दैवः प्प्राणो यः सञ्चरंश्चासञ्चरंश्च न व्व्यथतेऽथो न रिष्यति सऽएषऽएवम्वित्सर्व्वेषाम्भूतानामात्मा भवति यथैषा देवतैवꣳ स यथैतान्देवताꣳ सर्व्वाणि भूतान्यवन्त्येवꣳ हैवम्विदꣳ सर्व्वाणि भूतान्यवन्ति यदु किञ्चेमाः प्प्रजाः शोचन्त्यमैवासान्तद्भवति पुण्यमेवामुङ्गच्छति न ह वै देवान्पापङ्गच्छति ॥ २९ ॥

( त्य ) अथातो व्व्रतमीमाꣳसा । प्प्रजापतिर्ह कर्म्माणि ससृजे तानि

---

अद्भ्यश्चैनं चंद्रमसश्च दैवः प्राण आविशति । स वै दवः प्राणः । यः संचरंश्चासंचरंश्च न व्यथते । अथो न रिष्यति । स एष एवंवित्सर्वेषां भूतानामात्मा भवति । यथैषा देवता । एवं सः । यथैतां देवतां सर्वाणि भूतानि अवंति । एवं ह एवंविदं सर्वाणि भूतानि अवंति । यद्यु किंच । इमाः प्रजाः शोचंति । अमैवासां तद्भवति । पुण्यमेवामुं गच्छति । न ह वै देवान्पापं गच्छति ॥ २९ ॥

अथातो व्रतमीमांसा । प्रजापतिर्ह कर्माणि ससृजे । तानि सृष्टानि अन्योऽन्येनास्पर्द्धंत ।

---

आह–तद्वै दैवं मन इति । ' तच्च दैवं मनः ' स्वभावनिर्मलत्वात् ' येन ' मनसा ' आनन्द्येव ' सुख्येव ' भवति ' । ' अथो ' अपि ' न शोचति ' शोकादिनिमित्तसंयोगात् ॥ २८ ॥

तथा ' अद्भ्यश्च चंद्रमसश्च ' सकाशात्–' दैवः प्राणः ' ' एनं ' पितरं ' आविशति ' । ' स वै दैवः प्राणः ' । स किंलक्षण इत्यत आह–' यः ' जङ्गमेषु ' सञ्चरन् ' स्थावरेष्वसञ्चरन् ' न व्यथते ' न दुःखनिमित्तेन भयेन युज्यते । ' अथो ' अपि ' न रिष्यति ' न विनश्यति न हिंसामापद्यते । एवंविदः फलमाह–स एष इति । य एवं यथोक्तं त्र्यन्नात्मदर्शनं वा वेत्ति । ' स एषः ' ' सर्वेषां भूतानामात्मा भवति ' । सर्वेषां भूतानां मनो भवति वाक् भवति–इत्येवं सर्वभूतात्मतया सर्वज्ञश्च भवतीत्यर्थः । ' यथैषा ' पूर्वसिद्धा हिरण्यगर्भदेवता एवमेव ' सः ' नास्य सर्वज्ञत्वे सर्वकृत्त्वे वा कश्चित्प्रतिघातः । किंच स इति दृष्टांतनिर्देशः । यथा ' एतां ' हिरण्यगर्भदेवतां इज्यादिभिः ' सर्वाणि भूतानि अवंति ' पालयंति पूजयंति । 'एवं ह'–एवमेव ' एवंविदं सर्वाणि भूतान्यवंति' इज्यादिलक्षणां पूजां संततं प्रयुञ्जत इत्यर्थः । ननु–अस्य विदुषः सर्वप्राणिनामात्मत्वेन तत्कार्यकरणात्मत्वात् सर्वप्राणिदुःखैरस्य संबंधः स्यादित्यत आह–यद्यु किंचेति । ' उ ' पुनः ' यत्किंच ' ' इमाः प्रजाः ' ' शोचन्ति ' अवसीदन्ति–' अमैव ' सहैव प्रजाभिस्तच्छोकादिनिमित्तं दुःखं संयुक्तं ' आसां ' प्रजानां ' भवति ' परिच्छिन्नबुद्धिजनितत्वात् । ' अमुं ' प्राजापत्ये पदे वर्तमानं एवंविदं ' पुण्यमेव ' शुभमेव फलमभिप्रेतं ' गच्छति ' प्राप्नोति । पुण्यमिति निरतिशयं पुण्यं तेन अक्षतं तत्फलमेव गच्छति । ' न ह वै ' नैव–' ह ' स्फुटं–' देवान् '–' पापं ' पापफलं दुःखं ' गच्छति ' । पापफलस्य अवसराभावात् ॥ २९ ॥

" त एते सर्वे समाः सर्वेऽनन्ताः "–( बृ. उ. १।३–२१ ) इत्यविशेषेण वाङ्मनःप्राणानामुपासनमुक्तम् ।

सृष्टान्यन्योऽन्येनास्पर्द्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्म्माणि यथाकर्म्म ॥ ३० ॥

तानि मृत्युः श्रमो भूत्वोपयेमे । तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्द्ध तस्माच्छ्राम्यत्येव वाक्छ्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्यो-ऽयम्मध्यमः प्राणः ॥ ३१ ॥

---

वदिष्याम्येवाहमिति वाक् दध्रे । द्रक्ष्याम्यहमिति चक्षुः । श्रोष्याम्यहमिति श्रोत्रम् । एवमन्यानि कर्माणि यथाकर्म ॥ ३० ॥

तानि मृत्युः श्रमो भूत्वोपयेमे । तान्याप्नोत् । तानि आप्त्वा मृत्युरवारुंध । तस्मात् श्राम्यत्येव वाक् । श्राम्यति चक्षुः । श्राम्यति श्रोत्रम् । अथ इममेव नाप्नोत् । यः अयं मध्यमः प्राणः॥ ३१

---

नान्यतमगतो विशेष उक्तः । किमेवं प्रतिपत्तव्यम् । किं वा विचार्यमाणे व्रतमुपासनं प्रति कश्चिद्विशेषः प्रतिपत्तुं शक्यत इति जिज्ञासायामाह—**अथात** इति । ' अथ ' उपासनोक्त्यनंतरं यतो जिज्ञासा अस्ति अत एषां वागादीनां प्राणानाम्मध्ये कस्य कर्म व्रतत्वेन धारयितव्यमिति ' मीमांसा ' उपासनकर्मविचारणा प्रवर्तते । व्रतमिति अवश्यानुष्ठेयं कर्मोच्यते । प्रवृत्तायां मीमांसायां प्राप्तव्रतं अभग्नत्वेन धारणीयमिति निर्द्धारणार्थमाख्यायिकां प्रणयति—**प्रजापतिर्ह**ेति । हशब्दः किलार्थे । ' प्रजापतिः ' किल ' कर्म्माणि ' वागादीनि करणानि ' ससृजे ' सृष्टवान् । कर्मार्थानि हि तानि इति कर्म्माणीत्युच्यंते । ' तानि ' पुनः ' सृष्टानि ' अन्योऽन्येनेतरेतरमस्पर्द्धंत स्पर्द्धां संघर्षं चक्रुः । कथमित्यपेक्षायां स्पर्द्धाप्रकारमेवाह—**वदिष्याम्येवाह**मिति । ' वदिष्याम्येव ' स्वव्यापाराद्वदनात् अनुपरतैवाहं स्यामिति वाग्व्रतं ' दध्रे ' धृतवती । एवमन्योऽपि मत्समोऽस्ति चेत् स्वव्यापारादनुपरंतुं शक्तः । सोऽपि दर्शयत्वात्मनो वीर्यमिति । तथा 'द्रक्ष्याम्यहमिति चक्षुः' व्रतं दध्रे । ' श्रोष्याम्यहमिति श्रोत्रं ' व्रतं दध्रे । एवं अमुना प्रकारेण वागादिवत् ' अन्यानि कर्माणि ' त्वगादीनि करणानि ' यथाकर्म ' यद्यस्य कर्मेति स्वीयं स्वीयं व्यापारमनुसृत्य व्रतं दध्रिरे इति शेषः ॥ ३० ॥

प्रजापतेर्वागादिषु श्रमद्वारा स्वकर्म्मप्रच्युतिरासीदित्याह—**तानि मृत्युरि**ति । मृत्युर्मारकः ' श्रमः ' श्रमरूपी भूत्वा ' तानि ' वागादीनि करणानि ' उपयेमे ' संजग्राह । कथमित्यपेक्षायामाह—**तानी**ति । स्वव्यापारे प्रवृत्तानि तानि करणानि मृत्युराप्नोत् श्रमरूपेणात्मानं दर्शितवान् । ' आप्त्वा ' प्राप्य च ' तानि ' करणानि ' मृत्युरवारुन्ध ' अवरोधं कृतवान् स्वकर्म्मभ्यः प्रच्यावितवानित्यर्थः । अत्र कार्यगतश्रमलिङ्गकं प्रमाणमाह—**तस्माच्छ्राम्यत्येवे**ति । यस्मात्प्रजापतेर्वागादीनि श्रमविद्धानि तस्मादद्यापि वदने स्वकर्मणि प्रवृत्ता ' वाक् श्राम्यत्येव ' श्रमरूपिणा मृत्युना संयुक्ता स्वकर्म्मतः प्रच्यवते । तथा ' श्राम्यति चक्षुः ' । ' श्राम्यति श्रोत्रम् ' । ' अथ ' वागादीनां भग्नव्रतत्वनिर्द्धारणानंतरं ' यः अयं मध्यमः प्राणः ' इममेव मुख्यं प्राणं श्रमरूपी मृत्युः ' नाप्नोत् ' न प्राप्तवान् । तेनाद्यापि अश्रांत एव स्वकर्म्मणि प्रवर्तते ॥ ३१ ॥

( स्ता ) तानि ज्ञातुन्दध्रिरे । ( रेऽयं ) अयम्वै नः श्रेष्ठो यः सञ्चरंश्चा-सञ्चरंश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्व्वे रूपम्भवामेति तऽ एतस्यैव सर्व्वे रूपमभवँस्तस्मादेतऽएतेनाख्यायन्ते प्राणाऽइति तेन ह वाव तत्कुलमाख्यायते यस्मिन्कुले भवति यऽएवम्वेद यऽउ हैवम्विदा स्पर्द्धतेऽनुशुष्य हैवान्ततो म्रियतऽइत्यध्यात्मम् ॥ ३२ ॥

( म ) अथाधिदेवतम् । ( ञ्ज्व ) ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्या-म्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमाऽएवमन्या देवता यथादेवतᳬँ

---

तानि ज्ञातुं दध्रिरे । अयं वै नः श्रेष्ठः । यः संचरंश्चासंचरंश्च न व्यथते । अथो न रिष्यति । हंत ! अस्यैव सर्वे रूपं भवामेति । त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणा इति । तेन ह वाव तत्कुलमाख्यायते । यस्मिन् कुले भवति । य एवं वेद । य उ हैवंविदा स्पर्द्धते । अनुशुष्य हैवांततो म्रियते । इत्यध्यात्मम् ॥ ३२ ॥

अथाधिदेवतम् । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे । तप्स्याम्यहमित्यादित्यः । भास्याम्यहमिति

---

तथाऽपि कथं प्राणस्यैव व्रतं धार्यमित्यपेक्षायामाह—तानीति । 'तानि' वागादीनि करणानि तं प्राणं 'ज्ञातुं दध्रिरे' धृतवन्ति मनः । कथं ? 'अयं वै' प्राणः नोऽस्माकं मध्ये 'श्रेष्ठः' प्रशस्यतमोऽभ्यधिकः । यस्मात् 'यः संचरंश्चासञ्चरंश्च न व्यथते' अथापिच 'न रिष्यति' न विनश्यति । तस्य श्रेष्ठत्वे फलितमाह—हन्तेति । हन्तेदानीं 'सर्वे' वयं 'अस्यैव' प्राणस्य 'रूपं' 'भवाम' आत्मत्वेन प्रतिपद्येमहीत्येवं विनिश्चित्य 'ते' सर्वे वागादयः 'एतस्यैव' प्राणस्य रूपमभवन् । प्राणरूपमेवात्मत्वेन प्रतिपन्नाः प्राण-व्रतमेव दध्रिरे । अस्मद्व्रतानि न मृत्योर्वारणाय पर्याप्तानि इत्यभिप्रायेणैवं करणानां प्राणरूपत्वमुक्त्वा तन्नामत्व-माह—तस्मादेत इति । यस्मात्प्राणेन चलनात्मना प्रकाशात्मना च स्वेन रूपेण रूपवन्ति इतराणि करणानि । न हि प्राणादन्यत्र चलनात्मकत्वमुपपद्यते । चलनव्यापारपूर्वकाण्येव हि करणानि सर्वदा स्वव्यापारेषु लक्ष्यन्ते । तस्मादेते वागादयः 'एतेन' प्राणाभिधानेनाख्यायन्ते प्राणा इत्येवमभिधीयन्ते । संप्रति विद्याफलमाह—तेन ह वाव इति । 'य एवं' सर्वकरणानां प्राणात्मतां प्राणशब्दाभिधेयत्वं च वेत्ति स विद्वान् 'यस्मिन् कुले' जातः 'भवति' । 'तत्कुलं तेन ह वाव' तेनैव विदुषा 'आख्यायते' लौकिकैरमुष्येदं कुलमिति विद्व-न्नाम्नैव प्रथितं भवति । किञ्च-'यः' कश्चिदु 'ह' 'एवंविदा' प्राणात्मदर्शिना सह प्रतिपक्षी सन् 'स्पर्द्धते' । 'सः' अस्मिन्नेव शरीरे 'अनुशुष्य' दीर्घकालं शोषङ्गत्वैव 'ह' किल अन्ततोऽन्ते 'म्रियते' । न सहसा अनुपद्रुतो म्रियते इति भावः । एवमुक्तं प्राणदर्शनमुपसंहरति—इत्यध्यात्ममिति । इत्येवमध्यात्मं प्राणादिदर्शनमुक्तम् । उक्तोपसंहारोऽधिदेवतप्रदर्शनार्थः ॥ ३२ ॥

अथाधिदेवतमिति । अथानन्तरं 'अधिदेवतं' देवताविषयं दर्शनमुच्यते—कस्य देवताविशेषस्य व्रतधारणं श्रेय इति मीमांस्यते । अध्यात्मवत्सर्वं ज्ञेयम् । 'ज्वलिष्याम्येवाहमित्यग्निर्व्रतं दध्रे' इत्यादि 'यथादेवतं'

स यथैषाम्प्राणानाम्मध्यमः प्राणऽएवमेतासान्देवतानाम्वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः ॥ ३३ ॥

( ३ ) अथैष श्लोको भवति । यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छतीति प्राणाद्वाऽएषऽउदेति प्राणेऽस्तमेति तन्देवाश्चक्रिरे धर्म्मँ सऽएवाद्य सऽउ श्वऽइति यद्वाऽएतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतञ्चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नवदिति यद्यु चरेत्समापिपयिषेत्तेनोऽएतस्यै देवतायै सायुज्यँ सलोकताञ्जयति यऽएवम्वेद ॥ ३४ ॥

इति चतुर्दशे काण्डे तृतीयप्रपाठके बृहदारण्यकोपनिषदि प्रथमे प्रपाठके तृतीयं ब्राह्मणम् ॥ १४ । ( ३ ) १।३ ॥ ( ४ ) १–३ ॥

---

सेद्रमाः । एवमन्या देवता यथादेवतम् । स यथैषां प्राणानां मध्यमः प्राणः । एवमेतासां देवतानां वायुः । म्लोचंति हि अन्या देवताः । न वायुः । सा एषा अनस्तमिता देवता । यद्वायुः ॥ ३३ ॥

अथैष श्लोको भवति–" यतश्चोदेति सूर्यः । अस्तं यत्र च गच्छति "–इति । प्राणाद्वा एष उदेति । प्राणे अस्तमेति । " तं देवाश्चक्रिरे धर्मम् । स एवाद्य स उ श्वः " इति । यद्वा एते अमुर्ह्यध्रियन्त । तदेवाप्यद्य कुर्वंति । तस्मादेकमेव व्रतं चरेत् । प्राण्याच्चैवापान्याच्च । नेन्मा पाप्मा मृत्युराप्नवदिति । यद्यु चरेत्समापिपयिषेत् । तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति । य एवं वेद ॥ ३४ ॥

---

स्वस्वदेवताव्यापारमनतिक्रम्य अन्या देवता त्रिगुदाद्या व्रतं दध्रिरे इत्यर्थः । स इति दृष्टांतः । अध्यात्मं यथा वागादीनां ' एषां प्राणानां ' मध्ये ' मध्यमः प्राणः ' मृत्युना अनाप्तः स्वकर्म्मणो न प्रच्यावितः स्वेन प्राणव्रतेनाभग्नव्रतः । एवमेतासामग्न्यादीनां ' देवतानां ' मध्ये वायुरपि मृत्युना अनाप्तः स्वेनैव वायुव्रतेन अभग्नव्रत एव । तदेव प्रकटयति–' हि ' यस्मात् आध्यात्मिकवागादिवत् अन्या अग्न्याद्या देवताः ' म्लोचन्ति ' अस्तं यन्ति स्वकर्म्मभ्य उपरमन्ते । न वायुरस्तं याति यथा मध्यमः प्राणः । अतः ' सैषा अनस्तमिता ' अविनाशिव्रता ' देवता ' । ' यद्वायुः ' योऽयं वायुः । एवमध्यात्ममधिदैवं च मीमांसित्वा वायोर्व्रतमभग्नमिति निर्द्धारितम् ॥ ३३ ॥

उक्तार्थदाढर्याय मन्त्रमवतारयति–अथैष इति । अथापि एतस्यैवार्थस्य प्रकाशकः ' एष श्लोकः ' मन्त्रो भवति । 'यतश्च' यस्माद्वायोः प्राणाच्च क्रमेण अधिदैवतं ' सूर्यः ' अध्यात्मं चक्षुः प्रातःकाले पुरुषस्य प्रबोधकाले च यथाक्रमं उदेत्युद्गच्छति । ' यत्र ' वायौ प्राणे च अपरसंध्यासमये पुरुषस्य स्वापसमये च यथाक्रमं सूर्यश्च चक्षुश्च ' अस्तं गच्छति ' इति मन्त्रप्रथमार्द्धस्थयच्छन्दार्थं श्रुतिराह–प्राणादिति । ' प्राणात् ' अधिदैवाध्यात्मरूपादेव सूर्योऽधिदैवतं अध्यात्मञ्चक्षुरुदेति । ' प्राणे ' एवास्तमेति । यतश्चेत्यादिमे श्लोके पूर्णतामापन्नार्थ

त्र्ययम्वाऽइदन्नाम रूपङ्कर्म्म । तेषान्नाम्नाम्वागित्येतदेषामुक्थ्यमतो हि

## त्र्यन्नब्राह्मणं वा अविद्याविषयसंसारतत्त्वप्रदर्शकं ब्राह्मणं वा उपसंहारब्राह्मणम् ।

त्रयं वा इदं नाम रूपं कर्म । तेषां नाम्नां वागित्येतदेषामुक्थ्यम् । अतो हि सर्वाणि नामान्यु-

प्राणादित्यादि ब्राह्मणव्यवहितं श्लोकस्योत्तरार्द्धमाह–तं देवा इति । 'देवाः' वागादयः अग्न्यादयश्च 'तं धर्म' वायुव्रतं प्राणव्रतं चावश्यानुष्ठेयमिति 'चक्रिरे' धृतवन्तः । 'स एव' प्राणवायुव्रतलक्षणो धर्म एव 'अद्य' इदानीं अनुवर्तते । 'स उ' स एव धर्मः श्वोऽपि भविष्यत्यपि काले अनुवर्तिष्यते च देवैः इति । मन्त्रोत्तरार्द्धं संक्षेपतः श्रुतिर्व्याकरोति–यद्वाऽएतमिति । 'अमुर्हि' अमुष्मिन् काले 'एते' वागादयश्च 'यद्वै' यदेव वायुव्रतं प्राणव्रतं चाध्रियन्त 'तदेव' व्रतमद्यापि 'कुर्वंति' अनुवर्तंते । अभग्नत्वेन देवैर्मीमांसितं अनुगच्छतीत्यर्थः । अग्निरहस्ये इदमेवोक्तं–" यदा वै पुरुषः स्वपिति प्राणन्तर्हि व्वागप्येति प्राणञ्चक्षुः प्राणम्मनः प्राणꣳ श्रोत्रं यदा प्रबुध्यते प्राणादेवाधिपुनर्जायन्त इत्याध्यात्ममथाधिदेवतं " तथा " यदा वाऽ अग्निरनुगच्छति व्वायुं तदूर्ध्वमनूद्वाति तस्मादेनमुदवासीदित्याहुर्व्वायुꣳ ह्यनूद्वाति यदाऽऽदित्योऽस्तमेति व्वायुन्तर्हि प्रविशति व्वायुञ्चन्द्रमा व्वायौ दिशः प्रतिष्ठिता व्वायोरेवाधिपुनर्जायन्ते " ( श.प.१०।३।३।६।८) इति । 'अनुगाच्छति' शाम्यति वायुमनु तदधीन एव 'उद्वाति' अस्तमेति उदवासीदस्तं गत इति अग्निरहस्यकण्डिकास्थशब्दार्थः । प्रकरणार्थमुपसंहरति–तस्मादेकमेवेति । यस्माद्वागादयोऽग्न्यादयो वा परिस्पन्दविरहिणः न स्थातुमर्हन्ति । तेन तैः सर्वैर्देवैरनु प्राणव्रतमेवैकं तस्मादन्योऽप्येकमेव व्रतञ्चरेत् । अध्यात्मं प्राणव्रतमधिदैवञ्च वायुव्रतमिति एकमेव व्रतं धार्यं इत्यर्थः । किन्तदित्याह–प्राण्याच्चैवेति । 'प्राण्यात्' प्राणनव्यापारं कुर्यात् । 'अपान्यात्' अपाननव्यापारङ्कुर्यात् । न हि प्राणनापाननलक्षणस्य प्राणव्यापारस्योपरमोऽस्ति । तस्मादिन्द्रियान्तरव्यापारं हित्वा तदेवैकं व्रतञ्चरेदित्यर्थः । एतत्प्राणव्रताकरणे बाधमाह–नेन्मेति । नेच्छब्दः परिभये । 'नेत्' (निरु.१।३।१०) 'मा' मां 'पाप्मा' श्रमरूपी मृत्युः 'आप्नवत्' प्राप्नुयात् । 'यदि' अहमस्माद्व्रतात् प्रच्युतः स्याम् । तर्हि मृत्युना ग्रस्त एवाहं इत्येवं त्रस्तो धारयेत्प्राणव्रतमित्यभिप्रायः । प्राणव्रतस्य सकृदनुष्ठानमाशङ्क्य सर्वेन्द्रियव्यापारनिवृत्तिरूपं संन्यासलक्षणं प्राणव्रतमामरणमनुवर्तयेदित्याह–यद्यु चरेदिति । 'उ' पुनः 'यदि' कदाचित् चरेत्प्रारभेत 'प्राणव्रतं' तर्हि 'समापिपयिषेत्' समापयितुमिच्छेत् । यदि हि अस्माद्व्रतात् उपरमेत् प्राणः परिभूतः स्यादेव तस्मात्समापयेदेव । सर्वभूतेषु वागादयोऽग्न्यादयश्च मदात्मका एव अहञ्च सूत्ररूपप्राणात्मा सर्वपरिस्पन्दकृत् इत्येवमुपासकस्य फलमाह–तेनो इति । 'तेन उ' तेन अनेन प्राणात्मप्रतिपत्त्या 'एतस्यै देवतायै' एतस्या एव प्राणदेवतायाः 'सायुज्यं' सयुग्भावं एकात्मकत्वं विज्ञानं प्रकरणापेक्षं 'सलोकतां' वा एकस्थानत्वं विज्ञाननिकर्षापेक्षं 'जयति' प्राप्नोतीत्यर्थः ॥ २४ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्-बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां आद्ये मधुकांडे प्रथमेऽध्याये तृतीयं सप्तान्नब्राह्मणं वा संवर्गब्राह्मणं परिसमाप्तम् ॥ १४ । (४) १ । ३ ॥

" अथ योऽन्यां देवतामुपास्ते " ( श. प. १४।२।२।२२ ) इत्यत्र सूत्रिताया अविद्यायाः साध्यसाधन-

सर्व्वाणि नामान्युत्तिष्ठन्त्येतदेषाᳯ सामैतद्धि सर्व्वैर्न्नामभिः सममेतदेषा-
म्ब्रह्मैतद्धि सर्व्वाणि नामानि बिभर्त्ति ॥ १ ॥

(त्र्युं) अथ रूपाणाम् । (अ) चक्षुरित्येतदेषामुक्थ्यमतो हि सर्व्वाणि
रूपाण्युत्तिष्ठन्त्येतदेषाᳯ सामैतद्धि सर्व्वै रूपैः सममेतदेषाम्ब्रह्मैतद्धि
सर्व्वाणि रूपाणि बिभर्त्ति ॥ २ ॥

(त्र्युं) अथ कर्म्मणाम् । (मा) आत्मेत्येतदेषामुक्थ्यमतो हि सर्व्वाणि
कर्म्माण्युत्तिष्ठन्त्येतदेषाᳯ सामैतद्धि सर्व्वैः कर्म्मभिः सममेतदेषाम्ब्रह्मै-

---

त्तिष्ठंति । एतदेषां साम । एतद्धि सर्वैर्नामभिः समम् । एतदेषां ब्रह्म । एतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥

अथ रूपाणाम् । चक्षुरित्येतदेषामुक्थ्यम् । अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति । एतदेषां साम । एतद्धि सर्वै रूपैः समम् । एतदेषां ब्रह्म । एतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥

अथ कर्मणाम् । आत्मेत्येतदेषामुक्थ्यम् । अतो हि सर्वाणि कर्माण्युत्तिष्ठन्ति । एतदेषा साम । एतद्धि सर्वैः कर्मभिः समम् । एतदेषां ब्रह्म । एतद्धि सर्वाणि कर्माणि बिभर्ति । तदेतत्त्रयं सदेकमय-

---

लक्षणो व्याकृताव्याकृतरूपो विस्तर इयता ग्रन्थेन निरूपितः । इदानीं प्रतिपत्तिसौकर्यार्थं तस्यैव नामरूपकर्म-त्वेनोपसंहारं वक्तुमुपसंहारब्राह्मणं प्रवर्तते—त्रयम्वाऽइदमिति । 'इदं' यथोक्तं व्याकृताव्याकृतात्मकं जगत् 'त्रयं वै' त्र्यात्मकमेव । किन्तत् त्रयमित्याह—नाम रूपं कर्म्मेति । सर्वस्य जगतो नामादिमात्रत्वं कथमवधार्यते इत्याह—तेषामिति । 'तेषां' यथोपन्यस्तानां नामरूपकर्म्मणाम्मध्ये 'एषां नाम्नां' नामविशेषाणां यज्ञदत्तो देवदत्त इत्येवमादीनां वागित्येतस्य शब्दस्य यः अर्थः शब्दसामान्यमात्रं 'एतदुक्थ्यं' कारणमुपादानम् । सैंधवलवणकणानां सैंधवाचल इव यः कश्च शब्दो वागेव स इत्युक्तत्वात् वागिति शब्दसामान्यमुच्यते । उक्थ्यत्वमुपपादयितुं हेतुमाह—अतो हीति । 'हि' यस्मात् 'अतः' अस्मात् वाक्शब्दाभिधेयात् नाम-सामान्यात् 'सर्वाणि नामानि' यज्ञदत्तो देवदत्त इत्येवमादिप्रविभागानि 'उत्तिष्ठन्ति' उत्पद्यन्ते प्रविभज्यन्ते लवणाचलाल्लवणकणा इव । कार्याणां कारणेऽन्तर्भाववद्विशेषाणां सामान्येऽन्तर्भावात् कथं सामान्यविशेषभाव इति समत्वं साधयति—एतदिति । 'एतत्' शब्दसामान्यं 'एषां' नामविशेषाणां 'साम' समत्वात्साम सामान्य-मित्यर्थः । समत्वमेव साधयति—एतद्धीति । 'हि' यस्मादेतत् वाग्रूपं शब्दसामान्यं सर्वैर्नामभिरात्मविशेषैः 'समं' तुल्यम् । नामविशेषाणां नामशब्दमात्रादात्मलाभात् । तस्मादविशेषात्तत्रैवान्तर्भाव इत्यर्थः । तदेव साधयति—एतद्धीति । हि यस्मादेतत् वाग्रूपं शब्दसामान्यं 'सर्वाणि' 'नामानि' स्वरूपप्रदानेन 'बिभर्ति' धारयति । एवं कार्यकारणत्वोपपत्तिसामान्यविशेषोपपत्तेरात्मप्रदानोपपत्तेश्च नामविशेषाणां शब्दमात्रता सिद्धा । एवमुत्तरयोरपि यथोक्तं सर्वं योज्यम् ॥ १ ॥

'अथ' नामव्याख्यानानंतरं 'रूपाणां' सितासितप्रभृतीनां 'चक्षुरिति' तच्च रूपसामान्यं तदपि प्राकाश्यमात्रं एतदेव रूपविशेषाणामुक्थ्यमित्यादि पूर्ववत् ॥ २ ॥

'अथ' रूपव्याख्यानानंतरम् 'कर्म्मणां' सर्वकर्मविशेषाणां मननदर्शनचलनात्मकानां 'आत्मा'

तद्धि सर्व्वाणि कर्म्माणि बिभर्त्ति तदेतत्त्रयꣳ सदेकमयमात्माऽत्मोऽ एकः सन्नेतत्त्रयन्तदेतदमृतꣳ सत्येन च्छन्नम्प्राणो वाऽअमृतन्नामरूपे सत्यन्ताभ्यामयम्प्राणश्छन्नः ॥ ३ ॥

इति चतुर्दशे काण्डे तृतीये प्रपाठके बृहदारण्यकोपनिषदि प्रथमे प्रपाठके चतुर्थं ब्राह्मणम् ॥ १४। ( ३ ) १ । ४ ॥ (४) १–४ ॥

इति तृतीयः प्रपाठकः चतुर्थोऽध्यायश्च समाप्तः ।

इति बृहदारण्यकोपनिषदि प्रथमः प्रपाठकः ॥ १ ॥

इति बृहदारण्यकोपनिषदि प्रथमोऽध्यायः ॥ १ ॥

कण्डिकासंख्या ॥ १०१ ॥

---

मात्मा । आत्मा उ एकः सन्नेतत्त्रयम् । तदेतदमृतं सत्येन च्छन्नम् । प्राणो वा अमृतम् । नाम-रूपे सत्यम् । ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥

---

आत्मशब्दवाच्यशरीरनिर्वर्त्यकर्मसामान्यमित्येतदेषामुक्थ्यमित्यादि पूर्ववत् । आत्मना शरीरेण कर्म करोति शरीरे च सर्वकर्म अभिव्यज्यते । अतस्तत्स्थत्वादात्मनः कर्म्मात्मा इत्युच्यते । एवं नामरूपकर्मात्मत्वेन संक्षिप्तस्यापि जगतः पुनः संक्षेपांतरमाह—**तदेतत्त्रयमिति** । तदेतद्यथोक्तं नामरूपकर्माख्यं 'त्रयं' त्रिदंडाविष्टं भवत् परस्परं संहतं सत् 'एकम्'। केनैकत्वमित्यपेक्षायामात्मनेत्याह—**अयमिति** । 'अयं' प्रत्यक्ष आत्मा कार्यकारणसंघातः पिण्डः एतन्मयो वाऽअयमात्मेत्यादिना अन्नत्रयतया व्याख्यातः । एवं नामादित्रयस्य देहमात्रत्वे कथं व्यवहारासांकर्यमित्याशंक्याह—**आत्मो एक** इति । 'उ' पुनः 'आत्मा' कार्यकरणसंघातः पिण्डः 'एकः सन्' अध्यात्माधिभूताधिदैवभावनाव्यवस्थितमेतदेव नाम रूपं कर्मेति 'त्रयं' नामादिभिन्नस्य देहस्यागृह्यमाणत्वात् व्यवहारासांकर्यमित्यर्थः । एकस्मिन्नपि संघाते कार्य-करणरूपेणावांतरविभागमाह—**तदेतदमृतमिति** । तदेतद्वक्ष्यमाणं 'अमृतं सत्यम्' । एतस्य वाक्यस्यार्थं श्रुतिः स्वयमेवाह—**प्राणो वाऽअमृतमिति** । 'प्राणो वै' लिंगात्मा करणात्मकः अंतरुपष्टंभकः आत्मभूतः अविनाशी अमृतममृतभूतः स्थूलदेहे गच्छत्यपि यावन्मोक्षस्थायित्वात् 'नामरूपे' पञ्चीकृतभूतात्मके शरीरावस्थे कार्यात्मके 'सत्यं' सत्यशब्दवाच्ये सच्च त्यच्च 'सत्यं' भूतपंचकं तदात्मके नामरूपे इत्यर्थः । 'ताभ्यां' बाह्याभ्यां शरीरात्मकाभ्यां उपजनापायिधर्म्मिभ्यां मर्त्याभ्यां नामरूपाभ्यां अयं क्रियात्मकस्तयोरुपष्टंभः 'प्राणश्छन्नः' अप्रकाशीकृतः । अतः प्रत्यगात्मतत्त्वं सुतरां दुर्विज्ञेयमिति तज्ज्ञाने अवहितैर्भाव्यमिति भावः । एतदेव संसारतत्त्वमविद्याविषयं प्रदर्शितम् ॥ ३ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-ब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां आद्ये मधुकाण्डे प्रथमेऽध्याये चतुर्थं जगत्स्वरूपप्रदर्शकं त्र्यन्न-ब्राह्मणं परिसमाप्तम् ॥ १४ । ( ४ ) १ । ४ ॥

इति श्रीबृहदारण्यकोपनिषदि प्रथमोऽध्यायः समाप्तः ॥ १ ॥

# अथ पंचमेऽध्याये चतुर्थे प्रपाठके च प्रथमं ब्राह्मणम् ।

## बृहदारण्यके द्वितीयेऽध्याये प्रपाठके च प्रथमं ब्राह्मणम् ।

दृप्तबालाकिर्हानूचानो गार्ग्यऽआस । स होवाचाजातशत्रुङ्काश्यम्ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्याम्वाचि दद्मो जनको जनकऽइति वै जना धावन्तीति ॥ १ ॥

स होवाच गार्ग्यः ।( गर्ग्यो ) यऽएवासावादित्ये पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठाऽअतिष्ठाः सर्व्वेषाम्भूतानाम्मूर्द्धा राजेति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्तेऽतिष्ठाः सर्व्वेषाम्भूतानाम्मूर्द्धा राजा भवति ॥ २ ॥

---

### अजातशत्रुब्राह्मणं वा पर्यंकविद्याब्राह्मणम् ।

दृप्तबालाकिर्हानूचानो गार्ग्य आस । स होवाचाजातशत्रुं काश्यम् । ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रुः । सहस्रमेतस्यां वाचि दद्मः । जनको जनक इति वै जना धावंतीति ॥ १ ॥

स होवाच गार्ग्यः । य एवासावादित्ये पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजात-

---

अथ प्रथमेऽध्याये सूत्रितयोर्विद्याऽविद्ययोः अविद्या प्रपञ्चिता । संप्रति विद्यां प्रपञ्चयितुं श्रुतिर्द्वितीयमध्यायमारभते । तत्र वक्तृश्रोतृरूपाख्यायिकया अविद्याविषयमेव ब्रह्मत्वेनोपगतो गार्ग्यो ब्राह्मणो वक्ता पूर्वपक्षवादी उपस्थाप्यते । मुख्यब्रह्मात्मदर्शी राजा अजातशत्रुः श्रोता सिद्धान्तवादी चोपस्थाप्यते श्रुत्या । एवं हि यतः पूर्वपक्षसिद्धान्ताख्यायिकारूपेण समर्थ्यमानोऽर्थः श्रोतुश्चित्तवशमेतीति सुखप्रतिपत्त्यर्थं अजातशत्रुब्राह्मणं प्रवर्तते—दृप्तबालाकिर्हेति । 'दृप्तः' असम्यक् ब्रह्मवित्त्वादेव गर्वितः । बलाकायाः अपत्यं बालाकिः । दृप्तश्चासौ बालाकिश्चेति 'दृप्तबालाकिः' । 'ह' शब्दः ऐतिह्यार्थ आख्यायिकायाः । 'अनूचानः' अनुवचनसमर्थो वाग्मी 'गार्ग्यः' गर्गगोत्रापत्यं ब्राह्मणः 'आस' बभूव । 'स ह' पुनः कचित्कालविशेषे 'अजातशत्रुं' अजातशत्रुनामानं राजानं 'काश्यं' काशिराजं अभिगम्य हे राजन् 'ते' तुभ्यं 'ब्रह्म' मुख्यं 'ब्रवाणि' कथयामीत्युवाचोक्तवान् । 'सः' श्रद्धादिसंपन्नोऽजातशत्रुः—'एतस्यां' "ब्रह्म ते ब्रवाणि" इत्यस्यां 'वाचि' वचनमात्रे गवां 'सहस्रं दद्मः' इति तं ब्राह्मणं प्रत्युवाच । ननु—साक्षाद्ब्रह्मकथनमेव गवां सहस्रदाने निमित्तं कस्मान्नेष्यते ? इत्याशङ्कायां [illegible] राज्ञोऽभिप्रायमाह-जनको जनक इतीति । 'वै' शब्दः 'जनकः' दाता 'जनकः' श्रोता 'इति' प्रसिद्ध्यवद्योतनार्थः । जनको दित्सुः जनकः शुश्रूषुरिति वै [illegible] शुश्रूषवो विवक्षवः प्रतिजिघृक्षवश्च जना ब्राह्मणाः धावंति' अभिगच्छन्ति । तस्मात्तत्सर्वं मय्यपि संभावितवानसि इति मुख्यब्रह्मकथनं विनैव तद्वचनमात्रेणैव ( गवां ) सहस्रं दद्म इति राज्ञोऽभिप्राय इत्यर्थः ॥ १ ॥

एवमभिमुखीभूतं शुश्रूषुं राजानं प्रति 'सः गार्ग्यः' 'ह' किल 'उवाच' । 'य एव असौ आदित्ये' चक्षुषि च एकोऽभिमानी 'पुरुषः' चक्षुर्द्वारेण इह हृदि प्रविष्टः अहङ्कर्ता अहं भोक्ता चेत्यवस्थितं एतमेव-

स होवाच गार्ग्यः । (गर्ग्यौ) यऽएवासौ चन्द्रे पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठा बृहन्पाण्डुरवासाः सोमो राजेति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नङ्क्षीयते ॥ ३ ॥

स होवाच गार्ग्यः । (गर्ग्यौ) यऽएवायम्विद्युति पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठास्तेजस्वीति वाऽ

---

शत्रुः । मा मैतस्मिन् संवदिष्ठाः । अतिष्ठाः सर्वेषां भूतानां मूर्द्धा राजा इति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । अतिष्ठाः सर्वेषां भूतानां मूर्द्धा राजा भवति ॥ २ ॥

स होवाच गार्ग्यः । य एवासौ चंद्रे पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । बृहन् पांडुरवासाः सोमो राजेति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । अहरहर्ह सुतः प्रसुतो भवति । नास्यान्नं क्षीयते ॥ ३ ॥

स होवाच गार्ग्यः । य एवायं विद्युति पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजात-

---

पुरुषं अस्मिन् कार्यकारणसंघाते 'अहं ब्रह्म उपासे' निरंतरं पश्यामि । तमेव पुरुषं ब्रह्म तुभ्यं ब्रवीमि। त्वमपि उपास्स्व इत्युक्ते 'सः' अजातशत्रुः 'ह' 'उवाच'–'मा मा' इति हस्तेन विनिवारयन् हे गार्ग्य ! 'एतस्मिन्' विज्ञेये ब्रह्मणि 'मा मा संवदिष्ठाः' मा संवादं कार्षीः । अहमिदं जानामि । मा मेति "आबाधे च"–(पा. सू. ८ । १ । १०) इति द्विर्वचनम् । अथ चेन्मन्यसे जानीषे त्वं ब्रह्ममात्रं न तु तद्विशेषेणोपासनफलानीति । तत्र मैवं शङ्किष्ठाः । यतः सर्वमेतदहं जाने इत्याह–अतिष्ठा इति । अतीत्य सर्वाणि भूतानि तिष्ठतीत्यतिष्ठाः । 'सर्वेषां भूतानां' 'मूर्द्धा' शिरः पूज्यः । 'राजा' च राजते दीप्यत इति व्युत्पत्तेर्दीप्तिगुणोपेतत्वात् राजा । एतैर्विशेषणैर्विशिष्टं एतद्ब्रह्म 'अहं' अस्मिन् कार्यकारणसङ्घाते कर्तृ भोक्तृ च इत्येतं पुरुषं 'उपासे' अनवरतं पश्यामि । 'यः एवमुक्तगुणत्रयविशिष्टमेतमुपास्ते 'सः' 'अतिष्ठाः' 'सर्वेषां भूतानां मूर्द्धा राजा' च भवतीति यथागुणोपासनमेव हि फलं–"तं यथा यथोपासते तदेव भवति" (श. प. १० । ५ । २ । २० । ) इति श्रुतेः ॥ २ ॥

एवं संवादेन आदित्ये ब्रह्मणि अजातशत्रुणा प्रत्याख्याते चंद्रमसि ब्रह्म अनंतरं गार्ग्यः प्रतिपन्नवानित्याह–स हेति । स होवाच गार्ग्यः । 'य एवासौ चन्द्रे' मनसि चैकः 'पुरुषः' कर्ता भोक्ता चेति पूर्ववद्विशेषणम् । बृहन्महान् पाण्डुरं शुक्लं वासो यस्य सः 'पाण्डुरवासाः' चन्द्राभिमानिनः प्राणस्याप्शरीरत्वात् । सोमो राजेति । चन्द्रमाः लतात्मकश्च 'सोमः' यज्ञे य अभिषूयते तं बुद्धिनिष्ठं च पुरुषमेकीकृत्य 'अहं' ब्रह्मोपासे । अस्योपासकस्य प्रकृत्यात्मके यज्ञे 'ह' किल 'अहरहः' प्रत्यहं सोमः सुतोऽभिषुतः 'भवति' । विकृत्यात्मके च यज्ञे 'प्रसुतः' प्रकृष्टः सुतो भवति । यथोक्तोपासकस्य प्रकृतिविकृत्यनुष्ठानसामर्थ्यं लीलालभ्यं भवतीत्यर्थः । अस्यान्नात्मन उपासकस्यान्नं च 'न क्षीयते' । अन्नाक्षयस्य उपासनाऽनुसारित्वात् उपपन्नत्वमित्यर्थः ॥ ३ ॥

संवाददोषेण चन्द्रब्रह्मण्यपि प्रत्याख्याते ब्रह्मांतरमाह–इत्यादि सर्वं प्रबोध्यम् । तथा 'विद्युति त्वचि हृदये

अहमेतमुपासऽइति स यऽएतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥

स होवाच गार्ग्यः । ( ग्यों ) यऽएवायमाकाशे पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्संवदिष्ठाः पूर्ण्णमप्रवर्त्तीति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्ते पूर्य्यते प्रजया पशुभिर्न्नास्यास्माल्लोकात्प्रजोद्वर्त्तते ॥ ५ ॥

स होवाच गार्ग्यः ।( ग्यों ) यऽएवायम्वायौ पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्संवदिष्ठाऽइन्द्रो वैकुण्ठोऽपराजिता सेनेति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥

स होवाच गार्ग्यः । ( ग्यों ) यऽएवायमग्नौ पुरुषऽएतमेवाहम्ब्रह्मोपासऽ

---

शत्रुः । मा मैतस्मिन् संवदिष्ठाः । तेजस्वीति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । तेजस्वी ह भवति । तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥

स होवाच गार्ग्यः । य एवायमाकाशे पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । पूर्णमप्रवर्तीति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । पूर्यते प्रजया पशुभिः । नास्यास्माल्लोकात्प्रजोद्वर्तते ॥ ५ ॥

स होवाच गार्ग्यः । य एवायं वायौ पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । इन्द्रो वैकुंठोऽपराजिता सेनेति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥

स होवाच गार्ग्यः । य एवायमग्नौ पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः ।

---

च एका देवता । 'तेजस्वी' इति तस्या विशेषणम् । 'तेजस्वी ह भवतीति' 'तेजस्विनी हास्य प्रजा भवतीति' च फलम् । विद्युतां बहुत्वस्याङ्गीकरणात् आत्मनि प्रजायां चेति फलबाहुल्यम् ॥ ४ ॥

तथा 'आकाशे' हृदये च एकं 'पूर्णमप्रवर्त्ति चेति विशेषणद्वयम् । अप्रवर्तित्वं अक्रियावत्त्वं अप्रवर्तकत्वं अक्रियावत्त्वं वा । पूर्णत्वविशेषणफलमिदम् । 'पूर्यते प्रजया पशुभिः' इति अप्रवर्तित्वविशेषणफलम् । 'नास्यास्माल्लोकात्प्रजोद्वर्तते' । 'उद्वर्त्तते' विच्छिद्यते । इति प्रजा संतानाविच्छित्तिः ॥ ५ ॥

तथा 'वायौ' प्राणे हृदि चैका । तस्या विशेषणं 'इन्द्रः' परमेश्वरः । वैकुण्ठोऽप्रसह्यः । अपराजिता सेनेति । न परीर्जितपूर्वः मरुतां गणत्वप्रसिद्धेः एकस्मिन् वायौ अपराजिता सेनेति गुणः संभवतीति बोध्यम् । विशेषणत्रयस्य विशेषफलत्रयं क्रमेण व्युत्पादयति—जिष्णुरित्यादिना । जिष्णुर्जयशीलः । 'अपराजिष्णुः' न परीर्जितस्वभावः । अन्यतस्त्यजायीति । अन्यतस्त्यानां अन्यमातृतो जातानां सपत्नानां जयशीलो भवति॥ ६॥

तथा 'अग्नौ' वाचि हृदि च एका । विषासहिरिति विशेषणम् । यद्धविर्विक्ष्यते क्षिप्यते तत्सर्वं भस्मीकरणेन

इति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठा विषासहिरिति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्ते विषासहिर्हं भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

स होवाच गार्ग्यः । (ग्र्यो) यऽएवायमप्सु पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठाः प्रातिरूपऽइति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्ते प्रतिरूपर्ठ्ठं हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥

स होवाच गार्ग्यः । (ग्र्यो) यऽएवायमादर्शे पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठा रोचिष्णुरिति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्ते रोचिष्णुर्हं भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्व्वाँस्तानतिरोचते ॥ ९ ॥

---

मा मैतस्मिन् संवदिष्ठाः । विषासहिरिति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । विषासहिर्हं भवति । विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

स होवाच गार्ग्यः । य एवायमप्सु पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । प्रतिरूप इति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । प्रतिरूपं हैवैनमुपगच्छति । नाप्रतिरूपम् । अथो प्रतिरूपः अस्माज्जायते ॥ ८ ॥

स होवाच गार्ग्यः । य एवायमादर्शे पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । रोचिष्णुरिति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । रोचिष्णुर्हं भवति । रोचिष्णुर्हास्य प्रजा भवति । अथो यैः संनिगच्छति । सर्वान् तानतिरोचते ॥ ९ ॥

---

सहते इति विषासहिरग्निः । फलोक्तौ विषासहिः परेषां मर्षयिता । अग्नीनां बाहुल्यादुपासकस्यात्मनि प्रजायां च दीप्ताग्नित्वं सिध्यति विद्युतामिवेति बोध्यम् ॥ ७ ॥

'अप्सु' रेतसि हृदि च एका । तस्या विशेषणं 'प्रतिरूपः' इति । 'प्रतिरूपः' अनुरूपः । श्रुतिस्मृत्यप्रतिकूल इत्यर्थः । फलं 'प्रतिरूपं' श्रुतिस्मृतिशासनानुरूपमेव एतमुपासकमुपगच्छति प्राप्नोति । 'नाप्रतिरूपं' न विपरीतम् । 'अथो' अन्यच्च फलं, अस्मादुपासितुः 'प्रतिरूपः' श्रुतिस्मृत्यनुकूलः सत्पुत्रः 'जायते' । न विपरीत इत्यर्थः ॥ ८ ॥

'आदर्शे' प्रसादस्वभावे च, अन्यत्र च खड्गादौ, हार्दे सत्त्वशुद्धिस्वाभाव्ये चैका । तस्या विशेषणं 'रोचिष्णुरिति' । रोचिष्णुर्दीप्तिस्वभावः । फलं च तदेव रोचिष्णुत्वम् । 'अथो' अन्यच्च । 'यैः' सह 'संनिगच्छति' संबध्यते । 'तान् सर्वानतिरोचते' रोचनाधारबाहुल्यात्फलबाहुल्यम् ॥ ९ ॥

स होवाच गार्ग्यः । (गर्ग्यो) यऽएवायन्दिक्षु पुरुषऽएतमेवाहम्ब्रह्मोपासऽ इति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठा द्वितीयोऽनपगऽइति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥ १० ॥

स होवाच गार्ग्यः । ( गर्ग्यो ) यऽएवायं यन्तम्पश्चाच्छब्दोऽनूदेत्येतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठाऽअसुरिति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्ते सर्व्वᳪं हैवास्मिँल्लोकऽ आयुरेति नैनम्पुरा कालात्प्राणो जहाति ॥ ११ ॥

स होवाच गार्ग्यः । ( गर्ग्यो ) यऽएवायञ्छायामयः पुरुषऽएतमेवाहम्ब्रह्मोपासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठा मृत्युरिति वाऽ अहमेतमुपासऽइति स यऽएतमेवमुपास्ते सर्व्वᳪं हैवास्मिँल्लोकऽआयुरेति नैनम्पुरा कालान्मृत्युरागच्छति ॥ १२ ॥

---

स होवाच गार्ग्यः । य एवायं दिक्षु पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । द्वितीयोऽनपग इति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । द्वितीयवान् ह भवति । नास्माद्गणश्छिद्यते ॥ १० ॥

स होवाच गार्ग्यः । य एवायं यन्तं पश्चाच्छब्दः अनूदेति । एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । असुरिति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । सर्वं हैवास्मिन् लोके आयुरेति । नैनं पुरा कालात्प्राणो जहाति ॥ ११ ॥

स होवाच गार्ग्यः । य एवायं छायामयः पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचा

---

'दिक्षु' कर्णयोर्हृदि चैका । अश्विनौ देवौ अवियुक्तस्वभावौ । तस्य देवस्य गुणः । द्वितीयवत्त्वं अनपगत्वं चान्योऽन्यमवियुक्तता । दिशामश्विनोश्चैवंधर्म्मित्वात् तदेव फलमुपासकस्य द्वितीयवत्त्वं साधुभृत्यपरिवृतवत्वम् । अस्मादुपासकात् 'गणः' समूहश्च 'न छिद्यते' विच्छेदं न प्राप्नोतीत्यर्थः ॥ १० ॥

'यन्तं' गच्छन्तं पश्चात्पृष्ठतः 'य एवायं शब्दः' 'अनूदेति' उत्पद्यते । अध्यात्मञ्च जीवनहेतुः प्राणः तमेकीकृत्य एतमेवोपासे । तस्य विशेषणं 'असुरिति' । 'असुः' जीवनहेतुः प्राणः । तस्य फलं 'सर्वं' संपूर्णं यावत्कर्म्मोपात्तं 'ह' किल 'आयुः' 'अस्मिन् लोके' 'एति' गच्छति । कर्म्मपरिच्छिन्नकालात्पूर्वं रोगादिना पीड्यमानमपि 'एनं प्राणो न जहाति' न त्यजति ॥ ११ ॥

'छायायां' बाह्ये तमसि अध्यात्मं च आवरणात्मके अज्ञाने हृदि च एका देवता । तस्या विशेषणं 'मृत्युः' । फलं सर्वं पूर्ववत् । एतावांस्तु विशेषः । यन्मृत्योरागमनात् प्राक् रोगादिपीडाया अपि अभावः ॥ १२ ॥

स होवाच गार्ग्यः ।( ग्यों ) यऽएवायमात्मनि पुरुषऽएतमेवाहम्ब्रह्मो-पासऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सम्वदिष्ठाऽआत्मन्वीति वाऽअहमेतमुपासऽइति स यऽएतमेवमुपास्तऽआत्मन्वी ह भवत्यात्म-न्विनी हास्य प्प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

स होवाचाजातशत्रुः ।( रे ) एतावन्नू३ इत्येतावद्धीति नैतावता व्विदि-तम्भवतीति स होवाच गार्ग्यऽउप त्वाऽयानीति ॥ १४ ॥

स होवाचाजातशत्रुः । प्प्रतिलोमम्वै तद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे व्वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तम्पाणावादायोत्तस्थौ तौ ह

---

अजातशत्रुः । मा मैतस्मिन् संवदिष्ठाः । मृत्युरिति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । सर्वं हैवास्मिन् लोके आयुरेति । नैनं पुरा कालात् मृत्युरागच्छति ॥ १२ ॥

स होवाच गार्ग्यः । य एवायमात्मनि पुरुषः । एतमेवाहं ब्रह्मोपास इति । स होवाचाजात-शत्रुः । मा मैतस्मिन् संवदिष्ठाः । आत्मन्वीति वा अहमेतमुपास इति । स य एतमेवमुपास्ते । आत्मन्वी ह भवति । आत्मन्विनी हास्य प्रजा भवति । स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

स होवाचाजातशत्रुः । एतावन्नू ३ इति । एतावद्धीति । नैतावता विदितं भवतीति । स होवाच गार्ग्यः । उप त्वाऽयानीति ॥ १४ ॥

स होवाचाजातशत्रुः । प्रतिलोमं वै तत् । यत् ब्राह्मणः क्षत्रियमुपेयात्–ब्रह्म मे वक्ष्यतीति । व्येव त्वा ज्ञपयिष्यामीति । तं पाणावादायोत्तस्थौ । तौ ह पुरुषं सुप्तमाजग्मतुः । तमेतैर्नामभि-

---

व्यस्तानि ब्रह्माण्युपन्यस्य समस्तं ब्रह्म उपदिशति । 'आत्मनि' प्रजापतौ बुद्धौ च हृदि चैका । तस्या विशेषणं 'आत्मन्वी' वश्य आत्मा अस्यास्तीत्यात्मन्वी स्वतंत्रः । फलं आत्मन्वी । 'आत्मन्विनी' 'ह' किल 'अस्य प्रजा भवति' । फलस्यात्मगामित्वात् प्रजायां तदभिधानमनुचितमित्याशङ्कायां बुद्धिबहुत्वात् प्रजायां संपादनम् । एवमजातशत्रुणा स्वयं परिज्ञातत्वेनैव क्रमेण प्रत्याख्यातेषु ब्रह्मसु 'सः' गार्ग्यः 'ह' किल क्षीणब्रह्मविज्ञानः अप्रतिभासमानोत्तरः 'तूष्णीं' अवाक्शिराः 'आस' बभूव ॥ १३ ॥

तं तथाभूतमालक्ष्य 'सः आजतशत्रुः ह उवाच–एतावन्नू ३ इति' किं एतावदेव ब्रह्म निर्ज्ञातं आहोस्वित् अधिकमप्यस्तीति विचारार्था प्लुतिः । गार्ग्य आह–एतावद्धीति । 'एतावदेव' नातः परं विदित-मस्ति । अजातशत्रुराह–'नैतावता' विदितेन ब्रह्म 'विदितं भवति' । किमर्थं ? गर्वितोऽसि ब्रह्म ते ब्रवाणि इति ? किमेतावद्विदितं विदितमेव भवतीति नैतावता विदितं भवतीति ब्रुवता राज्ञा अधिकं ब्रह्म ज्ञातव्यमस्तीति दर्शितं भवति । तत्रानुपसन्नाय न वक्तव्यं इत्याचारविभिज्ञः 'गार्ग्यः' स्वयमेव 'ह' किल 'उवाच' यथा अन्यः शिष्यो गुरुमुपेयात् तथा अहं 'त्वा' त्वां 'उपायानि' उपगच्छानीत्यर्थः ॥ १४ ॥

एवमुक्तः 'सः अजातशत्रुः ह उवाच' । 'प्रतिलोमं वै' विपरीतमेव 'तत् यत्' 'ब्राह्मणः' उत्तमवर्णः

पुरुषꣳ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तम्पाणिनाऽऽपेषम्बोधयाञ्चकार स होत्तस्थौ ॥१९॥

स होवाचाजातशत्रुः । ( यत्र ) यत्रैषऽएतत्सुप्तोऽभूद्यऽएष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुतऽएतदागादिति तदु ह न मेने गार्ग्यः ॥ १६ ॥

---

रामंत्रयांचक्रे । बृहन् पांडुरवासः सोम राजन्निति । स नोत्तस्थौ । तं पाणिनाऽऽपेषं बोधयांचकार । स होत्तस्थौ ॥ १९ ॥

स होवाचाजातशत्रुः । यत्रैव एतत्सुप्तः अभूत् । य एष विज्ञानमयः पुरुषः । क्वैष तदा अभूत् । कुत एतदागादिति । तदु ह न मेने गार्ग्यः ॥ १६ ॥

---

आचार्यत्वेऽधिकृतः सन् क्षत्रियमनाचार्यस्वभावं उपेयादुपगच्छेत् शिष्यवृत्त्या 'ब्रह्म मे वक्ष्यति' इत्येवम् । एतत् आचारविधिशास्त्रेषु निषिद्धम् । "अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः । नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्" । "अब्राह्मणादध्ययनमापत्काले विधीयते" ( म. स्मृ. २ । २४१–२४२ ) इत्यादिना । तस्माद्धे गार्ग्य ! त्वमाचार्य एव सन् तिष्ठ । अहं तु 'त्वा' त्वां यस्मिन् विदिते ब्रह्म विदितं भवति–तन्मुख्यं वेद्यं 'ब्रह्म' 'विज्ञपयिष्याम्येव' विज्ञातमेव करिष्यामि । एवं प्रतिज्ञातब्रह्मबोधार्थमुपक्रमते इत्याह–तम्पाणाविति । 'तं' गार्ग्यं सलज्जमालक्ष्य विश्वासजननाय 'पाणौ' हस्ते 'आदाय' गृहीत्वा 'उत्तस्थौ' उत्थितवान् । ततस्तौ 'ह' गार्ग्याजातशत्रू कश्चिद्राजगृहप्रदेशे 'सुप्तं पुरुषं' प्रति 'आजग्मतुः' आगतौ । 'तं' च सुप्तं पुरुषं प्राप्य 'बृहन्' 'पाण्डुरवासः' 'सोम' 'राजन्' इत्येतैर्नामभिरामंत्रयाञ्चक्रे । राज्ञा एवमामंत्र्यमाणोऽपि 'सः' सुप्तः पुरुषो 'नोत्तस्थौ' नोत्थितवान् । तमप्रतिबुद्ध्यमानं पुरुषं 'पाणिना' हस्तेन 'आपेषं' आपिष्यापिष्य 'बोधयाञ्चकार' प्रतिबोधितवान् । ततः 'सः' पुरुषः 'ह' किल 'उत्तस्थौ' उत्थितवान् । तथा च 'बृहन्पाण्डुरवासः' इत्यादिप्राणात्मचंद्रादिनाम्ना संबोधनेन गार्ग्याभिमतप्राणदेवताऽतिरिक्त एवात्मा अस्मिन् शरीरे कर्ता भोक्ता, न प्राणः इति निर्णीतम् । अन्यथा उच्छ्वासनिःश्वासरूपेण व्याप्रियमाणस्य संबोधनाश्रवणमनुत्थानं च न भवेत् । आपेषणेन च प्राणशरीरसंघातमात्रो भोक्ता नेति निश्चितम् । अन्यथा संघातमात्राविशेषात् स्पर्शमात्रेणाऽपि उत्थानं स्यादिति भावः ॥ १९ ॥

'सः' 'ह' किल 'अजातशत्रुः' एवं व्यतिरिक्तात्मास्तित्वं प्रतिपाद्य अस्यात्मनः स्वाभाविकस्वरूपबोधनार्थं स्वयमेव गार्ग्यं प्रति 'उवाच' । हे गार्ग्य ! 'य एषः' प्रसिद्धः 'विज्ञानमयः पुरुषः' विज्ञायते अनेनेति व्युत्पत्त्या सङ्कल्पविकल्पाद्यात्मकमन्तःकरणं बुद्धिर्विज्ञानमुच्यते । तन्मयः तत्प्रायः तस्मिन्नुपलभ्यः तेन च उपलभ्य इत्यर्थः । पुरि देहे शेते इति 'पुरुषः' 'क्व' कस्मिन् स्वाभाव्ये कीदृग्विधे यत्स्वरूपे स्थितोऽभूत् । 'कुतः' कीदृग्विधात् स्वरूपात्प्रच्युतः सन्–एतदागमनं यथा स्यात्तथा 'आगात्' आगतः । पाणिपेषोत्तरकालमिति । एवमधिकरणमपादानं चोभयं पृष्टो गार्ग्यः किमुक्तवानित्यत आह–तदु हेति । यः पुनः यद्विज्ञानमयस्य पुरुषस्य स्वापे संवेशस्थानं, यतश्च स्थानाज्जागरिते कार्यकारणसंघाते चेतयितृत्वेनागमनं, तदुभयं स्वरूपभूतं वक्तुं प्रष्टुं वा प्रतिभानरहितः 'गार्ग्यः' 'ह' किल 'न मेने' न ज्ञातवान् ॥ १६ ॥

स होवाचाजातशत्रुः । ( यत्र ) यत्रैषऽएतत्सुप्तोऽभूद्यऽएष विज्ञानमयः पुरुषस्तदेषाम्प्राणानाम्विज्ञानेन विज्ञानमादाय यऽएषोऽन्तर्हृदयऽआकाशस्तस्मिञ्छेते ॥ १७ ॥

तानि यदा गृह्णाति । ( त्यु ) अथ हैतत्पुरुषः स्वपितिनाम तद्गृहीतऽएव प्राणो भवति गृहीता वाग्गृहीतञ्चक्षुर्गृहीतꣳ श्रोत्रङ्गृहीतम्मनः ॥ १८ ॥

स यत्रैतत्स्वप्न्यया चरति । ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मणऽउतेवोच्चावचान्निगच्छति ॥ १९ ॥

---

स होवाचाजातशत्रुः । यत्रैष एतत्सुप्तोऽभूत् । य एष विज्ञानमयः पुरुषः । तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदये आकाशः तस्मिन् शेते ॥ १७ ॥

तानि यदा गृह्णाति । अथ ह एतत्पुरुषः स्वपितिनाम । तद्गृहीत एव प्राणो भवति । गृहीता वाक् । गृहीतं चक्षुः । गृहीतं श्रोत्रम् । गृहीतं मनः ॥ १८ ॥

स यत्रैतत् स्वप्न्यया चरति । ते हास्य लोकाः । तदुतेव महाराजो भवति । उतेव महाब्राह्मणः । उतेवोच्चावचं निगच्छति ॥ १९ ॥

---

जागरिते कर्तृत्वभोक्तृत्वादिकं नात्मनः स्वाभाविकम् । किंतु वागाद्युपाधिसंबंधकृतमेव । स्वापे तद्व्यतिरेकेण कर्तृत्वादेर्व्यतिरेकदर्शनात् इति दर्शयितुं प्रश्नानुवादपूर्वकं प्रथमप्रश्नस्योत्तरमाहेति श्रुतिर्दर्शयति—**स होवाचाजातशत्रुरिति** । 'यत्र' यस्मिन् काले 'सुप्तोऽभूत्' 'य एष विज्ञानमयः पुरुषः' । तस्मिन् काले 'एषां प्राणानां' वागादीनां 'विज्ञानं' स्वस्वविषयगतप्रतिनियतप्रकाशनसामर्थ्यं 'विज्ञानेन' अन्तःकरणोपादानाज्ञानजनितान्तःकरणगताभिव्यक्तविशेषविज्ञानेन चैतन्याभासलक्षणेनादाय गृहीत्वा 'अंतर्हृदये' हृदयस्य मध्ये 'य आकाशः' । आकाशशब्देन जीवस्य स्वाभाविकस्वरूपभूतः परमात्मा उच्यते । तस्मिन् स्वाभाविकेऽसांसारिके परमात्मनि 'आकाशे शेते' । लिंगोपाधिसंबंधकृतं विशेषात्मस्वरूपमुत्सृज्य अविशेषे स्वाभाविके आत्मन्येव केवलं वर्तत इत्यभिप्रायः ॥ १७ ॥

यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदा असौ स्वात्मनि वर्तते इति कथमवगम्यत इत्यपेक्षायां नामप्रसिद्ध्येत्याह—**तानि यदेति** । 'तानि' वागादीनि विज्ञानसाधनानि 'यदा' यस्मिन् काले 'गृह्णाति' आदत्ते । 'अथ' तदा 'ह' किल 'पुरुषः' इति पुरुषस्यैतत् 'स्वपितिनाम' । अतः अस्य 'ह' प्रसिद्धं गौणमेव स्वपितीत्येतन्नाम भवति । स्वमेवात्मानमप्येति अपिगच्छतीति स्वपितीत्युच्यते इति व्युत्पत्तेः स्वपितीति नामप्रसिद्ध्या आत्मनः संसारधर्मविलक्षणे रूपे अवगतेऽपि नात्र युक्तिरस्तीत्याशंकायामाह—**तद्गृहीत एवेति** । तत्तत्र स्वापकाले 'गृहीत एव प्राणो भवति' । प्राण इति घ्राणेन्द्रियं वागादिप्रकरणात् । 'गृहीता वाक्' चक्षुः श्रोत्रं मनश्च गृहीतं भवतीति । तथाच वागादिसंबंधाभावात् स्वापे कर्तृत्वाद्यसंबंधः । जागरिते च वागादिसंबंधात् कर्तृत्वादिकम् । अतः अन्वयव्यतिरेकाभ्यां वागाद्युपाधिकं आत्मनः संसारित्वं इति निश्चितम् ॥ १८ ॥

ननु—दर्शनलक्षणायां स्वप्नावस्थायां वागादिसंबंधाभावेऽपि कर्तृत्वादिसंसारस्य दर्शनाद् व्यतिरेकासिद्धि-

स युथा महाराजो जानपदान्गृहीत्वा । स्वे जनपदे यथाकामम्परिवर्त्तें-तैवमेवैषऽएतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामम्परिवर्त्तते ॥ २० ॥

( तेऽथ ) अथ यदा सुषुप्तो भवति । यदा न कस्यचन व्वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते ॥ २१ ॥

---

स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेत । एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ २० ॥

अथ यदा सुषुप्तो भवति । यदा न कस्यचन वेद । हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठंते । ताभिः प्रत्यवसृप्य पुरीतति शेते ॥ २१ ॥

---

रित्याशङ्कायां तत्रापि जाग्रद्वासनायाः सत्त्वात् परिकल्पितस्य स्वप्नप्रपञ्चस्य मृषात्वात् न व्यतिरेकासिद्धिरिक्तोऽस्य स्वतः शुद्धत्वमेवेत्यभिप्रेत्याह—स यत्रेति । ‘ सः ’ प्रकृत आत्मा ‘ यत्र ’ यस्मिन् काले दर्शनलक्षणया ‘ स्वप्न्यया ’ स्वप्नवृत्त्या ‘ चरति ’ वर्तते । तदा ‘ ह ’ प्रसिद्धौ अस्यात्मनस्ते अनंतरं वक्ष्यमाणाः ‘ लोकाः ’ कर्म्मफलानि । के ते इत्यत आह—तदुतेवेति । तत्तत्र स्वप्नकाले उतापि ‘ महाराज इव भवति ’ । महाराजत्वमिवास्य सोऽयं लोकः न पुनर्जागरिते इव साक्षान्महाराजत्वम् । तथा ‘ उत महाब्राह्मण इव ’ । उतापि ‘ उच्चावचं ’ उच्चञ्च देवत्वादि अवचञ्च तिर्यक्त्वादि इत्युच्चावचमिव ‘ निगच्छति ’ नितरां प्राप्नोतीत्यर्थः ॥ १९ ॥

तथा च वेदशब्दप्रयोगात् व्यभिचारदर्शनाच्चैते महाराजत्वादयो लोका मृषैव नास्यात्मभूता इत्युक्तमर्थं दृष्टांतपूर्वकमाह—स यथेति । ‘ सः ’ इति दृष्टांतः । ‘ यथा महाराजः ’ सार्वभौमः ‘ जानपदान् ’ जनपदे देशे भवान् राजोपकरणभूतान् भृत्यान् अन्यांश्च तथाविधान् गृहीत्वोपादाय स्वीये आत्मीये एव ‘ जनपदे ’ जयादिनोपार्जिते ‘ यथाकामं ’ यः कामो यस्य तं काममनतिक्रम्येति यथेच्छं ‘ परिवर्तेत ’ परिक्रामेदित्यर्थः । ‘ एवमेव ’ ‘ एषः ’ विज्ञानमय आत्मा । एतदिति ग्रहणक्रियाया विशेषणम् । एतद्ग्रहणं यथा स्यात्तथा ‘प्राणान्’ वागादीन् ‘ गृहीत्वा ’ जागरितस्थानेभ्यः उपसंहृत्य ‘ स्वे शरीरे ’ स्व एव देहे ‘ यथाकामं परिवर्तते ’ । न बहिरित्यर्थः । कामकर्म्मभ्यामुद्भासिताः पूर्वानुभूतवस्तुसदृशा वासनाः अनुभवतीत्यर्थः । तस्मादसौ विज्ञानमयो दृष्टादृश्येभ्यः स्वप्नजागरितलोकेभ्यः अन्यो विशुद्धः इति सिद्धम् ॥ २० ॥

दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वात् असंसारधर्मता इत्यात्मनो विशुद्धता अवगता । तत्र “ यथाकामं परिवर्तते ” इति कामवशात् परिवर्तनमुक्तम् । इष्टदृश्यसंबंधश्चास्य स्वाभाविक इत्यशुद्धता इत्याशङ्कायां तत्संबंधस्य सुषुप्तौ व्यतिरेकदर्शनेन अस्वाभाविकत्वात् शुद्धत्वमेवास्य स्वाभाविकमिति वक्तुमाह—अथ यदेति । ‘अथ’ पुनः ‘ यदा ’ यस्मिन् काले जाग्रत्स्वप्नयोर्द्रष्टा दर्शनवृत्तिस्वप्नं हित्वा ‘ सुषुप्तः ’ सुष्ठु सुप्तः विशेषज्ञानाभावेन संप्रसादं स्वस्वरूपब्रह्मैक्यं यतः ‘ भवति ’ । सलिलमिव अन्यसंबंधकालुष्यं हित्वा स्वाभाव्येन प्रसीदतीत्यर्थः । कदा सुषुप्तो भवति । ‘ यदा ’ यस्मिन् काले ‘ न कस्यचन ’ कंचन विषयं ‘ वेद ’ विजानाति । कस्यचन वा शब्दादेः संबंधि वस्त्वंतरं किंचन न वेद । अस्मिन्पक्षे किञ्चनेत्यध्याहार्यम् । केन पुनः क्रमेण सुषुप्तो

स युथा कुमारो वा महाब्राह्मणो वा । ( ऽ ) अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥ २२ ॥

स युथोर्णवाभिस्तुन्तुनोच्चरेत् । ( यु ) युथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व्वे प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि सर्व्वऽएतऽआत्मानो व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यन्तेषामेष सत्यम् ॥ २३ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके प्रथमं ब्राह्मणम् ॥ १४ (४) २ । १ । ( ५ ) २-१ ॥

---

स यथा कुमारो वा महाब्राह्मणो वा अतिघ्नीमानंदस्य गत्वा शयीत । एवमेवैष एतत् शेते॥२२॥

स यथा ऊर्णवाभिस्तंतुनोच्चरेत् । यथा अग्नेः क्षुद्रा विष्फुलिंगा व्युच्चरंति । एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एते आत्मानः व्युच्चरंति । तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यम् । तेषामेष सत्यम् ॥ २३ ॥

---

भवतीत्यत आह-हिता नामेति । 'हिता नाम' हितफलप्राप्तिनिमित्तत्वात् ' हिताः ' इत्येवंनाम्न्यो ' नाड्यः ' शिराः देहस्यान्नरसविपरिणामभूताः । ताश्च द्वाभ्यामधिका सततिः ' द्वासप्ततिः सहस्राणि ' ' हृदयात्पुरीततमभिप्रतिष्ठन्ते ' । हृदयं नाम उदरवक्षःप्रदेशयोर्मध्यस्थितः पुण्डरीकाकारो मांसपिण्डः । तत्परिवेष्टनं पुरीतत् इत्युच्यते । इह पुनस्तदुपलक्षितं शरीरं पुरीतच्छब्देनाभिप्रेतम् । तथा च ' हृदयात् ' ' पुरीततं ' शरीरमभिप्रतिष्ठन्ते इति कृत्स्नं शरीरं व्याप्नुवंत्यः अश्वत्थपर्णराजय इव बहिर्मुखाः प्रवृत्ताः अभितोऽभितः सरंतीत्यर्थः । ततः किमित्यत आह-ताभिरिति । ताभिर्नाडीभिः कृत्वा जाग्रद्विषयाया बुद्धेः कर्म्मवशात्प्रत्यवसर्पणमनु विज्ञानमय आत्मा ' प्रत्यवसृप्य ' इंद्रियाण्युपसंहृत्य ' पुरीतति ' शरीरे ' शेते ' अग्निवत्तप्तं लोहपिंडं अविशेषेण संव्याप्य वर्तत इत्यर्थः । ननु-पूर्वं विज्ञानमयो हृदयाकाशे ब्रह्मणि शेते इत्युक्त्वा इदानीं पुरीतति शयनमाचक्षाणस्य कथं न पूर्वापरविरोधः स्यादिति चेत् सुतं स्वाभाविके एव स्वात्मनि वर्तमानोऽपि कर्म्मानुगतबुद्ध्यनुवृत्तित्वात् पुरीतति शेते इत्युपचारादुच्यते । अतो नोक्तविरोधः ॥ २१ ॥

उक्तं शयनं दृष्टान्तपूर्वकमाह-स यथेति । सर्वसंसारदुःखवियुक्ता इयमवस्था इत्यत्र ' सः ' इति दृष्टान्तः । ' यथा कुमारः ' अत्यंतबालः 'वा' 'महाब्राह्मणो वा' अत्यंतपरिपक्वविद्याविनयसंपन्नो यथोक्तवत् ' अतिघ्नीं ' अतिशयेन दुःखं हन्तीत्यतिघ्नी ' आनंदस्य ' सुखस्यावस्था तां ' गत्वा ' प्राप्य ' शयीत ' दुःखाननुविद्धसुखस्वाभाव्ये अवतिष्ठेत । ' एवमेव ' ' एषः ' विज्ञानमयः सर्वसंसारधर्मातीतः एतच्छयनं यथा स्यात्तथा ' शेते ' सुषुप्तौ वर्तत इत्यर्थः ॥ २२ ॥

एवं क्वैष तदाऽभूदित्यस्य पूर्वप्रश्नस्य प्रतिवचनमुक्तम् । अनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिरसंसारित्वं चोक्तम् । इदानीं तस्याद्वितीयत्वं प्रकटयितुं कुत एतदागादिति द्वितीयप्रश्नस्य अपा-

यो ह वै शिशुम् । (ग्वँ) साधानग्वँ सप्रत्याधानग्वँ सस्थूणग्वँ सदाम-
म्वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि ॥ १ ॥

---

सर्वान्नब्राह्मणं वा शिशुब्राह्मणम् ।

यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद । सप्त ह द्विषतो भ्रातृव्यानव-
रुणद्धि ॥ १ ॥

---

करणार्थं प्रतिवचनमाह—स यथेति । 'सः' इति दृष्टांतः । 'यथा' लोके 'ऊर्णवाभिः' ऊर्णवाभिर्लू-
ताख्यः कीटविशेषः असहाय एव सन् तंतुना स्वात्मनोऽविभक्तेन उच्चरेदुद्गच्छेत् । न च तस्योद्गमने स्वतो-
ऽतिरिक्तं कारकांतरमस्ति । यथा च एकरूपादेकस्मादग्नेः 'क्षुद्राः' अल्पाः 'विष्फुलिङ्गाः' अग्न्यवयवाः
'व्युच्चरंति' विविधं नाना वा उच्चरंति उद्गच्छन्ति प्रसर्प्पन्ति । यथेमौ दृष्टांतौ कारकभेदाभावेऽपि
प्रवृत्तिं प्राक्प्रवृत्तेः स्वभावत एकत्वं च दर्शयतः । 'एवमेव' अस्मादात्मनो विज्ञानमयस्य प्राक्प्रति-
बोधात् स्वापे यत्स्वरूपं तस्मादेतस्मादात्मनः सकाशात्सर्वे 'प्राणाः' वागादयः 'सर्वे लोकाः' भूरादयः
सर्वकर्म्मफलभूताः 'सर्वे देवाः' प्राणलोकाधिष्ठातारः अग्न्यादयः 'सर्वाणि भूतानि' ब्रह्मादिस्तंब-
पर्यंतानि प्राणिजातानि 'सर्व एत आत्मानः' उपाधिसंपर्कजनितप्रबुध्यमानविशेषात्मानः 'व्युच्चरंति' यस्मा-
दात्मनः स्थावरजङ्गममिदं जगत् अग्निविष्फुलिङ्गवदनिशं व्युच्चरति, यस्मिन्नेव जलबुद्बुदवत् प्रलीयते, यदात्म-
कश्च स्थितिकाले वर्तते । तस्यात्मनो ब्रह्म 'उपनिषत्' उप समीपं नितरां सादयति गमयति विज्ञानात्मानं
इति व्युत्पत्तेः उपनिषदित्यात्मनोऽभिधायकः शब्दः । का सा उपनिषदित्यत आह—सत्यस्य सत्यमितीति ।
किं पुनः सत्यं किं वा 'सत्यस्य सत्यं' इत्यत आह—प्राणा वै सत्यमिति । सच्च त्यच्चेति व्युत्पत्तेः ।
'तेषां' प्राणानां मध्ये 'एषः' उक्त आत्मा सत्यमबाध्यं रूपमित्यर्थः ॥ २३ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-
ब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गत माध्यंदिनशाखोपनिषद्बृहदारण्यकटीकायां
वासुदेवप्रकाशिकायां आद्ये मधुकाण्डे द्वितीयेऽध्याये प्रथमं पर्यङ्कविद्याब्राह्मणमजातशत्रु-
ब्राह्मणं वा परिसमाप्तम् ॥ १४ (९) २—१ ॥

एवं "प्राणा वै सत्यं तेषामेष सत्यं" इत्यादिब्राह्मणभागेन व्याख्याताया अपि उपनिषदो विशेषतोऽर्थ-
प्रकाशनाय ब्राह्मणद्वयम् । तत्र "प्राणा वै सत्यं" इत्यंशेनोक्तायाः प्राणोपनिषदो व्याख्यानाय शिशुब्राह्मणं
प्रवर्तते—यो ह वै शिशुमिति । 'यो ह वै' 'साधानं सप्रत्याधानं सस्थूणं सदामं' च 'शिशुं वेद'
उपास्ते । सः 'ह' किल 'सप्त' सप्तसंख्याकान् चक्षुर्द्वयं, नासिकाद्वयं, श्रोत्रद्वयं, मुखं, इति चैवं सप्त
'द्विषतः' द्वेषकर्तॄन् 'भ्रातृव्यान्' शत्रून् 'अवरुणद्धि' अपावृणोति विनाशयति जितेन्द्रियो भवतीत्यर्थः ।
भ्रातृव्या हि द्विविधाः । द्विषन्तः अद्विषन्तश्च । तत्र सप्त शीर्षण्याः प्राणविषयोपलब्धिद्वाराणि तत्प्रभवा
विषयरागाः सहजत्वात् भ्रातृव्याः । ते हि अस्य स्वात्मस्थां दृष्टिं विषयीकुर्वंति । प्रत्यगात्मेक्षणप्रति-
बन्धकत्वात् ते द्वेष्टारो भ्रातृव्याः इति भावः ॥ १ ॥

( द्वय ) अयम्वाव शिशुः । ( स्यों ) योऽयम्मध्यमः प्प्राणस्तस्येदमेवा-धानमिदम्प्रत्याधानम्प्राण स्थूणाऽन्नन्दाम तमेताः सप्ताक्षितयऽउप-तिष्ठन्ते ॥ २ ॥

तयाऽइमाऽअक्षँल्लोहिन्यो राजयः । ( स्ता ) ताभिरेनꣳ रुद्रोऽन्वा-यत्तोऽथ याऽअक्षन्नापस्ताभिः पर्ज्जन्यो या कनीनका तयाऽऽदित्यो यच्छुक्लन्तेनाग्निर्यत्कृष्णन्तेनेन्द्रोऽधरयैनम्वर्त्तन्या पृथिव्यन्वायत्ता द्यौरु-त्तरया नास्यान्नं क्षीयते यऽएवम्वेद ॥ ३ ॥

---

अयं वाव शिशुः । यः अयं मध्यमः प्राणः । तस्येदमेवाधानम् इदं प्रत्याधानम् । प्राणः स्थूणा । अन्नं दाम । तमेताः सप्ताक्षितय उपतिष्ठंते ॥ २ ॥

तया इमा अक्षँल्लोहिन्यो राजयः । ताभिरेनं रुद्रोऽन्वायत्तः । अथ या अक्षन्नापः । ताभिः पर्जन्यः । या कनीनका । तया आदित्यः । यत् शुक्लं, तेनाग्निः । यत् कृष्णं, तेनेन्द्रः । अधरयैनं वर्तन्या पृथिव्यन्वायत्ता । द्यौरुत्तरया । नास्यान्नं क्षीयते । य एवं वेद ॥ ३ ॥

---

एवं फलश्रवणेन अभिमुखीभूताय जिज्ञासवे आह—**अयं वावेति** । 'अयं वाव' अयमेव शिशुरिव 'शिशुः' विषयेषु इतरकरणवत् अपृक्तत्वात् । कोऽसौ ? 'योऽयं' 'मध्यमः' शरीरमध्यस्थः 'प्राणः' लिङ्गशरीरात्मा पञ्चधा शरीरमाविष्टः "बृहन्पाण्डुरवासः सोम राजन्" इत्युक्तः पञ्चीशशङ्कुनिदर्शनात् यस्मिन्वाङ्मनः प्रभृतीनि करणानि विषक्तानि । स एव शिशुरित्यर्थः । 'तस्य' शिशोः प्राणस्य वत्सस्थानीयस्य करणात्मनः 'इदं' कार्यात्मकं शरीरमेव 'आधानं' आधीयतेऽस्मिन्नित्याधानमधिष्ठानम् । 'तस्य' प्राणस्य 'इदं' प्रसिद्धं शिरो मस्तकं 'प्रत्याधानं' प्रदेशविशेषेषु प्रतिपत्त्याऽऽधीयत इति प्रत्याधानम् । 'प्राणः' बलापरपर्यायान्नपानजनिता शक्तिः 'स्थूणा' अवष्टंभः । बलावष्टंभो हि प्राणोऽस्मिञ्छरीरे अवतिष्ठत इत्यर्थः । 'तस्य' प्राणस्य 'अन्नं' भुक्तमशनं 'दाम' उभयतः पाशं, वत्सस्येव बंधने बंधनरज्जु इत्यर्थः । इदानीं तस्यैव शिशोः प्रत्याधाने शिरसि आरूढस्य चक्षुषि काश्चन उपनिषद उच्यंते—**तमेता** इति । 'तं' करणात्मकं शरीरे अन्नबंधनं चक्षुष्यूढं प्राणं 'एताः' वक्ष्यमाणाः 'सप्त' सप्तसंख्याकाः 'अक्षितयः' अक्षितिहेतुत्वात् 'अक्षितयः' 'उपतिष्ठन्ते' उपस्थानं कुर्वंति । "उपान्मन्त्रकरणे" ( पा. सू. १–३–२९ ) इति "आदित्यङ्गायत्र्योपतिष्ठते" इतिवत् मन्त्रकरणे उपपूर्वस्य तिष्ठतेरात्मनेपदं विहितं इहापि सप्तदेवताभिधानानि मन्त्रस्थानीयानि करणानि । अतस्तिष्ठतेः अत्राप्यात्मनेपदं न विरुद्धम् ॥ २ ॥

कास्ता अक्षितय इत्यत आह—**तयाऽइमा** इति । तत्तत्र 'याः इमाः' प्रसिद्धाः 'अक्षन्' अक्षणि नेत्रे 'लोहिन्यः' लोहिताः 'राजयः' रेखाः । 'ताभिः' रेखाभिः द्वारभूताभिः 'एनं' मध्यमं प्राणं 'रुद्रोऽन्वायत्तः' अनुगतः उपतिष्ठते इत्यर्थः । अथानन्तरं अक्षन्नक्षणि 'या आपः' धूमादिसंयोगेनाभिव्यज्यमानाः ताभिरद्भिर्द्वारभूताभिः 'पर्जन्यः' देवतात्मा अन्वायत्तः । 'या कनीनका' चक्षुषि दृक्शक्तिः । 'तया' कनीनकया द्वारभूतया 'आदित्यः' मध्यमं प्राणमुपतिष्ठते । यच्छुक्लञ्चक्षुषि तेन एनमग्निरुपतिष्ठते । यत्कृष्णं

तदेष श्लोको भवति । ( स्य ) अर्वाग्बिलश्चमस ऽऊर्ध्वबुध्नस्तस्मिन्यशो निहितम्विश्वरूपम् । तस्यासत ऽऋषयः सप्त तीरे व्वागष्टमी ब्ब्रह्मणा सम्विदानेति ॥ ४ ॥

( स्य ) अर्वाग्बिलश्चमस ऽऊर्ध्वबुध्न ऽइति । ( ती ) इदन्तच्छिर ऽएष ह्यर्वाग्बिलश्चमस ऽऊर्ध्वबुध्नस्तस्मिन्यशो निहितम्विश्वरूपमिति प्प्राणा वै यशो निहितम्विश्वरूपम्प्राणानेतदाह तस्यासत ऽऋषयः सप्त तीर ऽइति प्प्राणा वा ऋषयः प्प्राणानेतदाह व्वागष्टमी ब्ब्रह्मणा सम्विदानेति व्वाग्घ्यष्टमी ब्ब्रह्मणा सम्वित्ते ॥ ५ ॥

---

तदेष श्लोको भवति–" अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना "–इति ॥ ४ ॥

अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति । इदं तच्छिरः । एष हि अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । तस्मिन् यशो निहितं विश्वरूपमिति । प्राणा वै यशो निहितं विश्वरूपम् । प्राणानेतदाह । तस्यासत ऋषयः सप्त तीर इति । प्राणा वा ऋषयः । प्राणानेतदाह । वागष्टमी ब्रह्मणा संविदानेति । वाक् हि अष्टमी ब्रह्मणा संवित्ते ॥ ५ ॥

---

चक्षुषि तेनेन्द्रोऽन्वायत्तः । ' अधरया ' अधस्तन्या ' वर्त्तन्या ' पक्ष्मणा ' एनं ' मध्यमं प्राणं ' पृथिवी ' ' अन्वायत्ता ' अधरत्वसामान्यात् । ' द्यौः ' स्वर्गः उत्तरयोपरिभागस्थया ' वर्त्तन्या ' पक्ष्मणा ' अन्वायत्ता ' ऊर्ध्वत्वसामान्यात् । एवंविधोपास्तिफलमाह–नास्यान्नमिति । ' यः ' एवमुक्तप्रकारेण प्राणस्य अन्नभूताः सप्ताक्षितीर्वेद । अस्योपासकस्यान्नं ' न क्षीयते ' ॥ ३ ॥

उक्ता रुद्रादिदेवताः प्राणोपासनात् वागाद्यात्मिका एव संवृत्ताः इति वागादय एवात्र रुद्रादिशब्दाभिधेयाः इत्यभिप्रेत्योक्तेऽर्थे मन्त्रसम्मतिमाह–तदेष श्लोको भवतीति । तत्तत्र एतस्मिन्नर्थे ' एष श्लोकः ' मन्त्रः ' भवति ' । अर्वाग्बिलश्चमस इत्यादिः, मन्त्रसमाप्तिद्योतक इतिशब्दः ॥ ४ ॥

तं मंत्रं प्रतीकग्रहणपूर्वकं व्याकरोति । " अर्वाग्बिलश्चमसऽ ऊर्ध्वबुध्नः " इत्यस्मिन्मंत्रभागे ' तत् ' प्राणस्य प्रत्याधानत्वेनोक्तं ' इदं ' प्रसिद्धं ' शिरः ' एव ' एषः ' ' अर्वाग्बिलः ' अवाङ्मुखः ' ऊर्ध्वबुध्नः ' ऊर्ध्वासनः ' चमसः ' चमंत्यस्मिन्निति व्युत्पत्त्या चमसः पात्रविशेष उक्तः । कथं ? ' हि ' यस्मादेव शिरोलक्षणश्चमसः ' अर्वाग्बिलः ' अधःस्थितस्यैव मुखस्य बिलरूपत्वात् शिरसो बुध्नाकारस्य उपरिभागे दृश्यमानत्वाच्च । तस्माच्छिर एव उक्तलक्षणश्चमसः । ' तस्मिन् ' शिरसि ' विश्वरूपं ' नानारूपं ' यशो निहितं ' स्थितम् । यथा सोमश्चमसे इति मन्त्रभागः । किं पुनस्तद्यशः ? ' प्राणाः ' श्रोत्रादयः सप्त पूर्वोक्ताः । तेषु प्रसृता वागादयश्च ' वै ' प्रसिद्धं ' विश्वरूपं ' विषयाणामनेकत्वेन अनेकरूपं शब्दादिज्ञानलक्षणं ' यशः ' शिरसि ' निहितम् ' । अतः प्राणानेव एतद्यश इति मन्त्रभाग आह । ' तस्य ' शिरोलक्षणस्य चमसस्य ' तीरे ' पार्श्वे " सप्त ऋषयः ' ' आसते ' वर्तन्ते इति मन्त्रार्थः । ' प्राणाः ' करणाश्रयाः परिस्पंदात्मकाः सप्त वायव एव ' ऋषयः '

( त्तऽ ) इमावेव गोतमभरद्वाजौ । (जाव) अयमेव गोतमोऽयम्भरद्वाज-ऽइमावेव विश्वामित्रजमदग्नीऽअयमेव विश्वामित्रोऽयञ्जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयङ्कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यते-ऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नम्भवति यऽएवम्वेद ॥ ६ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके द्वितीयं ब्राह्मणम् ॥ १४ ( ४ ) २।२॥ ( ५ ) २-२ ॥

---

इमावेव गोतमभरद्वाजौ । अयमेव गोतमः । अयं भरद्वाजः । इमावेव विश्वामित्रजमदग्नी । अयमेव विश्वामित्रः । अयं जमदग्निः । इमावेव वसिष्ठकश्यपौ । अयमेव वसिष्ठः । अयं कश्यपः । वागेवात्रिः । वाचा हि अन्नमद्यते । अत्तिर्ह वै नामैतत् । यदत्रिरिति । सर्वस्यात्ता भवति । सर्वमस्यान्नं भवति । य एवं वेद ॥ ६ ॥

---

प्रसिद्धऋषिवदेषां शब्दादिविषयद्रष्टृत्वात् तदाश्रयत्वेन तद्रूपत्वाद्वा ऋषित्वम् । अतः प्राणानेतन्मंत्रवाक्यमाह— ' ब्रह्मणा ' ब्रह्मशब्दराशिना वेदेन सह ' संविदाना ' संसर्गं गच्छन्ती शब्दराशिमुच्चारयन्ती ' वाक् अष्टमी ' अष्टसंख्यापूरणी । इति मन्त्रेणोक्तेऽर्थे ब्राह्मणं हेतुमाह—वाग्घीति । ' हि ' यस्मादष्टमी ' वाक् ' ' ब्रह्मणा ' वेदेन सह ' संवित्ते ' संसर्गं प्राप्नोति । वक्तृत्वात्तृत्वभेदेन द्विधा वागिष्टा । तत्र वक्तृत्वेनाष्टमी । सप्तमी च अत्तृत्वेन इत्यविरोध इति भावः ॥ ५ ॥

के ते प्राणा ऋषय इत्यपेक्षायामाह—इमावेवेति । ' इमौ ' प्रसिद्धावेव कर्णौ ' गोतमभरद्वाजौ ' ' अयमेव ' दक्षिणः कर्णः ' गोतमः ' । अयमेवोत्तरः कर्णः ' भरद्वाजः ' । विपर्ययेण वा । तथा चक्षुषी उपदिशन्नुवाच ' इमावेव विश्वामित्रजमदग्नी ' । ' अयमेव ' दक्षिणश्चक्षुर्विश्वामित्रः । अयमेवोत्तरं चक्षुर्जमदग्निः । विपर्ययेण वा । ' इमावेव ' नासापुटौ ' वसिष्ठकश्यपौ ' । ' अयमेव ' दक्षिणो नासापुटः ' वसिष्ठः ' । ' अयमेवोत्तरो नासापुटः ' कश्यपः ' । विपर्ययेण वा । ' वागेवात्रिः ' । अदनक्रियायोगात् ' अत्रिः ' । ' हि ' यस्मात् ' वाचा ' ' अन्नमद्यते ' भक्ष्यते । तस्माद्वाचः " अत्तिः " इति ' ह वै ' प्रसिद्धं ' नाम एतत् ' । अत्तृत्वादत्तिरिति । अत्तिरेव सत् ' यत् अत्रिरिति ' श्रुत्या व्यपदिश्यते नाम । तत्परोऽक्षेणैव । " परोऽक्षप्रियाऽ इव हि देवाः " ( ) इत्युक्तत्वात् । संप्रति अत्रिनिर्वचनविज्ञानस्य प्राणयाथात्म्यवेदनस्य च फलमाह—सर्वस्यात्तेति । ' यः ' एवमुक्तं अत्रिनिर्वचनं प्राणयाथात्म्यं च ' वेद ' । स मध्यमः प्राणो भूत्वा आधानप्रत्याधानगतः सर्वस्यान्नजातस्यात्ता भोक्तैव ' भवति ' । न भोज्यम् । सर्वमस्योपासकस्यान्नं ' भवति ' । भोज्यात् व्यावर्तत इत्यर्थः ॥ ६ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्-बृहदारण्यकटीकायां वासुदेवप्रकाशिकायाम् आद्ये मधुकाण्डे द्वितीयेऽध्याये द्वितीयं शिशुब्राह्मणं सर्वान्नब्राह्मणं वां परिसमाप्तम् ( ॥ १४ । ( ५ ) । २ । २ ॥ )

द्वे वाव ब्रह्मणो रूपे । मूर्त्तञ्चैवामूर्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च ॥ १ ॥

तदेतन्मूर्त्तम् । ( त्तंय ) यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत् ॥ २ ॥

( त्त ) तस्यैतस्य मूर्त्तस्य । ( स्यै ) एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सतऽएष रसो यऽएष तपति सत्तो ह्येष रसः ॥ ३ ॥

---

मूर्तामूर्तब्राह्मणम् ।

द्वे वाव ब्रह्मणो रूपे—मूर्तं चैवामूर्तं च । मर्त्यं चामृतं च । स्थितं च यच्च । सच्च त्यच्च ॥ १ ॥

तदेतन्मूर्तं यदन्यत् वायोश्चांतरिक्षाच्च । एतन्मर्त्यम् । एतत् स्थितम् । एतत्सत् ॥ २ ॥

तस्यैतस्य मूर्तस्य, एतस्य मर्त्यस्य, एतस्य स्थितस्य, एतस्य सत एष रसः । य एष तपति । सतो हि एष रसः ॥ ३ ॥

---

अथ कथमेषां प्राणानां सत्यत्वं कथं वा ततोऽप्यात्मनः सत्यत्वं इति जिज्ञासायां कार्यकारणात्मकानां सत्यानां पञ्चभूतानां स्वरूपावधारणार्थं मूर्त्तामूर्त्तब्राह्मणं प्रवर्तते—द्वे वावेति । यदपोहद्वारेण "नेति नेति" इत्यादिना निर्दिधारयिषितं ब्रह्म तस्य ब्रह्मणो मायामये 'द्वे वाव' द्वे एव 'रूपे'। रूप्यते ज्ञाप्यते अरूपं परं ब्रह्म याभ्यां अविद्याऽध्यारोपणाभ्यां ते रूपे । के ते इत्यत आह—मूर्तञ्चैवामूर्तञ्चेति । मूर्तामूर्त्तयोः प्रत्येकं अर्थप्रतिपादकानि विशेषणान्याह—'मर्त्यं च' मरणधर्म्मि । 'अमृतञ्च' तद्विपरीतम् । 'स्थितञ्च'—स्थास्नु परिच्छिन्नमिति यावत् । 'यच्च'—एति व्याप्नोतीति यत् 'अपरिच्छिन्नं' स्थितविपरीतम् । 'सच्च' प्रत्यक्षेणोपलभ्यमानासाधारणधर्मवत् । 'त्यच्च'—त्यत् तद्विपरीतम् ; 'त्यत्' इत्येव सर्वदा परोऽक्षाऽभिधानार्हम् ॥ १ ॥

के ते मूर्तामूर्ते कस्य वा कानि विशेषणानि इति विशेषो न ज्ञायते इत्यत आह—तदेतन्मूर्त्तमिति । 'यत् वायोश्चांतरिक्षाच्च'—भूतद्वयात् अन्यत्परिशिष्टं पृथिव्यादि भूतत्रयं 'तत् मूर्तं' मूर्च्छितावयवं इतरेतरानुप्रविष्टावयवं घनं संहतमित्यर्थः । अत एव 'एतत्' भूतत्रयं—'मर्त्यं' मरणधर्मि अत एव 'एतत् स्थितं' परिच्छिन्नम् । अत एव 'एतत् सत्' विशेष्यमाणासाधारणधर्मवत् । चतुर्णां धर्माणां अन्योऽन्याव्यभिचारात् यथेष्टं विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च निश्चेतव्यः ॥ २ ॥

उक्तविशेषणचतुष्टयवतो भूतत्रयस्य सारिष्ठं कार्यं विशेषणानुवादपूर्वकमाह—तस्यैतस्य मूर्त्तस्यैतस्य स्थितस्यैतस्य सत इति । विशेषणविशिष्टस्य भूतत्रयस्य 'एष रसः' सारः । कोऽसौ ? 'यऽएषः' मण्डललक्षणः सविता 'तपति' । तत्र हेतुः 'हि' यस्मात् मूर्तादिविशेषणचतुष्टयं मण्डले अवसीयते तस्मात्—'सतः' सदादिचतुष्टयविशेषणविशिष्टस्य भूतत्रयस्य 'एषः' मंडलभूतः 'रसः' सारः । एतच्च—आधिदैविकस्य कार्यात्मकस्य ब्रह्मणो रूपम् ॥ ३ ॥

( सोऽथा ) अथामूर्त्तम् । ( म्वा ) व्वायुश्चान्तरिक्षञ्चैतदमृतमेतद्यदेतत्त्यम् ॥ ४ ॥

( त्यन्तु ) तस्यैतस्यामूर्त्तस्य । ( स्यै ) एतस्यामृतस्यैतस्य यतऽएतस्य त्यस्यैष रसो यऽएषऽएतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रसऽइत्यधिदेवतम् ॥ ५ ॥

( मु ) अथाध्यात्मम् । ( मि ) इदमेव मूर्त्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाशऽएतन्मर्त्यमेतत्स्थितमेतत्सत् ॥ ६ ॥

( त्तु ) तस्यैतस्य मूर्त्तस्य । ( स्यै ) एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सतऽएष रसो यच्चक्षुः सतो ह्येष रसः ॥ ७ ॥

( सोऽथा ) अथामूर्त्तम् । ( म्प्रा ) प्प्राणश्च यश्चायमन्तराऽऽत्मन्नाकाशऽएतदमृतमेतद्यदेतत्त्यम् ॥ ८ ॥

---

अथामूर्तम् । वायुश्चांतरिक्षं च । एतत् अमृतम् । एतत् यत् । एतत् त्यम् ॥ ४ ॥

तस्यैतस्यामूर्तस्य, एतस्यामृतस्य, एतस्य यतः, एतस्य त्यस्य एष रसः । य एष एतस्मिन् मंडले पुरुषः । त्यस्य हि एष रसः । इत्यधिदेवतम् ॥ ५ ॥

अथाध्यात्मम् । इदमेव मूर्तम् । यदन्यत् प्राणाच्च । यश्चायमंतरात्मन्नाकाशः । एतत् मर्त्यम् । एतत् स्थितम् । एतत्सत् ॥ ६ ॥

तस्यैतस्य मूर्तस्य, एतस्य मर्त्यस्य, एतस्य स्थितस्य, एतस्य सतः, एष रसः । यत् चक्षुः । सतो ह्येष रसः ॥ ७ ॥

अथामूर्तम् । प्राणश्च । यश्चायमंतरात्मन्नाकाशः । एतदमृतम् । एतद्यत् । एतत् त्यम् ॥ ८ ॥

---

अथेदानीममूर्त्तमुच्यते–' वायुश्चान्तरिक्षं च ' यत्परिशेषितं भूतद्वयं–' एतत् ' ' अमूर्त्तं ' मूर्त्तविपरीतं ब्रह्मणो रूपम् । शेषं पूर्ववत् ॥ ४ ॥

' एतस्य ' अमूर्त्तादिचतुष्टयविशेषणविशिष्टस्य भूतद्वयस्य ' एष रसः ' । कोऽसौ ? ' य एषः ' ' एतस्मिन् मण्डले पुरुषः ' कारणात्मको हिरण्यगर्भः प्राणः । तत्र हेतुः, ' हि ' यस्मात् तस्यामूर्त्तस्य ' एषः ' मण्डलस्थः पुरुषः ' रसः ' पूर्ववत् सारिष्ठः । एतच्चाधिदैविकस्य कारणात्मकस्य ब्रह्मणो रूपम् । एवमुक्तमाधिदैविकं विभागमुपसंहरति–इत्यधिदेवतमिति ॥ ५ ॥

अथाध्यात्ममिति । अथानंतरं मूर्त्तामूर्त्तयोरध्यात्मं विभाग उच्यते । तत्र ' इदमेव ' ' मूर्त्तं ' किं ? ' यत् ' ' प्राणाच्च ' शरीरस्थात् उछ्वासात्मकात् वायोः ' यश्चायमंतरात्मन् ' अभ्यंतरे आत्मनि ' आकाशः ' तस्माच्च ' अन्यत् ' शरीरारंभकं भूतत्रयं । एतन्मर्त्यमित्यादि पूर्वेण समानम् ॥ ६ ॥

" एतस्य सत एष रसः यत् चक्षुः " इति । आध्यात्मिकस्य शरीरारंभकस्य कार्यस्य ' एष रसः ' सारः । तेन हि सारेण समस्तमिदं शरीरं सारवत् । यथा अधिदेवतमादित्यमण्डलेन ॥ ७ ॥

एवमाध्यात्मिकस्य कार्यात्मकस्य ब्रह्मणो रूपं निरूप्य कारणात्मकस्य रूपं निरूपयितुमाह–अथामूर्त्तमिति ।

( त्यन्तु ) तस्यैतस्यामूर्त्तस्य । ( स्यै ) एतस्यामृतस्यैतस्य यतऽ
एतस्य त्यस्यैष रसो योऽयन्दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥ ९ ॥

(स्तु) तस्य हैतस्य पुरुषस्य रूपम् । (पँय़ु) यथा माहारजनम्वासो यथा-
ऽऽपाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्च्चिर्यथा पुण्डरीकं यथा सकृद्विद्यु-
त्तर्ठ्ठँ सकृद्विद्युत्तेव ह वा ऽअस्य श्रीर्भवति यऽएवम्वेद ॥ १० ॥

( दा ) अथात ऽआदेशः । ( शो ) नेति नेति न ह्येतस्मादिति नेत्यन्य-

---

तस्यैतस्यामूर्तस्य, एतस्यामृतस्य, एतस्य यतः, एतस्य त्यस्य एष रसः । यः अयं दक्षिणेऽक्षन्पुरुषः । त्यस्य ह्येष रसः ॥ ९ ॥

तस्य हैतस्य पुरुषस्य रूपम् । यथा माहारजनं वासः । यथा आपाण्डु आविकम् । यथेन्द्र-गोपः । यथा अग्न्यर्च्चिः । यथा पुण्डरीकम् । यथा सकृद्विद्युत्तम् । सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति । य एवं वेद ॥ १० ॥

अथात आदेशः । नेति नेति । न हि एतस्मादिति । नेत्यन्यत्परमस्ति । अथ नामधेयं सत्यस्य सत्यमिति । प्राणा वै सत्यम् । तेषामेष सत्यम् ॥ ११ ॥

---

अथाधुना ' प्राणश्च यश्चायमन्तराऽऽत्मन् ' शरीरे—' आकाशः ' पूर्वोक्तः तत् अमूर्तरूपं परिशेषितं भूतद्वयं अन्यत् पूर्ववत् ॥ ८ ॥

' एतस्य त्यस्य ' ' एष रसः '—सारः—' योऽयं दक्षिणेऽक्षन् '—दक्षिणेऽक्ष्णि ' पुरुषः ' लिंगशरीरात्मा इत्यर्थः ॥ ९ ॥

अथास्य कारणात्मनो वासनामयं रूपं निरूपयितुमाह—तस्य हैतस्येति । तस्याधिदैविकस्य पुरुषस्य प्रकृतस्य लिङ्गात्मनः ' ह ' किल एतस्याध्यात्मिकस्य लिङ्गपुरुषस्य मनसो वासनामयमिदं रूपम् । ' यथा ' लोके महारजनं हरिद्रा तया रक्तं 'माहारजनम्' ' वासः ' वस्त्रम् । एवं स्त्र्यादिविषयसंयोगे सति तादृशं रंजनाकारं चित्तस्य वासनारूपं उत्पद्यते—येनासौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत् । 'यथा' च लोके ' आपाण्डु आविकं ' अवेरिदमाविकं ऊर्णादि ' आपाण्डुरं ' भवति तथा अन्यद्वासनारूपम् । ' यथा ' च लोके—' इन्द्रगोपः ' वर्षाकाले कीटविशेषः कौसुंभवत् अत्यंतरक्तो भवति । एवमेवास्य वासनारूपम् । कचित् विषयविशेषापेक्षया रागस्य तारतम्यं कचित् पुरुषचित्तवृत्त्यपेक्षयेति बोध्यम् । 'यथा'—लोके—'अग्न्यर्चिः'भास्वरं भवति—तथा कचित् कस्यचिद्वासनारूपम् । ' यथा ' च—' पुण्डरीकं ' शुक्लं—तद्वदपि कस्यचिद्वासनारूपम् । ' यथा ' च लोके—'सकृद्विद्युत्तं' सकृद्विद्योतनं सर्वतः प्रकाशकं भवति । तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद्धिरण्यगर्भादेर्वासनारूपमुपजायते सत्त्वादितारतम्यादिति भावः । चरमोक्तहिरण्यगर्भवासनारूपोपासनफलमाह—सकृद्विद्युत्तेवेति । एवं यथोक्तं यत्तु वासनारूपमंते अभिहितं सकृद्विद्योतनमिवेति तत् किल हिरण्यगर्भस्य अव्याकृतात्प्रादुर्भवतः तडिद्वत् सकृदेव व्यक्तीभवतीति । तत् तदीयं हिरण्यगर्भस्य वासनारूपं यो वेद । अस्योपासकस्य 'सकृद्विद्युत्तेव ' सकृद्विद्युदिव—' श्रीः ' ख्यातिः—' ह वै ' एवमेव भवतीत्यर्थः । ' ह वै ' इत्यवधारणार्थौ निपातौ ॥ १० ॥

एवं सत्यस्येति षष्ठ्यंतस्य स्थूलसूक्ष्मप्रपञ्चात्मकं हेयभूतं सत्यशब्दस्यार्थं व्याख्याय—उपादेयभूतप्रथमांतसत्य-

त्पुरमस्त्युथ नामधेयथ्ँ सुत्त्युस्य सत्त्यम्मिति प्प्राणा वै सत्त्यन्तेषामेषु सत्त्यम् ॥ ११ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके तृतीयं ब्राह्मणम् ॥ १४ (४) २।३ ॥ (५) २–३ ॥

मैत्रेयीति स होवाच याज्ञवल्क्यः । ( ऽ ) उद्यास्यन्वाऽअरेऽहमस्मा- त्स्थ्थानादस्मि हुन्त तेऽनुया कात्यायन्याऽन्तङ्करुवाणीति ॥ १ ॥

---

मैत्रेयीब्राह्मणम् ।

मैत्रेयीति स होवाच याज्ञवल्क्यः । उद्यास्यन् वा अरे अहमस्मात् स्थानादस्मि । हंत ते अनया कात्यायन्या अंतं करवाणीति ॥ १ ॥

---

शब्दार्थव्याख्यानायेदमारभ्यते—**अथात आदेश** इति । 'अथ' सत्यस्य स्वरूपनिर्देशानंतरं—' यत्सत्यस्य सत्यं ' तदेव अवशिष्यते यस्मात् अतस्तस्मात्तस्य सत्यस्य ब्रह्मणः " नेति नेतीत्येवमादेशः " निर्देशः । तथाच—नेति नेतीति वीप्सया मूर्तामूर्ततद्वासनात्मिकाविद्यातत्कार्यतदभावादिसर्वनिषेधावधित्वेन च तत्साक्षित्वेन च साक्षात् ब्रह्म निर्दिष्टं भवति । ' तस्य ' निरवधिकस्य निःसाक्षिकस्य च निषेधासंभवात् । ननु—कस्मादेवं ब्रह्म निर्दिश्यते इत्यत आह—**न ह्येतस्मादिति** । विषयीकर्तव्याः यावंतः पदार्थाः ते सर्वे नकारद्वयस्य विषयाः संतो निर्दिश्यंते इति कृत्वा नेति नेतीत्येतस्मादन्यत् अन्यतरत् निर्देशनं ' हि ' यस्मात् नास्ति । तस्मादयमेव निर्देशो ब्रह्मणः । यथा ग्रामो रमणीय इत्युक्ते राष्ट्रनिविष्टरमणीयसर्वग्रामसंग्रहः एवं प्रकृतेऽपि नेति नेतीति वीप्सया व्याप्तव्यसर्वप्रकारसंग्रह इति भावः । " तस्योपनिषदिति " प्रतिज्ञातं उपसंहृति—**अथ नामधेयमिति** । यत् उक्तप्रकारेण परमार्थसत्यं परं ब्रह्मैव—' अथ ' अतः युक्तमुक्तं ब्रह्मण उपनिषदिति नामधेयमभिधानम् । नामैव नामधेयम् । किं तत् ? **सत्यस्य सत्यमिति** ' प्राणा वै सत्यं तेषामेष सत्यम् ' इति व्याख्यातार्थम् ॥ ११ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-
ब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यक-
टीकायां वासुदेवप्रकाशिकायां आद्ये मधुकाण्डे द्वितीयेऽध्याये तृतीयं मूर्ता-
मूर्तब्राह्मणं परिसमाप्तम् ॥ १४ ( ५ ) २–३ ॥

" दृप्तबालाकिर्हेति " द्वितीयेऽध्याये ब्रह्मविद्याविषयं प्रत्यगात्मानं " ब्रह्म ते ब्रवाणि, व्येव त्वा ज्ञपयिष्यामि " इति च प्रस्तुत्य तद्ब्रह्म एकमद्वयं सर्वविशेषशून्यं क्रियाकारकफलस्वभावसत्यवाच्याशेषभूतधर्मप्रतिषेधद्वारेण—" नेति नेति " इति विज्ञापितम् । अस्या ब्रह्मविद्याया अङ्गत्वेन संन्यासविधित्सयैव आख्यायिकारूपं मैत्रेयीब्राह्मणमारभ्यते—**मैत्रेयीति होवाचेति** । ' याज्ञवल्क्यः ' नाम ऋषिः ' ह ' किल ' मैत्रेयि ! इति ' स्वां भार्यां आमन्त्र्योवाच । किं ? ' अरे ' हे मैत्रेयि ! ' अहं ' ' अस्मात् ' गार्हस्थ्यात् स्थानादाश्रमात् ' उद्यास्यन् वै ' ऊर्ध्वं पारिव्राज्याख्यमाश्रमान्तरं यास्यन्नेव ' अस्मि ' भवामि । अतः ' हंत ' ' ते ' तव अनु-

सा होवाच मैत्रेयी । यन्मऽइयम्भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथन्तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवताञ्जीवितन्तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ २ ॥

सा होवाच मैत्रेयी । येनाहन्नामृता स्याङ्किमहन्तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ३ ॥

स होवाच याज्ञवल्क्यः । प्प्रिया बतारे नः सती प्प्रियम्भाषसऽएह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ब्रवीतु भगवानिति ॥ ४ ॥

---

सा होवाच मैत्रेयी । यत् मे इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् । कथं तेनामृता स्यामिति । नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवतां जीवितम् । तथैव ते जीवितं स्यात् । अमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ २ ॥

सा होवाच मैत्रेयी । येनाहं नामृता स्याम् । किमहं तेन कुर्याम् । यदेव भगवान् वेद । तदेव मे ब्रूहीति ॥ ३ ॥

स होवाच याज्ञवल्क्यः । प्रिया वत अरे नः सती प्रियं भाषसे । एहि । आस्स्व । व्याख्यास्यामि ते । व्याचक्षाणस्य तु मे निदिध्यासस्वेति । ब्रवीतु भगवानिति ॥ ४ ॥

---

मति प्रार्थयामीत्यर्थः । किञ्च अन्यत् 'ते' तव 'अनया' द्वितीयया भार्यया 'कात्यायन्या' सह 'अन्तं' विच्छेदं 'करवाणि' द्रव्यविभागं कृत्वा वित्तेन युवां संविभज्य गमिष्यामीति भावः ॥ १ ॥

'सा' एवमुक्ता 'मैत्रेयी ह उवाच' । 'भगोः' भगवन् ! 'मे' मह्यं 'यत्' यदि 'इयं' सर्वसागरपरिखा 'पृथिवी' 'वित्तेन' धनेन 'पूर्णा स्यात्' । तदा 'कथं ?' किं तेन पृथिवीपूर्णवित्तसाध्येनाग्निहोत्रादिकर्म्मणा अहं 'अमृता' अमरणधर्म्मिणी मुक्ता 'स्यां' भवेयम् 'इति' प्रश्ने कृते 'नेति' नैव अमृता स्या इत्युत्तरं 'ह' किल 'याज्ञवल्क्यः' उवाचोक्तवान् । किं तर्हि वित्तेन भवेदित्यत आह—यथैवेति । 'यथैव' लोके 'उपकरणवतां' साधनसंपत्तियुक्तानां 'जीवितं' सुखोपभोगसंपत्त्या कालक्रमणं 'तथैव' तद्वदेव 'ते' तव 'जीवितं स्यात्' । 'न तु' पुनः 'वित्तेन' वित्तसाध्येन कर्म्मणा 'अमृतत्वस्य' मोक्षस्य 'आशा' तृष्णा 'अस्ति' । आशाऽपि न कर्तव्येति भावः ॥ २ ॥

'सा' एवमुक्ता 'मैत्रेयी ह' प्रत्युवाच । यद्येवं 'येनाहममृता न स्याम्' 'तेन' वित्तेन 'अहं किं कुर्याम्' । किंतु 'यदेव' केवलममृतत्वसाधनं 'भगवान्' ज्ञानसंपन्नो भवान् 'वेद' विजानाति । 'तदेव' अमृतत्वसाधनं 'मे' मह्यं 'ब्रूहि इति' उपदिशेत्यर्थः ॥ ३ ॥

एवं वित्तसाध्ये अमृतत्वसाधने प्रत्याख्याते स्वाभिप्रायसंपत्तौ तुष्टः 'सः' 'ह याज्ञवल्क्य उवाच' ।

स होवाच याज्ञवल्क्यः । ( ल्क्यो ) न वाऽअरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वाऽअरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वाऽअरे पुत्राणाङ्कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वाऽअरे वित्तस्य कामाय वित्तम्प्रियम्भवत्यात्मनस्तु कामाय वित्तम्प्रियम्भवति न वाऽ अरे ब्रह्मणः कामाय ब्रह्म प्रियम्भवत्यात्मनस्तु कामाय ब्रह्म प्रियम्भवति न वाऽअरे क्षत्रस्य कामाय क्षत्रम्प्रियम्भवत्यात्मनस्तु कामाय क्षत्रम्प्रियम्भवति न वाऽअरे लोकानाङ्कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वाऽअरे देवानाङ्कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वाऽअरे भूतानाङ्कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वाऽअरे सर्व्वस्य कामाय सर्व्वम्प्रियम्भवत्यात्मनस्तु कामाय सर्व्वम्प्रियम्भवत्यात्मा वाऽअरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वाऽअरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्व्वम्विदितम् ॥ ५ ॥

---

स होवाच याज्ञवल्क्यः । न वा अरे पत्युः कामाय पतिः प्रियो भवति । आत्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवति । आत्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवंति । आत्मनस्तु कामाय पुत्राः प्रिया भवंति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति । आत्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति । आत्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे

---

'अरे' मैत्रेयि ! 'नत' इत्यनुकंपायां 'नः' अस्माकं पूर्वमपि 'प्रिया सती' इष्टा भवती त्वं इदानीमपि 'प्रियमेव भाषसे' । अतस्त्वं 'एहि' आगच्छ । 'आस्व' उपविश । यत् ते तव इष्टं अमृतत्वसाधनं आत्मज्ञानं तत् 'व्याख्यास्यामि' कथयिष्यामि । 'व्याचक्षाणस्य' तु व्याख्यानं कुर्वतः 'मे' मम वाक्यानि अर्थतः 'निदिध्यासस्व' निश्चयेन ध्यातुमिच्छेति । याज्ञवल्क्येनैवमुक्ता मैत्रेयी 'ब्रवीतु भगवान्' इति प्रत्युवाचेत्यर्थः ॥ ४ ॥

'स याज्ञवल्क्यः' अमृतत्वसाधनं वैराग्यमुपदिदिक्षुः जायापतिपुत्रादिभ्यः सकलसुखसाधनेभ्यः तत्संन्यासविरागमुत्पादयन्नुवाच । 'अरे' मैत्रेयि ! 'वै' प्रसिद्धं एतल्लोके यत् 'पत्युः' भर्तुः 'कामाय' प्रयोजनाय जायायाः

(म्ब्र)ब्रह्म तम्पुरादात्। ( द्यो ) योऽन्युत्रात्मुनो ब्रुह्म व्वेद क्षत्त्रन्तम्पुरादाद्यो-
द्योऽन्युत्रात्मुनः क्षत्त्रम्वेद लोकास्तम्पुराद्रुर्य्योऽन्युत्रात्मुनो लोकान्वेद
देवास्तम्पुराद्रुर्य्योऽन्युत्रात्मनो देवान्वेद भूत्तानि तम्पुराद्रुर्य्योऽन्युत्रात्मुनो
भूतानि व्वेद सुर्व्वन्तम्पुरादाद्योऽन्युत्रात्मुनः सुर्व्वम्वेदेदम्ब्रुह्मेदङ्क्षत्त्रमिमे
लोकाऽइमे देवाऽइमानि भूतानीदᳬं सर्व्वं यदयुमात्मा ॥ ६ ॥

---

क्षत्त्रस्य कामाय क्षत्त्रं प्रियं भवति । आत्मनस्तु कामाय क्षत्त्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति । आत्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्ति । आत्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति । आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । मैत्रेयि ! आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥ ९ ॥

ब्रह्म तं परादात् । योऽन्यत्रात्मनो ब्रह्म वेद । क्षत्त्रं तं परादात् । योऽन्यत्रात्मनः क्षत्त्रं वेद । लोकास्तं परादुः । योऽन्यत्रात्मनो लोकान् वेद । देवास्तं परादुः । योऽन्यत्रात्मनो देवान् वेद । भूतानि तं परादुः । योऽन्यत्रात्मनो भूतानि वेद । सर्वं तं परादात् । योऽन्यत्रात्मनः सर्वं वेद । इदं ब्रह्म । इदं क्षत्त्रम् । इमे लोकाः । इमे देवाः। इमानि भूतानि । इदं सर्वम् यत् अयमात्मा ॥ ६ ॥

---

'पतिः' 'प्रियो न भवति' । किं तर्हि 'आत्मनस्तु कामाय' प्रयोजनायैव भार्यायाः 'पतिः प्रियो भवति' । तथा 'न वा अरे जायायै' इत्यादि समानम् । शेषं तु प्रसिद्धार्थम् । 'न वा अरे सर्वस्य कामाय' इति । सर्वग्रहण-मुक्तानुक्तार्थम् । तस्माल्लोकप्रसिद्धमेतत् । आत्मैव प्रियो नान्यदिति । "तदेतत् प्रेयः पुत्रात्" ( श. प. बृ. उ. १ । २ । १९ ) इत्युपन्यस्तम् । तस्यैत द्वृत्तिस्थानीयं प्रपञ्चितम् । तस्मात् आत्मप्रीतिसाधनत्वात् अन्यत्र गौणी प्रीतिः । आत्मन्येव मुख्या । तस्मादरे मैत्रेयि ! परमप्रेमास्पदभूतः 'आत्मा वै' आत्मैव 'द्रष्टव्यः' दर्शनविषयमापादयितव्यः । केनोपायेनेत्यत आह—श्रोतव्य इति । 'श्रोतव्यः' पूर्वं आचार्यत आगमतश्च । पश्चात् 'मन्तव्यः' तर्कतः । ततः 'निदिध्यासितव्यः' निश्चयेन ध्यातव्यः । एवं हि श्रवणमनननिदिध्यासनेन दृढीकृतेन 'आत्मनो वै दर्शनेन' साक्षात्काररूपेण .'इदं सर्वं' स्थावरजङ्गमात्मकं अनात्मभूतमखिलं विदितमेव विज्ञातमेवेति ॥ ९ ॥

ननु—कथमस्मिन् विदिते अन्यत्सर्वं विदितं भवेत् इत्याशङ्कायां आत्मव्यतिरेकेणान्यस्याभावात् इति दर्श-यितुमाह—ब्रह्म तमिति । 'यः' कोऽपि 'आत्मनः' सकाशात् 'अन्यत्र' पार्थक्येन 'ब्रह्म' ब्राह्मण-जातिं 'वेद' मन्यते । तमयथार्थदर्शिनं पुरुषं 'ब्रह्म' ब्राह्मणजातिः 'परादात्' परादध्यात् पराकुर्यात् कैवल्यासंबंधिनं कुर्यात् । अयमनात्मस्वरूपेण मां पश्यतीत्यपराधादिति भावः । परमात्मा हि सर्वेषामात्मा । तथा—'क्षत्त्रं' क्षत्रियजातिः 'तं परादात्' इत्याद्युक्तं सर्वं पूर्ववत् । उक्तं सर्वमनूद्य तस्यात्मानतिरिक्तत्व-मित्युपसंहरति—इदं ब्रह्मेत्यादिना । 'यदयं' योऽयमात्मा 'द्रष्टव्यः श्रोतव्यः' इति प्रकृतः । स एवेदं सर्वं

स यथा दुन्दुभेर्हन्यमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥

स यथा वीणायै वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा शङ्खस्य ध्मायमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥

---

स यथा दुंदुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय । दुंदुभेस्तु ग्रहणेन दुंदुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥

स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय । वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा शंखस्य ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय । शंखस्य तु ग्रहणेन शंखध्मस्य वा शब्दो गृहीतः ॥ ९ ॥

---

उक्तमनुक्तं च । न ततः पृथगस्तीत्यर्थः । यस्मादात्मनो जायते आत्मन्येव लीयते आत्ममयं च स्थितिकाले एवमात्मव्यतिरिक्तं किमपि नास्तीति भावः ॥ ६ ॥

कथं ? पुनरिदानीमिदं सर्वमात्मैवेति ग्रहीतुं शक्यते इत्याशंकायां घटः स्फुरतीत्यादिप्रत्ययमाश्रित्य चिन्मात्रानुगमात् सर्वत्र चित्स्वरूपतैवेति गम्यते । यत्स्वरूपव्यतिरेकेण यस्याग्रहणं तस्य तदात्मकत्वमेवेति व्याप्तौ दृष्टांतत्रयमाह–स यथा दुन्दुभेः इति । 'सः' इति दृष्टांतः । यथा लोके 'दुन्दुभेः' भेर्यादेर्हन्यमानस्य दण्डादिना ताड्यमानस्य 'बाह्यान्' बहिर्भूतान् शब्दान् शब्दविशेषान् दुन्दुभिशब्दसामान्यान्निकृष्टान् दुन्दुभिशब्दविशेषान् उच्चनीचादीन् 'ग्रहणाय' ग्रहीतुं न शक्नुयात् न समर्थो भवेत् । कथं ? तर्हि दुन्दुभिशब्दविशेषाणां ग्रहणमित्यत आह–दुन्दुभेस्त्विति । 'दुन्दुभेस्तु' दुन्दुभिशब्दसामान्यस्य ग्रहणेन तु 'दुन्दुभ्याघातस्य वा' दुन्दुभेराहननमाघातः तस्य दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य 'ग्रहणेन तु' दुन्दुभिशब्दविशेषो गृहीतः स्यात् । यथा एवं शब्दविशेषाः शब्दसामान्यान्नातिरिच्यन्ते । तथा स्फुरणात्मकब्रह्मसामान्यात् स्फोर्यमाणाः पदार्था नातिरिच्यन्त इत्यर्थः ॥ ७ ॥

तथा 'स यथा वीणायै वाद्यमानायै' इति । वीणाया वाद्यमानाया इत्यर्थः । षष्ठ्यर्थे चतुर्थ्यौ । समानमन्यत् ॥ ८ ॥

तथा 'स यथा शङ्खस्य ध्मायमानस्य' शब्देन संयोज्यमानस्यापूर्यमाणस्येत्यर्थः 'न बाह्यान्' शब्दान् शक्नुयादित्येवमादि पूर्ववत् । अनेकदृष्टांतोपादानं इह सामान्यबहुत्वख्यापनार्थम् । अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सर्वेऽपि पदार्थाः स्थितिकाले प्रज्ञानघनप्रत्यगात्मैकत्वं गता इति द्योतनार्थमित्यर्थः ॥ ९ ॥

स युथाऽऽर्द्रैधाग्नेरभ्युाहितस्य । पृथग्धूमा व्विनिश्चुरन्त्येवम्वाऽअरे-ऽस्यु महुतो भूतुस्य निुश्वसितमेतद्युदृग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरुसऽइतिहासुः पुराणुम्विद्याऽउपनिषदः श्लोकाः सूत्राण्यनुव्या-ख्यानानि व्याख्यानान्युस्यैवैतानि सुर्व्वाणि निुश्वासितानि ॥ १० ॥

स युथा सुर्व्वासामपाᳪं समुद्रऽएकायनुम् । ( मे ) एवᳪं सुर्व्वेषाᳪं

---

स यथा आर्द्रैधाग्नेरभ्याहितस्य पृथक् धूमा विनिश्चरंति । एवं वा अरे अस्य महतो भूतस्य निश्वसितमेतत् । यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्याः उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि । अस्यैवैतानि सर्वाणि निश्वसितानि ॥ १० ॥

स यथा सर्वासामपां समुद्र एकायनम् । एवं सर्वेषां स्पर्शानां त्वगेकायनम् । एवं सर्वेषां

---

एवं स्थितिकाले जगतो ब्रह्मैकत्वमवगमय्य उत्पत्तिकालेऽपि तथा अवगमयितुं कार्याणामुत्पत्तेः प्राक् कारणा-दभिन्नत्वं दर्शयितुमाह–स यथेति । ' सः ' इति दृष्टांतः । यथा आर्द्रैरेधैः काष्ठैरिद्धोऽग्निः ' आर्द्रै-धाग्निः ' तस्मात् ' अभ्याहितस्य ' अभितः प्रज्वलितात् पृथक् नानाप्रकारं धूमा विनिश्चरन्ति विनिर्गच्छन्ति । ' अभ्याहितस्य ' इति पंचम्यर्थे षष्ठी । धूमग्रहणं विष्फुलिङ्गादीनामप्युपलक्षणपरम् । धूमविष्फुलिङ्गादयो विनिर्गच्छंतीत्यर्थः । तथा ऋग्वेदादिप्रपञ्चः उत्पत्तेः प्राङ् न ब्रह्मणः पृथगस्तीत्यभिप्रेत्य दार्ष्टांतिकमाह–एवं वा इति । यथा अयं दृष्टान्तः । ' एवं वै ' एवमेव ' अरे ' मैत्रेयि ! ' अस्य ' प्रकृतस्य परामात्मनः ' महतः ' अनवच्छिन्नस्य ' भूतस्य ' परमार्थस्वभावस्य एतद्वक्ष्यमाणं ' निश्वसितं ' अयत्नोत्पादितं निश्वसितमिव निश्वसि-तम् । किमेतदित्यत आह–यदृग्वेद इति । ' यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः ' इति चतुर्विधं मन्त्रजातम् । अथर्वणा अङ्गिरसा च दृष्टा मन्त्राः ' अथर्वाङ्गिरसः ' । ' इतिहासः ' उर्वशीपुरूरवसोः संवादादिरूपः । यथा–" उर्वशी हाप्सराः "–( श. प. ११ । ५ । १ । १ ) इत्यादि ब्राह्मणमेव । ' पुराणं '–" असद्वाऽ इदमग्रऽ आसीत् "–( श. प. ६ । १ । १ । १ ) इत्यादि । ' विद्याः ' देवजनविद्याः " वेदः सोऽयं "–( श. प. १३ । ४ । ३ । १० ) इत्याद्याः । ' उपनिषदः ' " प्रियमित्ये-तदुपासीत "–( श. प. १४ । ६ । १० । ३ ) इत्याद्याः । ' श्लोकाः ' ब्राह्मणप्रभवाः–" तदप्येते श्लोकाः " ( श. प. बृ. उ. ४ । २ । ११ ) इत्यादयः । ' सूत्राणि ' वस्तुसङ्ग्राहकानि वाक्यानि वेदे । यथा–"आत्मेत्येवोपासीत"–( श. प. १४ । ४ । २ । २८ ) इत्येवमादीनि । 'अनुव्याख्यानानि' मन्त्रविवरणानि । ' व्याख्यानानि ' अर्थवादाः । अथवा ' अनुव्याख्यानानि ' वस्तुसंग्राहकवाक्यानां विवरणवाक्यानि । यथा–" प्राणा वै सत्यं "–( श. प. १३ । ५ । १ । २३–१४ । ५ । २ । ३ ) इति शिशुमूर्तामूर्तब्राह्मणे । ' व्याख्यानानि ' " मेधया हि तपसाऽजनयत्पिता "–( श. प. १४ । ४ । ३ । २ । ) इत्येवमादीनि मंत्रविवरणानि । ' एतानि ' उक्तानि ऋग्वेदादीनि मंत्रब्राह्मणात्मकानि ' अस्यैव ' ईश्वरस्य ' निश्वसितानि ' । तथा च पुरुषबुद्धेः प्रयत्नपूर्वकत्वमन्तरेणैव नियतरचनावतः पूर्वसिद्धस्यैव वेदस्य सुप्तप्रबुद्धवत् सृष्टिसमये अभि-व्यक्तत्वोक्तेर्वेदः स्वार्थे निरपेक्ष एव प्रमाणम् । अत एव–" इदं सर्वं यदयमात्मेति " वेदस्य अप्रामाण्य-कारणनिरासार्थं वा अस्याः श्रुतेः प्रवृत्तिरिति भावः ॥ १० ॥

अथ प्रलयकालेऽपि अस्य प्रपंचस्य ब्रह्मात्मकत्वं प्रतिपत्तव्यमिति दृष्टांतपूर्वकमाह–स यथा सर्वासामपा-

स्पर्शानान्त्वगेकायनमेवꣳ सर्व्वेषाङ्गन्धानां नासिकेऽएकायनमेवꣳ सर्व्वेषाꣳ रसानाञ्जिह्वैकायनमेवꣳ सर्व्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्व्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्व्वेषाꣳ सङ्कल्पाना-म्मनऽएकायनमेवꣳ सर्व्वेषाम्वेदानाꣳ हृदयमेकायनमेवꣳ सर्व्वेषाङ्कर्म्मणाꣳ हस्तावेकायनमेवꣳ सर्व्वेषामध्वनाम्पादावेकायनमेवꣳ सर्व्वेषा-मानन्दानामुपस्थऽएकायनमेवꣳ सर्व्वेषाम्विसर्गाणाम्पायुरेकायनमेवꣳ-सर्व्वासाम्विद्यानाम्वागेकायनम् ॥ ११ ॥

(५ꣳ) स यथा सैन्धवखिल्यः । (ऽ) उदके प्रास्तऽउदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्याद्यतोयतस्तदाददीत लवणमेवैवम्वाऽअरऽइदम्महद्भूतमनन्तमपारम्विज्ञानघनऽ एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥

---

गंधानां नासिके एकायनम् । एवं सर्वेषां रसानां जिह्वैकायनम् । एवं सर्वेषां रूपाणां चक्षुरेकायनम् । एवं सर्वेषां शब्दानां श्रोत्रमेकायनम् । एवं सर्वेषां संकल्पानां मन एकायनम् । एवं सर्वेषां वेदानां हृदयमेकायनम् । एवं सर्वेषामध्वनां पादावेकायनम् । एवं सर्वेषामानंदामामुपस्थ एकायनम् । एवं सर्वेषां विसर्गाणां पायुरेकायनम् । एवं सर्वासां विद्यानां वागेकायनम् ॥ ११ ॥

स यथा सैंधवखिल्य उदके प्रास्त उदकमेवानुदिलीयेत । न हास्योद्ग्रहणायेव स्यात् ।

---

मिति । 'सः' इति दृष्टांतः । 'यथा' येन प्रकारेण 'सर्वासां' नदीवापीतडागादिगतानां 'अपां' समुद्रोऽब्धिः उदकसामान्यं एकायनमेकगमनं एकप्रलयः अविभागप्राप्तिरित्यर्थः । यथाऽयं दृष्टांतः । 'एवं सर्वेषां स्पर्शानां'—मृदुकठिनादीनां वायोरात्मभूतानां 'त्वगेकायनं' त्वगिति त्वग्विषयं स्पर्शसामान्यमात्रमाश्रयः । तथा 'सर्वेषां गन्धानां' पृथिवीविशेषाणाम् 'नासिके' घ्राणे विषयसामान्यम् । तथा 'सर्वेषां रसानां' अब्विशेषाणाम् जिह्वेन्द्रियं विषयसामान्यम् । तथा 'रूपाणां' तेजोविशेषाणां 'चक्षुः' विषयसामान्यम् । तथा शब्दानामाकाशविशेषाणां 'श्रोत्रं' विषयसामान्यम् । एतान्यपि विषयविशेषसामान्यानि मनोविषये संकल्पे अन्तर्भवन्ति—तेषां संकल्पपूर्वकत्वात् । 'सर्वेषां' संकल्पविशेषाणां 'मनः' विषयसामान्यं सङ्कल्पमात्रमेकायनम् । तस्य संकल्पस्य च अध्यवसायपारतंत्र्यदर्शनात् बुद्धिविषयविशेषेषु वेदशब्दवाच्येषु विद्याशब्दवाच्येषु च अध्यवसाये अंतर्भावः । 'सर्वेषां वेदानामिति' सर्वासां विद्यानां 'हृदयं' बुद्धिसामान्यं विज्ञानमात्रमेकायनम् । तदपि कारणभूते प्रज्ञानघने ब्रह्मणि लीयत इति बोध्यम् । तथा 'सर्वेषां कर्म्मणां हस्तावेकायनं' इत्यादिना कर्मेन्द्रियाणां तद्विषयविशेषाणां आदानगमनानन्दविसर्गवेदनानां च तत्तत्सामान्येषु लयः । तेषां च प्राणे, प्राणस्यापि कारणात्मनि, इत्यभिप्रायतः श्रुत्या उच्यत इति भावः ॥ ११ ॥

एवं प्राकृतिकप्रलयप्रदर्शनेन सर्वं मूलप्रकृतिभूतमद्वयात्मतत्त्वमित्यवगमितम् । "इदं सर्वं यदयमात्मा" कं(६)

## सा होवाच मैत्रेयी । (अत्र) अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञा-ऽस्तीति ॥ १३ ॥

---

यतोयतस्तत् आददीत । लवणमेव । एवं वा अरे इदं महद्भूतमनंतमपारं विज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति । न प्रेत्य संज्ञा अस्ति इति अरे ब्रवीमि । इति होवाच याज्ञवल्क्यः ॥ १२ ॥

सा होवाच मैत्रेयी । अत्रैव मा भगवान् अमूमुहत् । न प्रेत्य संज्ञा अस्तीति ॥ १३ ॥

---

इति प्रतिज्ञातत्वात् इदानीं ब्रह्मविद्यया अविद्याऽतिरोधद्वारेण यः अयमात्यंतिकः प्रलयः, तं दर्शयितुं दृष्टांतमुपादत्ते—स यथेति । ' सः ' इति दृष्टांतः । ' यथा ' लोके ' सैन्धवखिल्यः ' स्यंदनात्सिंधुरुदकं तस्य विकारः तत्र भवो वा सैंधवः, स चासौ खिल्यो लवणशकलश्चेति ' सैंधवखिल्यः ' । स्वार्थे यण्प्रत्ययः । ' उदके ' सिंधौ स्वयोनौ ' प्रास्तः ' प्रक्षिप्तः सन् खिल्यारंभकत्वेन तदवयवभूतं ' उदकं ' विलीयमानं ' अनु ' पश्चात् ' विलीयेतैव ' उदकभावमापद्येतैव । ' अस्य ' विलीनस्य खिल्यस्य ' उद्ग्रहणाय ' उद्धृत्य पूर्ववत् ग्रहीतुं ' न ह ' नैव कश्चित् सुनिपुणोऽपि समर्थः ' स्यात् ' । अत्र ' इव ' शब्दोऽनर्थकः । कस्मात् ? ' यतोयतः ' यस्मात् यस्मात् देशात् तदुदकमाददीत गृहीत्वा आस्वादयेत् । तत्र तत्र ' लवणमेव ' लवणास्वादमेव तदुदकम् । न तु खिल्यभावः । यथा अयं दृष्टांतः । ' एवं वै ' एवमेव ' अरे ' मैत्रेयि ! ' इदं ' परमात्माख्यं विलीनखिल्यभावं ब्रह्मतत्त्वं ' महद्भूतं ' महच्च तत् भूतं च महद्भूतं सर्वमहत्तरत्वात् आकाशादिकारणत्वाच्च महत् त्रिष्वपि कालेषु स्वरूपाव्यभिचारात् सर्वदैव परिनिष्पन्नम् । भूतमिति त्रैकालिको निष्ठाप्रत्ययः । अथवा भूतशब्दः परमार्थवाची । महच्च तत् पारमार्थिकञ्चेत्यर्थः । ' अनन्तं ' न विद्यते अंतः कारणं पूर्वावधिभूतं यस्य तदनन्तम् । ' अपारं ' न विद्यते पारः उत्तरावधिभूतं कार्यं यस्य तदपारम् । ' विज्ञानघन एव ' विज्ञानं विज्ञप्तिः विज्ञानञ्च तत् घनश्चेति विज्ञानघनः । घनशब्दो जात्यंतरप्रतिषेधार्थः । यथा सुवर्णघनः अयोघन इति । एवशब्दोऽवधारणार्थः । स विज्ञानघनो विशुद्धज्ञप्तिमात्रैकरस एव आत्मा ' एतेभ्यो भूतेभ्यः ' कार्यकारणविषयाकारपरिणतेभ्यो नामरूपात्मकेभ्यः सत्यशब्दवाच्येभ्यो हेतुभूतेभ्यः मनुष्योऽहं ब्राह्मणोऽहं इत्यादिखिल्यभावेन ' समुत्थाय ' सम्यगुत्थाय उदकात्सूर्यचन्द्रादिप्रतिबिंबवत् ' तानि ' कार्यकारणविषयाकारपरिणतानि भूतानि आत्मनो विशेषात्मखिल्यभावहेतुभूतानि शास्त्राचार्योपदेशेन ब्रह्मविद्यया प्रविलापितानि ' विनश्यंति ' सन्ति ' अनु ' पश्चात् उदकादिहेत्वपनये च चन्द्रसूर्यादिप्रतिबिंबवत् एष विशेषात्मखिल्यभावो विनश्यति । तथा च अविद्याकार्यरूपखिल्यभावहेत्वपगमे प्रज्ञानघनमनन्तमपारं स्वस्थं व्यवतिष्ठतीत्यर्थः । अस्याश्च कैवल्यावस्थायां विशेषज्ञानं नास्तीत्याह—न प्रेत्येति । ' अरे ' मैत्रेयि ! एवं कार्यकारणसंघातेभ्यः विमुक्तस्य ब्रह्मविदः ' प्रेत्य ' विमुच्य ' संज्ञा ' अहमसौ अमुष्य पुत्रः ममेदं क्षेत्रं धनं सुखी दुःखीत्येवमादिलक्षणं विशेषसंज्ञा विशेषज्ञानं नास्तीति ' अहं ब्रवीमि ' इत्येवं ' ह ' किल परमार्थदर्शनं ' याज्ञवल्क्यः ' मैत्रेय्यै भार्यायै उवाचोक्तवान् ॥ १२ ॥

एवं प्रतिबोधिता ' सा ' मैत्रेयी ' ह ' किल उवाचोक्तवती । ' अत्रैव ' एतस्मिन्नेव एकस्मिन् वस्तुनि ब्रह्मणि पूर्वं ' विज्ञानघन एवेति ' प्रतिज्ञाय पुनः " न प्रेत्य संज्ञाऽस्तीति " विज्ञानघनसंज्ञाऽभावञ्च विरुद्ध-

स होवाच याज्ञवल्क्यः । ( ल्क्यो ) न वाऽअरेऽहम्मोहम्ब्रवीम्यलम्वाऽअरऽइदम्विज्ञानाय ॥ १४ ॥

यत्र हि द्वैतमिव भवति । तदितरऽइतरम्पश्यति तदितरऽइतरञ्जिघ्रति तदितरऽइतरमभिवदति तदितरऽइतरꣳ शृणोति तदितरऽ इतरम्मनुते तदितरऽइतरम्विजानाति ॥ १५ ॥

यत्र त्वस्य सर्व्वमात्मैवाभूत् । ( त्त ) तत्केन कम्पश्येत्तत्केन कञ्जिघ्रेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कम्मन्वीत तत्केन कम्विजानीयाद्येनेदꣳ सर्व्वम्विजानाति तङ्केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥ १६ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपानिषदि द्वितीये प्रपाठके चतुर्थं ब्राह्मणम् । १४ ( ४ ) २ । ४ ॥ ( ५ ) २–४ ॥

---

स होवाच याज्ञवल्क्यः । न वा अरे अहं मोहं ब्रवीमि । अलं वा अरे इदं विज्ञानाय ॥ १४ ॥

यत्र हि द्वैतमिव भवति । तदितर इतरं पश्यति । तदितर इतरं जिघ्रति । तदितर इतरमभिवदति । तदितर इतरं शृणोति । तदितर इतरं मनुते । तदितर इतरं विजानाति ॥ १५ ॥

यत्र तु अस्य सर्वमात्मैवाभूत् । तत्केन कं पश्येत् । तत् केन कं जिघ्रेत् । तत् केन कमभिवदेत् ।

---

धर्मत्वं आचक्षाणः ' भगवान् ' पूजावान् ' मा ' मां ' अमूमुहत् ' मोहङ्कृतवान् । न हि उष्णः शीतश्चाग्निरवैको भवति । अतः मूढाऽस्म्यत्रेत्यर्थः ॥ १३ ॥

एवमुक्तः ' सः ' ' याज्ञवल्क्यः ' ' ह ' प्रतिवचनं ' उवाच ' । ' अरे ' मैत्रेयि ! ' अहं मोहं ' न वै ब्रवीमि ' मोहनवाक्यं नैव ब्रवीमीत्यर्थः । " न प्रेत्य संज्ञाऽस्ति " इति तु विशेषविज्ञानानामभावस्यैवोक्तत्वात् । ' अरे ' मैत्रेयि ! शृणु । यन्महद्भूतमनन्तमपारं प्रज्ञानघनस्वरूपं यथा व्याख्यातम् । ' इदमेव विज्ञानाय ' विज्ञातुं ' अलं ' पर्याप्तम् । इति याज्ञवल्क्य उक्तवानित्यर्थः ॥ १४ ॥

अथ एवमुक्तं विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्यां दृढीकुर्वन्नाह—**यत्र** हीति । ' यत्र ' यस्मिन् अविद्याकल्पिते कार्यकारणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे ' हि ' प्रसिद्धं ' द्वैतमिव ' परमार्थतोऽद्वैते ब्रह्मणि भिन्नमिव आत्मनो वस्त्वंतरं भासमानं ' भवति ' । तत्तत्र तस्मिन् काले ' इतरः ' असौ परमात्मनः खिल्यभूतः आत्मा परमार्थचंद्रादेरिवोदकचंद्रादिप्रतिबिंबद्रष्टेतरेण चक्षुरादिकरणेन ' इतरं ' द्रष्टव्यं रूपादिपदार्थं ' पश्यति ' । एवमितरो घ्राता ' इतरेण ' घ्राणेनेतरञ्जिघ्रति । तथा ' अभिवदति ' शृणोति ' ' मनुते ' ' विजानाति ' इयमविद्यावदवस्था ॥ १५ ॥

यत्र तु ब्रह्मविद्यया अविद्या नाशमुपगमिता, तत्रात्मव्यतिरेकेणान्यस्याभाव इति व्यतिरेकं दर्शयितुमाह—**यत्र त्वस्येति** । ' यत्र ' यस्यां विद्यावस्थायां ' अस्य ' ब्रह्मविदः ' सर्वं ' कर्तृकर्मक्रियाफलादिकं आत्मन्येव

इयम्पृथिवी । सर्व्वेषाम्भूतानाम्मध्वस्यै पृथिव्यै सर्व्वाणि भूतानि मधु यश्चायमस्याम्पृथिव्यान्तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १ ॥

---

तत् केन कं शृणुयात् । तत् केन कं मन्वीत । तत् केन कं विजानीयात् । येनदं सर्वं विजानाति । तं केन विजानीयात् । विज्ञातारम् अरे केन विजानीयात् इति ॥ १६ ॥

मधुब्राह्मणम् ।

इयं पृथिवी सर्वेषां भूतानां मधु । अस्यै पृथिव्यै सर्वाणि भूतानि मधु । यश्चायमस्यां पृथिव्यां तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं शारीरस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मा इदममृतमिदं ब्रह्मेदं सर्वम् ॥ १ ॥

---

प्रविलापितं सत् ' आत्मैवाभूत् ' आत्मैव संवृत्तम् । ' तत्र ' तस्यामवस्थायां ' केन ' कारणेन ' कं ' द्रष्टव्यं विषयं ' कः ' ' पश्येत् ' । तथा--" जिघ्रेदित्यादि विजानीयात् " इत्यंतं व्याख्येयम् । न कोऽपि केनापि कमपि विजानीयात् । करणादिकारकानुपपत्तेः । एवं कैवल्यावस्थायां विशेषविज्ञानाभावं अन्वयव्यतिरेकाभ्यां प्रतिपाद्य तत्रैव कैमुतिकन्यायं दर्शयितुमविद्यावस्थायामपि साक्षिणो ज्ञानविषयत्वमाह-येनेदमिति । यत्राप्यविद्यावस्थायां अन्योऽन्यं पश्यति । तत्रापि ' येन ' कूटस्थबोधेन व्याप्तो लोकः ' सर्वमिदं विजानाति ' । ' तं ' साक्षिणं ' केन ' करणेन को वा विज्ञाता ' विजानीयात् ' । न केनापीत्यर्थः । येन चक्षुरादिना लोको जानाति । तस्य विषयग्रहणेनैव उपक्षीणत्वात् न साक्षिणि प्रवृत्तिरिति भावः । किं पुनर्वक्तव्यं, विद्याऽवस्थस्यासंसारिण आत्मनो ज्ञानाविषयत्वमित्याह-विज्ञातारमिति । ' अरे ' मैत्रेयि ! यः पुनः केवलः अद्वयः विद्यावस्थः विज्ञातैव वर्तते तं ' विज्ञातारं ' ' केन ' करणेन ' विजानीयात् ' । न केनापीति भावः ॥ १६ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गत माध्यंदिनशाखोपनिषद्-बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां द्वितीयेऽध्याये चतुर्थं मैत्रेयीब्राह्मणं परिसमाप्तम् ॥ १४ । (९) २ । ४ ॥

पूर्वं मैत्रेयीब्राह्मणे "इदं सर्वं यदयमात्मा" इति प्रतिज्ञातस्य आत्मन उत्पत्तिस्थितिलयहेतुत्वमुक्त्वा प्रतिज्ञातस्यार्थस्य निगमनार्थं मधुब्राह्मणमारभ्यते--इयं पृथिवीति । ' इयं ' प्रसिद्धा ' पृथिवी ' ' सर्वेषां भूतानां ' ब्रह्मादिस्तंबपर्यंतानां प्राणिनां ' मधु ' कार्यं मध्विव मधु । यथा एको मध्वपूपः अनेकैर्मधुकरैर्निर्वर्तितः एवमियं पृथिवी सर्वभूतनिर्वर्तिता इत्यर्थः । तथा ' अस्यै पृथिव्यै ' अस्याः पृथिव्याः ' सर्वाणि भूतानि मधु ' कार्यम् । किंच-' अस्यां पृथिव्यां ' ' यश्चायं ' तेजोमयश्चिन्मात्रप्रकाशमयः अमृतमयोऽमरणधर्मा ' पुरुषः ' । ' यश्चायमध्यात्मं ' आत्मानं शरीरमधिकृत्य वर्तत इति अध्यात्मम् । ' शारीरः ' शरीरे भवः । पूर्ववत् ' तेजोमयोऽमृतमयः पुरुषः ' सर्वलिङ्गाभिमानी इत्येवं उभयविधोऽपि पुरुषः ' सर्वेषां भूतानां ' उपकारकत्वात् करणत्वेन

( मि ) इमाऽआपः । सर्व्वेषाम्भूतानाम्मध्वासामपाᳬ सर्व्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मᳬ रेतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदᳬ सर्व्वम् ॥ २ ॥

( म ) अयमग्निः । सर्व्वेषाम्भूतानाम्मध्वस्याग्नेः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदᳬ सर्व्वम् ॥ ३ ॥

( म ) अयमाकाशः । सर्व्वेषाम्भूतानाम्मध्वस्याकाशस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चाय-

---

इमा आपः सर्वेषां भूतानां मधु । आसामपां सर्वाणि भूतानि मधु । यश्चायमास्वप्सु तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं रैतसस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मा इदममृतमिदं ब्रह्मेदं सर्वम् ॥ २ ॥

अयमग्निः सर्वेषां भूतानां मधु । अस्याग्नेः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः । यश्चायमध्यात्मं वाङ्मयस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मा इदममृतमिदं ब्रह्मेदं सर्वम् ॥ ३ ॥

अयमाकाशः सर्वेषां भूतानां मधु । अस्याकाशस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्नाकाशे

---

'मधु'; 'सर्वाणि भूतानि' अस्य कार्यत्वेन मधु इति चशब्दसामर्थ्यात् व्याख्येयम् । पृथिवी सर्वाणि भूतानि पार्थिवः पुरुषः शारीरश्च इत्येवमेतच्चतुष्टयं एकं मधु सर्वभूतकार्यम् । सर्वाणि च भूतानि अस्य पृथिव्यादेः कार्यम् । अतोऽस्य पृथिव्यादेः परस्परमुपकार्योपकारकभावः । यस्मादेकस्मात्कारणात् एतज्जातं तदेव एकं परमार्थतो ब्रह्म । इतरत्कार्यं च आरंभणं विकारो नामधेयमात्रम्, इत्याशयेनाह—अयमेवेति । 'अयमेव सः' योऽयं पूर्वं मैत्रेय्यै "इदं सर्वं यदयमात्मा" ( ४ ब्रा. कं. ६ ) इति प्रतिज्ञातः स एवात्मा अयमुक्तश्चतुर्विधमध्वात्मकः, नान्यः । इदं चतुष्टयकल्पनाऽधिष्ठानब्रह्मविषयं ज्ञानं अमृतत्वसाधनं इदमेवात्मतत्त्वं "ब्रह्म ते ब्रवाणि व्येव ते ज्ञपयिष्यामि" इति अध्यायादौ प्रकृतं ब्रह्म यद्विषया विद्या ब्रह्मविद्या इत्युच्यते । 'इदमेव सर्वं' सर्वाप्तिसाधनं, यस्माद्ब्रह्मणो विज्ञानात् सर्वं भवति । नान्यत् किंचिदस्तीत्यर्थः । एवमन्येऽपि मधुपर्याया व्याख्येयाः ॥ १ ॥

तथा 'आपो मधु' । 'अध्यात्मं रैतसः पुरुषः' रेतसि भवो रैतसः । रेतस्यपां विशेषतोऽवस्थानम् "आपो रेतो भूत्वा शिश्नं प्राविशन्" ( ऐ. आ. २–४ ) इति श्रुत्यंतरात् ॥ २ ॥

तथा 'अग्निर्मधु' । वाङ्मयो वागभिमानी पुरुषोऽग्निरध्यात्मम् । वाच्यग्नेर्विशेषतोऽवस्थानम् "अग्निर्वाग्भूत्वा मुखं प्राविशत्" । ( ऐ. आ. २–४ ) इति श्रुतेः ॥ ३ ॥

तथा 'आकाशो मधु' । 'अध्यात्मं हृद्याकाशः' हृदयाकाशः । "य एषोन्तर्हृदयऽ आकाशः"—( श. प. १४–६–१–१७ ) इत्यादिना पूर्वं व्याख्यातः ॥ ४ ॥

मध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे-
दममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ४ ॥

( म ) अयम्वायुः । सर्व्वेषाम्भूतानाम्मध्वस्य वायोः सर्व्वाणि भूतानि
मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्प्राण-
स्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ
सर्व्वम् ॥ ५ ॥

( म ) अयमादित्यः । सर्व्वेषाम्भूतानाम्मध्वस्यादित्यस्य सर्व्वाणि
भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायम-
ध्यात्मञ्चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृत-
मिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ६ ॥

( म ) अयञ्चन्द्रः । सर्व्वेषाम्भूतानाम्मध्वस्य चन्द्रस्य सर्व्वाणि भूतानि
मधु यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्मानस-

---

तेजोमयोऽमृतमयः पुरुषः । यश्चायमध्यात्मं हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषः । अयमेव स । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ४ ॥

अयं वायुः सर्वेषां भूतानां मधु । अस्य वायोः सर्वाणि भूतानि मधु । यश्चायमस्मिन् वायौ तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं प्राणस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ५ ॥

अयमादित्यः सर्वेषां भूतानां मधु । अस्यादित्यस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् आदित्ये तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं चाक्षुषस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ६ ॥

अयं चन्द्रः सर्वेषां भूतानां मधु । अस्य चंद्रस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् चंद्रे

---

तथा 'वायुर्मधु' । 'अध्यात्मं प्राणः' घ्राणेन्द्रियम् । "वायुः प्राणो भूत्वा नासिके प्राविशत्" । ( ऐ.आ.२–४ ) इति श्रुत्यंतरात् । भूतानां शरीरारंभकत्वेनोपकारान्मधुत्वं, तदंतर्गतानां तेजोमयादीनां करणत्वेनोपकारान्मधुत्वम् ॥ ५ ॥

तथा ' आदित्यो मधु ' । ' चाक्षुषः ' ' पुरुषः अध्यात्मम् ' । ' आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् "— ( ऐ. आ. २–४ ) इति श्रुतेः ॥ ६ ॥

तथा ' चन्द्रो मधु ' । ' अध्यात्मं मानसश्चन्द्रमाः ' । " चंद्रमा मनो भूत्वा हृदयं प्राविशत् " ' ऐ. आ. २ । ४ ) इति श्रुतेः ॥ ७ ॥

स्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ७ ॥

( मि ) इमा दिशः । सर्व्वेषाम्भूतानाम्मध्वासान्दिशाꣳ सर्व्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ८ ॥

( मि ) इयम्विद्युत् । ( त्मु ) सर्व्वेषाम्भूतानाम्मध्वस्यै विद्युतः सर्व्वाणि भूतानि मधु यश्चायमस्याम्विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मन्तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ९ ॥

( म ) अयꣳ स्तनयित्नुः । सर्व्वेषाम्भूतानाम्मध्वस्य स्तनयित्नोः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १० ॥

---

तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं मानसस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ७ ॥

इमा दिशः सर्वेषां भूतानां मधु । आसां दिशां सर्वाणि भूतानि मधु । यश्चायमासु दिक्षु तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्कस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ८ ॥

इयं विद्युत्सर्वेषां भूतानां मधु । अस्यै विद्युतः सर्वाणि भूतानि मधु । यश्चायमस्यां विद्युति तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं तैजसस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ९ ॥

अयं स्तनयित्नुः सर्वेषां भूतानां मधु । अस्य स्तनयित्नोः सर्वाणि भूतानि मधु । यश्चाय-

---

तथा 'दिशो मधु' । यद्यपि दिशां श्रोत्रमध्यात्मम् । तथाऽपि शब्दप्रतिश्रवणवेलायां तु विशेषतः सन्निहितो भवति इत्यध्यात्मं प्रातिश्रुत्क इति विशेषणम् । प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः 'प्रातिश्रुत्कः' । "दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्" ( ऐ. आ. २ । ४ ) इति श्रुतेः ॥ ८ ॥

तथा 'विद्युत्' 'त्वगिन्द्रियं' 'मधु' । तेजसि भवः 'तैजसः अध्यात्मम्' ॥ ९ ॥

तथा 'स्तनयित्नुः' पर्जन्यः 'मधु' । शब्दे भवः 'शाब्दः' । यद्यपि अध्यात्मं शब्दे भव इति

(म) अयुन्धर्म्मः । सुर्व्वेषाम्भूतानाम्मुध्वस्य धर्म्मुस्य सुर्व्वाणि भूतानि मुधु युश्चायुमस्मिुन्धर्म्मे तेजोमुयोऽमृतमुयः पुरुषो युश्चायुमध्यात्मुन्धार्म्मुस्तेजोमुयोऽमृतमुयः पुरुषोऽयुमेव सु योऽयुमात्मेदुममृतमिदम्ब्रह्मेदꣳ सुर्व्वम् ॥ ११ ॥

(मि) इदुꣳ सत्यम् । (ꣳ) सुर्व्वेषाम्भूतानाम्मुध्वस्य सत्युस्य सुर्व्वाणि भूतानि मुधु युश्चायुमस्मिुन्त्सत्ये तेजोमुयोऽमृतमुयः पुरुषो युश्चायुमध्यात्मुꣳ सात्युस्तेजोमुयोऽमृतमुयः पुरुषोऽयुमेव सु योऽयुमात्मेदुममृतमिदम्ब्रह्मेदꣳ सुर्व्वम् ॥ १२ ॥

---

मस्मिन् स्तनयित्नौ तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १० ॥

अयन्धर्म्मः सर्वेषां भूतानां मधु । अस्य धर्मस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् धर्मे तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं धार्मस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ११ ॥

इदं सत्यं सर्वेषां भूतानां मधु । अस्य सत्यस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन् सत्ये तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं सात्यस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १२ ॥

---

व्युत्पत्त्या शाब्दः पुरुषः । तथाऽपि स्वरे विशेषतो भवतीति 'सौवरः' इति विशेषणम् । स्वरे भवः सौवरः ॥ १० ॥

सर्वेषां शरीरिणां प्रत्येकं स्तनयित्न्वन्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्यकारणसंघातात्मना उपकुर्वन्तो मधु भवंतीत्युक्तम् । ते येन प्रयुक्ताः शरीरिभिः संबध्यमाना मधुत्वेनोपकुर्वंति तद्वक्तव्यमितीदमारभ्यते— **अयं धर्म्म** इति । धर्मस्य शास्त्रैकगम्यत्वेन परोऽक्षत्वात् अयमिति निर्देशानर्हत्वेऽपि पृथिव्यादेर्द्धर्मकार्यस्य प्रत्यक्षत्वात् कारणस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवत् 'अयं धर्मः' इति व्यपदेशोपपत्तिरिति भावः । "तच्छ्रेयोरूपमत्यसृजत धर्मम्" । (श. प.) इत्यादौ व्याख्यातः श्रुतिस्मृतिलक्षणः क्षत्त्रादीनामपि नियन्ता पृथिव्यादीनां परिणामहेतुत्वात् जगतो वैचित्र्यकृत् प्राणिभिरनुष्ठीयमानरूपः अयमिति प्रत्यक्षेण व्यपदेश्यो धर्मः अपूर्वाख्यः 'मधु'। स च सामान्यरूपेण विशेषरूपेण च कार्यारंभकः । तत्र पृथिव्यादिप्रयोक्तरि धर्मे सामान्यरूपेण तदारंभकत्वमाह—**यश्चायमस्मिन् धर्म्मे** इति । कार्यकारणसंघातकर्तरि तु 'धर्म्मे' विशेषरूपेण कार्यकारणारंभकत्वमाह—**यश्चायमध्यात्मं धर्म** इति । कार्यकारणसंघातकर्तरि धर्मे भवो धार्म्मः ॥ ११ ॥

सत्यमपि धर्मवत् द्विविधम् । तत्र सामान्यरूपं पृथिव्यादिषु कारणत्वेनानुगतमित्याह—**यश्चायमस्मिन्**

( मि ) इदम्मानुषम् । ( ष्ठँ ) सर्वेषाम्भूतानाम्मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेद-ममृतमिदम्ब्रह्मेदथ्ँ सर्वम् ॥ १३ ॥

( म ) अयमात्मा । सर्वेषाम्भूतानाम्मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजो-मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदथ्ँ सर्वम् ॥ १४ ॥

( ष्ठँ ) स वाऽअयमात्मा । सर्वेषाम्भूतानामधिपतिः सर्वेषाम्भूतानाथ्ँ

---

इदं मानुषं सर्वेषां भूतानां मधु । अस्य मानुषस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्मानुषे तेजोमयः अमृतमयः पुरुषः । यश्चायमध्यात्मं मानुषस्तेजोमयः अमृतमयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १३ ॥

अयमात्मा सर्वेषां भूतानां मधु । अस्यात्मनः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नात्मनि तेजोमयः अमृतमयः पुरुषः । यश्चायमात्मा तेजोमयः अमृतगयः पुरुषः । अयमेव सः । यः अयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १४ ॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः । सर्वेषां भूतानां राजा । तद्यथा रथनाभौ च रथ-

---

**सत्ये** इति । विशेषरूपं तु सत्यसंघातत्वेनानुगतमित्याह—**यश्चायमध्यात्मं सात्य** इति । सत्ये भवः सात्यः ॥ १२ ॥

धर्मसत्याभ्यां प्रयुक्तोऽयं कार्यकारणसंघातविशेषो येन जातिविशेषेण संयुक्तो भवति तं निर्दिशति—**इदं मानुष**मिति । तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते । अतो मानुषादिजातिरपि 'सर्वेषां भूतानां मधु'। यद्यपि मानुषादिजातिरेकैव, तथाऽपि निर्दिष्टुः स्वशरीर-निविष्टा जातिराध्यात्मिकी । शरीरांतराश्रिता तु बाह्या इत्यभिप्रेत्य तद्विशिष्टं पुरुषं निर्दिशति—**यश्चायम-स्मिन्मानुषे** इति । निर्दिष्टुः स्वशरीरनिष्ठा तु आध्यात्मिकी इति तद्विशिष्टं निर्दिशति—**यश्चायमध्यात्मं मानुष** इति ॥ १३ ॥

यः पुनर्मानुषादिजातिविशिष्टः कार्यकारणसंघातः तस्य मधुत्वमाह—**अयमात्मे**ति ! 'अयमात्मा' उक्त-जातिविशिष्टो देहः न तु चेतनः । 'सर्वेषां भूतानां मधु'। यश्चायमस्मिन्नात्मनि 'तेजोमयोऽमृतमयः पुरुषः'। 'सः' अमूर्तरससर्वात्मकश्चेतनो निर्दिश्यते । अत्राध्यात्मविशेषाभावादध्यात्मं स न निर्दिश्यते, इत्यभिप्रेत्याह—**यश्चायमात्मे**ति । यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देहलिङ्गसङ्घात आत्मा । 'स यश्चायमात्मा' इत्युच्यते । 'तेजोमयोऽमृतमयः पुरुषः' इति पूर्ववत् ॥ १४ ॥

अस्यान्तिमपर्यायोक्तस्यात्मनः स्वरूपमाह—**स वाऽ अयमात्मे**ति । यस्मिन्नात्मनि खिल्यदृष्टांतवचसा प्रवेशितः,

राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्व्वे समर्पिताऽएवमेवा-
स्मिन्नात्मनि सर्व्वे प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि
सर्व्वऽएतऽआत्मानः समर्प्पिताः ॥ १५ ॥

(ऽ) इदम्वै तन्मधु । दध्युङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्य-
न्नवोचत् । तद्वान्नरा सनये दᳫँसऽउग्रमाविष्कृणोमि तन्यतुर्न्न वृष्टिम् ।
दध्युङ् ह यन्मध्वाथर्व्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६ ॥

---

नेमौ च अराः सर्वे समर्पिताः । एवमेव अस्मिन् आत्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्वे एते आत्मानः समर्पिताः ॥ १५ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत्—" तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच "—इति ॥ १६ ॥

---

तेन परेणात्मना तादात्म्यं गतो विद्वान् आत्मशब्दार्थः । तस्मिन्नविद्याकृतकार्यकारणसंघातोपाधिविशिष्टे जीवे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते सति ' स वै ' स एवायमात्मा अव्यवहितपूर्वपर्याये ' तेजोमयोऽमृतमयः ' इत्यादिना निर्दिष्टो विज्ञानमयः । सः 'सर्वेषां भूतानामधिपतिः' स्वतन्त्रः । न कुमारामात्यवत् स्वातंत्र्यम् । किं तर्हि ' सर्वेषां भूतानां राजा ' अधिपतिरिति राजत्वविशेषणम् । कश्चित् राजोचितवृत्तिमाश्रित्य राजा भवति । स राजपरतन्त्रत्वात् न स्वतन्त्र इति । तद्व्यवच्छेदार्थं अधिपतिविशेषणमिति भावः । अस्मिन् सर्वात्मभूते ब्रह्मविदि सर्वं जगत् सर्वमर्पितमिति दृष्टांतोपादानपूर्वकमाह—तद्यथेति । तत्प्रसिद्धं निदर्शनम् । ' यथा ' ' रथनाभौ च ' रथचक्रपिंडिकायां ' रथनेमौ च ' वलयभूतायां ' सर्वे अराः ' ' समर्पिताः ' समारोपिताः । यथा अयं दृष्टांतः । ' एवमेव ' एतस्मिन्नात्मनि परमात्मभूते ब्रह्मविदि ' सर्वे प्राणाः ' वागादयः ' सर्वे लोकाः ' भूरादयः ' सर्वे देवाः ' अग्न्यादयः ' सर्वाणि भूतानि ' ब्रह्मादिस्तंबपर्यंतानि—' सर्व एते ' आत्मानः जलचन्द्रवत् प्रतिशरीरानुप्रवेशिनः अविद्याकल्पिताः समर्पिताः । सर्वं जगदस्मिन् समर्पितमिति भावः । स एष सर्वात्मभावो व्याख्यातः ॥ १५ ॥

एवं साकल्येन निरूपितायाः ब्रह्मविद्यायाः स्तुत्यर्थं प्रवर्ग्यप्रकरणस्थिताऽऽख्यायिकासङ्क्षेपकौ मन्त्रौ ( श. प. १४।१।१।२५ ) श्रुतिः प्रस्तावपूर्वकमवतारयति—इदं वा इति । ' वै ' शब्दः स्मरणार्थः । यत्प्रवर्ग्यप्रकरणे सूचितं परं तु नाविष्कृतम् 'तत् वै' तदेव 'इदं मधु' । इह "इयं पृथिवी" ( श. प. १४।५।५।१ ) इत्यादिना अनंतरनिर्दिष्टं ' दध्यङ् ' नामा ब्राह्मणः अथर्वणः गोत्रापत्यं ' आथर्वणः अश्विभ्यां ' देवभिषग्भ्यां अनेन प्रपंचेन उवाचोक्तवान् । तदेवैतत्कर्म ऋषिर्मंत्रः पश्यन्नवलभमान उवाचोक्तवान् । कथमित्यत्त आह—तद्वां नरेति । ( ऋक् सं. । १ । ११६ । १२ ) हे ' नरा ' नरौ नेतारौ ! अश्विनौ अहं स्तोता ' वां ' युवयोः संबंधि तत्प्रसिद्धं उग्रमुद्‌घूर्णं अन्यैर्दुःशकं ' दंसः' कर्म 'सनये' धनलाभार्थं 'युवाभ्यां' लाभलुब्धाभ्यां पुराकृतं 'आविष्कृणोमि ' प्रकटीकरोमि । तत्र दृष्टांतः। 'तन्यतुर्न' तन्यतुरिव यथा तन्यतुर्मेघस्थः शब्दः 'वृष्टिं' मेघांतर्वर्तमान-

(ती) इदम्वै तन्मधु । दध्युङ्ङाथर्व्वुणोऽश्विभ्यामुवाच तुदेतदृषिः पुश्यन्नुवोचत् । आथर्व्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्प्रुत्यैरयतम् । स व्वाम्मधु प्प्रवोचदृतायन्त्वाष्ट्रं युद्दस्रावपि कुक्ष्यम्वामिति ॥ १७ ॥

(ती) इदम्वै तन्मधु । दध्युङ्ङाथर्व्वुणोऽश्विभ्यामुवाच तुदेतदृषिः पुश्यन्नुवोचत् । पुरश्चक्रे द्विपुदः पुरश्चक्रे चुतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुषऽआविशदिति स वाऽअयम्पुरुषः सुर्व्वासु पूर्षु पुरिशयो नैनेन किञ्चनुानावृतन्नैनेन किञ्चनुासम्वृतम् ॥ १८ ॥

---

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत्—" आथर्वणायाश्विना दधीचे अश्व्यं शिरः प्रत्यैरयतम् । स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वाम् "—इति ॥ १७ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतत् ऋषिः पश्यन्नवोचत्—" पुरश्चक्रे

---

मुदकं प्रवर्षणेन सर्वत्र प्रकटीकरोति ' तद्वत् ' । अत्र नकार इवार्थः । " नेति उपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते " ( निरु० १।४।१० ) इति यास्कोक्तेः । " अश्वं न त्वा वारवन्तं " ( निरु० १।४।१० ) इतिवत् ज्ञेयः । तत् किं कर्म ? ' ह ' इति प्रसिद्धौ । ' आथर्वणः ' अथर्वपुत्रः--' दध्यङ् ' एतन्नामा मुनिः ' यत् ' यदा ' अश्वस्य ' हयस्य ' शीर्ष्णा ' युष्मत्सामर्थ्यप्रतिहितेन शिरसा ' वां ' युवाभ्यां इदं मधु इमां मधुविद्यां ' यत्प्रोवाच ' प्रोक्तवान् तदानीं आश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिधानलक्षणं च यत् भवदीयं क्रूरं कर्म ' तत् ' ' आविष्कृणोमि ' इति संबंधः ॥ १६ ॥

आविष्कृणोमीति प्रतिज्ञाते क्रूरकर्ममधुनी के ते इत्यपेक्षायां—' इदं वै ' तन्मधु इत्यादि उक्तार्थमेव ब्राह्मणं स्वानुवादपूर्वकं मन्त्रांतरमाह—आथर्वणायेति । ( ऋक् सं. ।१।११७।२२। ) हे अश्विनौ ! युवां ' आथर्वणाय अथर्वणः पुत्राय—' दधीचे ' दध्यङ्नाम्ने महर्षये अश्व्यं अश्वसंबंधि शिरो मस्तकं ' प्रत्यैरयतं ' प्रत्यधत्तं तदीयं मानुषं शिरः प्रच्छिद्यान्यत्र निधाय अश्व्येन शिरसा तमृषिं समयोजयतमित्यर्थः । ' सः ' महर्षिः 'वां' युवाभ्यां ' मधुविद्यां ' ' प्रवोचत् ' प्रावोचत्प्रोक्तवान् । स किं इत्येवं जीवितसंदेहमारुह्य स्वशिरश्छेदपूर्वकं अश्व्यशिरसा मधु उक्तवान् इत्यत आह—ऋतायन्निति । युवाभ्यां प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामि इति पुरा कृतां प्रतिज्ञां सत्यां कुर्वन् परिपालयितुमिच्छन् जीवितादपि हि सत्यधर्मपरिपालना गुरुतरा इत्येतस्य लिङ्गमेतत् । किं तन्मधु इत्यत आह—त्वाष्ट्रमिति । त्वष्टा आदित्यः तस्य संबंधि त्वाष्ट्रं " तद्वृङ्ङिति पपात तत्पतित्वाऽसावादित्योऽभवत् " ( श० १४।१।१।१० ) इति । तत्प्रतिसंधानार्थं प्रावर्ग्यं कर्म तत्र प्रावर्ग्य कर्मांगभूतं यद्विज्ञानं तत् ' त्वाष्ट्रं' मध्वेव ' प्रावोचत् ' अपि तु यत्कक्ष्यं गोप्यं ' रहस्यं ' परमात्मसंबंधि विज्ञानं मधु मधुब्राह्मणेनोपसंहृतं अध्यायद्वयप्रकाशितं तच ' वां ' युवाभ्यां प्रवोचदित्यनुवर्तत इत्यर्थः ॥ १७ ॥

प्रवर्ग्यकर्मार्थयोः प्रथमद्वितीययोरध्याययोरर्थः प्रवर्ग्यसंबंध्याख्यायिकोपसंहर्तृभ्यां मंत्राभ्यां प्रकाशितः ।

( मि ) इदम्वै तन्मधु । दध्यङ्ङाथर्व्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । रूपꣳ रूपम्प्रतिरूपो बभूव तदस्य रूपम्प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूपऽईयते युक्ता ह्यस्य हरयः शता दशेत्ययम्वै हरयोऽयम्वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्व्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्व्वानुभूरित्यनुशासनम् ॥ १९ ॥

---

द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् "–इति । स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः । न एनेन किंचन अनावृतम् । न एनेन किंचन असंवृतम् ॥ १८ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतत् ऋषिः पश्यन् अवोचत् । " रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश "–इति । अयं वै हरयः । अयं वै दश च सहस्राणि बहूनि चानंतानि च । तदेतत् ब्रह्म अपूर्वमनपरमनंतरमबाह्यम् । अयमात्मा ब्रह्म सर्वानुभूः । इत्यनुशासनम् ॥ १९ ॥

---

इदानीं ब्रह्मविद्याऽर्थयोस्तु तृतीयचतुर्थाध्याययोरर्थ उत्तराभ्यां ऋग्भ्यां प्रकाशयितव्यः इत्यतः "इदं वै तत्" उक्तार्थं ब्राह्मणमनूद्य प्रवर्तते–**पुरश्चक्रे** इति । प्रकरणबलात् ईश्वरो अव्याकृते नामरूपे व्याकुर्वाणो भूतादिसर्गपुरःसरं पंचीकृतेभ्यो भूतेभ्यो भूरादीन् लोकान् सृष्ट्वा–' पुरः ' पुराणि शरीराणि–' द्विपदः ' द्विपादुपलक्षितानि मनुष्यशरीराणि ' चक्रे ' कृतवान् । तथा ' चतुष्पदः ' चतुष्पादुपलक्षितानि ' पुरः ' पशुशरीराणि ' चक्रे ' । एवं शरीराणि नानाविधानि सृष्ट्वा ' सः ' ईश्वरः ' पुरः ' पुरस्तात् आत्मप्रवेशात्पूर्वं ' पक्षी ' लिङ्गशरीरी ' भूत्वा ' ' पुरः ' शरीराणि ' पुरुषः ' पुरुषरूपः सन् ' आविशत् ' प्रविवेश । इतिशब्दो मंत्रसमाप्तिद्योतकः । कथमात्मनः पुरुषत्वमित्याशङ्कायां श्रुतिस्तत् व्युत्पादयति–**स वा अयमिति** । ' स वै ' स एव ' अयमात्मा ' सृष्ट्यादिकर्तृतया प्रकृतः ' सर्वासु पूर्षु ' सर्वशरीरेषु पुरि शेते इति व्युत्पत्त्या ' पुरिशयः ' सन् पुरुष इत्युच्यते । नन्वेवं आधाराधेयनिर्देशात् द्वैतापत्तिः स्यादित्यत आह–**नैनेनेति** । एनेमानेन परमात्मना ' किंचन ' किंचिदपि अनावृतमनाच्छादितं नास्ति । तथा ' एनेन ' ' किंचन ' असंवृतं ' अंतरमनुप्रवेशितं नास्ति । तथा च परमात्मैव अंतर्बहिर्भावेन कार्यकारणरूपेण व्यवस्थितः । न ततोऽन्यत्किंचिदस्तीति ' पुरश्चक्रे ' इति मंत्रः संक्षेपतः आत्मैकत्वमाचष्टे इत्यर्थः ॥ १८ ॥

" इदं वै तन्मधु " इत्यादि पूर्ववत् । एवं शरीरेषु प्रविष्टः परमात्मा किंरूप इत्यत आह–**रूपं रूपमिति** । ( ऋक् सं. । ६ । ४७ । १८ ) ' सः ' ईश्वरः–' रूपं रूपम् ' उपाधिभेदं देहं देहं प्रति–'प्रतिरूपः' रूपांतरं प्रतिबिंबं ' बभूव ' । ननु–किमर्थमसौ प्रतिबिंबभावं आपद्यते–तत्राह–**तदस्येति** । ' तत् ' प्रतिबिंबत्वं अस्यात्मनो निरुपाधिकस्य ' रूपं ' स्वरूपं ' प्रतिचक्षणाय ' आत्मयाथात्म्यप्रतिख्यापनाय शास्त्राचार्यादिभेदेन तत्त्वप्रकाशनायेत्यर्थः । यदि हि नामरूपे न व्याक्रियेते तदा अस्यात्मनो निरुपाधिकं प्रज्ञानघनाख्यं रूपं न प्रतिख्यायेत । यदा पुनः कार्यकारणात्मना नामरूपे व्याकृते भवतः तदा अस्य रूपं प्रतिख्यायेत इति भावः ।

( मु ) अथ वꣳशः । ( स्तु ) तदिदं वयꣳ शौर्प्पणाय्याच्छौर्प्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाजऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापाच्च गौतमाच्च गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ २० ॥

---

अथ वंशः–तदिदं १ वयं शौर्पणाय्यात् । २ शौर्पणाय्यो गौतमात् । ३ गौतमो वात्स्यात् । ४ वात्स्यो वात्स्याच्च पाराशर्याच्च । ५ पाराशर्यः सांकृत्याच्च भारद्वाजाच्च । ६ भारद्वाज औदवाहेश्च शांडिल्याच्च । ७ शांडिल्यो बैजवापाच्च गौतमाच्च । ८ गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च । ९ वैष्टपुरेयः शांडिल्याच्च रौहिणायनाच्च । १० रौहिणायनः शौनकाच्च आत्रेयाच्च रैभ्याच्च । ११ रैभ्यः पौतिमाष्यायणाच्च कौंडिन्यायनाच्च । १२ कौंडिन्यायनः कौंडिन्यात् । १३ कौंडिन्यः कौंडिन्यात् ।१४ कौंडिन्यः कौंडिन्याच्च आग्निवेश्याच्च ॥ २० ॥

---

'इंद्रः' परमेश्वरः 'मायाभिः' नामरूपविषयमिथ्याऽभिमानात्मना परिणताभिः 'पुरुरूपः' बहुरूपः 'ईयते' प्रतीयते मिथ्यैव जलसूर्यवत् । मायाभिरिति बहुवचनं विक्षेपाणां बाहुल्यादुपपन्नम् । तथापि परमात्मनो बहुरूपत्वे किं मानं इत्यत आह–**युक्ता हीति** । रथे युक्ता वाजिन इव 'हि' यस्मात् 'अस्य' प्रतीचो रथस्थानीये शरीरे 'युक्ताः'–'हरयः' इंद्रियाणि 'शता' शतानि 'दश' च प्राणिभेदबाहुल्यात् शतानि दश च भवंति । प्रत्यंचं स्वविषयान् प्रतिहरंतीति हरणादिंद्रियाणि हरयः । इतिशब्दो मंत्रसमाप्तिद्योतकः । ननु–अस्य हरय इति संबंधप्रतीतेः, अयमन्यः परमेश्वरः अन्ये हरयः इत्येवं द्वैतापत्तिः इत्यत आह–**अयं वा इति** । 'अय वै' अयमेवात्मा 'हरयः' इंद्रियादिरूपेणास्यैवाविद्यया भानात् । 'अयं वै' अयमेवात्मा 'दश च सहस्राणि' 'बहूनि चानंतानि च' हरिशब्दितानीन्द्रियाणि प्राणिभेदस्यानंत्यात् । इदानीं अस्यात्मनः पारमार्थिकं स्वरूपमाह–**तदेतद्ब्रह्मेति** । न विद्यते पूर्वं कारणं यस्य तदपूर्वम् । न विद्यते अपरं कार्यं यस्य तदनपरम् । न विद्यते अंतराले जात्यंतरं वस्तु यस्य तदनंतरम् । न विद्यते बाह्यं बहिर्भूतं वस्तु यस्मात् तदबाह्यम् । यत् एतादृशं 'ब्रह्म' तदेवैतत् समस्तं जगत् । न तद्व्यतिरेकेणास्ति । किं पुनः तद्ब्रह्म आत्मनोऽर्थांतरं इत्याशङ्कायां नेत्याह–**अयमात्मेति** । 'अयं' प्रत्यगात्मैव ब्रह्म । कोऽसौ प्रत्यगात्मा तत्राह–**सर्वानुभूरिति** । यः सर्वात्मना सर्वमनुभवति सः 'सर्वानुभूः' । द्रष्टा श्रोता मंता विज्ञाता स एव प्रत्यगात्मेत्यर्थः । अयमेव सर्ववेदांतानामर्थ इत्युपसंहरति–**इत्यनुशासनमिति** । इतीत्थं 'अनुशासनं' सर्ववेदांतोपदेशः । एतदमृतमयञ्चेति अनर्थनिवृत्तिद्वारा आनंदावाप्तिरूपः शास्त्रार्थः परिसमाप्तः ॥ १९ ॥

अथेदानीं ब्रह्मविद्यार्थस्य स्तुत्यर्थं मधुकाण्डस्य स्वाध्यायार्थो जपार्थश्च ब्रह्मविद्याया अयं वंश आरभ्यते–

(च्चा) आग्निवेश्यः सैतवात् । (त्सै) सैतवः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ २१ ॥

(द्वा) आत्रेयो माण्टेः । (म्मा) माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्यऽआङ्गिरसऽआभूतेस्त्वाष्ट्रा-

---

१५ आग्निवेश्यः सैतवात् । १६ सैतवः पाराशर्यात् । १७ पाराशर्यो जातूकर्ण्यात् । १८ जातूकर्ण्यो भारद्वाजात् । १९ भारद्वाजो भारद्वाजाच्च आसुरायणाच्च गौतमाच्च । २० गौतमो भारद्वाजात् । २१ भारद्वाजो बैजवापायनात् । २२ बैजवापायनः कौशिकायनेः । २३ कौशिकायनिर्घृतकौशिकात् । २४ घृतकौशिकः पाराशर्यायणात् । २५ पाराशर्यायणः पाराशर्यात् । २६ पाराशर्यो जातूकर्ण्यात् । २७ जातूकर्ण्यो भारद्वाजात् । २८ भारद्वाजो भारद्वाजाच्च आसुरायणाच्च यास्काच्च । २९ आसुरायणस्त्रैवणेः । ३० त्रैवणिरौपजंधनेः । ३१ औपजंधनिरासुरेः । ३२ आसुरिर्भारद्वाजात् । ३३ भारद्वाज आत्रेयात् ॥ २१ ॥

३४ आत्रेयो मांटेः । ३५ मांटिर्गौतमात् । ३६ गौतमो गौतमात् । ३७ गौतमो वात्स्यात् । ३८ वात्स्यः शांडिल्यात् । ३९ शांडिल्यः कैशोर्यात्काप्यात् । ४० कैशोर्यः काप्यः कुमारहारितात् । ४१ कुमारहारितो गालवात् । ४२ गालवो विदर्भीकौंडिन्यात् । ४३ विदर्भीकौंडिन्यो वत्सनपातो बाभ्रवात् । ४४ वत्सनपात् बाभ्रवः पथः सौभरात् । ४५ पंथाः सौभरः अयास्यादांगिरसात् । ४६ अयास्य आंगिरस आभूतेस्त्वाष्ट्रात् । ४७ आभूतिस्त्वाष्ट्रो विश्व-

---

अथ वंश इति । वंश इव 'वंशः' । यथा वेणुर्वंशः पर्वणः पर्वणो भिद्यते । तद्वदग्रात्प्रभृति आमूलप्राप्तेरयं वंशः । अध्यायद्वयस्य आचार्यपरंपराक्रमो वंश इत्युच्यते । तत्र प्रथमांतः शिष्यः पंचम्यंत आचार्यो बोद्धव्यः॥२०॥

'आग्निवेश्यः'—'सैतवात्' आचार्यात् अधीतवान् इत्यादि ॥ २१ ॥

'आत्रेयः' माण्टेरधीतवान् । 'परमेष्ठी' विराट् 'ब्रह्मणः' हिरण्यगर्भात् अधीतवान् । 'हिरण्यगर्भः' स्वयं-

ड्राभूतिस्त्त्वाष्ट्रो विश्वुरूपात्त्वाष्ट्राद्विश्वुरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधी-
चऽ आथर्व्वणाद्दध्युङ्ङाथर्व्वणोऽथर्व्वणो दैवादुथर्व्वा दैवो मृत्योः प्प्राध्वु-
ᳬसनान्मृत्युः प्प्राध्वुᳬ सनः प्प्रध्वुᳬसनात्प्रध्वुᳬसनऽएकर्षेरेकार्षिर्व्विप्प्रु-
जित्तेर्व्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातुनात्सनातुनः सनगा-
त्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयुम्भु ब्रह्मणे नमः ॥२२॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये
प्रपाठके पञ्चमं ब्राह्मणम् ॥ १४ ( ४ ) २।५ ॥ ( ५ ) २–५ ॥

इति पंचमोऽध्यायः ॥ १४–५ ॥ कण्डिकासंख्या ॥ ७८ ॥
बृहदारण्यकोपनिषदि द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

इति बृहदारण्यकोपनिषद्ध्यायद्वयात्मकं प्रथमं मधुकाण्डं समाप्तम् ।

---

रूपात्त्वाष्ट्रात् । ४८ विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम् । ४९ अश्विनौ दधीच आथर्वणात् । ५० दध्यङ्ङाथर्वणोऽथर्वणो दैवात् । ५१ अथर्वा दैवो मृत्योः प्राध्वंसनात् । ५२ मृत्युः प्राध्वंसनः प्रध्वंसनात् । ५३ प्रध्वंसन एकर्षेः । ५४ एकर्षिर्विप्रजित्तेः । ५५ विप्रजित्तिर्व्यष्टेः । ५६ व्यष्टिः सनारोः । ५७ सनारुः सनातनात् । ५८ सनातनः सनगात् । ५९ सनगः परमेष्ठिनः । ६० परमेष्ठी ब्रह्मणः । ६१ ब्रह्म स्वयंभु । ब्रह्मणे नमः ॥ २२ ॥

---

प्रतिभातवेदः इति तत आचार्यपरंपरा नास्ति । यत्पुनर्ब्रह्म वेदाख्यं तत्स्वयंभु नित्यं तस्मै ‘ ब्रह्मणे ’ स्वयंभुवे वेदरूपेणावस्थिताय ‘ नमः ’ वाङ्मनःकायकृतः प्रह्वीभावो भवत्वित्यर्थः ॥ २२ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-
ब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां
वासुदेवप्रकाशिकायां द्वितीयेऽध्याये पंचमं मधुब्राह्मणं परिसमाप्तम् ॥ १४ ( ५ ) २–५ ॥
द्वितीयोऽध्यायश्च समाप्तः ॥ १४ ( बृ. उ. ) २ ॥
इति श्रीबृहदारण्यकोपनिषदि आद्यं मधुकाण्डं परिसमाप्तम् ॥

## अथ चतुर्दशे काण्डे बृहदारण्यकोपनिषदि मध्यमं द्व्यध्यायं याज्ञवल्क्यकाण्डं वा मुनिकाण्डम् ।

## आदितः षष्ठेऽध्याये बृहदारण्यकोपनिषदि तु तृतीयेऽध्याये प्रथमं ब्राह्मणम् ।

### आदितश्चतुर्थे बृ० आ० द्वितीये च प्रपाठके षष्ठं ब्राह्मणम् ।

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपञ्चालानाम्ब्राह्मणाऽअभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषाम्ब्राह्मणानामनूचानतमऽइति ॥ १ ॥

स ह गवाꣳ सहस्रमवरुरोध । दशदश पादाऽएकैकस्याः शृङ्गयोराबद्धा बभूवुस्तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः सऽएता गाऽउदजतामिति ते ह ब्राह्मणा न दधृषुः ॥ २ ॥

---

अश्वलब्राह्मणम् ।

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपंचालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव । कः स्विदेषां ब्राह्मणानामनूचानतम इति ॥ १ ॥

स ह गवां सहस्रमवरुरोध । दशदश पादा एकैकस्याः शृंगयोराबद्धा बभूवुः । तान् होवाच । ब्राह्मणा भगवंतो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुः ॥ २ ॥

---

एवं आगमप्रधानेन मधुकाण्डेनोक्तमेवार्थं उपपत्तिभिर्निरूपयितुं याज्ञवल्कीयं काण्डमारभ्यते । तत्र प्रस्ताव कर्तुं विज्ञानस्तुत्यर्था विद्याप्राप्त्युपायप्रदर्शनार्था च आख्यायिका अश्वलब्राह्मणेनारभ्यते–जनको ह वैदेह इत्यादिना । विदेहेषु भवः ' वैदेहः ' ' जनकः ' जनकनामा राजा ' ह ' किल बभूव । स च ' बहुदक्षिणेन यज्ञेन' शाखांतरप्रसिद्धेन बहुदक्षिणाविशिष्टेनाश्वमेधेन वा ' ईजे ' अयजत् । ' तत्र ' तस्मिन् यज्ञे ' ह ' विद्वद्बाहुल्येन प्रसिद्धानां ' कुरूणां पंचालानां ' च देशानां 'ब्राह्मणाः' निमंत्रिता दर्शनकामा वा ' अभिसमेताः ' अभिसंगताः ' बभूवुः ' । तत्र महांतं विद्वत्समुदायं दृष्ट्वा ' ह ' किल ' तस्य जनकस्य वैदेहस्य ' यजमानस्य ' कः स्वित् ' कः नु खलु ' एषां ' ब्राह्मणानां मध्ये ' अनूचानतमः ' सर्वे इमे अनूचानाः कः स्विदेषामतिशयेनानूचानोऽनुवचने समर्थो ब्रह्मिष्ठ ' इति विजिज्ञासा ' विशेषेण ज्ञातुमिच्छा ' बभूव ' ॥ १ ॥

पश्चात् ' सः ' जनकः 'ह' अनूचानविषयोत्पन्नजिज्ञासः सन् तद्विज्ञानोपायार्थं ' गवां ' प्रथमवयसां धेनूनां

( रु ) अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच । ( चै ) एताः सौम्योदज सामश्रवा३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथन्नु नो ब्रह्मिष्ठो ब्रुवीतेति ॥ ३ ॥

---

अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच । एताः सौम्य ! उदज सामश्रवा ३ इति । ता होदाचकार । ते ह ब्राह्मणाश्चुक्रुधुः । कथं नु नो ब्रह्मिष्ठः ब्रुवीतेति ॥ ३ ॥

---

' सहस्रमवरुरोध ' गोष्ठे अवरोधं कारयामास । किंविशिष्टास्ता गावोऽवरुद्धा इत्यत आह–दशदशेति । तासामेकैकस्या गोः शृंगयोर्विषये ' दशदश पादाः ' पलचतुर्भागः पादः[2] एवंभूताः सुवर्णस्य[3] दशदश पादाः ' आबद्धा बभूवुः ' । शृंगयोरिति द्विवचनात् एकैकस्मिन् शृंगे पंचपंच पादा आबद्धा इत्यर्थः । एवं गा अवरुध्य जनकस्तान् ब्राह्मणान् ' ह ' किल ' उवाच ' । हे ब्राह्मणाः वेदाध्ययनसंपन्नास्तदर्थनिष्ठाः ' भगवंतः ' पूजार्हा ! इति संबोध्य ' यो वः ' युष्माकं मध्ये 'ब्रह्मिष्ठः' अतिशयेन ब्रह्मज्ञः ' सः एताः ' अवरुद्धा गाः 'उदजतां ' उत्कालयतु स्वगृहं प्रति नयतु । ' ते ' ब्राह्मणाः ' ह ' किल एवमुक्ताः ' न दधृषुः आत्मनो ब्रह्मिष्ठतां प्रतिज्ञातुं न प्रगल्भाः संवृत्ताः इत्यर्थः ॥ २ ॥

अथानंतरं अप्रगल्भभूतेषु ब्राह्मणेषु ' ह ' किल ' याज्ञवल्क्यः ' स्वमात्मीयमेव ब्रह्मचारिणमन्तेवासिनमुवाच । किं ? हे सौम्य ! सामश्रवा ३ इति, प्लुतिर्दूरादाह्वानार्था । सामविधिं शृणोतीति सामश्रवाः तस्य संबुद्धौ हे सामश्रवः । अतो यजुर्वेदविदो याज्ञवल्क्यात् सामविधिश्रवणमनुपपन्नमित्यर्थाच्चतुर्वेदो याज्ञवल्क्य इति सिद्ध्यति । हे सामश्रवः ! ' एता गाः ' उदजोद्गमयास्मद्गृहान्प्रति । एवं गुरुवचनं श्रुत्वा ' ह ' किल ' ब्रह्मचारी ' ' ताः ' गाः ' उदाचकार ' उत्कालितवान् आचार्यगृहं प्रति नीतवानित्यर्थः । एवं ब्रह्मिष्ठाय निर्दिष्टगवामपहरणात् याज्ञवल्क्येनात्मनो ब्रह्मिष्ठता प्रतिज्ञातेति, अस्माकमपि ब्रह्मिष्ठता प्रतिज्ञायत इति मन्वानास्ते ' ह ' ब्राह्मणाश्चुक्रुधुः क्रुद्धवन्तः । तेषां क्रोधाभिप्रायमाह–कथमिति । कथमयं नोऽस्माकं एकैकप्रधानानामग्रे ' ब्रह्मिष्ठोऽस्मीति ' ' ब्रुवीत ' कथयेत् । इतिशब्दः अभिप्रायसमाप्तिद्योतकः ॥ ३ ॥

---

१–आत्मपुराणे–पंचमेऽध्याये । " इत्यादि बहुधा राजा चिंतयित्वा मनोगतम् । कामधेनुसमानानां सहस्रं निदधौ गवाम् । चत्वारिंशत्सहस्राणि निष्काणामपि भूपतिः ।९५। शृंगे शृंगे गवां राजा निष्काणां विंशतिं हि सः । प्रत्येकं द्विसहस्रेषु शृंगेष्वर्पितवांस्तदा "। ९६ । इति । अनर्थोष्टीका–' इत्यादीति । इत्यादिकं विचारं कृत्वा गवां सहस्रं तथा निष्काणां दीनाराणां चत्वारिंशत्सहस्राणि सदसि निदधौ स्थापितवानिति । " पले दीनारेऽपि च निष्कोऽस्त्री " इति अमरे नानार्थः १३।१४। । ९५ । दीनाराणां चत्वारिंशत्सहस्रत्वे हेतुमाह । शृङ्गे इति । हि यतः । सहस्रसंख्याकानां गवां द्विसहस्रसंख्याकेषु शृङ्गेषु सत्सु प्रत्येकं शृङ्गे शृङ्गे दीनाराणां श्रुतौ कर्षचतुष्टयात्मकस्य पलस्य पादतया प्रतिपादितानां विंशतिं श्रुतौ द्विरावृत्तदशपदोक्तां बबंधेति । तथाच सहस्रद्वयस्य विंशत्या गुणने उक्तसंख्यासिद्धिरिति भावः । अत्र यद्यपि भाष्यकारैः श्रुतिगतदशदशपदद्वित्वं वीप्साऽभिप्रायेण व्याख्यातम् । पंचपंच पादा एकैकत्र शृङ्गे बद्धा इत्युक्तेः । तत्र च दशसहस्राणि निष्कसंख्या भवति । तथापि–अनेन ग्रंथकृता " व्याख्यानेषु नात्यंतमाग्रहः " इति शबरस्वामिवचनानुसारेण जनकौदार्यातिशयप्रकटनाय च दशदशेति पदं विंशतिपरतया व्याख्यातमिति बोध्यम् ॥ ९६ ॥

२–" निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोऽलंकरणे हेमपात्रे हेमपदेऽपि चेति मेदिनी " साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री " इत्यमरनानार्थः ॥

३–" गुंजाः पंचाद्यमाषकः । ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् । सुवर्णबिस्तौ हेम्नोऽक्षे " इत्यमरे वैश्यवर्गः ॥

(त्यु) अथ ह जनकस्य व्वैदेहस्य होताऽश्वलो बभूव । स हैनम्पप्रच्छ त्वन्नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ऽइति स होवाच नमो व्वयम्ब्रह्मिष्ठाय कुर्म्मो गोकामाऽएव व्वयꣳ स्मऽइति तꣳ ह तत ऽएव प्प्रष्टुन्दध्रे होताऽश्वलः ॥ ४ ॥

(लो) याज्ञवल्क्येति होवाच । यदिदꣳ सर्व्वम्मृत्युनाऽऽप्तꣳ सर्व्वम्मृत्युनाऽभिपन्नङ्केन यजमानो मृत्योराप्तिमतिमुच्यतऽइति होत्रर्त्त्विजाऽग्निना व्वाचा व्वाग्वै यज्ञस्य होता तद्येयम्वाक्सोऽयमग्निः स होता सा मुक्तिः साऽतिमुक्तिः ॥ ५ ॥

---

अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव । स हैनं पप्रच्छ । त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी ३ इति । स होवाच । नमो वयं ब्रह्मिष्ठाय कुर्मः । गोकामा एव वयं स्म इति । तं ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ ४ ॥

याज्ञवल्क्येति होवाच । यदिदं सर्वं मृत्युनाऽऽप्तम् । सर्वं मृत्युनाऽभिपन्नम् । केन यजमानो मृत्योराप्तिमतिमुच्यते इति । होत्रर्त्विजाऽग्निना वाचा । वाग्वै यज्ञस्य होता । तद्येयं वाक् । सोऽयमग्निः । स होता । सा मुक्तिः । साऽतिमुक्तिः ॥ ५ ॥

---

'अथ ह' एवं कुर्वत्सु ब्राह्मणेषु 'जनकस्य' यजमानस्य 'अश्वलः' अश्वलनामा 'होता' ऋत्विग् 'बभूव'। 'सः' ब्रह्मिष्ठाभिमानी राजाश्रयत्वाच्च धृष्टः 'एनं' याज्ञवल्क्यं 'ह पप्रच्छ' पृष्टवान्। कथं ? हे याज्ञवल्क्य ! नोऽस्माकमग्रे 'त्वं नु खलु ब्रह्मिष्ठोऽसी ३' इति। प्लुतिर्निर्भत्सनार्था। अनौद्धत्यं ब्रह्मविदो लिंगं इति सूचयन्ती श्रुतिर्याज्ञवल्क्यकृतमुत्तरं दर्शयति—स हेति। 'सः' याज्ञवल्क्यः 'ह उवाच'। 'वयं ब्रह्मिष्ठाय नमस्कुर्मः'। तर्हि किमिति ब्रह्मिष्ठपणभूता गावः स्वगृहं प्रति प्रस्थापिताः, इत्यत आह—गोकामा इति। 'वयं गोकामा एव स्मः'। अतो गोग्रहणं कृतवन्त इति। 'तं' ब्रह्मिष्ठप्रतिज्ञं संतं 'तत एव' ब्रह्मिष्ठपणस्वीकरणादेव होताऽश्वलः 'प्रष्टुं' 'दध्रे' मनो धृतवान् ॥ ४ ॥

पूर्वत्र व्याख्याते मधुकाण्डे यदुद्गीथप्रकरणं तस्मिन् आसङ्गपाप्मनो मृत्योरत्ययः समुच्चितेन कर्म्मणा संक्षेपतो व्याख्यातः। तस्यैवोद्गीथदर्शनस्य परीक्षाविषयोऽयं प्रश्नप्रतिवचनरूपो विस्तर आरभ्यते—याज्ञवल्क्येति होवाचेति। हे याज्ञवल्क्येति प्रथमं मुनेराभिमुख्यमापादयितुं संबोध्योवाच। अस्य कर्मणः 'यदिदं' साधनजातं ऋत्विगग्न्यादिलक्षणं 'मृत्युना' कर्मलक्षणेन स्वाभाविकाज्ञानजासङ्गसहितेनाप्तं व्याप्तं किंत्वभिपन्नं च मृत्युना वशीकृतं च। अतः 'केन' दर्शनलक्षणेन साधनेन 'यजमानः' मृत्योराप्तिमतीत्य मृत्युगोचरत्वमतिक्रम्य 'मुच्यते' स्वतंत्रो मृत्योरवश्यो भवतीत्यर्थः। इत्येवमश्वलेन पृष्टो याज्ञवल्क्य उत्तरमाह—होत्रर्त्विजाऽग्निना वाचेति। एतस्याभिप्रेतमर्थं श्रुतिः स्वयमेव व्याचष्टे—वाग्वै इति। "यज्ञो वै यजमानः"—(श. प. १४।२।२।२४) इति श्रुतेर्यज्ञस्य यजमानस्य या अध्यात्मं वाक् सैवाधियज्ञे

( स्वा॒हा ) याज्ञवल्क्येति होवाच । यदिदꣳ सर्वमहोरात्राभ्यामाप्तꣳ सर्वमहोरात्राभ्यामभिपन्नङ्केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यतऽइत्यध्वर्युणर्त्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदञ्चक्षुः सोऽसावादित्यः सोऽध्वर्युः सा मुक्तिः साऽतिमुक्तिः ॥ ६ ॥

( स्वा॒हा ) याज्ञवल्क्येति होवाच । यदिदꣳ सर्वम्पूर्वपक्षापरपक्षाभ्यामाप्तꣳ सर्वम्पूर्वपक्षापरपक्षाभ्यामभिपन्नङ्केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यतऽइति ब्रह्मणर्त्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदम्मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः साऽतिमुक्तिः ॥७॥

---

याज्ञवल्क्येति होवाच । यदिदं सर्वमहोरात्राभ्यामाप्तम् । सर्वमहोरात्राभ्यामभिपन्नम् । केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति । अध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन । चक्षुर्वै यज्ञस्याध्वर्युः । तद्यदिदं चक्षुः । सोऽसावादित्यः । सोऽध्वर्युः । सा मुक्तिः । साऽतिमुक्तिः ॥ ६ ॥

याज्ञवल्क्येति होवाच । यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तम् । सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नम् । केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इति । ब्रह्मणर्त्विजा मनसा चंद्रेण । मनो वै यज्ञस्य ब्रह्मा । तद्यदिदं मनः । सोऽसौ चंद्रः । स ब्रह्मा । सा मुक्तिः । साऽतिमुक्तिः ॥ ७ ॥

---

होता । तत्तत्र एवं सति 'येयं' यज्ञस्य 'यजमानस्य' 'वाक्' सोऽयं प्रसिद्धोऽग्निरधिदैवं स एव वागैक्यमापन्नोऽग्निर्होता । 'स होता' अग्निरूपेण दृष्टः 'सा मुक्तिः' मृत्य्वतिक्रमरूपाया मुक्तेः साधनम् । 'सा' उक्तरूपा मुक्तिरेव 'अतिमुक्तिः' फलभूताया अग्न्यादिभावापत्तिरूपाया अतिमुक्तेः साधनम् । तथा च आध्यात्मिकात् आधिभौतिकाच्च परिच्छिन्नरूपात् वाग्घोतृलक्षणात् साधनद्वयात् अपरिच्छिन्नाधिदैवताग्निरूपेण होतरि दृष्टिर्मुक्तिसाधनमित्यर्थः ॥ ५ ॥

स्वाभाविकात् अज्ञानासंगप्रयुक्तात् कर्मलक्षणात् मृत्योरतिमुक्तिर्व्याख्याता । तस्य कर्मणः सासङ्गस्य मृत्योः आश्रयभूतानां दर्शपूर्णमासादिकर्मसाधनानां यो विपरिणामहेतुः कालः तस्मात्कालात् पृथगतिमुक्तिर्वक्तव्येतीदमारभ्यते । क्रियानुष्ठानव्यतिरेकेणापि क्रियायाः प्रागूर्ध्वं च साधनविपरिणामहेतुत्वेन कालस्य व्यापारदर्शनात् तस्मात्कालात्पृथगतिमुक्तिर्वक्तव्येति तामाह—यदिदं सर्वमहोरात्राभ्यां व्याप्तमित्यादिना । स च कालो द्विरूपः । अहोरात्रादिलक्षणः तिथ्यादिलक्षणश्च । तत्राहोरात्रादिलक्षणात्तावदतिमुक्तिमाह—'अहोरात्राभ्यां' हि सर्वं जायते वर्द्धते विनश्यति च । तथा यज्ञसाधनं यज्ञस्य यजमानस्य चक्षुरध्वर्युश्च, ताभ्यां जायते वर्द्धते विनश्यति चेति संबंधः । शिष्टान्यक्षराणि पूर्ववत् योज्यानि । यजमानस्य चक्षुरध्वर्युश्चेति साधनद्वयं अध्यात्माधिभूतपरिच्छेदं हित्वा अपरिच्छिन्नाधिदैवतादित्यात्मना दृष्टं सत् मुक्तिः । सा मुक्तिरेवातिमुक्तिरिति पूर्ववत् । आदित्यात्मभावमापन्नस्य हि नाहोरात्रे संभवत इत्यर्थः ॥ ६ ॥

इदानीं तिथ्यादिलक्षणात्कालात् अतिमुक्तिरुच्यते । वृद्धिक्षयशून्ययोरहोरात्रयोरादित्यः कर्ता । न प्रतिपदादीनां तिथीनां तासां तु वृद्धिक्षयोपगमनेन चंद्रमाः । अत आदित्यप्राप्त्या अहोरात्रात्ययवत् चंद्रप्राप्त्या

(स्वर्गः) याज्ञवल्क्येति होवाच । यदिदमन्तरिक्षमनारम्बणमिवाथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयम्प्राणः स वायुः सऽउद्गाता सा मुक्तिः साऽतिमुक्तिरित्यतिमोक्षाऽअथ सम्पदः ॥ ८ ॥

(दो) याज्ञवल्क्येति होवाच । कतिभिरयमद्यर्ग्भिर्होताऽस्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्रऽइति पुरोऽनुवाक्या च

---

याज्ञवल्क्येति होवाच । यदिदमंतरिक्षमनारंबणमिव । अथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते इति । उद्गात्रर्त्विजा वायुना प्राणेन । प्राणो वै यज्ञस्योद्गाता । तत् यः अयं प्राणः । स वायुः स उद्गाता सा मुक्तिः । साऽतिमुक्तिः । इत्यतिमोक्षाः । अथ संपदः ॥ ८ ॥

याज्ञवल्क्येति होवाच । कतिभिरयमद्य ऋग्भिर्होता अस्मिन् यज्ञे करिष्यतीति । तिसृभिरिति ।

---

पूर्वपक्षापरपक्षात्ययः इत्याह—याज्ञवल्क्येति होवाच यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तमित्यादिना । 'ब्रह्मणर्त्विजा मनसा चंद्रेण' इत्यक्षरन्यासः । तत्राध्यात्मं 'यज्ञस्य' यजमानस्य 'यदिदं' प्रसिद्धं 'मनः' 'सोऽसौ' चंद्रोऽधिदैवं मनः । अध्यात्मं चंद्रमा अधिदैवतमिति 'हि' प्रसिद्धम् । स एव चंद्रो ब्रह्मर्त्विक् । तेन यजमानस्य मनो ब्रह्मेति च साधनद्वयमपरिच्छिन्नाधिदैवतचंद्रात्मना दृष्टं सन्मुक्तिरित्यर्थः ॥ ७ ॥

यजमानस्य कालान्मृत्योरतिमुक्तिर्व्याख्याता । सः अतिमुच्यमानः केनावष्टंभेन परिच्छेदविषयं मृत्युमतीत्य फलं प्राप्नोतीत्यत आह—याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमित्यादिना । 'यदिदं' प्रसिद्धमंतरिक्षमाकाशः अनारंबणमनालंबनमिव भासत इति शेषः । इवशब्दादस्त्येव तत्रावलंबनं तत्तु न ज्ञायत इत्यभिप्रायः । यत्तत् अज्ञायमानं आलंबनं तत्केनेति सर्वनाम्ना पृच्छयते । अन्यथा फलप्राप्तेरसंभवात् येनाक्रमणावष्टंभेन यजमानः कर्मफलं प्रतिपद्यमानः अतिमुच्यते किं तत् इति प्रश्नविषयः । 'अथ' केनाक्रमणावष्टंभेन 'यजमानः स्वर्गं लोकमाक्रमते' स्वर्गं लोकं फलं प्राप्नोति अतिमुच्यत इत्यर्थः । उद्गात्रर्त्विजा वायुना प्राणेनेति । उद्गाता ऋत्विक् अधिभूतं परिच्छिन्नं रूपम् । अध्यात्मं च प्राणः । एतद्द्वयमपरिच्छिन्नेन वायो रूपेण पश्यति । तेन वायुना प्राणेनावलंबनेन कर्मफलं स्वर्गं लोकं प्राप्नोति अतिमुच्यत इत्यभिप्रायः । एवमनुक्तत्वगादीनामपि वाय्वात्मना दर्शनं वक्तव्यमित्यभिप्रेत्योपसंहरति—इतीति । इतीत्युपसंहारार्थं वचनम् । इत्येवं प्रकारान्मृत्योरतिमोक्षा इत्यर्थः । 'अथ संपदः' अथाधुना 'संपदः' उच्यंते । संपन्नाम महतां फलवतामश्वमेधादिकर्मणां कर्मत्वादिना सामान्येनाल्पीयस्सु कर्मसु विवक्षितफलसिद्ध्यर्थं सम्पत्तिः संपदुच्यते । यथाशक्त्यग्निहोत्रादिनिर्वर्तनेनाश्वमेधादिकर्म मया निर्वर्त्यते इति ध्यानं संपदित्यर्थः । यद्वा फलस्यैव देवलोकादेरुज्ज्वलत्वादिसामान्येनाज्याद्याहुतिषु संपादनं संपदित्यर्थः । अतः संपद आरभ्यंते ॥ ८ ॥

संपदामारंभमुपपाद्य प्रश्नवाक्यमुत्थापयति—याज्ञवल्क्येति होवाच कतिभिरित्यादिना । याज्ञवल्क्येति

याज्या च शस्यैव तृतीया किन्ताभिर्ज्जयतीति पृथिविलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्यौर्लोकꣳ शस्यया ॥ ९ ॥

याज्ञवल्क्येति होवाच । कत्ययमद्याध्वर्युरस्मिन्यज्ञऽआहुतीर्होष्यतीति तिस्रऽइति कतमास्तास्तिस्रऽइति या हुताऽउज्ज्वलन्ति या हुताऽअतिनेदन्ति या हुताऽअधिशेरते किन्ताभिर्ज्जयतीति या हुताऽउज्ज्वलन्ति देवलोकमेव ताभिर्ज्जयति दीप्यतऽइव हि देवलोको या हुताऽअतिनेदन्ति मनुष्यलोकमेव ताभिर्ज्जयत्यतीव हि मनुष्यलोको या हुताऽअधिशेरते पितृलोकमेव ताभिर्ज्जयत्यधऽइव हि पितृलोकः ॥ १० ॥

---

कतमास्तास्तिस्र इति। पुरोऽनुवाक्या च याज्या च। शस्यैव तृतीया। किं ताभिर्जयतीति। पृथिवी लोकमेव पुरोऽनुवाक्यया जयति । अंतरिक्षलोकं याज्यया । द्यौर्लोकं शस्यया ॥ ९ ॥

याज्ञवल्क्येति होवाच । कत्ययमद्याध्वर्युरस्मिन् यज्ञे आहुतीर्होष्यतीति । तिस्र इति । कतमास्तास्तिस्र इति। या हुता उज्ज्वलन्ति । या हुता अतिनेदंति । या हुता अधिशेरते । किं ताभिर्जयतीति । या हुता उज्ज्वलंति देवलोकमेव ताभिर्जयति। दीप्यत इव हि देवलोकः। या हुता अतिनेदंति। मनुष्यलोकमेव ताभिर्जयति। अतीव हि मनुष्यलोकः। या हुता अधिशेरते। पितृलोकमेव ताभिर्जयति। अध इव हि पितृलोकः ॥ १० ॥

---

होवाचेत्यभिमुखीकरणाय। 'कतिभिः' कतिसंख्याभिः 'ऋग्भिः' ऋग्जातिभिः अयं 'होता' 'अद्यास्मिन् 'यज्ञे' 'करिष्यति' शस्त्रं शंसिष्यति। इत्येवमश्वलेन पृष्टो याज्ञवल्क्य आह—**तिसृभिरि**ति । 'तिसृभिः' ऋग्जातिभिः। एवमुत्तरमुक्तवंतं याज्ञवल्क्यं प्रति पुनस्तासां स्वरूपं पृच्छति—**कतमास्ता** इति । संख्येयविषयोऽयं प्रश्नः। पूर्वस्तु संख्याविषयः। किंस्वरूपास्तास्तिस्र ऋग्जातय इति पृष्टे उत्तरमाह—**पुरोऽनुवाक्या चे**ति। प्राक् यागकालात् होत्रा प्रयुज्यमाना ऋग्जातिः पुरोऽनुवाक्या इत्युच्यते। यागार्थं प्रयुज्यमाना ऋग्जातिः याज्या। शस्त्रार्थं प्रयुज्यमाना ऋग्जातिः शस्या। सैव 'तृतीया' त्रिसंख्यापूरणी। याः काश्चन ऋचः स्तोत्रिया वा अन्या वा ताः सर्वा एतास्वेव तिसृषु ऋग्जातिषु अंतर्भवंतीत्यर्थः। एतासां फलं पृच्छति—**किं ताभिरि**ति। 'ताभिः' पुरोऽनुवाक्याद्याभिः ऋग्जातिभिर्यजमानः 'किं जयति' किं फलं प्राप्नुयात्। उत्तरमाह—**पृथिविलोकमेवे**ति। 'पुरोऽनुवाक्यया पृथिविलोकमेव जयति' लोकसंबंधसामान्यात्। 'अंतरिक्षलोकं याज्यया' मध्यमत्वसामान्यात्। 'द्यौर्लोकं' द्युलोकं 'शस्यया जयति' ऊर्ध्वत्वसामान्यात् ॥ ९ ॥

एवमृग्जातिषु फलसंपादने विहिते अध्वर्युकर्तृकाहुतिषु फलसंपादनजिज्ञासया पृच्छति—**याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरि**त्यादिना। समानार्थकमेतत्। 'या हुताः' समिदाज्याहुतयः 'उज्ज्वलंति'। 'या हुताः' मांसाद्याहुतयोऽतिनेदंति अतीव शब्दं कुर्वंति। 'या हुताः' पयःसोमाहुतयोऽधिशेरते अधि भूमेरधो गत्वा शेरते। **किं ताभिर्जयती**ति। ताभिरेवं निष्पादिताभिराहुतिभिः किं जयतीति पृष्टे आह- **या हुता उज्ज्वलं-**

(को) याज्ञवल्क्येति होवाच । कतिभिरयमद्य ब्रह्मा यज्ञन्दक्षिणतो देवताभिर्गोपायिष्यतीत्येकयेति कतमा सैकेति मनऽएवेत्यनन्तम्वै मनोऽनन्ता विश्वे देवाऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥

याज्ञवल्क्येति होवाच । कत्ययमद्योद्गाताऽस्मिन्यज्ञे स्तोत्रिया स्तोष्यतीति तिस्रऽइति कतमास्तास्तिस्रऽइति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीयाऽधिदेवतमथाध्यात्ममुक्तमारुता याऽअध्यात्ममिति

---

याज्ञवल्क्येति होवाच । कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायिष्यतीति । एकयेति । कतमा सैकेति । मन एवेति । अनंतं वै मनः । अनंता विश्वे देवाः । अनंतमेव स तेन लोकं जयति ॥ ११ ॥

याज्ञवल्क्येति होवाच । कत्ययमद्योद्गाताऽस्मिन् यज्ञे स्तोत्रियाः स्तोष्यतीति । तिस्र इति । कतमास्तास्तिस्र इति । पुरोऽनुवाक्या च, याज्या च, शस्यैव तृतीया । अधिदेवतम् । अथा-

---

तीति । 'याः' उज्ज्वलनयुक्ता आहुतयो निर्वर्तिताः । ताभिराहुतिभिर्देवलोकमेव जयति । एता उज्ज्वलंत्य आहुतयो निर्वर्त्यमानाः साक्षाद्देवलोकस्य कर्मफलस्य रूपं देवलोकाख्यमुज्ज्वलं फलमेव मया निर्वर्त्यते इत्येवं संपादयंति । कथमित्यपेक्षायामुज्ज्वलत्वसामान्यादित्याह—**दीप्यत इवेति** । 'हि' यस्मात् 'देवलोको दीप्यत-इव' भासत इव । उज्ज्वल इवेति अभिनयप्रदर्शनार्थ इवशब्दः । तथा 'या आहुतयः अतिनेदंति' अतीव शब्दं कुर्वंति । ताभिराहुतिभिर्मनुष्यलोकं 'जयति' 'हि' यस्मात् अतीवातिकुत्सितशब्द इव 'मनुष्यलोकः' पापप्रचुरस्य हि मनुष्यलोकस्य यातना । संयमिन्यां पुर्यां वैवस्वतेन यात्यमानानां हा हताः स्मो मुंच मुंचेति कुत्सितशब्दो भवतीत्यर्थः । 'या हुता आहुतयोऽधिशेरते' 'ताभिराहुतिभिः पितृलोकमेव जयति' । उपरितनसाध्यादिलोकापेक्षया पापप्रचुरत्वेनाधोगमनापेक्षया वा पितृलोकः अध इव वर्तत इत्यर्थः ॥ १० ॥

**याज्ञवल्क्येति होवाचेति** पूर्ववत् 'अद्यायं' 'ब्रह्मा' ऋत्विक् आहवनीयस्य 'दक्षिणतः' ब्रह्मासने स्थित्वा कतिभिर्देवताभिर्यज्ञं 'गोपायिष्यति' रक्षिष्यति । कतिभिरिति पूर्वयोः कंडिकयोः प्रश्नप्रतिवचनेषु तिस्र इति प्रसंगदृष्ट्या इहापि बहुवचनेनैव प्रश्नोपक्रमः क्रियते । अथवा, प्रतिवादिव्यामोहार्थं बहुवचनं बोद्धव्यम् । उत्तरमाह—**एकयेति** । यया दक्षिणतो ब्रह्मासने स्थित्वा यज्ञं गोपायति सैका देवतेत्यर्थः । **कतमा सैकेति मन एवेति** । 'मन एव' देवता । मनसा हि ध्यानेनैव ब्रह्मा व्याप्रियते अतो मन एवैका देवता तया यज्ञं गोपायतीति भावः । अस्मिन्मनसि संपाद्यमानं फलमपृष्टमपि मुनिराह—**अनंतं वै मन इति** । वैशब्दः प्रसिद्ध्यवद्योतनार्थः । तच्च मनोवृत्तिभेदेनानंतं 'वै' प्रसिद्धम् । तदानंत्याभिमानिनः 'विश्वे देवाः' सर्वे देवाश्चानंताः । तस्मात्स उपासकः तेन मनसि वैश्वदेवदृष्ट्यध्यासेनानंत्यसामान्यादनंतमेव लोकं जयतीत्यर्थः ॥ ११ ॥

**याज्ञवल्क्येति होवाचेति** पूर्ववत् । 'कति स्तोत्रियाः स्तोष्यतीति' । स्तोत्रिया नाम गीतिविशिष्टा ऋग्जातयः । समानमन्यत् । प्रतिवचनमुपादत्ते—**पुरोऽनुवाक्या च याज्या च शस्यैव तृतीयाऽधिदेवतमिति** । एताश्च पुरोऽनुवाक्यादयो व्याख्याताः । 'अधिदेवतमिति' यज्ञाधिकारादधियज्ञमिति बोद्ध-

प्प्राणऽएव पुरोऽनुवाक्याऽपानो याज्या व्यानः शस्या किन्ताभिर्ज्जयतीति यत्किञ्चेदम्प्राणभृदिति ततो ह होताऽश्वलऽउपरराम ॥ १२ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीये प्रपाठके षष्ठं ब्राह्मणम् ॥ १४ । ( ४ ) २ । ६ ॥ ( ६ ) ३–१ ॥

अथ हैनञ्जारत्कारवऽआर्त्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच कति ग्ग्रहाः कत्यतिग्ग्रहाऽइत्यष्टौ ग्ग्रहाऽअष्टावतिग्ग्रहा ये तेऽष्टौ ग्ग्रहाऽअष्टावतिग्ग्रहाः कतमे तऽइति ॥ १ ॥

---

ध्यात्मम् । कतमास्ताः । या अध्यात्ममिति । प्राण एव पुरोऽनुवाक्या । अपानो याज्या । व्यानः शस्या । किं ताभिर्जयतीति । यत्किंचेदं प्राणभृदिति । ततो ह होता अश्वल उपरराम ॥ १२ ॥

आर्तभागब्राह्मणं वा जारत्कारवब्राह्मणम् ।

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच । कति ग्रहाः कत्यतिग्रहा इति । अष्टौ ग्रहाः । अष्टावतिग्रहाः । ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥ १ ॥

---

व्यम् । अधियज्ञं पुरोऽनुवाक्यादयो गीतिरूपेण वर्तमाना अधियज्ञसंज्ञका इत्येतदवगतम् । परं तु केन रूपेण ताः पुनरध्यात्मं भवंतीति पृच्छति–**कतमास्ता** इति । 'या अध्यात्मं' स्तोत्रियाः तिस्र ऋचः कास्ता इति पृष्टे उत्तरमाह–**प्राण एव पुरोऽनुवाक्ये**त्यादिना । 'प्राण एव पुरोऽनुवाक्या' प्राणपुरोऽनुवाक्ययोः पकारादित्वसामान्यात् । 'अपानो याज्या' अपानयाज्ययोः प्राणपुरोऽनुवाक्याभ्यामानंतर्यसामान्यात् । 'व्यानः शस्या' "अप्राणन्ननपानन्नृचमभिव्याहरन्" इति श्रुत्यंतरे शस्त्रप्रयोगस्य प्राणापानव्यापारव्यतिरेकेण सिद्धत्वात् व्याने शस्यादृष्टिरिति भावः । एवं प्राणादिषु पुरोऽनुवाक्यादिदृष्टिकरणस्य फलं पृच्छति–**किं ताभिर्जयतीति** । एवं पृष्टे उत्तरमाह–**यत्किंचेदं प्राणभृदिति** । प्राणभृत्प्राणिजातं यत्किंचेदमस्ति तत्सर्वं 'जयति' । सर्वप्राण्यात्मकभूरादिलोकत्रयसंख्यासामान्यात् । पूर्वं विशेषत उक्तस्य सामान्येन उक्तिः [illegible] । 'ततो ह' तस्मादात्मनः प्रश्ननिर्णयात् असावश्वलः 'होता' नायमस्मद्गोचर इत्यभिप्रायेणोपरराम ॥ १२ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां मध्यमे मुनिकाण्डे याज्ञवल्क्यकाण्डे वा तृतीयेऽध्याये प्रथममश्वलब्राह्मणं परिसमाप्तम् ( ॥ १४ । ( ६ ) । ३ । १ ॥ )

एवं काललक्षणात्कर्मलक्षणाच्च मृत्योरतिमुक्तिर्व्याख्याता । इदानीं बंधज्ञानं विना ततो विश्लेषायोगात् मुमुक्षोः सप्रयोजकबंधज्ञानार्थत्वेन ग्रहातिग्रहलक्षणात् बंधान्मृत्योरतिमुक्तिं वक्तुमाख्यायिकामनुसृत्यार्तभागब्राह्मणमारभ्यते–**अथ हैनं जारत्कारवऽ आर्तभाग** इति । 'ह' शब्द ऐतिह्यार्थः । अथानंतरं अश्वले उपरते 'एनं'

प्प्राणो वै ग्ग्रहः । सोऽपानेनातिग्ग्रहेण ग्गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥ २
जिह्वा वै ग्ग्रहः । स रुसेनातिग्ग्रहेण ग्गृहीतो जिह्वया हि रुसान्वि-
जानाति ॥ ३ ॥
व्वाग्वै ग्ग्रहः । स न्नाम्नाऽतिग्ग्रहेण ग्गृहीतो व्वाचा हि न्नामान्यभि-
वुदति ॥ ४ ॥
चुक्षुर्व्वै ग्ग्रहः । स रूपेणातिग्ग्रहेण ग्गृहीतश्चक्षुषा हि रूपाणि पुश्यति ॥ ५ ॥
श्रोत्रम्वै ग्ग्रहः । स शुब्देनातिग्ग्रहेण ग्गृहीतः श्रोत्रेण हि शुब्दा-
ञ्छृणोति ॥ ६ ॥

---

प्राणो वै ग्रहः । सोऽपानेनातिग्रहेण गृहीतः । अपानेन हि गंधान् जिघ्रति ॥ २ ॥
जिह्वा वै ग्रहः । स रसेनातिग्रहेण गृहीतः । जिह्वया हि रसान् विजानाति ॥ ३ ॥
वाग्वै ग्रहः । स नाम्नाऽतिग्रहेण गृहीतः । वाचा हि नामान्यभिवदति ॥ ४ ॥
चक्षुर्वै ग्रहः । स रूपेणातिग्रहेण गृहीतः । चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥
श्रोत्रं वै ग्रहः । स शब्देनातिग्रहेण गृहीतः । श्रोत्रेण हि शब्दान् शृणोति ॥ ६ ॥

---

प्रकृतं याज्ञवल्क्यं जरत्कारुगोत्रः 'जारत्कारवः' ऋतभागस्यापत्यमार्तभागः पप्रच्छ । याज्ञवल्क्येति होवाचेत्यभिमुखीकरणाय पूर्ववत् । कति ग्रहाः कत्यतिग्रहा इति । इतिशब्दो वाक्यपरिसमाप्त्यर्थः । मुक्त्यतिमुक्तिप्रतियोगित्वेन सामान्यतः प्रसिद्धा 'ग्रहाः' 'कति' कतिसंख्याकाः, अतिग्रहाश्च कतिसंख्याकाः ? इति संख्याविषयोऽयं प्रश्नः । एवं पृष्टे उत्तरमाह—अष्टौ ग्रहा अष्टावतिग्रहा इति । ततः संख्येयान् पृच्छति 'ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः' चाभिहिताः 'ते कतमे' के ? इत्यर्थः ॥ १ ॥

एवं पृष्टे उत्तरमाह—प्राणो वै ग्रह इति । 'प्राणः' इति घ्राणमुच्यते प्रकरणात् वायुना सहितः स घ्राणाख्यः प्राणो ग्रहवत् परवशताहेतुत्वात् ग्रहः । 'सः अपानेन' गन्धेनातिग्रहेण 'गृहीतः' । अपश्वासोऽत्रापानशब्दार्थः । अपानसचिवत्वादपानो गन्ध उच्यते । कथं ? तेन गृहीत इत्यत आह—अपानेन हीति । 'हि' यस्मात् अपानेनांतर्मुखश्वासेन 'गन्धान् लोको जिघ्रति' । अपानापहृतं गंधं घ्राणेन सर्वो लोको जिघ्रति इत्यतस्तेन प्राणो गृहीत इत्यर्थः ॥ २ ॥

'जिह्वा वै ग्रहः' । स जिह्वाख्यो ग्रहः 'रसेनातिग्रहेण गृहीतः' । जिह्वया ज्ञातं हि रसं सर्वो लोको रसयति । तदेतदुच्यते—जिह्वया हि रसान् विजानातीति ॥ ३ ॥

'वाग्वै ग्रहः' । अध्यात्मपरिच्छिन्नयाऽऽसंगविषयास्पदया असत्यानृतासभ्यबीभत्सादिवचनेषु व्यापृतया हि वाचा लोको गृहीतोऽपहृतः । तेन 'वाक् ग्रहः' । ग्रह इव ग्रहः । स वागाख्यो ग्रहः 'नाम्ना' वक्तव्येन विषयेणातिग्रहेण 'गृहीतः' । वक्तव्यासंगेन हि प्रयुक्ता वाक् सर्वानर्थैर्युज्यत इति प्रसिद्धमित्यभिप्रेत्याह—वाचा हीति । 'हि' यस्मात् लोको नाम वक्तव्यार्थया 'वाचा' 'नामान्यभिवदति' ॥ ४ ॥

'चक्षुर्ग्रहः' 'रूपमतिग्रहः' ॥ ५ ॥

'श्रोत्रं ग्रहः' 'शब्दोऽतिग्रहः' ॥ ६ ॥

मनो वै ग्रहः । स कामेनातिग्रहेण गृहीतो मनसा हि कामान्का-
मयते ॥ ७ ॥

हस्तौ वै ग्रहः । स कर्म्मणाऽतिग्रहेण गृहीतो हस्ताभ्याᳪं हि कर्म्म
करोति ॥ ८ ॥

त्वग्वै ग्रहः । स स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान्वेदयतऽ
इत्यष्टौ ग्रहाऽअष्टावतिग्रहाः ॥ ९ ॥

( ० ) याज्ञवल्क्येति होवाच । यदिदᳪं सर्व्वम्मृत्योरन्नङ्कास्वित्सा
देवता यस्या म्मृत्युरन्नमित्यग्निर्वै म्मृत्युः सोऽपामन्नमप पुनर्म्मृत्यु-
ञ्जयति ॥ १० ॥

---

मनो वै ग्रहः । स कामेनातिग्रहेण गृहीतः । मनसा हि कामान् कामयते ॥ ७ ॥

हस्तौ वै ग्रहः । स कर्मणाऽतिग्रहेण गृहीतः । हस्ताभ्यां हि कर्म करोति ॥ ८ ॥

त्वग्वै ग्रहः । स स्पर्शेनातिग्रहेण गृहीतः । त्वचा हि स्पर्शान् वेदयते । इत्यष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

याज्ञवल्क्येति होवाच । यदिदं सर्वं मृत्योरन्नम् । कास्वित्सा देवता । यस्या मृत्युरन्नमिति । अग्निर्वै मृत्युः । सोऽपामन्नम् । अप पुनर्मृत्युं जयति ॥ १० ॥

---

' मनो ग्रहः ' ' कामोऽतिग्रहः ' ॥ ७ ॥

' हस्तौ ग्रहः ' ' कर्मातिग्रहः ' ॥ ८ ॥

' त्वग्ग्रहः ' ' स्पर्शोऽतिग्रहः ' इत्येवं घ्राणाद्यास्त्वगंताः ' अष्टौ ग्रहाः ' गंधाद्याः स्पर्शांताः ' अष्टावति-ग्रहाः ' इत्यर्थः ॥ ९ ॥

उपसंहृतेषु ग्रहातिग्रहेषु पुनराह–याज्ञवल्क्येति होवाचेति पूर्ववत् । ' यदिदं ' व्याकृतं ' सर्वं ' जगत् ' मृत्योरन्नं ' मृत्युना ग्रहातिग्रहलक्षणेन ग्रस्तम् । उत्पत्तिविनाशशालित्वाज्जगतः । कास्वित्का नु ' सा देवता ' । ' यस्याः ' देवताया मृत्युरप्यन्नं भवेत् । यदि मृत्योरपि मृत्युं वक्ष्यति मुनिः । तर्हि तस्यापि मृत्य्वंतरमित्यनवस्था स्यात् । अपि न वक्ष्यति । तदाऽस्मात् ग्रहातिग्रहलक्षणान्मृत्योर्मोक्षो नोपपद्यते । तस्य विनाशकाभावात् इति प्रष्टुरभिप्रायः । अस्ति मृत्योर्मृत्युरित्युत्तरमाह–अग्निर्वै मृत्युरिति । 'अग्निर्वै' प्रसिद्धः 'मृत्युः' सर्वविनाशकत्वात् । सोऽप्यग्निरपामन्नम् । अद्भिर्भक्ष्यमाणत्वात् । एवं मृत्योरपि मृत्युर्ब्रह्मात्मसाक्षात्कारलक्षणो दृष्टः सर्वमृत्युः । सर्व-मृत्योर्मृत्व्यंतरानुपपत्तेर्नानवस्थेति भावः । तेन सर्वमृत्युना ग्रहातिग्रहलक्षणे बंधने नाशिते संसारान्मोक्ष उपपन्नो भवतीत्येतत्प्रसाधितम् । अतो बंधमोक्षाय पुरुषप्रयासः सफलो भवतीत्यर्थः एवमुक्तस्य सर्वमृत्योर्व्युत्पादने किं फलमित्यत आह–अप पुनरिति । ब्रह्मसाक्षात्कारेण सर्वमृत्युना ग्रहातिग्रहलक्षणे मृत्यौ भक्षिते सति विद्वान् ' पुनर्मृत्युं ' पुनर्मरणं ' अपजयति ' निराकरोति पुनर्मरणाय न जायत इत्यर्थः ॥ १० ॥

याज्ञवल्क्येति होवाच। यत्रायम्पुरुषो म्म्रियते किमेनन्न जहातीति नामे-त्यनन्तम्वै नामानन्ता व्विश्वे देवाऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥

याज्ञवल्क्येति होवाच। यत्रायम्पुरुषो म्म्रियतऽउदस्मात्प्राणाः क्रामन्त्या हो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते सऽउच्छ्वयत्या-ध्मातो मृतः शेते ॥ १२ ॥

याज्ञवल्क्येति होवाच। यत्रास्य पुरुषस्य मृतस्याग्निम्वागप्येति व्वात-

---

याज्ञवल्क्येति होवाच। यत्रायं पुरुषो म्रियते। किमेनन्न जहातीति। नामेति। अनंतं वै नाम। अनंता विश्वे देवाः। अनंतमेव स तेन लोकं जयति ॥ ११ ॥

याज्ञवल्क्येति होवाच। यत्रायं पुरुषो म्रियते। उदस्मात्प्राणाः क्रामन्ति आहो ३ नेति। नेति होवाच याज्ञवल्क्यः। अत्रैव समवनीयंते। स उच्छ्वयति। आध्मातो मृतः शेते ॥ १२ ॥

याज्ञवल्क्येति होवाच। यत्रास्य पुरुषस्य मृतस्य अग्निं वागप्येति। वातं प्राणः। चक्षुरा-

---

एवं परमात्मदर्शनेन मुक्तस्य किं प्राणा एव समवनीयंते आहोस्वित् तत्प्रयोजकमपि सर्वम्। अथ प्राणा एव, न तत्प्रयोजकं सर्वम्, तर्हि प्रयोजके विद्यमाने पुनः प्राणानां प्रसंगः। अथ सर्वमेव कामकर्मादिकम्। ततो मोक्ष उपपद्यते इत्येवमर्थ उत्तरप्रश्नोऽयं इत्यभिप्रायवानाह—**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीतीति**। 'यत्र' यस्मिन् काले 'पुरुषः' विद्वान् 'म्रियते'। तदैनं किं 'न जहाति' न त्यजतीति। एवं पृष्टे उत्तरमाह—**नामेतीति**। सर्वमेवैनं जहाति नाममात्रं तु न जहाति। सर्वं समवनीयते। नाममात्रं तु न लीयत इत्यर्थः। तत्कुत इत्यपेक्षायामाह—**अनंतं वै नामेति**। आकृतिसंबंधात नित्यं 'वै' प्रसिद्धं नाम। शुको मुक्त इतिवत् व्यवहारपारंपर्यात्। ब्रह्मविद्यां स्तोतुमाह—**अनंता इति**। 'अनंता वै' प्रसिद्धाः 'विश्वे देवाः'। अतः तन्नामानंत्याधिकृतान् विश्वान् देवान् ब्रह्मास्मीति दर्शनेनात्मत्वेनोपगम्य 'सः' विद्वान् 'तेन' दर्शनेनानंतमेव लोकं जयतीत्यर्थः ॥ ११ ॥

साक्षात्कारज्ञाने जाते विद्वान्न म्रियते। न च तस्य प्राणा अत्यंतं समवनीयन्ते। किंतु जीवन्मुक्तत्वेन सर्वदा तिष्ठतीति तन्निराकर्तुमाह—**याज्ञवल्क्येति होवाचेति** पूर्ववत्। परमात्मसाक्षात्काररूपेण सर्वमृत्युना सविलासाज्ञानमृत्यौ नाशिते सति विद्वानयं पुरुषः 'यत्र' यस्मिन् काले 'म्रियते'। तदा अस्मान्म्रियमाणाद्ब्रह्मविदः सकाशात्प्राणा घ्राणादयो ग्रहा गंधादयश्चातिग्रहा वासनारूपा अंतस्थाः सप्रयोजनकाः 'उत्क्रामन्ति' ऊर्ध्वं गच्छंति 'आहोस्विन्नेति प्लुतिर्विचारणार्था। इति पृष्टः 'नेति' नोत्क्रामन्तीति 'होवाच याज्ञवल्क्यः'। किंतु 'अत्रैव' परब्रह्मणि एकतां गते अस्मिन् विदुष्येव 'समवनीयन्ते' एकीभावेन समवसृज्यन्ते प्रविलीयन्ते ऊर्म्मय इव समुद्रे। तर्हि मृतप्रसिद्धिः कथमित्यपेक्षायां तस्या देहविषयत्वात् इत्याह—**सऽउच्छ्वयतीति**। उच्छूनतां प्रतिपद्यते। आध्मायति बाह्येन वायुना दृतिवदापूर्यते 'आध्मातः मृतः' निश्चेष्टः 'शेते' अतो देहस्यैव मरणधर्मता। बंधननाशे मुक्तस्य न क्वचिद्गमनमित्यर्थः ॥ १२ ॥

अथ केन प्रयुक्तं ग्रहातिग्रहलक्षणं बंधनमित्येतन्निर्दिधारयिषया पृच्छति—**याज्ञवल्क्येति होवाचेति**। 'यत्र'

म्प्राणश्चक्षुरादित्यम्मनश्चन्द्रन्दिशः श्रोत्रम्पृथिवीᳬ शरीरमाकाशमात्मौषधीर्लोमानि व्वनस्पतीन्केशाऽअप्सु लोहितञ्च रेतश्च निधीयते क्वायन्तदा पुरुषो भवतीत्याहर सौम्य हस्तम् ॥ १३ ॥

( आ ) आर्त्तभागेति होवाच । (चाव) आवमेवैतद्वेदिष्यावो न नावेतत्सजनऽइति तौ होत्क्रम्य मन्त्रयाञ्चक्रतुस्तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ ह यत्प्रशशᳬसतुः कर्म्म हैव तत्प्रशशᳬसतुः पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेति ततो ह जारत्कारवऽआर्त्तभागऽउपरराम ॥ १४ ॥

इति चतुर्दशे काण्डे चतुर्थप्रपाठके बृहदारण्यकोपनिषदि द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ १४ (४) २।७। (६) ३-२ ॥

इति बृहदारण्यकोपनिषदि द्वितीयः प्रपाठकः समाप्तः ॥ १४-(४).२॥
कण्डिकासंख्या १०४ ॥

---

रादित्यम् । मनश्चन्द्रम् । दिशः श्रोत्रम् । पृथिवीं शरीरम् । आकाशमात्मा । ओषधीर्लोमानि । वनस्पतीन्केशाः । अप्सु लोहितं च रेतश्च निधीयते । क्वायं तदा पुरुषो भवति इति । आहर सौम्य हस्तम् ॥ १३ ॥

आर्तभागेति होवाच । आवमेवैतद्वेदिष्यावः । न नावेतत्सजन इति । तौ होत्क्रम्य मन्त्रयाञ्चक्रतुः । तौ ह यदूचतुः । कर्म हैव तदूचतुः । अथ ह यत्प्रशशंसतुः । कर्म हैव तत्प्रशशंसतुः । पुण्यो वै पुण्येन कर्मणा भवति । पापः पापेनेति । ततो ह जारत्कारव आर्तभाग उपरराम ॥ १४ ॥

---

यस्मिन् समये अस्याविदुषः 'पुरुषस्य' शिरःपाण्यादिविशिष्टस्य 'मृतस्य' 'वाक्' वागधिष्ठात्री देवता 'अग्निमप्येति' अपिगच्छति । 'प्राणः' तदधिष्ठात्री देवता घ्राणं वातमप्येति, चक्षुरादित्यमप्येतीति सर्वत्र संबध्यते । 'मनश्चंद्रं, दिशः श्रोत्रं, पृथिवीं शरीरं, आकाशमात्मेति' । अत्रात्मशब्देन आत्माधिष्ठानं हृदयाकाशमुच्यते । स आकाशमप्येति । 'लोमानि' ओषधीरपियन्ति । 'केशाः' वनस्पतीनपियन्ति । 'लोहितं' रेतश्चाप्सु 'निधीयते' । इति पुनरादानलिंगम् । 'तदा' तस्मिन् काले 'अयं पुरुषः' 'क' कस्मिन् आश्रये भवति । किमाश्रितः कार्यकारणसघातमुपादत्ते, इति पृष्टे उत्तरं वक्तुं उपोद्घातमाह—आहरेति । हे सौम्य ! 'हस्तं' करं 'आहर' देहीति ॥ १३ ॥

हे आर्तभाग ! इत्यामन्त्र्य 'ह' किल 'उवाच'—आवमिति । आवामेव एकांते गत्वा एतस्य त्वत्पृष्टस्य वेदितव्यस्य यत् तत्त्वं तत् 'वेदिष्यावः' निरूपयिष्यावः । "प्रथमायाश्च द्विवचने भाषायाम्" (पा.सू.७।२।८८) इत्यत्र भाषायामित्युक्तत्वात् आवमिति ह्रस्वत्वं छांदसम् । कुत इत्यपेक्षायामाह—न नाविति । यस्मात् 'नौ' आवयोरेतद्वस्तु 'सजने न' समुदाये निर्णेतुं न शक्यते । अत्रानेकवादिविप्रतिपत्तेरित्यत एकांतं गमि-

ध्यात्रौ विचारणायेति शेषः । एवमुक्त्वा यन्निर्णीतं तच्छ्रुतिः स्वमुखेनैवाचष्टे—**तौ हेति** । 'तौ ह' याज्ञवल्क्यार्तभागौ सजनदेशादुत्क्रम्य 'मंत्रयांचक्रतुः' । आदौ लौकिकवादपक्षाणां एकैकं परिगृह्य विचारितवंतावित्यर्थः । '**तौ ह**' विचार्य सर्वानेव पूर्वपक्षान् स्वभाववादादीन् अपोह्य 'यत्' ऊचतुरुक्तवंतौ । तच्छृणु, 'कर्म्म' हैवाश्रयं पुनः पुनः कार्यकारणोपादानहेतुम्, तत्तत्र विचारावस्थायां एकांते स्थित्वा ऊचतुरुक्तवन्तौ । न केवलमूचतुः । 'अथ ह' अपि तु । कालकर्म्मदैवेश्वरेषु अभ्युपगतेषु हेतुषु यत्प्रशशंसतुः । 'कर्म हैव' 'तत्प्रशशंसतुः' कर्मैव प्रधानं कारणमिति प्रशंसापदोपादितं प्राधान्यमुपसंहरति—**पुण्यो वा इति** । यस्मादेवं ग्रहातिग्रहादिरूपकार्यकारणोपादानं कर्म्मप्रयुक्तमिति निर्द्धारितम् । तस्मात् 'पुण्येन' शास्त्रविहितेन 'कर्म्मणा' देवादिषु जायमानः 'पुण्यः' पुण्यात्मा वै भवति । 'पापेन' शास्त्रनिषिद्धेन 'कर्म्मणा' स्थावरादिषु जायमानः 'पापः' पापात्मा भवति । 'ततः' एवं प्रश्ननिर्णयानंतरं 'जारत्कारव आर्तभागः' मनसाऽपि अचिंतनीयपराजयोऽयमित्यभिप्रायेणोपरराम ॥ १४ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां मध्यमे याज्ञवल्क्यकाण्डे वा मुनिकाण्डे तृतीयेऽध्याये द्वितीयमार्तभागब्राह्मणं वा जारत्कारवब्राह्मणं परिसमाप्तम् ॥ १४ ( ६ ) ३—२ ॥

# अथ चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।

## आदितः षष्ठे बृ० आ० तृतीयेऽध्याये च तृतीयं ब्राह्मणम् ।

अथ हैनम्भुज्युर्ल्लाह्यायनिः पप्रच्छ । याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्य्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्व्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरसऽइति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिताऽअभवन्क्व पारिक्षिताऽअभवन्निति तत्त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिताऽअभवन्निति ॥ १ ॥

---

भुज्युब्राह्मणम् ।

अथ हैनं भुज्युर्लाह्यायनिः प्रपच्छ । याज्ञवल्क्येति होवाच । मद्रेषु चरकाः पर्यव्रजाम । ते पतंचलस्य काप्यस्य गृहानैम । तस्यासीद् दुहिता गंधर्वगृहीता । तमपृच्छाम । कोऽसीति । सोऽब्रवीत् । सुधन्वाऽऽङ्गिरस इति । तं यदा लोकानामंतानपृच्छाम । अथैनमब्रूम । क्व पारिक्षिता अभवन् । क्व पारिक्षिता अभवन्निति । तत्त्वा पृच्छामि याज्ञवल्क्य ! क्व पारिक्षिता अभवन्निति ॥ १ ॥

---

'अथ ह' अनंतरप्रपाठकान्ते "पुण्यो वै पुण्येन कर्म्मणा भवति" इति श्रुत्या पुण्यमेव कर्म्म सर्वपुरुषार्थसाधनमित्युक्तम् । तत्र मोक्षस्यापि पुरुषार्थत्वात् उत्तमेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्याशङ्कानिरासार्थं विद्यासंयुक्तस्यापि कर्म्मणो मोक्षारंभकत्वसंभवान्न मोक्षार्थानि कर्म्माणीत्यतः कर्म्मफलानां संसारत्वप्रदर्शनायैव भुज्युब्राह्मणमारभ्यते—**अथ हैनं भुज्ज्युर्लाह्यायनि**रिति । 'अथ' जारत्कारवोपरमानंतरं भुज्युरिति नामवान् लह्यस्यापत्यं लाह्यः तदपत्यं लाह्यायनिः 'एनं पप्रच्छ' इत्यादि पूर्ववत् । स्वविद्याया गुरूपदेशपूर्वकत्वं ज्ञापयितुमाख्यायिकामारचयति—**मद्रेषु चरका** इति । मद्रा नाम जनपदाः । तेषु देशेषु अध्ययनार्थं व्रतचरणाच्चरका विद्यार्थिनः अध्वर्यवो वा 'पर्यव्रजाम' पर्यटितवंतः । 'ते' वयं 'पतंचलस्य काप्यस्य' कपिगोत्रस्य गृहानावसथान् ऐमागच्छाम । तस्य पतंचलस्य 'दुहिता' पुत्रिका 'गंधर्वगृहीता' गंधर्वेणामानुषेण केनचित् सत्त्वेन गृहीता आसीद्बभूव । 'तं' पतंचलदुहितर्याविष्टं गंधर्वं 'कोऽसि' कस्त्वमसि किंनामाऽसीति सर्वे वयमपृच्छाम । 'सः' गंधर्वः पुनरस्मानब्रवीत् । नामतोऽहं 'सुधन्वा' गोत्रतः 'आंगिरसः' इति । तत्स्वरूपं ज्ञात्वा 'तं' गंधर्वं प्रति 'यदा' यस्मिन् काले लोकानामंतानवसानानि 'अपृच्छाम' । 'अथ' तदा 'एनं' गंधर्वं प्रति 'पारिक्षिताः' परितो दुरितं क्षीयते येन स परिक्षित् अश्वमेधः, तद्याजिनः पारिक्षिताः 'क्वाभवन्' क्व गता बभूवुरिति 'अब्रूम' पृष्टवंतो वयमिति । 'क्व पारिक्षिताऽअभवन्निति' सर्वं स च गंधर्वोऽस्मभ्यमब्रवीत् । तेनैतस्य प्रश्नस्य गंधर्वेण दत्तोत्तरज्ञः सोऽहं विद्यासंपन्नो याज्ञवल्क्य ! 'क्व

स होवाच। (चो) उवाच वै स तदगच्छन्वैते तत्र यत्राश्वमेधयाजिनो गच्छन्तीति क न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिꣳशतम्वै देवरथाह्न्या-न्ययं लोकस्तꣳ समन्तं लोकन्द्विस्तावत्पृथिवी पर्य्येति ताम्पृथिवीन्द्वि-स्तावत्समुद्रः पर्य्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रन्ता-वानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायु-रात्मनि धित्वा तत्रागमयद्यत्र पारिक्षिताऽअभवन्नित्येवमिव वै स वायुमेव प्रशशꣳस तस्माद्वायुरेव व्यष्टिर्व्वायुः समष्टिरप पुनर्म्मृत्युञ्जयति सर्व्व-मायुरेति यऽएवम्वेद ततो ह भुज्युर्ल्लाह्यायनिरुपरराम ॥ २ ॥

इति चतुर्दशे काण्डे ९ऽष्टमप्रपाठके बृहदारण्यकोपनिषादि तृतीय प्रपाठके प्रथमं ब्राह्मणम्। १४ (९) ३। १ ॥ (६) ३-३ ॥

---

स होवाच। उवाच वै स तत्। अगच्छन्वैते तत्र। यत्राश्वमेधयाजिनो गच्छन्तीति। क न्वश्व-मेधयाजिनो गच्छंतीति। द्वात्रिंशतं वै देवरथाह्न्यानि अयं लोकः। तं समंतं लोकं द्विस्तावत्पृथिवी पर्येति। तां पृथिवीं द्विस्तावत्समुद्रः पर्येति। तद्यावती क्षुरस्य धारा। यावद्वा मक्षिकायाः पत्रम्। तावानंतरेणाकाशः। तानिंद्रः सुपर्णो भूत्वा वायवे प्रायच्छत्। तान्वायुरात्मनि धित्वा तत्रागमयत्। यत्र पारिक्षिता अभवन् इति। एवमिव वै स वायुमेव प्रशशंस। तस्माद्वायुरेव व्यष्टिः। वायुः समष्टिः। अप पुनर्मृत्युं जयति। सर्वमायुरेति। य एवं वेद। ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

---

पारिक्षिता अभवन्निति' तत्सर्वं 'त्वा' त्वां 'पृच्छामि'। गंधर्वोपदिष्टं सर्वं त्वं चेज्जानासि तर्हि वद। नो चेत् त्वमज्ञानेन गृहीतोऽसीत्यभिप्रायः। प्रथमा तावत् "क पारिक्षिता अभवन्" इत्युक्तिर्गन्धर्वप्रश्नार्था। द्वितीया तु यो हि "क पारिक्षिता अभवन्" इति प्रश्नो गंधर्वं प्रति कृतः तस्य प्रत्युक्तिं सर्वां सोऽस्मभ्यमब्रवीदिति विवक्षया तदनुरूपप्रतिवचनार्था। तृतीया तु मुनिं प्रति प्रश्नार्था। इति विभागो बोद्धव्यः ॥ १ ॥

अज्ञानेन गृहीतोऽसीति ग्रहं परिहरन्नुत्तरमाह—स होवाचेति। 'सः' याज्ञवल्क्यो भुज्युं प्रति गन्धर्वोक्ति-प्रत्युक्तिमुवाच। हे भुज्यो! स गन्धर्वस्तुभ्यमिति 'वै' तदुत्तरमुवाच। वैशब्दो गन्धर्वाल्लब्धस्य ज्ञानस्य स्मरणार्थः। इतीति किं? 'एते' इदानीन्तनाः पारिक्षिताः तत्रागच्छन्। 'यत्र' यस्मिन् पूर्वतना अश्व-मेधयाजिनो 'गच्छन्ति'। पूर्वतना अश्वमेधयाजिनः 'क नु' कुत्र 'गच्छन्तीति' पृष्टे उत्तरं वक्तुं तेषां गतिविवक्षया तावद्भुवनकोशपरिमाणमाह—द्वात्रिंशतं वा इति। द्वे अधिके त्रिंशतं द्वात्रिंशतम्। देव आदित्य-स्तस्य रथो देवरथः तस्य गत्या एकेनाह्ना यावद्देशपरिमाणं परिच्छिद्यते, तदेकं देवरथाह्न्यं, तत् द्वात्रिंश-

---

१–आत्मपुराणे पंचमेऽध्याये "जंबूद्वीपः समभ्रोऽयमीरितो लक्षयोजनः। तावांस्तन्मेखलाभूतो वर्तते लवणोदधिः १९२। जंबूद्वीपः समुद्रेण वृतो यद्वद्धि वर्तते। ससागरस्तथा द्वीपैर्वृतः षड्भिः ससागरैः १९३। द्वीपानां ससमुद्राणां स्थितानां परिवृत्य हि। अन्योऽन्यमावृतात्तस्मात् द्विगुणं द्विगुणं बहिः १९४। परिमाणममीषां यन्मिलितानां प्रकीर्तितम्। तावदेव तु विज्ञेयं भूमेः शुद्धोदकाद्बहिः १९५। अत्र तिष्ठति शैलेंद्रो दुर्गवत्सर्वतो मुखः। तदंतर्भास्करो गच्छेदहोरात्रेण सर्वदा १९६। अहो-रात्रेण यावंतं देशं गच्छति भास्करः। द्वात्रिंशद्गुणितः सोऽयं भूलोकः कथितो बुधैः १९७। इति। परिमाणमिति। अमीषां ससमुद्रद्वीपानां यावत्परिमाणं "कोटिद्वयं त्रिपंचाशल्लक्षाणि च ततः परम्। पंचाशच्च सहस्राणि सप्त द्वीपाः ससागराः"। इति शैवागमे प्रसिद्धम्। तावच्छुद्धोदकात्परस्तात् भूमेः परिमाणं बोध्यमिति। तदनंतरमेकोनचत्वारिंशल्लक्षोत्तरकोटिद्वयकपरि-

द्विगुणितं सत् यावन्ति 'देवरथाह्न्यानि' तावत्परिमाणोऽयं लोकः । लोकालोकगिरिणा परिक्षिप्तः ससागरः सर्वेषां प्राणिनां कर्मफलोपभोगहेतुभूतः । लोक्यते सूर्यादिभिः प्रकाश्यत इति स एष एतावान् लोकः । अतः परं अलोकः । 'तं' च 'लोकं' 'समंतं' समंततः । **पृथिवी द्विस्तावदिति** । लोकपरिमाणात् द्विगुणपरिमाणा 'पर्येति' परितो व्याप्य तिष्ठति । "रविचन्द्रमसोर्यावन्मयूखैरवभास्यते । ससमुद्रसरिच्छैला तावती पृथिवी स्मृता" ( ) इति स्मृतेः । तथैव 'तां' पृथिवीं पृथिवीपरिमाणतः । **द्विस्तावदिति** । द्विगुणपरिमाणः 'समुद्रः' समंतं 'पर्येति' व्याप्नोति । यं घनोदमाचक्षते पौराणिकाः । उक्तं हि—" अण्डस्यास्य समंतात्तु सन्निविष्टोऽमृतोदधिः । समंताद्घनतोयेन धार्यमाणः स तिष्ठति" ( ) इति । एवं यथोक्तरीत्या लोकादिपरिमाणे स्थिते सदृष्टांतं अण्डकपालयोर्विवरपरिमाणमाह—**तद्यावतीति** । तत्तत्र व्यवहारभूमौ 'यावती' यावत्परिमाणा 'क्षुरस्य धारा' अग्रं वा । अथवा 'यावत्' सौक्ष्म्येण युक्तं 'मक्षिकायाः पत्रं' पक्षः । 'तावान्' तत्परिमाणः कपालयोरन्तरेण मध्ये 'आकाशः' अवकाशः । यद्विवक्षयेदं सर्वमुक्तं तदाह—**तानिन्द्र** इति । तेनाकाशद्वारेण तान्पारिक्षितानश्वमेधयाजिनः प्राप्तान् 'इंद्रः' परमेश्वरः अश्वमेधे सुपर्णाकारेण चितोऽग्निः सः 'सुपर्णः' पक्षपुच्छाद्यात्मकः पक्षी 'भूत्वा' 'वायवे प्रायच्छत्' दत्तवान् । स्वस्य स्थूलत्वेनोक्तच्छिद्रद्वारा अण्डाद्बहिर्गमनासंभवात् युक्तं वायवे प्रदानमिति भावः । 'वायुः' पुनस्तान्पारिक्षितान् 'आत्मनि' स्वस्मिन् 'धित्वा' स्थापयित्वा स्वात्मभूतान् कृत्वा 'तत्र' तस्मिन् अगमयद्गमितवान् । 'यत्र' पूर्वे अतिक्रांतकालिकाः 'पारिक्षिताः' अश्वमेधयाजिनोऽभवन्निति । इतिशब्द आख्यायिकासमाप्त्यर्थः । एवमाख्यायिकया निर्णीतमर्थं आख्यायिकातोऽपसृत्य श्रुतिरेव स्वमुखेनास्मभ्यमाचष्टे—**एवमिव वै** इति । 'एवमिव वै' एवमेव । 'सः' गंधर्वः । 'वायुमेव' क्रियाशक्तिप्रधानं सूत्रमेव पारिक्षितानां गतिं 'प्रशशंस' तुष्टाव । यस्माद्वायुः स्थावरजंगमानां भूतानामंतरात्मा—बहिश्च स एव । तस्मात् 'वायुरेव व्यष्टिः' अध्यात्माधिभूताधिदैवभावेन व्यावृत्तरूपा विविधा अष्टिर्व्याप्तिः । तथा 'वायुरेव समष्टिः' समाऽनुगतरूपा केवलेन सूत्रात्मना अष्टिर्व्याप्तिः । एतद्विज्ञानफलमाह—**अप पुनरिति** । 'य एवं' समष्टिव्यष्टिरूपं वाय्वात्मकमात्मानं 'वेद' उपगच्छति । सः 'पुनर्मृत्युं' पुनर्मरणं 'अपजयति' । सकृन्मृत्वा पुनर्न म्रियते इत्यर्थः 'सर्वं' संपूर्णमायुरेति प्राप्नोति । 'ततो ह' आत्मनः प्रश्ननिर्णयात् भुज्युर्लाह्यायनिरुपरराम । स एव अप्रतिभारूपं निग्रहं प्राप्तवानिति भावः ॥ २ ॥

इति श्रीहृषीकेशब्राह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां मध्यमे याज्ञवल्क्यकाण्डे वा मुनिकाण्डे तृतीयेऽध्याये तृतीयं भुज्युब्राह्मणं परिसमाप्तम् ॥ १४(६)३–३ ॥

---

–मिता स्वर्णभूमिरप्यस्तीत्यपि–शैवागमानुरोधेन बोध्यम् १९५ । **अत्रेति** । अत्र पूर्वश्लोकोक्तदेशे शैलेंद्रो लोकालोकनामा मंडलाकारस्तिष्ठति । तदंतः तस्य लोकालोकस्यांतर्मध्ये तत्प्रावृतदेशमध्यवर्तिमानसोत्तरमूर्द्धनीति यावत् । अहोरात्रभ्रमणेन भास्करो गच्छति । मानसोत्तरमंडलपरिमाणं तु–योजनानां लक्षोत्तरसार्द्धनवकोट्य इति पुराणानुरोध्यर्थः १९६ । **अहोरात्रेणेति** । अहोरात्रेण यावंतं यत्परिमाणकं देशं मानसोत्तरपरिमंडलरूपं आदित्यः परिक्रामति । श्रुतौ तावान् देशो देवरथाह्न्याशब्देनोक्तः । देवस्य सूर्यस्य रथेनाह्ना अहोरात्रेण भोग्यत्वात् । स च देशो द्वात्रिंशद्गुणितो यावान् भवेत् । तावान् देशो रविकिरणव्याप्तो बुधैर्भूमिरित्युक्तः । श्रुत्या तु लोक इत्युक्तः । लोक्यते कर्मफलं भुज्यते अत्रेति व्युत्पत्तेरित्यर्थः १९७ । योजनप्रमाणं निगमपरिशिष्टे–"चतुर्विंशोङ्गुलो हस्तश्चतुर्हस्तं धनुः स्मृतम् । धनुःशतानि क्रोशोऽष्टावष्टक्रोशं तु योजनम्" इति २४॥

१–घनोदं लवणोदधिम् ॥

अथ हैनङ्कहोडः कौषीतकेयः पप्रच्छ। याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म यऽआत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्येष तऽआत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकम्मोहञ्जराम्मृत्युमत्येत्येतम्वै तमात्मानम्विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यञ्चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येतेऽएषणेऽएव भवतस्तस्मात्पण्डितः पाण्डित्यन्निर्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृशऽएव भवति यऽएवम्वेद ततो ह कहोडः कौषीतकेयऽउपरराम ॥ १ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीय प्रपाठके द्वितीयं ब्राह्मणम् ॥ १४।(५)३।२॥ (६) ३-४॥

---

कहोडब्राह्मणं वा निर्गुणब्रह्मविद्याब्राह्मणम् ।

अथ हैनं कहोडः कौषीतकेयः पप्रच्छ । याज्ञवल्क्येति होवाच । यत्साक्षादपरोक्षाद्ब्रह्म । य आत्मा सर्वान्तरः । तं मे व्याचक्ष्वेति । एष त आत्मा सर्वांतरः । कतमो याज्ञवल्क्य सर्वांतरः । यः अशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय, अथ भिक्षाचर्यं चरंति । या ह्येव पुत्रैषणा सा वित्तैषणा । या वित्तैषणा । सा लोकैषणा । उभे ह्येते एषणे एव भवतः । तस्मात्पंडितः पांडित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पांडित्यं च निर्विद्य, अथ मुनिः । अमौनं च मौनं च निर्विद्य, अथ ब्राह्मणः । स ब्राह्मणः केन स्यात् । येन स्यात् । तेनेदृश एव भवति । य एवं वेद । ततो ह कडोडः कौषीतकेय उपरराम ॥ १ ॥

---

एवं पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्गृहीतः पुनःपुनर्ग्रहातिग्रहांस्त्यजन्नुपाददच्चाब्रह्मस्थावरं पुण्योत्कर्षादपि अविमुच्यमानः संसरत्येवेति ब्राह्मणत्रयेणोक्तम् । इदानीं तस्य बन्धस्यमोक्षसाधनं ससंन्यासमात्मज्ञानं वक्तव्यमिति कहोडब्राह्मणमारभ्यते—अथ हैनं कडोडः कौषीतकेय इति । अथानंतरं 'ह' किल 'कहोडः' नामतः, कुषीतकस्यापत्यं 'कौषीतकेयः' 'पप्रच्छ' "याज्ञवल्क्येति होवाचेति" पूर्ववत् । यदिति परात्मतत्त्वं विशेष्यम् । तस्य साक्षादपरोऽक्षाद्ब्रह्मेत्येवमंतं विशेषणम् । परोऽक्षत्वादिभ्रमव्युदासार्थम् । 'यः' इति जीवात्मा विशेष्यं, तस्य सर्वान्तर इति विशेषणम् । परिच्छिन्नत्वादिभ्रमव्यावृत्त्यर्थम् । तथा च 'यद्ब्रह्म' बृहत्तमं साक्षादव्यवहितं तस्य 'सर्वांतरः' इति व्यत्ययेन परोऽक्षमगौणं श्रौत्रं ब्रह्मेत्यादि यथा गौणं न तथा गौणमित्यर्थः ।

'यः' आत्मा प्रत्यगात्मा 'सर्वांतरः' सर्वस्याभ्यन्तरः । यच्छब्दाभ्यां सामान्येनाधिकरण्येनानुगतः प्रसिद्ध आत्मा ब्रह्मेति । 'तं' ब्रह्माभिन्नं प्रत्यगात्मानं 'मे' मह्यं 'व्याचक्ष्व' विस्पष्टं कथय । यथा शृंगे गृहीत्वा गां दर्शयति तद्वदित्यर्थः । इत्येवमुक्तो याज्ञवल्क्यः प्रत्याह–**एष त आत्मा सर्वांतर** इत्येतद्विशेषणम् साक्षादित्यादिसर्वविशेषणोपलक्षणार्थम् । तथा च य उक्तविशेषणैरुपलक्षितो ब्रह्मात्मैकत्वलक्षणः सः 'एषः' 'ते' तव कार्यकारणसंघातस्यात्मा । पुनः पृच्छति–**कतम** इति । तत्र पिंड एकः । तस्याभ्यंतरे लिंगात्माकरणसंघातो द्वितीयः । यश्च परमात्मस्वरूपस्तृतीयः । तेषु मध्ये हे 'याज्ञवल्क्य !'–'कतमः सर्वांतरः' सर्वांतरत्वादिविशेषणैर्विशिष्टस्त्वया विवक्षित इति पृष्टश्चरमं पक्षं गृहीत्वोत्तरमाह–**योऽशनायापिपासे** इति । अशितुमिच्छा अशनाया । पातुमिच्छा पिपासा । ते 'अशनायापिपासे' 'यः' अत्येतीति वक्ष्यमाणेन संबंधः । प्राणैकधर्मत्वादशनायापिपासयोः समस्योपादानम् । **शोकं मोहमिति** । अरतिवाचिना शोकशब्देन–तत्कार्यभूतः काम उच्यते । इष्टं वस्तु उद्दिश्य चिंतयतो यदरमणं तत्तृष्णाऽभिभूतस्य कामबीजम् । तेन हि कामो दीप्यते । मोहो विपरीतप्रत्ययप्रभवोऽविवेकः सम्यग्ज्ञानविरोधात् भूमा विद्याशब्दवाच्यः । कामस्य शोकः, मोहो दुःखस्य हेतुरिति भिन्नकार्यत्वाच्छोकमोहयोरसमासकरणम् । तौ च मनोऽधिकरणौ । **जरां मृत्युमिति** । शरीरविपरिणामो वलीपलितादिलिंगः 'जरा' । शरीरविच्छेदो विपरिणामावसानः 'मृत्युः' । 'अत्येति' अतिक्रामति–इति प्रत्येकं संबध्यते । जरामृत्यू च शरीराधिकरणौ । "स एष ते आत्मा सर्वांतरः"–इति पूर्वेणान्वयः । एवमुक्तज्ञानांगं परिव्राज्यं वक्तुमाह–**एतं वै तमात्मानमिति** । यः असौ साक्षादव्यवहितः अपरोक्षादगौणो ब्रह्मादिस्तंबपर्यंतानां भूतानां 'सर्वांतर आत्मा' अशनायापिपासादिभिः संसारधर्मैः सदा न स्पृश्यते । 'तमेतं वै' 'आत्मानं' स्वं तत्त्वं 'विदित्वा' परं ब्रह्म सदा सर्वसंसारविनिर्मुक्तं नित्यतृप्तं अहमेवास्मीति श्रुत्याचार्याभ्यां ज्ञात्वा 'ब्राह्मणाः' ब्रह्मनिष्ठा ब्राह्मण्यजातिमंतो वा 'पुत्रैषणायाः' पुत्रार्थमेषणा पुत्रैषणा तां पुत्रोत्पत्तिमुद्दिश्य दारसंग्रहेच्छालक्षणा तस्याः । दारसंग्रहमकृत्वेत्यर्थः । **वित्तैषणायाश्चेति** । वित्तं द्विविधं–मानुषं दैवं च । मानुषं गवादि । दैवं विद्या । कर्मसाधनस्य तस्य गवादेरुपादानरूपा इच्छा वित्तैषणा । **लोकैषणायाश्चेति** । अनेन कर्म कृत्वा पितृलोकं जेष्यामीति विद्यासंयुक्तेन वा देवलोकं केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकं जेष्यामीति इच्छा लोकैषणा । एताभ्य एषणाभ्यः 'व्युत्थाय' वैपरीत्येनोत्थानं कृत्वा संन्यासं विधायेत्यर्थः । अथानंतरं शेषकाले देहस्थित्यर्थं 'भिक्षाचर्यं' भिक्षार्थं संचरणं 'चरंति' कुर्वंति । "फलेच्छासाधनं संक्रामति"–इति न्यायात् । लोकैषणैवेका इत्याह-**या ह्येवेति** । 'या हि' प्रसिद्धा 'पुत्रैषणा' सैव 'वित्तैषणा' दृष्टफलसाधनत्वादिसामान्यात् । 'या' पुत्रैषणाया एकत्वमापन्ना 'वित्तैषणा' कर्मार्था 'सा लोकैषणैव' । साध्यलोकैषणा प्रयुक्तत्वात् साधनैषणायाः । एवमेकत्वेऽपि लोकैषणायाः साधनमंतरेणासिद्धेः साध्यसाधनभेदेन द्वैविध्यमाह–**उभे हीति** । यस्मात् पूर्वे ब्राह्मणाः तमेतमात्मानं विदित्वा सर्वस्मात् साधनफलस्वरूपात् एषणालक्षणात् व्युत्थाय दृष्टादृष्टार्थं कर्म्म तत्साधनं च हित्वा भिक्षाचर्यं चरंति स्म । तस्मादद्यतनोऽपि ब्रह्मविद्ब्राह्मणः एषणाभ्यो व्युत्थाय 'पांडित्यं' शास्त्रोत्था बुद्धिः पंडा तद्वान् । 'पांडित्यं' वेदांतवाक्यविचारलक्षणं श्रवणापरपर्यायं 'निर्विद्य' निःशेषं विदित्वा आत्मज्ञानं निरवशेषं कृत्वा अनंतरं 'बाल्येन तिष्ठासेत्' । श्रवणज्ञानोत्पन्नाशेषानात्मदृष्टितिरस्कारसामर्थ्यं बलं तस्य भावो बाल्यं तेन 'बाल्येन' बलभावेन विषयैरनाकृष्टः सन् 'तिष्ठासेत्' स्थातुमिच्छेत् । बाल्यशब्दाभिधेयं मननं कुर्यादित्यर्थः । 'बाल्यं च पांडित्यं च निर्विद्य' निःशेषं कृत्वा अथानंतरं मुनिर्मौनवान्

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म यऽआत्मा सर्व्वान्तरस्तम्मे व्याचक्ष्वेत्येष तऽआत्मा सर्व्वान्तरः कतमो याज्ञवल्क्य सर्व्वान्तरो यः प्राणेन प्राणिति स तऽआत्मा सर्व्वान्तरो योऽपानेनापानिति स तऽआत्मा सर्व्वान्तरो यो व्यानेन व्यनिति स तऽआत्मा सर्व्वान्तरो यऽउदानेनोदनिति स तऽआत्मा सर्व्वान्तरो यः समानेन समानिति स तऽआत्मा सर्व्वान्तरः स होवाचोषस्तश्चाक्रायणो यथा वै ब्रूयादसौ गौरसावश्वऽइत्येवमेवैतद्व्यपदिष्टम्भवति

उषस्तब्राह्मणं वा निर्गुणात्मविद्याब्राह्मणम् ।

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । याज्ञवल्क्येति होवाच । यत्साक्षादपरोक्षाद्ब्रह्म । य आत्मा सर्वांतरः । तं मे व्याचक्ष्वेति । एष त आत्मा सर्वांतरः । कतमो याज्ञवल्क्य सर्वांतरः । यः प्राणेन प्राणिति । स त आत्मा सर्वांतरः । योऽपानेनापानिति । स त आत्मा सर्वांतरः । यो

धारावाहिकात्मप्रत्ययप्रवाहवान् तिष्ठासेदित्यनुषज्यते । निदिध्यासनं कुर्यादित्यर्थः । एवममौनं च । उक्तार्थपांडित्यबाल्यशब्दाभिधेयं श्रवणमननाख्यं ' निर्विद्य ' ' मौनं ' चोक्तार्थमुनिशब्दवाच्यं निदिध्यासनाख्यं च ' निर्विद्य ' अथानंतरं ' ब्राह्मणः ' निरुपचरितब्राह्मण्यवान् साक्षात्कृतब्रह्मैव स्यात् । कृतकृत्यो भवेदित्यर्थः । उक्तं ब्राह्मण्यं प्राप्तवतो ब्रह्मविदः समाचारं पृच्छति- स ब्राह्मण इति । ' सः ब्राह्मणः ' ' केन ' चरणेनेदृक् स्याद्भवेत् । अनियतं तस्य चरणमित्युत्तरमाह—येनेति । 'येन' चरणेन भवेत् । तेनेदृश एवेति । येन केनचित् अव्यवस्थितचरणेन ' ईदृश एव ' कृतकृत्य एव ब्राह्मणः 'भवति' । विहितमाचरतो निषिद्धं च त्यजतः शुद्धबुद्धेः श्रुताद्वाक्यात् सम्यक् धीरुत्पद्यते । तस्य च वासनावशात् व्यवस्थितैव चेष्टा नाव्यवस्थितेति न यथेष्टाचरणप्रयुक्तो दोष इति स्तुत्यर्थं येन केनचिच्चरणेनेति बोध्यम् । इदानीं विज्ञानफलमाह—य एवं वेदेति । ' यः ' ब्राह्मणः एवमतत् ब्राह्मण्यावस्थानं अशनायाद्यतीतात्मस्वरूपं नित्यतृप्तमिति ' वेद ' जानाति । सोऽपीदृश एवोक्तलक्षण एव ब्राह्मणो भवतीत्यनुषज्यते । ' ततो ह कहोडः कौषीतकेय उपरराम ' ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्याये चतुर्थं कहोडब्राह्मणं वा निर्गुणब्रह्मविद्याब्राह्मणं परिसमाप्तम् ॥ १४ ( ६ ) ३–४ ॥

एवं ब्राह्मणत्रयेण सप्रयोजकं बन्धनमुक्तम् । चतुर्थे च कहोडब्राह्मणे बंधध्वंसि ससंन्यासं आत्मतत्त्वज्ञानमभिहितम् । सांप्रतं यो बद्धः संसरति, सोऽस्ति नास्ति वेति, अस्तित्वे च किंलक्षणो देहादीनामन्यतमः, तेभ्यो विलक्षणो वेति विमृश्ये आत्मनो देहादिभ्यो विवेकेनाधिगमाय उषस्तब्राह्मणमारभ्यते—अथ हैनमुषस्तश्चाक्रायण इति । अथानंतरं ' ह ' चक्रस्यापत्यं चाक्रायणः उषस्तनामा ब्राह्मणः ' एनं ' प्रकृतं याज्ञवल्क्यं पप्रच्छेत्यादि

यदेव साक्षादपरोक्षाद्ब्रह्म यऽआत्मा सर्व्वान्तरस्तम्मे व्याचक्ष्वेत्येष तऽआत्मा सर्व्वान्तरः कतमो याज्ञवल्क्य सर्व्वान्तरो न दृष्टेर्द्द्रष्टारम्पश्येर्न्न श्रुतेः श्रोतारᳫँ शृणुया न मतेर्म्मन्तारम्मन्वीथा न विज्ञातेर्व्विज्ञातारम्विजानीयाऽएष तऽआत्मा सर्व्वान्तरोऽतोऽन्यदार्तन्ततो होषस्तश्चाक्रायणऽउपरराम ॥ १ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ १४ । (५) ३।२ ॥ (६) ३–५ ॥

---

व्यानेन व्यनिति । स त आत्मा सर्वांतरः । य उदानेनोदनिति । स त आत्मा सर्वांतरः । यः समानेन समानिति । स त आत्मा सर्वांतरः । स होवाचोषस्तश्चाक्रायणः । यथा वै ब्रूयात् । असौ गौः । असावश्व इति । एवमेवैतत् व्यपदिष्टं भवति । यदेव साक्षादपरोक्षात् ब्रह्म । य आत्मा सर्वांतरः । तं मे व्याचक्ष्वेति । एष त आत्मा सर्वांतरः । कतमो याज्ञवल्क्य सर्वांतरः । न दृष्टेर्द्रष्टारं पश्येः । न श्रुतेः श्रोतारं शृणुयाः । न मतेर्मंतारं मन्वीथाः । न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वांतरः । अतोऽन्यदार्तम् । ततो होषस्तश्चाक्रायण उपरराम ॥ १ ॥

---

पूर्ववत् । पूर्वस्मात् कहोडप्रश्नात् किंचिद्विशेषं वक्तुं पूर्वोक्ते एव प्रश्नप्रतिवचने अनुवदति—**यः साक्षादित्यारभ्य यः प्राणेन प्राणितीत्यतः** प्राक्तनेन ग्रन्थेन । यद्विशेषकथनायायमनुवादः । तं पूर्वानुक्तं विशेषमाह—**यः प्राणेनेति** । 'यः प्राणेन' मुखनासिकासंचारिणा 'प्राणिति' प्राणनचेष्टां करोति । येन प्राणः प्रणीयत इत्यर्थः । 'स ते' तव कार्यकारणसंघातस्यात्मा उक्तविशेषणविशिष्टो विज्ञानमयः । एवं '**योऽपानेनापानिति**' 'यो व्यानेन व्यनिति' इत्यादि व्याख्येयम् । सर्वाः कार्यकारणसंघातगताः प्राणनादिचेष्टाः दारुयन्त्रस्येव येन क्रियन्ते । संस्कार्यकरणसंघातविलक्षणो विज्ञानमयः चेष्टयिता अस्ति । यतो या खलु अचेतनप्रवृत्तिः सा चेतनाऽधिष्ठानपूर्विका यथा रथादिप्रवृत्तिरिति बोध्यम् । प्रश्नप्रतिवचनयोरननुरूपत्वमाशंकते—**स होवाचोषस्तश्चाक्रायण** इति । हे मुने ! यथा कश्चित् गामश्वं वा प्रत्यक्षं दर्शयामीति पूर्वं प्रतिज्ञाय पश्चात् यश्चलति 'असौ गौः' यो वा धावति 'असावश्व इति' चलनादिलिंगैः 'यथा वै' निश्चितं 'ब्रूयात्' व्यपदिशेत् । 'एवमेव' ब्रह्म प्रत्यक्षं दर्शयामीति मत्प्रश्नानुसारेण प्रतिज्ञाय प्राणनादिलिंगैस्तद्ब्रह्म 'व्यपदिष्टं भवति' त्वया । तथा च–तद्व्यपदिशतस्ते प्रतिज्ञाहानिः अनवधेयवचनतावश्यादिति भावः । किं बहुना गोतृष्णानिमित्तं व्याजं त्यक्त्वा मत्प्रश्नानुसार्युत्तरं वदेत्यभिप्रायवान् पूर्वोक्तमेव प्रश्नमनुवदति—**यदेव साक्षा**दित्यादिना-**व्याचक्ष्वेत्यं**तेन । यथा मया प्रथमं प्रतिज्ञातस्तवात्मा एवंलक्षण इति तां प्रतिज्ञामनुवर्ते एवेत्याशयवान् पूर्वोक्तमेवोत्तरमनुवदति—**एष तऽ आत्मा सर्वांतर** इति । ननु—"असौ गौरसावश्व इति" यत्प्रत्यक्षेणासावात्मेति आत्मानं दर्शय इत्येवंलक्षणो मत्प्रश्नो नानुसृतः स्यादित्याशयवान् पूर्वोक्तमेव प्रश्नान्तरमनुवदति—**कतमो याज्ञवल्क्य सर्वांतर** इति । सत्यं, एतादृशश्चेत्तव प्रश्नः । तर्हि नैवानुसृतः स्यात् । आत्मनो दृष्ट्यादिसाक्षित्वात् घटादिवत् विषयीकर्तुं अशक्यत्वादित्यभिप्रेत्याह—**न दृष्टेर्द्रष्टारमिति** । दृष्टेर्दर्शनवृत्तेरनित्याया लौकिक्याः कर्मभूतायाः '**द्रष्टारं**'

अथ हैनङ्गार्गी व्वाचक्नवी पप्रच्छ । य्याज्ञवल्क्येति होवाच य्यदिदꣳ सर्व्वमप्स्वोतञ्च प्प्रोतञ्च कस्मिन्न्वापऽओताश्च प्प्रोताश्चेति व्वायौ गार्ग्गीति कस्मिन्नु व्वायुरोतश्च प्प्रोतश्चेत्याकाशऽएव गार्ग्गीति कस्मिन्न्वाकाशऽओतश्च प्प्रोतश्चेत्यन्तरिक्षलोकेषु गार्ग्गीति कस्मिन्न्वन्तरिक्षलोकाऽओताश्च प्प्रोताश्चेति द्यौर्ल्लोकेषु गार्ग्गीति कस्मिन्नु द्यौर्ल्लोकाऽओताश्च प्प्रोताश्चेत्यादित्यलोकेषु गार्ग्गीति कस्मिन्न्वादित्यलोकाऽओताश्च प्प्रोताश्चेति चन्द्रलोकेषु गार्ग्गीति कस्मिन्नु चन्द्रलोकाऽओताश्च प्प्रोताश्चेति नक्षत्रलोकेषु गार्ग्गीति कस्मिन्नु नक्षत्रलोकाऽओताश्च प्प्रोताश्चेति देवलोकेषु गार्ग्गीति कस्मिन्नु देवलोकाऽओताश्च प्प्रोताश्चेति गन्धर्व्वलोकेषु गार्ग्गीति

---

गार्गीब्राह्मणम् ।

अथ हैनं गार्गी वाचक्नवी पप्रच्छ । याज्ञवल्क्येति होवाच । यदिदं सर्वमप्स्वोतं च प्रोतं च । कस्मिन्नु आप ओताश्च प्रोताश्चेति । वायौ गार्गीति । कस्मिन्नु वायुरोतश्च प्रोतश्चेति । आकाश एव गार्गीति । कस्मिन्नु आकाश ओतश्च प्रोतश्चेति । अंतरिक्षलोकेषु गार्गीति । कस्मिन्नु अंतरिक्षलोका ओताश्च प्रोताश्चेति । द्यौर्लोकेषु गार्गीति । कस्मिन्नु द्यौर्लोका ओताश्च प्रोताश्चेति ।

---

अलौकिक्या स्वात्मरूपया नित्यया दृष्ट्या व्याप्तारं हे उषस्त ! त्वं 'न पश्येः' न पश्यसि । न च कदाचिदपि विषयत्वेन दृष्टेर्द्रष्टा स्फुरतीत्यर्थः । तथा 'श्रुतेः' श्रवणवृत्तेः । तथा 'मतेः' केवलाया मनोवृत्तेः । तथा 'विज्ञातेः' केवलाया बुद्धिवृत्तेः । समानमन्यत् । एवमुक्तस्य दृष्ट्यादिसाक्षिणः अन्यत्किंचिद्वास्तवं वाऽस्तीत्युपसंहरति–**एष त आत्मा सर्वांतर** इति । 'एषः' सर्वैरुक्तैर्विशेषणैर्विशिष्टः 'ते' तवात्मा । अतः एतस्मादुक्तरूपात् आत्मनः 'अन्यदार्तं' विनाशि रज्जुसर्पादिवन्मिथ्याभूतमित्यर्थः । "ततो होषस्तश्चाक्रायण उपरामेति" पूर्ववत् ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्‌बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्याये पंचमं उषस्तब्राह्मणं निर्गुणात्मविद्याब्राह्मणं वा परिसमाप्तम् ॥ १४ । ( ६ ) ३ । ५ ॥

पूर्वब्राह्मणयोः "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वांतरः" इत्यत्र यः सर्वांतर आत्मा उक्तः । तस्य स्वरूपाधिगमाय शाकल्यब्राह्मणात्प्राक्तनं ब्राह्मणत्रयं आरभ्यते–तत्रानात्मभूतान् सर्वान् पदार्थान् तावत् गार्गीब्राह्मणेनाह–**अथ हैनं गार्गी व्वाचक्नवी**ति । अथानंतरं 'एनं' मुनिं 'गार्गी' नामतः वचक्नोर्दुहिता 'वाचक्नवी' पप्रच्छेत्यादि पूर्ववत् । 'यदिदं' सर्वं भूधरादिकं पार्थिवं धातुजातं 'अप्सु' उदके स्वकारणे 'ओतं च' दीर्घपटतंतुवत् 'प्रोतं च' तिर्यक्तंतुवत् सर्वतोऽन्तर्बहिर्भूताभिरद्भिर्व्याप्तमित्यर्थः । अन्यथा सक्तुमुष्टिवत् विशीर्येत । तथा च यथा येयं पंचीकृता पृथिवी कार्यत्वात्स्वकारणभूतासु पंचीकृतास्वप्सु ओता प्रोता च तद्वदपामपि कार्यत्वात् 'कस्मिन्नु' खलु 'आप ओताश्च प्रोताश्चेति' अनुमानविधया पृष्टो मुनिरुत्तरमाह–

कुस्मिन्नु गन्धर्वलोकाऽओताश्च प्प्रोताश्चेति प्प्रजापतिलोकेषु गार्ग्गीति कुस्मिन्नु प्प्रजापतिलोकाऽओताश्च प्प्रोताश्चेति ब्ब्रह्मलोकेषु गार्ग्गीति कुस्मिन्नु ब्ब्रह्मलोकाऽओताश्च प्प्रोताश्चेति स होवाच गार्ग्गि माऽतिप्प्राक्षी-र्म्मा ते मूर्द्धा व्व्यपप्तदनतिप्प्रश्न्या वै देवताऽअतिपृच्छसि गार्ग्गि माऽति-प्प्राक्षीरिति ततो ह गार्ग्गी व्वाचक्नव्युपरराम ॥ १ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीये प्रपाठके चतुर्थं ब्राह्मणम् ॥ १४। (५) ३।४ ॥ (६) ३–६ ॥

---

आदित्यलोकेषु गार्गीति । कस्मिन्नु आदित्यलोका ओताश्च प्रोताश्चेति । चंद्रलोकेषु गार्गीति । कस्मिन्नु चंद्रलोका ओताश्च प्रोताश्चेति । नक्षत्रलोकेषु गार्गीति । कस्मिन्नु नक्षत्रलोका ओताश्च प्रोताश्चेति । देवलोकेषु गार्गीति । कस्मिन्नु देवलोका ओताश्च प्रोताश्चेति । गंधर्वलोकेषु गार्गीति । कस्मिन्नु गंधर्वलोका ओताश्च प्रोताश्चेति । प्रजापतिलोकेषु गार्गीति । कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति । ब्रह्मलोकेषु गार्गीति । कस्मिन्नु ब्रह्मलोका ओताश्च प्रोताश्चेति । स होवाच । गार्गि मा अतिप्राक्षीः । मा ते मूर्द्धा व्यपप्तत् । अनतिप्रश्न्या वै देवता अतिपृच्छसि । गार्गि मा अतिप्राक्षीरिति । ततो ह गार्गी वाचक्नवी उपरराम ॥ १ ॥

---

व्वायौ गार्ग्गीति । हे गार्गि ! 'वायौ पंचीकृते आप ओताश्च प्रोताश्च । 'कस्मिन्नु' खलु 'वायुरोतश्च प्रोतश्चेति' । 'आकाश एव गार्गीति' । 'कस्मिन्न्वाकाश ओतश्च प्रोतश्चेति' । 'अंतरिक्ष-लोकेषु' पक्ष्यादिगतिहेतुभूतेषु । तान्येव पंचीकृतानि भूतानि संहतानि अंतरिक्षलोका उच्यंते । बहुवचनं-त्वारंभकभूतानां बहुत्वापेक्षया बोध्यम् । प्रजापतिलोकाः विराट्शरीरारंभकपंचीकृतपंचमहाभूतात्मकाः 'ब्रह्मलोकेषु' हिरण्यगर्भलोकेषु अपंचीकृतपंचभूतात्मकेषु ओतप्रोतभावेन वर्तंते । शेषं सुबोधम् । एवं पूर्ववदनुमानेन सूत्रमपि ब्रह्मलोकाश्रयं पृच्छंतीं गार्गीं प्रतिषेधति–स होवाचेत्यादिना । 'सः' याज्ञवल्क्यः 'ह' उवाच । हे 'गार्गि !' यासु देवतासु ब्रह्मलोकास्तु ओतप्रोतभावेन वर्तंते । ताः प्राणा-त्मभूताः सूत्रदेवताः आनुमानिकत्वत्प्रश्नविषयतामतीत्य वर्तमानाः अनुमानेन 'मा प्राक्षीः' मा पृच्छेत्यर्थः । प्रतिषेधातिक्रमे दोषमाह–मा ते मूर्द्धेति । पृच्छंत्याश्च 'ते' तव 'मूर्द्धा' मस्तकं 'मा व्यपप्तत्' विस्पष्टं मा पतेत् । मूर्द्धपातप्रसङ्गं प्रकटयन् प्रतिषेधमुपसंहरति–अनतिप्रश्न्या वै देवता इति । देवतानां स्वः प्रश्न आगमविषयः । तं प्रश्नविषयमतिक्रांतो गार्ग्याः प्रश्नः आनुमानिकत्वात् स प्रश्नो यासामिन्द्रादिदेवतानां विद्यते । ता अतिप्रश्न्याः, एतास्तु न अतिप्रश्न्याः 'अनतिप्रश्न्याः' । स्वप्रश्नविषया एव केवलागमगम्या इत्यर्थः । 'ता अनतिप्रश्न्याः' सूत्रदेवता वै 'अतिपृच्छसि' । अतो हे 'गार्गि !' मर्तुं चेन्नेच्छसि तर्हि 'मा अतिप्राक्षीः' । इति अनुग्रहार्थो निषेधः । 'ततो ह गार्गी वाचक्नव्युपरराम' इत्युपसंहारः पूर्ववत् ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-ब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यक-टीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्याये षष्ठं गार्गीब्राह्मणं परिसमाप्तम् ॥ १४ (६) ३–६ ॥

अथ हैनमुद्दालकऽआरुणिः पप्रच्छ। याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्य्या गन्धर्व्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्धऽआथर्व्वणऽइति ॥ १ ॥

सोऽब्रवीत् । ( त्प ) पतञ्चलङ्काप्यं याज्ञिकांश्च व्वेत्थ नु त्वङ्काप्य तत्सूत्रं यस्मिन्नयञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहन्तद्भगवन्वेदेति ॥ २ ॥

सोऽब्रवीत् । ( त्प ) पतञ्चलङ्काप्यं याज्ञिकांश्च व्वेत्थ नु त्वङ्काप्य

---

उद्दालकब्राह्मणं, अन्तर्यामिब्राह्मणं वा सृष्टिप्रवेशब्राह्मणम् ।

अथ हैनमुद्दालक आरुणिः पप्रच्छ । याज्ञवल्क्येति होवाच । मद्रेष्ववसाम पतंचलस्य काप्यस्य गृहेषु यज्ञमधीयानाः । तस्यासीद्भार्या गंधर्वगृहीता । तमपृच्छाम । कोऽसीति । सोऽब्रवीत् । कबंध आथर्वण इति ॥ १ ॥

सोऽब्रवीत्पतंचलं काप्यं याज्ञिकांश्च । वेत्थ नु त्वं काप्य तत्सूत्रम् । यस्मिन्नयं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवंतीति । सोऽब्रवीत्पतंचलः काप्यः । नाहं तद्भगवन्वेदेति ॥ २ ॥

सोऽब्रवीत्पतंचलं काप्यं याज्ञिकांश्च । वेत्थ नु त्वं काप्य तमंतर्यामिणम् । य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यंतरो यमयतीति । सोऽब्रवीत्पतंचलः काप्यः । नाहं तं भगवन्वेदेति ॥३॥

---

एवं गार्गीब्राह्मणे सूत्रादर्वाक्तनं व्यापकमुक्तम् । इदानीं आगमैकगम्यं सूत्रं तदंतर्गतमंतर्यामिणं च निर्वक्तुं अंतर्यामिब्राह्मणमारभ्यते—अथ हैनमुद्दालक आरुणिरिति । ' अथ ' गार्ग्या मूर्द्धपातभयादुपरतेरनंतरं ' उद्दालकः ' नामतः अरुणस्यापत्यमारुणिर्ह ' एनं ' याज्ञवल्क्यं पप्रच्छेति पूर्ववत् । स्वस्य सूत्रादिविद्यायाः आचार्योपदेशपूर्वकत्वेनागमविषयत्वं ज्ञापयितुमाख्यायिकामाह—मद्रेष्ववसामेति । ' मद्रेषु ' देशेषु ' पतंचलस्य ' पतंचलनाम्नः ' काप्यस्य ' कपिगोत्रस्य ' गृहेषु यज्ञमधीयानाः ' यज्ञशास्त्राध्ययनं कुर्वाणाः शिष्याः संतो वयं ' अवसाम ' उषितवंतः । ' तस्य ' पतंचलस्य ' भार्या ' ' गंधर्वगृहीता ' गंधर्वेण अमानुषेण सत्त्वविशेषेण गृहीता आविष्टा ' आसीत् ' । ' तं ' गंधर्वं पतंचलसहिता वयं याज्ञिकाः त्वं कोऽसीत्यपृच्छाम । एवं पृष्टः ' सः ' गंधर्वः अस्मभ्यमब्रवीत् । किं ? अहं नाम्ना ' कबंधः ' अथर्वणोऽपत्यमाथर्वण इति ॥ १ ॥

' सः ' गंधर्वः ' पतंचलं काप्यं ' याज्ञिकाँश्च ' तच्छिष्यानस्मान् प्रत्यब्रवीत् । किं ? हे काप्य ! ' नु ' वितर्के ' त्वं ' तत्सूत्रं ' वेत्थ ' जानीषे । किं तत्सूत्रमित्याकांक्षायां तद्विशिनष्टि—यस्मिन्नयं चेति । ' यस्मिन् ' सूत्रे ' अयं च लोकः ' इदं च जन्म ' परश्च लोकः ' परं च प्रतिपत्तव्यं जन्म ' सर्वाणि च भूतानि ' ब्रह्मादिस्तंबपर्यंतानि ' संदृब्धानि ' संग्रथितानि स्रगिव सूत्रे विष्टब्धानि भवंति । इति पृष्टः ' सः ' पतंचलः काप्यः ' अब्रवीत् ' । किं ? हे ' भगवन् ' ! इति संपूजयन् ' अहं ' तत्सूत्रं ' न वेद ' न जानामि इति ॥ २ ॥

एवमुक्तः ' सः ' गंधर्वः पुनरुपाध्यायं ' पतंचलं काप्यं ' याज्ञिकांश्चास्मान् प्रत्यब्रवीत् । किं ? हे काप्य !

तमन्तर्य्यामिणं यऽइमञ्च लोकं परञ्च लोकꣳ सर्व्वाणि च भूतान्यन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहन्तम्भगवन्वेदेति ॥ ३ ॥

सोऽब्रवीत् । ( त्प ) पतञ्चलङ्काप्यं याज्ञिकांश्च यो वै तत्काप्य सूत्रम्विद्यात्तञ्चान्तर्य्यामिणꣳ स ब्रह्मवित्स लोकवित्स देववित्स व्वेदवित्स यज्ञवित्सभूतवित्सऽआत्मवित्स सर्व्वविदिति तेभ्योऽब्रवीत्तदहम्वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तञ्चान्तर्य्यामिणम्ब्रह्मगवीरुदजसे मूर्द्धा ते व्विपतिष्यतीति ॥ ४ ॥

व्वेद वाऽअहङ्गौतम तत्सूत्रम् । ( न्तु ) तञ्चान्तर्य्यामिणमिति यो वाऽइदङ्कश्च ब्रूयाद्वेद व्वेदेति यथा व्वेत्थ तथा ब्रूहीति ॥ ५ ॥

---

सोऽब्रवीत् पतंचलं काप्यं याज्ञिकांश्च । यो वै तत् काप्य सूत्रं विद्यात् तं चांतर्यामिणम् । स ब्रह्मवित् । स लोकवित् । स देववित् । स वेदवित् । स यज्ञवित् । स भूतवित् । स आत्मवित् । स सर्ववित् । इति तेभ्योऽब्रवीत् । तदहं वेद । तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चांतर्यामिणम् । ब्रह्मगवीरुदजसे । मूर्धा ते विपतिष्यति इति ॥ ४ ॥

वेद वा अहं गौतम तत्सूत्रं तं चांतर्यामिणमिति । यो वा इदं कश्च ब्रूयात् । वेद वेदेति । यथा वेत्थ । तथा ब्रूहि इति ॥ ५ ॥

---

' त्वं ' ' नु ' वितर्के, सूत्रान्तर्गतमंतर्यामिणं ' वेत्थ ' । कोऽसावंतर्यामीत्याकांक्षायां तं विशिनष्टि—**यऽइमं च लोकमिति** ' य इमं च लोकं ' इत्येतदुक्तार्थम् । योऽन्तरोऽभ्यंतरः सन् ' यमयति ' दारुयंत्रमिव भ्रमयति । स्वं स्वमुचितं व्यापारं कारयतीति यावत् । एवमुक्तः ' सः ' पतंचलः काप्यः ' हे भगवन्निति संपूजयन् विनयेनाब्रवीत् । ' नाहं तं ' सूत्रांतर्गतमंतर्यामिणं वेदेति ॥ ३ ॥

एवं विनयं दृष्ट्वा ' सः ' गन्धर्वः स्वस्याचार्यत्वकामः सन् फलेन प्रलोभयितुं ' पतंचलं काप्यं ' याज्ञिकांश्चाब्रवीत् । हे ' काप्य ! ' ' तत्सूत्रं ' तस्यैव सूत्रस्य नियन्तारं सूत्रांतर्गतमन्तर्यामिणं च ' वै ' निश्चितं यः कश्चित् विद्याद्विजानीयात् । ' स ब्रह्मवित् ' स परमात्मवित्, ' स लोकवित् ' स लोकांश्च भूरादीन् अंतर्यामिणा नियम्यमानान् वेत्ति । ' स देववित् ' स देवांश्चाग्न्यादीन् लोकिनस्तेन नियम्यमानान् वेत्ति । ' स वेदवित् ' स वेदांश्च सर्वप्रमाणभूतान् वेत्ति । ' स यज्ञवित् ' स यज्ञान् वेदविहितान् ज्योतिष्टोमादीन् वेत्ति । ' स भूतवित् ' स भूतानि ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनांतर्यामिणा नियम्यमानानि वेत्ति । ' स आत्मवित् ' स आत्मानं कर्तृत्वभोक्तृत्वविशिष्टं तेनैवांतर्यामिणा नियम्यमानं वेत्ति । ' स सर्ववित् ' स सर्वं च जगत् तथाभूतं वेत्ति इति । एवं सूत्रतदन्तर्गतांतर्यामिणोर्विज्ञाने स्तुते प्रलुब्धेभ्योऽभिमुखेभ्योऽस्मम्यमाचार्यमुख्येभ्यो गन्धर्वः सूत्रांतर्यामिणोः स्वरूपमब्रवीत् । तत्स्वरूपमहं ' वेद ' गन्धर्वाल्लब्धागमः सन् जानामि । किमेतावता इत्यत आह—**तच्चेत्त्वमिति** । हे याज्ञवल्क्य ! ' त्वं ' चेद्यदि ' तत् ' उक्तविशेषणविशिष्टं ' सूत्रं ' ' तमन्तर्यामिणं च ' ' अविद्वान् ' अजानन् अब्रह्मवित्संश्चेत् ' ब्रह्मगवीः ' ब्रह्मविदां स्वभूता गाः अन्यायेन ' उदजसे ' उन्नयसि । तर्हि मच्छापदग्धस्य ' ते ' तव ' मूर्द्धा ' मस्तकः ' विपतिष्यति ' विस्पष्टं पतिष्यतीति ॥ ४ ॥

एवमुक्तो याज्ञवल्क्य आह—**वेद वा अहमिति** । ' गौतम ' इति गोत्रं यस्योद्दालकस्यैव स गौतमः तत्सम्बो-

वायुर्वै गौतम तत्सूत्रम् । ( म्वा ) वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषम्प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणम्ब्रूहीति ॥ ६ ॥

यः पृथिव्यान्तिष्ठन् । ( न्पृ ) पृथिव्याऽअन्तरो यम्पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स तऽआत्माऽन्तर्या-म्यमृतः ॥ ७ ॥

---

वायुर्वै गौतम तत्सूत्रम् । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति । तस्माद्वै गौतम पुरुषं प्रेतमाहुः । व्यस्रंसिषतास्यांगानि इति । वायुना हि गौतम सूत्रेण संदृब्धानि भवन्ति इति । एवमेवैतद्याज्ञवल्क्य ! अंतर्यामिणं ब्रूहीति ॥ ६ ॥

यः पृथिव्यां तिष्ठन् । पृथिव्या अन्तरः । यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ ७ ॥

---

धनं हे गौतम ! ' अहं ' याज्ञवल्क्योऽपि गन्धर्वोदितं ' तत्सूत्रं ' ' तमन्तर्यामिणं वेद ' जानामि । इत्येवमुक्तो गौतमः प्रत्याह—यो वा इदमिति । यः कश्चित्प्राकृतोऽपि ' यत् ' त्वयोक्तं वेदेति । ' इदं वै ' निश्चितं आत्मानं श्लाघयन् ' ब्रूयात् ' किं तेन गर्जितेन । कार्येण दर्शय । ' यथा वेत्थ ' जानासि ' तथा ब्रूहीति ' ॥ ९ ॥

एवमुक्तो याज्ञवल्क्यो ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्तमाने काले यथा पृथिव्यप्सु तत्सूत्रमागमगम्यं वक्तव्यमिति तदर्थं प्रत्याह—**वायुर्वै गौतमेति** । हे ' गौतम ! ' ' तत् ' गन्धर्वोक्तं ' सूत्रं ' ' वायुर्वै ' वायुरेव नान्यत् । तथा च-यदात्मकं पंच भूतानि दश बाह्यानीन्द्रियाणि पंचवृत्तिः प्राण एकः चतुर्विधमन्तःकरणं इत्येवं सप्तदशविधं लिंगं प्राणिनां कर्मसमवायिसमष्टिव्यष्ट्यात्मकं सूक्ष्मं पृथिव्यादीनामाकाशवत् विष्टंभकं यस्य सप्त सप्त मरुद्गणा बाह्या भेदाः समुद्रस्येवोर्मयः तदेतत् वायव्यं तत्त्वं सूत्रमित्यभिधीयते । न तु वायुमात्रम् । तस्य विधारणे स्वातन्त्र्याभावात् । उक्तस्य वायुतत्त्वस्य सूत्रत्वं विद्वत्प्रसिद्ध्या साधयति—**वायुना वै गौतमेत्या-**दिनोक्तार्थकेन । प्रसिद्धमेतत्सूत्रविदामित्यर्थः । पुनर्लोकप्रसिद्ध्याऽपि तत्साधयति—**तस्मा द्वै गौतमेति** । हे ' गौतम ! ' यस्मात् सूत्रात्मकेन ' वायुना ' सर्वं विधृतं तस्मात् ' प्रेतं ' मृतं ' पुरुषं ' शरीरं मृतलक्षणज्ञा ' आहुः ' कथयन्ति । ' अस्य ' मृतस्यांगानि करादीनि ' व्यस्रंसिषत ' विस्रस्तानि अभवन् । सूत्रापगमे हि मण्यादीनां प्रोतानामवस्रंसनं दृष्टमेव । वायुः सूत्रम् । अतो ' वायुना हि गौतम ! सूत्रेण संदृब्धानि ' संग्र-थितान्यंगानि भवन्तीति ' निगमयति । एवं निरूपितं सूत्रस्वरूपमंगीकृत्य उद्दालक अंतर्यामिस्वरूपं पृच्छति—**एवमेवैतदिति** । हे ' याज्ञवल्क्य ! ' एतत्सूत्रमेव सम्यगुक्तम् । इदानीं तु तत्रान्तर्गतं ' अंतर्यामिणं ब्रूहीति ' ॥ ६ ॥

एवमुक्तो याज्ञवल्क्य आह—**यः पृथिव्यामिति** । ' यः पृथिव्यां तिष्ठन् ' वर्तमानो भवति सः अंतर्यामी । एवमुक्ते सर्वः पृथिव्यां तिष्ठतीति सर्वत्र प्रसंगो मा भूदिति विशिनष्टि—' पृथिव्या अंतरः ' अभ्यंतर इति । तत्र

( तो ) योऽप्सु तिष्ठन् । ( न्न ) अद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयति स तऽआत्माऽन्तर्याम्यमृतः ॥ ८ ॥

( तो ) योऽग्नौ तिष्ठन् । ( न्न ) अग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति स तऽआत्माऽन्तर्याम्यमृतः ॥ ९ ॥

( तो ) यऽआकाशे तिष्ठन् । ( न्ना ) आकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं यऽआकाशमन्तरो यमयति स तऽआत्माऽन्तर्याम्यमृतः ॥ १० ॥

( तो ) यो वायौ तिष्ठन् । ( न्वा ) वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयति स तऽआत्माऽन्तर्याम्यमृतः ॥ ११ ॥

---

योऽप्सु तिष्ठन् । अद्भ्योऽन्तरः । यमापो न विदुः । यस्यापः शरीरम् । योऽपोऽन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ ८ ॥

योऽग्नौ तिष्ठन् । अग्नेरन्तरः । यमग्निर्न वेद । यस्याग्निः शरीरम् । योऽग्निमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ ९ ॥

य आकाशे तिष्ठन् । आकाशादंतरः । यमाकाशो न वेद । यस्याकाशः शरीरम् । य आकाशमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ १० ॥

यो वायौ तिष्ठन् । वायोरन्तरः । यं वायुर्न वेद । यस्य वायुः शरीरम् । यो वायुमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ ११ ॥

---

पृथिव्यभिमानिनी देवतैवांतर्यामिनी स्यादित्यत आह—यं पृथिवीति । 'पृथिवी ' पृथिव्यभिमानिनी देवता अपि यमन्तर्यामिणं न वेद' मय्यन्यः कश्चिद्वर्त्तते इति न जानाति । नियंतुरीश्वरस्य लौकिकनियंतृवत् कार्यकारणत्वमाशंक्याह—यस्येति । यस्यांतर्यामिणः ' पृथिव्येव शरीरं ' नान्यत् । पृथिवीदेवताया यच्छरीरं तदेव शरीरं यस्येति । शरीरग्रहणं करणोपलक्षणार्थम् । तस्याः पृथिवीदेवतायाः स्वकर्मप्रयुक्तं हि कार्यकरणं च । अस्यांतर्यामिणस्तु स्वकर्माभावात् नित्यमुक्तत्वात् परमार्थकर्त्तव्यतास्वभावत्वात् परस्य यत् कार्यकरणं तदेवास्य न स्वत इत्यर्थः । देवताकार्यकरणस्य ईश्वरसाक्षिमात्रसान्निध्येन हि नियमेन प्रवृत्तिः स्यात् तामित्यत आह—यः पृथिवीमिति । 'यः' नियम्यपृथिवीदेवताकार्यकरणाभ्यामेव कार्यकरणवानि ईश्वरो नारायणाख्योऽन्तरोऽभ्यन्तरः सन् पृथिवीदेवतां 'यमयति' साक्षितया स्वव्यापारे नियमेन प्रवर्तयति । एषः 'ते' तव कार्यकारणसंघातस्य सर्वभूतानां चेत्युपलक्षणार्थमेतत् । सर्वेषामात्मा यस्त्वया अंतर्यामी पृष्टः एषः ' अमृतः ' सर्वसंसारधर्मवर्जित इत्यर्थः ॥ ७ ॥

एवमेव " योऽप्सु तिष्ठन् " इत्यादयः कंडिका व्याख्येयाः ॥ ८ ॥

" योऽग्नौ " ॥ ९ ॥

" यऽआकाशे " ॥ १० ॥

" यो वायौ " ॥ ११ ॥

(तो) युऽआदित्ये तिष्ठन्। (न्ना) आदित्यादन्तरो युमादित्यो न व्वेद युस्यादित्यः शुरीरं युऽआदित्यमुन्तरो युमयति सु तऽआत्माऽन्तर्य्याम्यमृतः॥ १२॥

(तो) युश्चन्द्रतारके तिष्ठन्। (छंश्च) चन्द्रतारकाद्न्तरो युश्चन्द्रतारकन्न व्वेद युस्य चन्द्रतारकꣳ शुरीरं युश्चन्द्रतारकमुन्तरो युमयति सु तऽआत्माऽन्तर्य्याम्यमृतः॥ १३॥

(तो) यो दिक्षु तिष्ठन्। (न्दि) दिग्भ्योऽन्तरो यन्दिशो नु व्विदुर्य्युस्य दिशः शुरीरं यो दिशोऽन्तरो युमयति सु तऽआत्माऽन्तर्य्याम्यमृतः॥ १४॥

(तो) यो व्विद्युति तिष्ठन्। (न्वि) व्विद्युतोऽन्तरो युं व्विद्युन्न व्वेद युस्य व्विद्युच्छरीरं यो व्विद्युतमुन्तरो युमयति सु तऽआत्माऽन्तर्य्याम्यमृतः॥ १५॥

(तो) यु स्तनयित्नौ तिष्ठन्। (न्स्त) स्तनयित्नोरुन्तरो युꣳ स्तनयित्नुर्न्न व्वेद युस्य स्तनयित्नुः शुरीरं यु स्तनयित्नुमुन्तरो युमयति सु तऽआत्माऽन्तर्य्याम्यमृतऽइत्याधिदेवतमुथाधिलोकम्॥ १६॥

---

य आदित्ये तिष्ठन्। आदित्यादन्तरः। यमादित्यो न वेद। यस्यादित्यः शरीरम्। य आदित्यमन्तरो यमयति। स त आत्माऽन्तर्याम्यमृतः॥ १२॥

यश्चंद्रतारके तिष्ठन्। चंद्रतारकादंतरः। यं चन्द्रतारकं न वेद। यस्य चन्द्रतारकं शरीरम्। यश्चन्द्रतारकमंतरो यमयति। स त आत्माऽन्तर्याम्यमृतः॥ १३॥

यो दिक्षु तिष्ठन्। दिग्भ्योऽन्तरः। यं दिशो न विदुः। यस्य दिशः शरीरम्। यो दिशोऽन्तरो यमयति। स त आत्माऽन्तर्याम्यमृतः॥ १४॥

यो विद्युति तिष्ठन्। विद्युतोऽन्तरः। यं विद्युन्न वेद। यस्य विद्युच्छरीरम्। यो विद्युतमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः॥ १५॥

यः स्तनयित्नौ तिष्ठन्। स्तनयित्नोरन्तरः। यं स्तनयित्नुर्न वेद। यस्य स्तनयित्नुः शरीरम्। यः स्तनयित्नुमन्तरो यमयति। स त आत्माऽन्तर्याम्यमृतः। इत्यधिदेवतम्। अथाधिलोकम्॥ १६॥

---

"यऽआदित्ये"॥ १२॥

"यश्चंद्रतारके" इति द्वंद्वैकवद्भावः॥ १३॥

"यो दिक्षु"॥ १४॥

"यो विद्युति"॥ १५॥

"यः स्तनयित्नौ" इत्यधिदेवतमन्तर्यामिविषयं दर्शनं देवतासूक्तम्। अथानन्तरमधिलोकेषु अंतर्यामिदर्शनमुच्यत इत्यर्थः॥ १६॥

(यं सर्वेषु लोकेषु तिष्ठन् । (य:) सर्वेभ्यो लोकेभ्योऽन्तरो यं सर्वे लोका न विदुर्यस्य सर्वे लोकाः शरीरं यः सर्वांल्लोकानन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यु एवाधिलोकमथाधिवेदम् ॥ १७ ॥

(यः) यः सर्वेषु वेदेषु तिष्ठन् । (य:) सर्वेभ्यो वेदेभ्योऽन्तरो यं सर्वे वेदा न विदुर्यस्य सर्वे वेदाः शरीरं यः सर्वान्वेदानन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यु एवाधिवेदमथाधियज्ञम् ॥ १८ ॥

(यः) यः सर्वेषु यज्ञेषु तिष्ठन् । (य:) सर्वेभ्यो यज्ञेभ्योऽन्तरो यं सर्वे यज्ञा न विदुर्यस्य सर्वे यज्ञाः शरीरं यः सर्वान्यज्ञानन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यु एवाधियज्ञमथाधिभूतम् ॥ १९ ॥

(यः) यः सर्वेषु भूतेषु तिष्ठन् । (य:) सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यु एवाधिभूतमथाध्यात्मम् ॥ २० ॥

---

यः सर्वेषु लोकेषु तिष्ठन् । सर्वेभ्यो लोकेभ्योऽन्तरः । यं सर्वे लोका न विदुः । यस्य सर्वे लोकाः शरीरम् । यः सर्वांल्लोकानन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः । इत्यु एवाधिलोकम् । अथाधिवेदम् ॥ १७ ॥

यः सर्वेषु वेदेषु तिष्ठन् । सर्वेभ्यो वेदेभ्योऽन्तरः । यं सर्वे वेदा न विदुः । यस्य सर्वे वेदाः शरीरम् । यः सर्वान्वेदानंतरो यमयति । स त आत्माऽन्तर्याम्यमृतः । इत्यु एवाधिवेदम् । अथाधियज्ञम् ॥ १८ ॥

यः सर्वेषु यज्ञेषु तिष्ठन् । सर्वेभ्यो यज्ञेभ्योऽन्तरः । यं सर्वे यज्ञा न विदुः । यस्य सर्वे यज्ञाः शरीरम् । यः सर्वान्यज्ञानंतरो यमयति । स त आत्माऽन्तर्याम्यमृतः । इत्यु एवाधियज्ञम् । अथाधिभूतम् ॥ १९ ॥

यः सर्वेषु भूतेषु तिष्ठन् । सर्वेभ्यो भूतेभ्योऽन्तरः । यं सर्वाणि भूतानि न विदुः । यस्य सर्वाणि

---

'सर्वेषु लोकेषु' लोकाः भोगस्थानानि तेषु ' इत्यु एव अधिलोकं अथाधिवेदं ' इति पूर्ववत् व्याख्येयम् ॥ १७ ॥

" यः सर्वेषु वेदेषु " " इत्यु एवाधिवेदमथाधियज्ञम् " इति पूर्ववत् ॥ १८ ॥

" यः सर्वेषु यज्ञेषु " इति सामान्यतत्कर्म्माणि निर्दिश्यंते । " इत्यु एवाधियज्ञमथाधिभूतम् " इति । पूर्ववत् ॥ १९ ॥

" यः सर्वेषु भूतेषु " इत्यु एवाधिभूतमथाध्यात्मम् " इति पूर्ववत् ॥ २० ॥

( त्वमं यः ) यः प्राणे तिष्ठन् । (न्प्रा) प्राणादन्तरो यम्प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयति स तऽ आत्माऽन्तर्य्याम्यमृतः ॥२१॥

( तो ) यो वाचि तिष्ठन् । ( न्वा ) वाचोऽन्तरो यम्वाङ्न वेद यस्य वाकछरीरं यो वाचमन्तरो यमयति स तऽ आत्माऽन्तर्य्याम्यमृतः ॥ २२ ॥

( तो ) यश्चक्षुषि तिष्ठन् । ( यंश्च ) चक्षुषोऽन्तरो यञ्चक्षुर्न्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयति स तऽआत्माऽन्तर्य्याम्यमृतः ॥ २३ ॥

( तो ) यः श्रोत्रे तिष्ठन् । ( ञ्छ्रो ) श्रोत्रादन्तरो यꣳ श्रोत्रन्न वेद यस्य श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयति स तऽआत्माऽन्तर्य्याम्यमृतः ॥ २४ ॥

( तो ) यो मनसि तिष्ठन् । ( न्म ) मनसोऽन्तरो यम्मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयति स तऽआत्माऽन्तर्य्याम्यमृतः ॥ २५ ॥

---

भूतानि शरीरम् । यः सर्वाणि भूतान्यन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः । इत्यु एवाधिभूतम् । अथाध्यात्मम् ॥ २० ॥

यः प्राणे तिष्ठन् । प्राणादन्तरः । यं प्राणो न वेद । यस्य प्राणः शरीरम् । यः प्राणमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २१ ॥

यो वाचि तिष्ठन् । वाचोऽन्तरः । यं वाक् न वेद । यस्य वाक् शरीरम् । यो वाचमंतरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥

यश्चक्षुषि तिष्ठन् । चक्षुषोऽन्तरः । यं चक्षुर्न वेद । यस्य चक्षुः शरीरम् । यश्चक्षुरन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २३ ॥

यः श्रोत्रे तिष्ठन् । श्रोत्रादन्तरः । यं श्रोत्रं न वेद । यस्य श्रोत्रं शरीरम् । यः श्रोत्रमंतरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २४ ॥

यो मनसि तिष्ठन् । मनसोऽन्तरः । यं मनो न वेद । यस्य मनः शरीरम् । यो मनोऽन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २५ ॥

---

" यः प्राणे ' घ्राणाख्ये वायुसहिते ॥ २१ ॥

" यो वाचि " ॥ २२ ॥

" यश्चक्षुषि " ॥ २३ ॥

" यः श्रोत्रे " ॥ २४ ॥

" यो मनसि " ॥ २५ ॥

( तो ) यस्त्वुचि तिुष्ठन् । ( छ्रंस्त्व ) त्वचोुऽन्तरो यन्त्वङ्न व्वेुद युस्य त्वक्छुरीरं यस्त्वुचमुन्तरो यमुयति सु तऽ आत्माऽन्तर्य्याम्यमृतः ॥ २६ ॥

( तो ) यस्तुेजसि तिुष्ठन् । ( छ्रंस्तु ) तुेजसोुऽन्तरो युन्तेजो न व्वेुद युस्य तेजः शुरीरं यस्तेजोुऽन्तरो यमुयति सु तऽ आुत्माऽन्तर्य्याम्यमृतः ॥ २७ ॥

( तो ) यस्तुमसि तिुष्ठन् । ( छ्रंस्तु ) तुमसोुऽन्तरो यन्तुमो न व्वेुद युस्य तमः शुरीरं यस्तमोुऽन्तरो यमुयति सु तऽआत्माऽन्तर्य्याम्यमृतः ॥ २८ ॥

( तो ) यो रुेतसि तिुष्ठन् । ( न्त्रं ) रुेतसोुऽन्तरो युᳬँ रेतो न व्वेुद युस्य रेतः शुरीरं यो रेतोुऽन्तरो यमुयति सु तऽआत्माऽन्तर्य्याम्यमृतः ॥ २९ ॥

( तो ) युऽआत्मुनि तिुष्ठन् । ( न्त्रा ) आत्मनोुऽन्तरो युमात्मा न व्वेुद युस्यात्मा शुरीरं युऽआत्मुानमुन्तरो यमुयति सु तऽआुत्माऽन्तर्य्याम्यमृतः ॥ ३० ॥

( तोुऽदृ ) अुदृष्टो द्रष्टा । ( ष्टाऽश्रु ) अुश्रुतः श्रोताुऽमतो मन्ताुऽविज्ञातो

---

यस्त्वचि तिष्ठन् । त्वचोऽन्तरः । यं त्वक् न वेद । यस्य त्वक् शरीरम् । यस्त्वचमंतरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २६ ॥

यस्तेजसि तिष्ठन् । तेजसोऽन्तरः । यं तेजो न वेद । यस्य तेजः शरीरम् । यस्तेजोऽन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २७ ॥

यस्तमसि तिष्ठन् । तमसोऽन्तरः । यं तमो न वेद । यस्य तमः शरीरम् । यस्तमोऽन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २८ ॥

यो रेतसि तिष्ठन् । रेतसोऽन्तरः । यं रेतो न वेद । यस्य रेतः शरीरम् । यो रेतोऽन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ २९ ॥

य आत्मनि तिष्ठन् । आत्मनोऽन्तरः । यमात्मा न वेद । यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ॥ ३० ॥

अदृष्टो द्रष्टा । अश्रुतः श्रोता । अमतो मन्ता । अविज्ञातो विज्ञाता । नान्योऽस्ति द्रष्टा ।

---

"यस्त्वचि" ॥ २६ ॥

"यस्तेजसि" । तेजः प्रकाशः शास्त्रीयज्ञानम् ॥ २७ ॥

"यस्तमसि" । बाह्ये आवरणात्मके ॥ २८ ॥

"यो रेतसि" प्रजनने ॥ २९ ॥

"य आत्मनि" जीवात्मनि ॥ ३० ॥

कस्मात् पुनः कारणात् महाभागाः पृथिव्यादिदेवताः मनुष्यादिवत् आत्मनि तिष्ठन्तमात्मनो नियंतारमन्तर्या-

विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष तऽआत्माऽन्तर्य्याम्यमृतोऽतोऽन्यदार्त्तं ततो होद्दालकऽआरुणिरुपरराम ॥ ३१ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीये प्रपाठके पञ्चमं ब्राह्मणम् ॥ १४ ( ५ ) ३ । ५ ॥ ( ६ ) ३–७ ॥

अथ ह वाचक्नव्युवाच । ब्राह्मणा भगवन्तो हन्ताहमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे विवक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यञ्जेतेति तौ चेन्मे न विवक्ष्यति मूर्द्धाऽस्य विपतिष्यतीति पृच्छ गार्ग्गीति ॥ १ ॥

---

नान्योऽस्ति श्रोता । नान्योऽस्ति मन्ता । नान्योऽस्ति विज्ञाता । एष त आत्माऽन्तर्याम्यमृतः । अतोऽन्यदार्तम् । ततो ह उद्दालक आरुणिरुपरराम ॥ ३१ ॥

**वाचक्नवीब्राह्मणं, अक्षरब्राह्मणं वा सृष्टिप्रवेशब्राह्मणम् ।**

अथ ह वाचक्नवी उवाच ! ब्राह्मणा भगवन्तः । हन्त ! अहमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि ।

---

मिणं न विदुरित्यत आह–**अदृष्टो द्रष्टेति** । न दृष्टः ‘ अदृष्टः ’। कस्यचित् चक्षुर्दर्शनस्य विषयत्वमनापन्नः सन् दृशिस्वरूपत्वात् चक्षुषि सन्निहितत्वाच्च स्वयं द्रष्टा । तद्वत् ‘ अश्रुतः ’ श्रोत्रविषयत्वमनापन्नः सन् स्वयमलुप्तश्रवणशक्तिः सकलश्रोत्रेषु सन्निहितत्वात् ‘ श्रोता ’। तथा ‘ अमतः ’ मनःसंकल्पविषयमनापन्नः । दृष्टे श्रुते एव हि सर्वः संकल्पयति । अदृष्टत्वादश्रुतत्वादेवामतः । अलुप्तमननशक्तित्वात् सर्वमनस्सु सन्निहितत्वाच्च ‘ मन्ता ’ । तथा ‘ अविज्ञाता ’ निश्चयगोचरं रूपादिवत् सुखादिवद्वा अनापन्नः स्वयं तु अलुप्तविज्ञानशक्तित्वात् तत्सन्निहितत्वाच्च ‘ विज्ञाता ’। ननु–तथाऽप्येवं नियंतृनियन्तव्यादिभेदेन द्रष्टृद्रष्टव्यादिभेदेन च भेदः स्यात् इत्याशंकायामाह–**नान्योऽस्ति द्रष्टेति** । एतदन्तर्यामिणः ‘ अन्यः ’ अपरः ‘ द्रष्टा ’ नास्ति ’ । तथा “ नान्योऽस्ति श्रोता ” इत्यादि व्याख्येयम् । उपपादितमन्तर्यामिस्वरूपमुपसंहरति–**एष त आत्मेति** । ‘ अमृतः ’ संसारधर्मवर्जितः सर्वसंसारिणां कर्मफलविभागकर्ता ‘ एष ते ’ तव ‘ आत्माऽन्तर्यामी ’। अतः अस्मादीश्वरादात्मनः ‘ अन्यदार्तम् ’। “ ततो होद्दालक आरुणिरुपरराम ” इति पूर्ववत् ॥ ३१ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्याये सप्तमं उद्दालकब्राह्मणमन्तर्यामिब्राह्मणं सृष्टिप्रवेशब्राह्मणं वा परिसमाप्तम् ॥ १४ ( ६ ) ३–७ ॥

पूर्वस्मिन् ब्राह्मणे सूत्रान्तर्यामिणौ प्रश्नप्रत्युक्तिभ्यां निर्धारितौ । सम्प्रति अशनायादिविनिर्मुक्तं निरुपाधिकं साक्षादपरोक्षात्सर्वांतरं ब्रह्म वक्तुम् अक्षरब्राह्मणं प्रवर्तते–**अथ ह वाचक्नव्युवाचेति** । ‘ अथ ’ सोपाधिकवस्तु-

सा होवाच । ( चा ) अहम्वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्रऽउद्यन्धनुरधिज्यङ्कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहन्त्वान्द्वाभ्याम्प्रश्नाभ्यामुपोदस्थान्तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥

सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा

---

तौ चेन्मे विवक्ष्यति, न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेतेति । तौ चेन्मे न विवक्ष्यति । मूर्द्धाऽस्य विपतिष्यतीति । पृच्छ गार्गीति ॥ १ ॥

सा होवाच । अहं वै त्वा याज्ञवल्क्य ! यथा काश्यो वा वैदेहो वोग्रपुत्र उद्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेत् । एवमेव अहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थाम् । तौ मे ब्रूहीति । पृच्छ गार्गीति ॥ २ ॥

सा होवाच—यदूर्ध्वं याज्ञवल्क्य दिवः, यदवाक्पृथिव्याः, यदन्तरा द्यावापृथिवी इमे, यद्भूतं च, भवच्च, भविष्यच्च इत्याचक्षते, कस्मिँस्तदोतं च प्रोतं च इति ॥ ३ ॥

---

निर्द्धारणानन्तरं पूर्वं याज्ञवल्क्येन निषिद्धा मूर्द्धपातभयादुपरता सती पुनः प्रष्टुं ब्राह्मणानुज्ञां प्रार्थयन्ती ' ह ' किल वचक्नोर्दुहिता ' वाचक्नवी ' पुनरुवाच । किं ? हे ' ब्राह्मणा भगवन्तः ' पूजावन्तः मम वचः श्रृणुतेति शेषः । ' हंत ' यद्यनुमतिर्भवतामस्ति, तर्हि—' अहमिमं याज्ञवल्क्यं ' पुनर्द्वौ ' प्रश्नौ प्रक्ष्यामि ' । ' तौ ' प्रश्नौ चेद्यदि कथंचिन्मे मह्यं ' विवक्ष्यति ' विस्पष्टं कथयिष्यति । तर्हि ' जातु ' कदाचित् ' युष्माकं ' मध्ये ' कश्चित् ' कोऽप्यन्यतमः ' इमं ' याज्ञवल्क्यं ' ब्रह्मोद्यं ' ब्रह्मवदनं प्रति ' नवै ' नैव ' जेता ' जयकर्ता भवेदिति शेषः । अन्यच्च श्रृणुत । ' तौ ' प्रश्नौ चेद्यदि ' मे ' मह्यं ' न विवक्ष्यति ' विस्पष्टं वक्तुं समर्थो न भविष्यति । तर्हि—' अस्य ' याज्ञवल्क्यस्यैव ' मूर्द्धा ' शिरः ' विपतिष्यति ' विस्पष्टं पतिष्यतीत्येवमुक्ता ब्राह्मणा अनुज्ञां प्रददुः । ' पृच्छ गार्गि ! ' प्रश्नं कुर्विति ॥ १ ॥

सैवं लब्धानुज्ञा गार्गी ' ह ' याज्ञवल्क्यं प्रति ' उवाच ' । हे ' याज्ञवल्क्य ' ! ' त्वा ' त्वां ' अहं ' ' द्वौ प्रश्नौ प्रक्ष्यामि ' इत्यनुषज्यते । कौ ताविति जिज्ञासायां तयोर्दुस्तरत्वं द्योतयितुं दृष्टांतपूर्वकं तौ प्रश्नौ आह—**यथा काश्यो** वेति । ' काश्यो वा ' काशिषु भवः काश्यः लोके शूरत्वेन प्रसिद्धः । ' वैदेहो वा ' । विदेहानां राजा ' उग्रपुत्रः ' शूरान्वय इत्यर्थः । **उद्यमिति** । उत् ऊर्ध्वं याति गच्छति विस्तृतं भवति इत्युद्यं अवतारितज्याकं धनुश्चापं पुनरधिज्यं ' कृत्वा ' आरोपितज्याकं विधाय ' द्वौ बाणवन्तौ ' बाणशब्देन शराग्रे यो वंशखंडः सन्धीयते,स उच्यते । तेन विनाऽपि शरो भवति । अतो बाणवन्ताविति विशिनष्टि । **सपत्नातिव्याधिनाविति** तयोरेव विशेषणम् । सपत्नं शत्रु अतिशयेन वेद्धुं शीलं ययोस्तौ शत्रोरतिशयेन पीडाकरौ । ईदृशौ द्वौ शरौ ' हस्ते कृत्वा ' ' उपोत्तिष्ठेत् ' शत्रोः समीपत आत्मानं दर्शयेत् । एवमेवाहं ' त्वां ' शरस्थानीयाभ्यां प्रश्नाभ्यां ' उपोदस्थां ' त्वत्समीपे उत्थितवत्यस्मि । ततस्त्वं ब्रह्मविच्चेत्तर्हि ' तौ ' प्रश्नौ तयोर्मया क्रियमाणयोः प्रश्नयोरुत्तरं ' मे ' मह्यं ' ब्रूहि ' । एवमुक्तो याज्ञवल्क्यो हे ' गार्गि ! पृच्छ ' यथेष्टं प्रश्नं कुरु । इत्युक्तवानिति शेषः ॥ २ ॥

' सा ' एवमुक्ता गार्गी ' ह उवाच ' अपृच्छत् । हे याज्ञवल्क्य ! ' यत् दिवः ' द्युसंज्ञितात् उपरितनांड-

द्यावापृथिवीऽइमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतञ्च प्प्रोतञ्चेति ॥ ३ ॥

स होवाच । यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवीऽइमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षतऽआकाशे तदोतञ्च प्प्रोतञ्चेति ॥ ४ ॥

सा होवाच । नमस्ते याज्ञवल्क्य यो मऽएतम्व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥

सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवीऽइमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिन्नेव तदोतञ्च प्रोतञ्चेति ॥ ६ ॥

---

स होवाच—यदूर्ध्वं गार्गि दिवः, यदवाक्पृथिव्याः, यदन्तरा द्यावापृथिवी इमे, यद्भूतं च, भवच्च, भविष्यच्च इत्याचक्षते, आकाशे तदोतं च प्रोतं च इति ॥ ४ ॥

सा होवाच । नमस्ते याज्ञवल्क्य । यो म एतं व्यवोचः । अपरस्मै धारयस्वेति । पृच्छ गार्गीति ॥ ५ ॥

सा होवाच—यदूर्ध्वं याज्ञवल्क्य दिवः, यदवाक्पृथिव्याः, यदन्तरा द्यावापृथिवी इमे, यद्भूतं च, भवच्च, भविष्यच्च इत्याचक्षते, कस्मिन्नेव तदोतं च प्रोतं चेति ॥ ६ ॥

---

कपालात् ऊर्ध्वमुपरि अस्ति । यच्च 'पृथिव्याः' अधस्तनांडकपालादवाक् अधो वर्तते । यच्च 'द्यावापृथिवी अन्तरा' द्यावापृथिव्योरंडकपालयोर्मध्ये अस्ति । ये च 'इमे' प्रसिद्धद्यावापृथिवी स्तः । यद्भूतमतीतं च यद्भवद्वर्तमानं स्वव्यापारस्थं च भविष्यद्वर्तमानकालादूर्ध्वभावि लिंगगम्यं च । यत्सर्वेदा एवमाचक्षते कथयंत्यागमतः । तत्सर्वं द्वैतजातं जगत् यस्मिन्नेकं भवतीत्यर्थः तत्सूत्रसंज्ञं पूर्वोक्तं 'कस्मिन्नोतं प्रोतं च' उत्पत्तौ स्थितौ लये चेत्येवं त्रिष्वपि कालेषु पृथिवीधातुरप्स्विव वर्तत इत्यर्थः ॥ ३ ॥

'सः' याज्ञवल्क्यः 'उवाच' । हे 'गार्गि !' 'यत' त्वयोक्तं 'ऊर्ध्वं दिवः' इत्यादि तत्सर्वं यत्सूत्रमचक्षते । 'तत्' व्याकृतं जगदात्मकं सूत्रं अव्याकृतशब्दवाच्ये नारायणाख्ये अंतर्यामिणि 'ओतं च प्रोतं-च' उत्पत्तौ स्थितौ लये चेत्येवं त्रिष्वपि कालेषु पृथिवीधातुरप्स्विव वर्तत इत्यर्थः ॥ ४ ॥

'सा' एवं अपाकृतप्रथमप्रश्ना गार्गी 'उवाच' 'ह' हे 'याज्ञवल्क्य' यस्त्वं 'मे' मम 'एतं' दुर्वचं प्रश्नं 'व्यवोचः' विशेषेणापकृतवान् असि । अतस्ते तुभ्यं नमोऽस्तु । 'अपरस्मै' द्वितीयाय प्रश्नाय 'धारयस्व' दृढीकुरु । आत्मानमित्यर्थः । इतरः आह—'पृच्छ गार्गीति' ॥ ५ ॥

"सा होवाच यदूर्ध्वं याज्ञवल्क्य" इत्यादिप्रश्नः प्रतिवचनं चेत्युक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते—न किंचिदपूर्वमर्थांतरमित्यर्थः । गार्ग्या सर्वं यथोक्तं प्रत्युच्चार्य "कस्मिन्नेव तदोतं च प्रोतं च" इत्युक्तार्थेन वाक्येन पुनरधिकरणमेव पृष्टमित्यर्थः ॥ ६ ॥

स होवाच । यदूर्ध्वङ्गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावा-पृथिवीऽइमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षतऽआकाशऽएव तदोतञ्च प्रोतञ्चेति कस्मिन्न्वाकाशऽओतश्च प्रोतश्चेति ॥ ७ ॥

स होवाच । ( चै ) एतद्वै तदक्षरङ्गार्गि ब्राह्मणाऽअभिवदन्त्यस्थूल-मनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गम-स्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमना-मागोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्व्वमनपरम-नन्तरमबाह्यन्न तदश्नोति कश्चन न तदश्नोति कश्चन ॥ ८ ॥

---

स होवाच–यदूर्ध्वं गार्गि दिवः, यदवाक्पृथिव्याः, यदन्तरा द्यावापृथिवी इमे, यद्भूतं च, भवच्च, भविष्यच्च इत्याचक्षते, आकाश एव तदोतं च प्रोतं च । इति कस्मिन्नु आकाश ओतश्च प्रोतश्चेति ॥ ७ ॥

स होवाच । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंति । अस्थूलम् । अनणु । अह्रस्वम् । अदीर्घम् । अलोहितम् । अस्नेहम् । अच्छायम् । अतमः । अवायु । अनाकाशम् । असंगम् । अस्पर्शम् । अगंधम् । अरसम् । अचक्षुष्कम् । अश्रोत्रम् । अवाक् । अमनः । अतेजस्कम् । अप्राणम् । अमुखम् । अनाम । अगोत्रम् । अजरम् । अमरम् । अभयम् । अमृतम् । अरजः । अशब्दम् । अविवृतम् । असंवृतम् । अपूर्वम् । अनपरम् । अनंतरम् । अबाह्यम् । न तदश्नोति कंचन । न तदश्नोति कश्चन ॥ ८ ॥

---

एवं पृष्टः ' सः ' याज्ञवल्क्यः ' ह उवाच ' हे ' गार्गि ! ' यत्त्वं ' ऊर्ध्वं दिवः ' इत्यादि पृष्टवत्यसि ' तदाकाश एव ' ओतप्रोतभावेन वर्तत इत्यवधारितवान् याज्ञवल्क्यः । द्वितीयं प्रश्नमाह–कस्मिन्न्वाकाश इति । ' कस्मिन्नु ' खलु ' आकाशः ओतश्च प्रोतश्चेति ' । आकाशः एव तावत् कालत्रयातीतत्वाद्दुर्वाच्यः । ततोऽपि कष्टतरमक्षरं यस्मिन् ' आकाश ओतश्च प्रोतश्चेति ' । अतः अवाच्यमिति कृत्वा न प्रतिपद्यते सा । अप्रतिपत्तिर्नाम निग्रहस्थानं तार्किकसमये । अथावाच्यमपि वदति । विप्रतिपत्तिर्नाम निग्रहस्थानं यदवाच्यस्य वदनम् । सा हि विरुद्धा प्रतिपत्तिः । अतो दुर्वचं प्रश्नं मन्यते गार्गीति भावः ॥ ७ ॥

तद्दोषद्वयमपि परिजिहीर्षन्नाह–स होवाचेति । ' सः ' याज्ञवल्क्यः ' ह उवाच ' । हे ' गार्गि ! ' ' यत् ' त्वं " कस्मिन्न्वाकाशः " इत्यादिना अव्याकृताधिष्ठानं पृष्टवत्यसि । ' एतदक्षरं वै ' न क्षरति न क्षीयते वा तदक्षरं शुद्धं ब्रह्म ' ब्राह्मणाः ' ब्रह्मविदः ' अभिवदंति ' कथयंति । ब्राह्मणाभिवदनकथनेन नाहमवाच्यं वक्ष्यामि । न च–न प्रतिपद्येय, इत्येवं दोषद्वयं परिहरति । एवमपाकृते प्रश्ने पुनर्गार्ग्याः प्रतिवचनं तु प्रष्टव्यं ब्रूहि किं तदक्षरं यद्ब्राह्मणा अभिवदंतीत्युक्तौ याज्ञवल्क्य आह–अस्थूलमित्यादि । स्थूलादन्यदस्थूलं तत् । एवं तर्हि अणु ? अणोरन्यत् ' अनणु ' । अस्तु तर्हि ह्रस्वं ? ह्रस्वादन्यदह्रस्वम् । एवं तर्हि दीर्घं ? नापि दीर्घ-

(नै) एतस्य वा ऽअक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत ऽएतस्य वा ऽअक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत ऽएतस्य वा ऽअक्षरस्य प्रशासने गार्ग्यहोरात्राण्यर्द्धमासा मासा ऽऋतवः सम्वत्सरा विधृतास्तिष्ठन्त्येतस्य वा ऽअक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमेतस्य वा ऽअक्षरस्य प्रशासने गार्गि ददतम्मनुष्याः प्रशंसन्ति यजमानन्देवा दर्व्यम्पितरोऽन्वायत्ताः ॥ ९ ॥

---

एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि अहो-

---

मदीर्घम्। एवमेतैश्चतुर्भिः परिमाणप्रतिषेधैर्द्रव्यधर्मप्रतिषेधे न द्रव्यं तदक्षरमिति भावः। अस्तु तर्हि आग्नेयो गुणो लोहितः ? ततोऽपि अन्यदलोहितम्। तर्हि अस्तु अपां गुणः स्नेहः ? ततोऽप्यन्यदस्नेहम्। अस्तु तर्हि छाया दीप्तिः तमो ध्वांतं ? सर्वथाऽपि अन्यत्। 'अवायु'। अस्तु तर्ह्याकाशं ? 'अनाकाशम्'। अस्तु तर्हि जतुवत्संगात्मकं ? 'असंगम्'। तर्हि स्पर्शोऽस्तु ? 'अस्पर्शम्'। तर्हि गंधोऽस्तु ? 'अगंधम्'। तर्हि रसोऽस्तु ? 'अरसम्'। तथा 'अचक्षुष्कं'। न हि चक्षुरस्य करणं विद्यते। अतः 'अचक्षुष्कम्'। तथा 'अश्रोत्रं'। "पश्यत्यचक्षुः स शृणोत्यकर्णः"–(         ) इति मंत्रवर्णात्। तथा 'अवाक्'। तथा 'अमनः'। तथा 'अतेजस्कम्'। अविद्यमानं अग्न्यादिप्रकाशवत् तेजोऽस्य तदतेजस्कम्। तथा 'अप्राणं' आध्यात्मिको वायुः प्रतिषेध्यः। अतः अप्राणमिति। तर्हि मुखं द्वारमस्तु ? न विद्यते मुखं प्रसिद्धं यस्य तदमुखम्। 'अनाम' नामरहितम्। 'अगोत्रं' न विद्यते गोत्रं यस्य तदगोदत्रम्। गोत्रादन्यद्वा। 'अजरं' वृद्धत्वधर्मरहितम्। 'अमरं' मरणधर्मरहितम्। तर्हि आपेक्षिकं अमरत्वं इंद्रादिवद्भविष्यति अतः 'अभयं' सर्वथा भीतिवर्जम्। अत एवामृतं अभिकामत्ववर्जितमित्यर्थः। 'अरजः' न विद्यते रजो यस्मिंस्तदरजः रजसोऽन्यद्वा। 'अशब्दं' न विद्यते शब्दो यस्मिँस्तदशब्दं शब्दादन्यद्वा। 'अविवृतं' न विवृतमिति 'अविवृतम्'। 'असंवृतं' न संवृतमाकारो यस्य तदसंवृतम्। 'अपूर्वं' अविद्यमानं पूर्वं यस्य तदपूर्वम्। 'अनपरं' अविद्यमानमपरं यस्य तदनपरम्। 'अनंतरं' अविद्यमानमंतरं छिद्रं यस्य तदनंतरम्। 'अबाह्यं' न विद्यते बाह्यं यस्येति 'अबाह्यम्'। अपरिच्छिन्नमित्यर्थः। अनात्मव्यक्तीनामानंत्येन प्रत्येकं निषेधाशक्तेर्भोक्तृभोग्यात्मना एकीकृत्य निषेधति–**न तदश्नोति कंचने**त्यादिना। 'तदक्षरं' 'कंचन' कंचिदपि विषयं 'नाश्नोति' नाश्नाति न भुंक्ते इत्यर्थः। 'कश्चन' कोऽपि लोकः तदक्षरं 'नाश्नोति' नाश्नातीत्यर्थः। "अश भोजने"–(धा. पा. क्र्या. प. ५१) इति धातोः क्र्यादिगणस्थात् "व्यत्ययो बहुलम्"–(पा. सू. ३।१।८५) इति व्यत्ययेन श्नुः प्रत्ययो बोद्धव्यः। अत एव परस्मैपदमप्युपपन्नम् ॥ ८ ॥

एवं अशेषविशेषणनिषेधावधित्वेन तत्साक्षित्वेन च अक्षरास्तित्वे सिद्धेऽपि इदानीं तस्यैव अविद्यैकैषितव्यसंबंधात्, ईश्वरात्मभूतस्यास्तित्वाय अनुमानप्रमाणमुपन्यस्यति–**एतस्य वा अक्षरस्येति**। यदेतत् अधिगत-

( ० ) यो वाऽएतदक्षरमविदित्वा गार्गि । ( गर्ग्य ) अस्मिंल्लोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति यो वाऽएतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणोऽथ यऽएतदक्षरङ्गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥

---

रात्राणि अर्द्धमासा मासा ऋतवः संवत्सरा विधृतास्तिष्ठन्ति । एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यंदंते श्वेतेभ्यः पर्वतेभ्यः । प्रतीच्यः अन्या यां यां च दिशम् । एतस्य वा अक्षरस्य प्रशासने गार्गि ददतं मनुष्याः प्रशंसन्ति । यजमानं देवाः । दर्व्यं पितरोऽन्वायत्ताः ॥ ९ ॥

यो वा एतदक्षरमविदित्वा गार्गि अस्मिँल्लोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राणि । अंतवानेवास्य स लोको भवति । यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः । अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥

---

मक्षरं सर्वांतरं साक्षादपरोक्षाद्ब्रह्म य आत्मा अशनायाऽदिधर्मातीतः । ' एतस्य वै ' ' अक्षरस्य ' ' प्रशासने ' आज्ञायां हे ' गार्गि ! ' ' द्यावापृथिवी ' द्यौश्च पृथिवी च द्यावापृथिवी । द्विवचनलोपश्छांदसः । ते ' विधृते ' हस्तन्यस्तपाषाणादिवत् ' तिष्ठतः ' वर्तेते । अतस्तदस्त्येव । " येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः " ( वा. सं. अ. ३२ । ६ ) इति मन्त्रवर्गात् । तथा हे गार्गि ! एतस्योक्तरूपस्याक्षरस्य ' प्रशासने ' आज्ञायां ' सूर्याचन्द्रमसौ ' सूर्यश्च चन्द्रमाश्च ' सूर्याचन्द्रमसौ ' ' विधृतौ ' नियतौ ' तिष्ठतः ' वर्तेते भृत्यादिवत् । तथा ' अहोरात्राणि अर्द्धमासा मासा ऋतवः संवत्सराः ' इत्येते कालावयवाः सर्वस्यातीतानागतवर्तमानस्य जनिमतः कलयितारो विधृतास्तिष्ठन्ति नियता वर्तंते । यथा लोके प्रभुणा नियमितो गणकः सर्वं आयं व्ययं चाप्रमत्तो गणयति । तथा प्रभुस्थानीयं एषां कालावयवानां नियन्तृ तदक्षरमस्त्येव । तथा ' प्राच्यः ' प्रागंचनाः प्राग्दिग्गमनाः ' नद्यः ' गंगाद्याः ' श्वेतेभ्यः ' हिमवदादिभ्यः ' पर्वतेभ्यः ' गिरिभ्यः ' स्यंदन्ते ' अन्यथाऽपि प्रसर्तुमुत्सहन्त्यो यथा प्रवर्तिता एव नियताः प्रवर्तंते । तदेतत्प्रशास्तुर्लिङ्गम् । तथा ' प्रतीच्यः ' प्रतीचीदिग्गमनाः सिन्ध्वाद्याः ' नद्यः ' अन्याश्च नद्यः ' यां यां च ' दिशमनुप्रवृत्तास्ता अक्षरप्रशासनादद्यापि तथैव प्रवर्तंते । तदपि लिंगम् । किंच—' ददतं ' दुःखार्जितान् गोहिरण्यादीन् प्रयच्छन्तं पुरुषं 'मनुष्याः' "हिरण्यदा अमृतत्वं भजन्ते" (ऋ. सं.) इत्यादिप्रमाणज्ञा अपि 'प्रशंसन्ति' स्तुतिं कुर्वते । तथा च—एतस्य प्रशासनस्य फलसंबंधफलकत्वेन तत्कर्तृ अक्षरं सिद्धम् । न च—स्वातन्त्र्येण देवादिकर्तृक एव फलसंबंध इति वाच्यं, तेषामपीश्वराधीनत्वादित्याह—यजमानं देवा इति । ' देवाः ' इन्द्रादयः अन्यथा जीवितुं समर्था अपि जीवितं निमित्तीकृत्य च पुरोडाशाद्युपजीवनप्रयोजनेन अनीश्वरमपि ' यजमानं अन्वायत्ताः ' अनुगताः । तथा ' पितरः ' अर्यमादयः ' दर्व्यं ' दर्वीहोमं ' अन्वायत्ताः ' अनुगता इत्यर्थः । यो न कस्यचित् प्रकृतित्वेन विकृतित्वेन वा वर्तते । स दर्वीहोमः । दर्वीसाध्यो होमो दर्व्यः तम् । तथा च—देवादीनामपि मनुष्याधीनत्वात्स्वयहीनवृत्तिभाक्त्वं नियंतृकल्पकमित्यर्थः ॥ ९ ॥

किंच यस्य अज्ञानेन नियता संसारोपपत्तिः । यद्विज्ञानेन च संसारविच्छेदः । तदस्ति अक्षरमिति साधयितुं कर्मणामेव मोक्षहेतुत्वमिति पक्षं निराकरोति—यो वाऽ एतदक्षरमिति । हे ' गार्गि ! ' ' यो वै ' कश्चि-

( स्त ) तद्वाऽएतुदक्षुरङ्गार्गि । ( ग्गर्यु ) अुदृष्टन्द्रष्टश्रुतॐ श्रोत्रमत-
म्मन्त्रविज्ञातम्विज्ञातृ नान्युदस्ति द्रष्टृ नान्युदस्ति श्रोतृ नान्युदस्ति मन्तृ
नान्युदस्ति व्विज्ञात्रेतद्वै तुदक्षुरङ्गार्गि युस्मिन्नाकाशऽओतश्च प्प्रोत-
श्चेति ॥ ११ ॥

सा होवाच । ब्राह्मणा भगवन्तस्तुदेवु बहु मन्यध्वं युदस्मान्नमस्का-

---

तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ । अश्रुतं श्रोतृ । अमतं मंतृ । अविज्ञातं विज्ञातृ । नान्य दास्ति द्रष्टृ । नान्यदास्ति श्रोतृ । नान्यदास्ति मंतृ । नान्यदस्ति विज्ञातृ । एतद्वै तदक्षरं गार्गि । यस्मि न्नाकाश ओतश्च प्रोतश्चेति ॥ ११ ॥

सा होवाच । ब्राह्मणा भगवंतः ! तदेव बहु मन्यध्वम् । यत् अस्मान्नमस्कारेण मुच्याध्वै । न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेतेति । ततो ह वाचक्नव्युपरराम ॥ १२ ॥

---

त्पुरुषः ' एतदक्षरमविदित्वा ' अविज्ञाय ' अस्मिन् लोके ' कर्मलोके ' जुहोति ' देवतोद्देशेन संकल्पितं द्रव्य-मग्नौ प्रक्षिपति । तथा ' ददाति ' गोहिरण्यादिकं प्रयच्छति । यद्यपि ' बहूनि ' अनेकानि ' वर्षसहस्राणि तप-स्यति ' तपश्चांद्रायणादिकं आचरति । तथापि ' अस्य ' कर्तुः ' स लोक अंतवानेव भवति ' । तत्सांग-मपि क्रियमाणं कर्म तत्फलोपभोगांते क्षीयत एव । न नित्यमोक्षफलकं भवतीत्यर्थः । तथा हे ' गार्गि ! ' ' यो वै ' एतदक्षरमहं ब्रह्मास्मीत्यविदित्वा ' अस्माल्लोकात् ' कर्मलोकात् ' प्रैति ' म्रियते । ' स कृपणः ' अक्षपणक्रीतो दासादिरिव दीनः कर्मफलस्यैव भोक्ता न तु मोक्षस्येत्यर्थः । ' अथ ' तु ' य एतदक्षरं ' श्रुत्याचार्योपदेशाभ्यां " अहं ब्रह्मास्मि " इति ' विदित्वा ' ' अस्मात् लोकात्प्रैति ' ' स ब्राह्मणः ' ब्रह्म-विन्मुक्त इत्यर्थः ॥ १० ॥

अग्नेर्दहनप्रकाशकत्ववत् स्वाभाविकमस्याक्षरस्य प्रशास्तृत्वमित्याह–**तद्वा एतदक्षरं गार्गीति** । हे ' गार्गि ! ' ' तद्वा एतदक्षरं ' " अस्थूलमनण्वादि " वाक्येनावगतम् । ' अदृष्टं ' दृष्ट्यविषयं ' स्वयं द्रष्टृ ' दृशिस्वरूप-त्वात् । एवमश्रुतं श्रोत्राविषयत्वात् स्वयं च ' श्रोतृ ' श्रुतिस्वरूपत्वात् । एवममतं मनसोऽविषयत्वात् स्वयं ' मंतृ ' मतिस्वरूपत्वात् । एवमविज्ञातं बुद्धेरविषयत्वात् स्वयं ' विज्ञातृ ' विज्ञानस्वरूपत्वात् । किंच एतस्य नानात्व-शंकां निराकरोति–**नान्यदस्ति द्रष्टृ** इत्यादिना । प्रकृतादक्षरात् ' अन्यत् द्रष्टृ ' दर्शनक्रियाकर्तृ नास्ति । एतदेव दर्शनक्रियाकर्तृ । एवं " नान्यदस्ति श्रोतृ " इत्यादि व्याख्येयम । एवं सजातीयस्वगतनानात्वं निराकृत्य, इदानीं विजातीयानामनात्मनां रज्जुभुजंगादिवत् परिकल्पितत्वं प्रदर्शयितुं उपसंहारव्याजेन तन्ना-नात्वं प्रतिषेधति–**एतद्वै तदक्षरं गार्गीति** । हे ' गार्गि ! ' " यस्मिन्नाकाश ओतश्च प्रोतश्च " यदेव साक्षा-दपरोक्षाद्ब्रह्म, य आत्मा सर्वांतरोऽशनायादिसंसारधर्मातीतः "एतद्वै तदक्षरं" इत्येतदक्षरं ब्रह्म । एतत्पृथिव्यादे-राकाशांतस्य सत्यस्य सत्यमित्यर्थः ॥ ११ ॥

' सा ' गार्गी उक्तप्रश्नद्वयनिर्णयश्रोत्री ' उवाच ' । हे ब्राह्मणा भगवंतः ! तदेव बहु मन्यध्वं ' बहुमान-विषयं कुरुध्वं प्रमाणीकुरुध्वमित्यर्थः । किं तत् ? यदस्माद्याज्ञवल्क्यात् ' नमस्कारेण मुच्याध्वै ' मुच्यध्वम् ।

रेण मुच्याद्धै न वै जातु युष्माकमिमङ्कश्चिद्ब्रह्मोद्यञ्जेतेति ततो ह वाच-क्नव्युपरराम ॥ १२ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीये प्रपाठके षष्ठं ब्राह्मणम् ॥ १४ ( ५ ) ३।६ ॥ ( ६ ) ३–८ ॥

अथ हैनम्विदग्धः शाकल्यः पप्रच्छ । कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच ॥ १ ॥

---

**शाकल्यब्राह्मणग्रन्थो वा शाकल्यब्राह्मणम् ।**

अथ ह एनं विदग्धः शाकल्यः प्रपच्छ । कति देवा याज्ञवल्क्येति । स हैतयैव निविदा प्रतिपेदे । यावंतो वैश्वदेवस्य निविद्युच्यंते । त्रयश्च त्री च शता । त्रयश्च त्री च सहस्रेति ३३०६ ॐ इति होवाच ॥ १ ॥

---

अस्मै नमस्कारं कृत्वा अस्मादात्मनो यन्मोचनं तदेव बहु मन्यध्वमित्यर्थः । जयस्तु अस्य मनसाऽपि नाशंकनीयः । किमुत कार्यतः ? कस्मात् ? ' न वै जातु ' कदाचिदपि ' युष्माकं ' मध्ये कश्चित्कोऽपि ' इमं याज्ञवल्क्यं ' ' ब्रह्मोद्यं ' ब्रह्मवदनं प्रति ' नैव जेता ' । " प्रश्नौ चेन्मह्यं विवक्ष्यति न वै जेता भविता " इति पूर्वमेव प्रतिज्ञातम् । अद्यापि ममायमेव निश्चयः । ब्रह्मोद्यं प्रति एतत्तुल्यो न कश्चिद्विद्यते इति । ' ततो ह ' एवं ब्राह्मणानां हितमुपदिश्य ' वाचक्नवी उपरराम ' ॥ १२ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्यायेऽष्टमं वाचक्नवीब्राह्मणमक्षरब्राह्मणं सृष्टिप्रवेशब्राह्मणं वा परिसमाप्तम् ( ॥ १४ । ( ६ ) । ३ । ८ ॥ )

एवं यत्साक्षादित्यादि प्रस्तुत्य सर्वांतरत्वनिरूपणद्वारा साक्षात्त्वादिकमार्थिकं कहोडादिब्राह्मणत्रयेण निर्द्धारितम् । ततः अंतर्यामिब्राह्मणे " यः पृथिव्यां तिष्ठन् " इत्यादिश्रुत्याऽव्याकृतविषये सूत्रभेदेषु पृथिव्यादिषु नियम्येषु तस्य नियंतृत्वमुक्तम् । इदानीं नियंतव्यानां देवताभेदानां प्राणांतसंकोचानंत्यपर्यंतं वस्तुनिर्देश इत्येतदर्थं शाकल्यब्राह्मणमारभ्यते–**अथ हैनं विदग्धः शाकल्यः** इति । ' अथ ' गार्गीप्रश्ननिर्णयानंतरं ' एनं ' याज्ञवल्क्यं शकलस्यापत्यं ' शाकल्यः ' ' विदग्धः ' इत्येवंनामा ' पप्रच्छ ' । हे ' याज्ञवल्क्य ' ! ' कति ' कियत्संख्याकाः ' देवाः ' इत्येवं पृष्टः ' सः ' याज्ञवल्क्यः ' यावंतः ' यावत्संख्याका देवाः ' वैश्वदेवस्य ' शस्त्रस्य ' निविदि ' ' उच्यंते ' श्रूयंते । तावतो देवान् ' ह ' किल वक्ष्यमाणया ' निविदा प्रतिपेदे ' । यां संख्यां शाकल्यः पृष्टवान् तां संख्यां निविद्द्वारा ज्ञातवानित्यर्थः । निविन्नाम देवतासंख्यावाच-

कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिँ॑शदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्द्धऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येकऽइत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ २ ॥

स होवाच । महिमानऽएवैषामेते त्रयस्त्रिँ॑शत्त्वेव देवाऽइति कतमे ते त्रयस्त्रिँ॑शदित्यष्टौ वसवऽएकादश रुद्रा द्वादशादित्यास्तऽएकत्रिँ॑शदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिँ॑शाविति ॥ ३ ॥

---

कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिंशदिति । ॐ इति होवाच । कत्येव देवा याज्ञवल्क्येति । षडिति । ॐ इति होवाच । कत्येव देवा याज्ञवल्क्येति । त्रय इति । ॐ इति होवाच । कत्येव देवा याज्ञवल्क्येति । द्वाविति । ॐ इति होवाच । कत्येव देवा याज्ञवल्क्येति । अध्यर्द्ध इति । ॐ इति होवाच । कत्येव देवा याज्ञवल्क्येति । एक इति । ॐ इति होवाच । कतमे ते त्रयश्च त्री च शता । त्रयश्च त्री च सहस्रेति ॥ २ ॥

स होवाच । महिमान एवैषामेते । त्रयस्त्रिंशत्त्वेव देवा इति । कतमे ते त्रयस्त्रिंशदिति । अष्टौ वसवः । एकादश रुद्राः । द्वादशादित्याः । त एकत्रिंशत् । ८-११-१२=३१ ॥ इंद्रश्चैव प्रजापतिश्च । त्रयस्त्रिंशाविति ॥ ३१-१-१=३३ ॥ ३ ॥

---

कानि मंत्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यंते । तान्येव निवित्संज्ञकानि मंत्रपदानि दर्शयति-**त्रयश्च त्री च शतेति** । ' त्रयश्च ' देवाः । देवानां त्रीणि च शतानि । पुनरप्येवं ' त्रयश्च त्री च सहस्रेति ' त्रीणि सहस्राणि त्र्यधिकानि । इयं त्वेषां मध्यमा संख्या बहुवचनात् उत्तमा अनंतसंख्या उक्तैव वेदितव्या । " अनंता वै विश्वे देवाः "-(        ) इति पूर्वमुक्तत्वात् । उक्तां संख्यां शाकल्योऽङ्गीकरोतीत्याह-**ओमिति होवाचेति** । ॐ इत्यङ्गीकारे । एवमेषां षडधिकत्रिशताधिकत्रिसहस्रलक्षणा मध्यमा संख्या सम्यक् त्वया ज्ञातेत्यर्थः ॥ १ ॥

पुनस्तेषामेव देवानां संकोचविषयां संख्यां पृच्छति-**कत्येव देवा याज्ञवल्क्येति** । त्रयस्त्रिंशत्षट् त्रयो द्वावध्यर्द्ध एक इति देवतासंकोचविकासविषयां संख्यां पृष्ट्वा पुनः संख्येयस्वरूपं पृच्छति- **कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति** । व्याख्यातार्थम् ॥ २ ॥

' सः ' एवं पृष्टो याज्ञवल्क्यः ' ह उवाच ' । ' एषां ' त्रयस्त्रिंशतो देवानां ' एते ' त्रयश्च त्री च शतेत्यादयो ' महिमानः ' विभूतयः । परमार्थतस्तु ' त्रयस्त्रिंशदेव देवा इति ' । ' कतमे ' के ' त्रयस्त्रिंशदिति ' शाकल्येन पृष्ट इतर आह-' अष्टौ वसव एकादश रुद्रा द्वादशादित्याः ' । ' ते एते एकत्रिंशत् ' । इंद्रश्चैव प्रजापतिश्चेति ' त्रयस्त्रिंशौ ' त्रयस्त्रिंशतः पूरणाविति ॥ ३ ॥

कतमे व्वुसवऽइुति । ( त्य ) अग्निश्च प्पृथिवी च व्वायुश्चान्तुरिक्षञ्चा-दित्युश्च द्यौश्च चन्द्रुमाश्च नुक्षत्राणि चैते व्वुसवऽएतेुषु हीदᳪँ सुर्व्वम्व्वुसु हितमेते हीदᳪँ सुर्व्वम्वासुयन्ते तद्युदिदᳪँ सुर्व्वम्वासुयन्ते तुस्माद्वुसव-ऽइुति ॥ ४ ॥

कतमे रुद्राऽइुति । दुशेमे पुरुषे प्प्राणुाऽआत्मैकादशस्ते यदाऽस्मान्मु-र्त्याच्छुरीरादुत्क्रामन्त्युथ रोदयन्ति तद्युद्रोदुयन्ति तुस्माद्रुद्राऽइुति ॥ ५ ॥

कतमुऽआदित्याऽइुति । द्वादश मुासाः सम्वत्सरुस्यैतुऽआदित्युाऽएतुे हीदᳪँ सुर्व्वमादुदाना युन्ति तद्युदिदᳪँ सुर्व्वमादुदाना युन्ति तुस्मा-दादित्याऽइुति ॥ ६ ॥

---

कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चांतरिक्षं चादित्यश्च द्यौश्च चंद्रमाश्च नक्षत्राणि चैते वसवः । एतेषु हीदं सर्वं वसु हितम् । एते हीदं सर्वं वासयंते । तद्यदिदं सर्वं वासयन्ते । तस्माद्वसव इति ॥ ४ ॥

कतमे रुद्रा इति । दशेमे पुरुषे प्राणाः । आत्मैकादशः । ते यदाऽस्मान्मर्त्याच्छरीरादुत्क्रामंति । अथ रोदयंति । तद्यद्रोदयंति । तस्माद्रुद्रा इति ॥ ५ ॥

कतम आदित्या इति । द्वादश मासाः संवत्सरस्य । एत आदित्याः । एते हीदं सर्वमाददाना यंति । तद्यदिदं सर्वमाददाना यंति । तस्मादादित्या इति ॥ ६ ॥

---

एवं संकोचादिभूतसंख्यानिर्णये कृते संख्येयान् देवान् क्रमेण पृच्छति—**कतमे वसव** इति । उत्तरमाह—**अग्निश्च पृथिवी चेति** । अग्न्याद्या नक्षत्रांता 'एते वसवः' । कथं ? 'हि' यस्मात् 'एतेषु' अग्न्यादिषु कर्म्मफलसाधनात्मकं 'सर्वं' 'वसु हितं' स्थितं 'तस्माद्वसवः' । 'हि' यस्माच्च एते अग्न्यादयः प्राणिनां कर्मफलाश्रयत्वेन कार्यकारणसंघातरूपेण तन्निवासत्वेन च विपरिणमंतो जगदिदं 'सर्वं वासयन्ते' । यस्माद्वासयंते तस्माद्युक्तं तेषां वसुत्वमित्यर्थः ॥ ४ ॥

तथा—**कतमे रुद्रा** इति । पुरुषशरीरिणः 'इमे' प्रसिद्धाः 'दश प्राणाः' ज्ञानेन्द्रियकर्मेन्द्रियरूपाः । 'आत्मा' मनश्च एकादशसंख्यापूरणः । कथमेषां रुद्रत्वमित्यत आह—**ते यदेति** । 'ते' प्राणाः 'यदा' यस्मिन् काले 'मर्त्यात्' म्रियमाणाच्छरीरात् 'उत्क्रामंति' । 'अथ' तदा संबंधिभूतान् प्राणिनः 'रोदयंति' । तत्तस्मिन्नुत्क्रांतिकाले यस्माद्रोदयंति संबंधिनः । 'तस्मात् रुद्राः' इति सिद्धं निर्वचनम् ॥ ५ ॥

**कतम आदित्या** इति । संवत्सरात्मकस्य कालस्य ये अवयवाः 'द्वादश मासाः' स्वाभिमानिदेवताविशिष्टाः 'एते आदित्याः' । कथं ? 'हि' यस्मात् । 'एते' मासाभिमानिनो देवाः पुनः पुनः परिवर्तमानाः प्राणिनामायूंषि कर्म्मफलं चेतीदं 'सर्वमाददानाः' गृह्णंत उपाददत एव 'यन्ति' गच्छंति । यस्मादिदं 'सर्वमाददाना यंति' 'तस्मादादित्या इति' ॥ ६ ॥

कतमऽइन्द्रः कतमुश्च प्प्रजापतिरिति । स्तनयित्नुरेवेन्द्रो युज्ञः प्प्रजापतिरिति कतम स्तनयित्नुरित्यशनिरिति कतमो युज्ञऽइति पशवऽइति ॥ ७ ॥

कतमे षडिति । ( त्य ) अग्निश्च प्पृथिवी च व्वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्चैते षडित्येते ह्येवेदᳬ सर्व्वᳬ षडिति ॥ ८ ॥

कतमे ते त्रयो देवाऽइति । ( ती ) इमऽएव त्रयो लोकाऽएषु हीमे सर्व्वे देवाऽइति कतमौ तौ द्वौ देवावित्युन्नश्चैव प्प्राणश्चेति कतमोऽध्यर्द्धऽइति योऽयम्पवतऽइति ॥ ९ ॥

तदाहुः । ( ठ्र्प्तु ) यदयमेकऽएव पवतेऽथ कथमध्यर्द्धऽइति यदस्मि-

---

कतम इंद्रः । कतमः प्रजापतिरिति । स्तनयित्नुरेवेन्द्रः । यज्ञः प्रजापतिः इति । कतमः स्तनयित्नुरिति । अशनिरिति । कतमो यज्ञ इति । पशव इति ॥ ७ ॥

कतमे षडिति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते षडति । एते ह्येवेदं सर्वं षडिति ॥ ८ ॥

कतमे ते त्रयो देवा इति । इम एव त्रयो लोकाः । एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवाविति । अन्नं चैव प्राणश्चेति । कतमोऽध्यर्द्ध इति । योऽयं पवत इति ॥ ९ ॥

तदाहुः । यदयमेक एव पवते । अथ कथमध्यर्द्ध इति । यदस्मिन्निदं सर्वमध्यार्ध्नोत् । तेनाध्यर्द्ध इति । कतम एको देव इति । स ब्रह्म । त्यदित्याचक्षते ॥ १० ॥

---

कतम इंद्रः कतमः प्रजापतिरिति । स्तनयित्नुर्मेघनादाभिमानिनी देवतैवेन्द्रः । 'यज्ञः प्रजापतिः' । 'कतमः स्तनयित्नुरिति' । 'अशनिरिति' । अशनिर्वज्रापरपर्यायं वीर्यं बलम् । तस्य मेघनादाभिमानीन्द्रनिष्ठत्वेन इंद्रत्वम् । 'कतमो यज्ञ इति' । 'पशव इति' । पशूनां हि यज्ञसाधनाश्रयत्वात् यज्ञस्यारूपत्वाच्च पशवो यज्ञ इत्युच्यन्ते ॥ ७ ॥

कतमे षडिति । 'अग्निश्च पृथिवी चेति' । चन्द्रमसं नक्षत्राणि वर्जयित्वा वसुत्वेन पठिता अग्न्यादय एव षट् भवन्ति । 'हि' यस्मात् त्रयस्त्रिंशदादि यदुक्तं 'इदं सर्वं' देवजातं 'एते' अग्न्यादयः 'एव षट्' भवन्ति । सर्वो हि वस्वादिविस्तरः एतेष्वेव वसुषु अन्तर्भवतीत्यर्थः ॥ ८ ॥

कतमे ते त्रयो देवा इति । 'इम एव त्रयो लोकाः' इति । पृथिवीमग्निं चैकीकृत्य एको देवः । अन्तरिक्षं वायुं चैकीकृत्य द्वितीयः । दिवमादित्यं चैकीकृत्य तृतीयः । 'एवमेते एव त्रयो देवाः' । 'हि' यस्मात् । 'एषु' अग्न्याद्याः 'सर्वे देवाः' अन्तर्भवन्ति । तेन एत एव त्रयो देवा इत्युक्तम् । 'कतमौ तौ द्वौ देवाविति' । 'अन्नं चैव प्राणश्चेति' । एतौ द्वावेव देवौ । अनयोः सर्वेषामुक्तानां देवानामन्तर्भावः । 'कतमोऽध्यर्द्ध इति' । 'यः अयं' बाह्यो वायुः 'पवते' । सः अध्यर्द्ध इति शेषः ॥ ९ ॥

तदाहुरिति । तत्तत्र अध्यर्द्धशब्दस्य वायुविषये उक्ते सति शाकल्यादयो वादिनः आहुश्चोदयन्ति । यद्यतः

न्निदᳬ सर्व्वमध्यार्ध्नोत्तेनाध्यर्द्धऽइति कतमऽएको देवऽइति स ब्रह्म त्यदित्याचक्षते ॥ १० ॥

पृथिव्येव यस्यायतनम् । (अ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषम्विद्यात्सर्व्वस्यात्मनः परायणᳬ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽअहन्तम्पुरुषᳬ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवायᳬ शारीरः पुरुषः सऽएष व्वदेव शाकल्य तस्य का देवतेति स्त्रियऽइति होवाच ॥ ११ ॥

---

पृथिव्येव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ । य एवायं शारीरः पुरुषः स एषः । वदेव शाकल्य । तस्य का देवतेति । स्त्रिय इति होवाच ॥ ११ ॥

---

'अयं' वायुरेकः 'एव पवते' वाति । अतः कथं 'अध्यर्द्धः' इत्याक्षेपः । योगमाश्रित्य परिहरति—**यदस्मिन्निति** । यद्यस्मात् 'अस्मिन्' वायौ सति 'इदं सर्वं' चराचरं 'अध्यार्ध्नोत्' अधिकामृद्धिं प्रापत् । 'तेन' हेतुना 'अध्यर्द्धः' वायुरित्यर्थः । 'कतम एको देव इति' । 'स ब्रह्मेति' । 'सः' इति प्राणः परामृश्यते । अष्टाध्याय्यां (श. प. ११ । ६ । ३ । १०) तथा दर्शनात् । 'सः' प्राणः 'ब्रह्म' सर्वदेवात्मकत्वात् सूत्रात्मरूपेण सर्वकार्याणां भरणाच्च कारणभूतो महद्ब्रह्मेत्युच्यते । तस्मात्तं प्राणं 'त्यदिति' परोक्षाभिधायकेन शब्देनाचक्षते तद्ब्रह्मेति । कथयन्ति । प्राणविद इति शेषः । साक्षान्निर्देष्टुमशक्यत्वादिति भावः ॥ १० ॥

तदेवं संकोचविस्ताराभ्यां प्राणस्वरूपमुक्तम् । इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेदो ध्यानार्थमुपदिश्यते—**पृथिव्येव यस्यायतनमि**त्यादिना । 'यस्य' देवस्य 'पृथिव्येवायतनं' आश्रयः शरीरम् । 'चक्षुर्लोकः' लोकयत्यनेनेति लोकः आलोकनसाधनम् । चक्षुषा लोकयति पश्यति सोऽयं 'चक्षुर्लोकः' । 'मनो ज्योतिः' । मनसो ज्योतिषा संकल्पविकल्पादिकार्यं करोति यः । सोऽयं 'मनोज्योतिः' । पृथिवीशरीरश्चक्षुर्दर्शनो मनसा संकल्पयिता पृथिव्यभिमानी कार्यकारणसंघातवान् देव इत्यर्थः । 'यो वै' एवं विशिष्टं 'तं पुरुषं' 'सर्वस्यात्मनः' आध्यात्मिकस्य कार्यकारणसंघातस्यात्मनः परमयनं पर आश्रयः तं 'परायणम्' मातृजेन त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन बीजस्थानीयस्य पितृजस्यास्थिमज्जाशुक्ररूपस्य करणात्मनश्च परमयनं 'विद्यात्' विजानीयात् । 'स वै' स एव 'वेदिता स्यात्' य एतदेवं वेत्ति । स एव पण्डितः स्यात् इत्यभिप्रायः । हे 'याज्ञवल्क्य !' त्वमजानन्नेव पंडिताभिमानीत्याशयेन सम्बोधयति । हे शाकल्य ! 'वै' निश्चितमहं 'तं पुरुषं' 'वेद' जानामि । त्वं 'यं सर्वस्यात्मनः' 'परायणमात्थ' कथयसि । इत्युक्ते शाकल्यस्य वचनं द्रष्टव्यम्—"यदि त्वं वेत्थ तं पुरुषं तर्हि ब्रूहि किंविशेषणः असौ ?" शृणु, यद्विशेषणः सः इत्याह—**य एवायं शारीरः इति** । पार्थिवेंऽशे शरीरे भवः शारीरः मातृकोशत्रयरूप इत्यर्थः । 'स एषः' देवो यस्त्वया पृष्टः । हे 'शाकल्य' ! किंत्वत्र वक्तव्यमस्ति चेत्; विशेषणान्तरं तद्वदैव पृच्छैवेत्यर्थः । एवं

रूपाण्येव यस्यायतनम् । (अ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषम्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवासावादित्ये पुरुषः सऽएष व्वदैव शाकल्य तस्य का देवतेति चक्षुरिति होवाच ॥ १२॥

(चा) आकाशऽएव यस्यायतनम् । (अ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषम्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवायम्वायौ पुरुषः सऽएष व्वदैव शाकल्य तस्य का देवतेति प्राणऽइति होवाच ॥ १३ ॥

---

रूपाण्येव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषम् । सर्वस्यात्मनः परायणं यमात्थ । य एवासावादित्ये पुरुषः स एषः । वदैव शाकल्य । तस्य का देवतेति । चक्षुरिति होवाच ॥ १२ ॥

आकाश एव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषम् । सर्वस्यात्मनः परायणं यमात्थ । य एवायं वायौ पुरुषः स एषः । वदैव शाकल्य । तस्य का देवतेति । प्राण इति होवाच ॥ १३ ॥

---

प्रक्षोभितः स शाकल्योऽमर्षवशग आतोत्राहितो गज इव आह—'तस्य' शारीरस्य देवस्य 'का देवता' किमुत्पत्तिकारणमेव विवक्षितम् । शाकल्यं प्रति मुनिरुत्तरमाह—इति श्रुतिरस्मान् प्रत्याह—स्त्रिय इति होवाचेति । स्त्रीभिर्भुक्तस्यान्नस्य रसो हि मातृजस्य लोहितस्य निष्पत्तिहेतुः । तस्मात् यदन्नरसाल्लोहितं निष्पद्यते स्त्रीणाम् । लोहिताच्च त्वङ्मासरुधिररूपं बीजस्यास्थिमज्जाशुक्रात्मकस्याश्रयभूतं शरीरं भवति । इति स्त्रीभ्यो निष्पत्तिरिति भावः ॥ ११ ॥

एवं पर्यायसप्तकं आद्यपर्यायेण तुल्यार्थत्वान्न पृथग्व्याख्यानापेक्षम् इति उत्तरपर्यायेषु येषां पदानामर्थभेदः तान्येव पदानि व्याख्यायन्ते—**रूपाण्येव यस्यायतनमिति** । 'रूपाणि' शुक्लकृष्णादीनि । "चक्षुर्लोकः" इत्यादि सर्वं पूर्ववत् । 'य एवासावादित्ये पुरुषः इति' । सर्वेषां हि रूपाणां विशिष्टं कार्यमादित्ये पुरुषः । 'तस्य का देवतेति' । 'चक्षुरिति होवाचेति' चक्षुषो हि अध्यात्मनः आदित्यस्य अधिदैवतस्य निष्पत्तिः ॥ १२॥

'आकाश एव यस्यायतनम्' । 'य एवायं वायौ पुरुष इति' । आकाशायतनस्य हि पुरुषस्य विशिष्टमायतनं बाह्यो वायुः । 'तस्य का देवता' इति । 'प्राण इति होवाच' प्राणाद्धि अध्यात्मनो वायोरपि अधिदैवतस्य निष्पत्तिः ॥ १३ ॥

कामऽएव यस्यायतनम् । ( अ ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषं म्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवासौ चन्द्रे पुरुषः सऽएष व्वदैव शाकल्य तस्य का देवतेति मनऽइति होवाच ॥ १४ ॥

तेजऽएव यस्यायतनम् । ( अ ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषम्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवायमग्नौ पुरुषः सऽएष व्वदैव शाकल्य तस्य का देवतेति व्वागिति होवाच ॥ १५ ॥

तमऽएव यस्यायतनम् । ( अ ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषम्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽ अहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवायञ्छायामयः पुरुषः सऽएष व्वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १६ ॥

---

काम एव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषम् । सर्वस्यात्मनः परायणं यमात्थ । य एवासौ चन्द्रे पुरुषः स एषः । वदैव शाकल्य । तस्य का देवतेति । मन इति होवाच ॥ १४ ॥

तेज एव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषम् । सर्वस्यात्मनः परायणं यमात्थ । य एवायमग्नौ पुरुषः स एषः । वदैव शाकल्य । तस्य का देवतेति । वागिति होवाच ॥ १५ ॥

तम एव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परा-

---

'काम एव यस्यायतनं' स्त्रीव्यतिकराभिलाषः 'कामः' कामशरीरः पुरुष इत्यर्थः । 'य एवासौ चन्द्रे पुरुषः' इति । कामायतनस्य हि देवस्य चन्द्रो विशिष्टं कार्यम् । कामिनां हि चन्द्रे प्रीतिविशेषो जायते । 'तस्य का देवतेति' । 'मन इति होवाच' । मनसो हि अध्यात्मनः चन्द्रस्याधिदैवतस्य निष्पत्तिः ॥ १४ ॥

'तेज एव यस्यायतनं' 'य एवायमग्नौ पुरुषः' इति । तेजआयतनस्य हि देवस्याग्नौ विशेषावस्थानम् । 'तस्य का देवतेति' । 'वागिति होवाच' । वाचो हि आध्यात्मिक्या अग्नेरधिदैवतस्य निष्पत्तिः ॥ १५ ॥

'तम एव यस्यायतनम्' तम इति शार्वरोऽन्धकारः प्रगृह्यते । अध्यात्मं 'छायामयः' अज्ञानमयः 'पुरुषः' ।

( चा ) आपऽएव यस्यायतनम् । ( अ ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषम्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवायमप्सु पुरुषः सऽएष व्वदैव शाकल्य तस्य का देवतेति व्वरुणऽइति होवाच ॥ १७ ॥

रेतऽएव यस्यायतनम् । ( अ ) चक्षुर्ल्लोको मनो ज्योतिर्य्यो वै तम्पुरुषम्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै व्वेदिता स्याद्याज्ञवल्क्य व्वेद वाऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ यऽएवायम्पुत्रमयः पुरुषः सऽएष व्वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १८ ॥

शाकल्येति होवाच याज्ञवल्क्यः । ( त्त्वा ) त्वाꣳ स्विदिमे ब्राह्मणाऽअङ्गारावक्षयणमक्रता३ऽइति ॥ १९ ॥

---

यणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषम् । सर्वस्यात्मनः परायणं यमात्थ । य एवायं छायामयः पुरुषः स एषः । वदैव शाकल्य । तस्य का देवतेति । मृत्युरिति होवाच ॥ १६ ॥

आप एव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषम् । सर्वस्यात्मनः परायणं यमात्थ । य एवायमप्सु पुरुषः स एषः । वदैव शाकल्य । तस्य का देवतेति । वरुण इति होवाच ॥ १७ ॥

रेत एव यस्यायतनम् । चक्षुर्लोकः । मनो ज्योतिः । यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणम् । स वै वेदिता स्याद्याज्ञवल्क्य । वेद वा अहं तं पुरुषम् । सर्वस्यात्मनः परायणं यमात्थ । य एवायं पुत्रमयः पुरुषः स एषः । वदैव शाकल्य । तस्य का देवतेति । प्रजापतिरिति होवाच ॥ १८ ॥

शाकल्येति होवाच याज्ञवल्क्यः । त्वां स्विदिमे ब्राह्मणा अंगारावक्षयणमक्रता ३ इति ॥ १९ ॥

---

'तस्य का देवतेति' । 'मृत्युरिति होवाच' । मृत्युरधिदैवतं तस्य निष्पत्तिकारणम् । "मृत्युनैवेदमावृतमासीत्" ( श. प. १० । ६ । ५ । १ ) इति श्रुतेः ॥ १६ ॥

'आप एव यस्यायतनं' साधारणाः सर्वा आपः प्रगृह्यन्ते । 'य एवायमप्सु पुरुषः' इति । वापीकूपतडागाद्याश्रयास्वप्सु विशेषावस्थानम् । 'तस्य का देवतेति' । 'वरुण इति होवाच' वरुणाद्धि वाप्याद्यपां निष्पत्तिः ॥ १७ ॥

'रेत एव यस्यायतनम्' । 'य एवायं पुत्रमयः पुरुषः' इति । रेतआयतनस्य हि विशेषायतनं पुत्रः । पुत्रमय इति चास्थिमज्जाशुक्राण्यपि तज्जातानि प्रगृह्यंते । 'तस्य का देवतेति' । 'प्रजापतिरिति होवाच' । 'प्रजापतिः' पितोच्यते । पितृतो हि पुत्रस्योत्पत्तिः ॥ १८ ॥

एवमष्टधा देव-लोक-पुरुषभेदेन त्रिधा त्रिधाऽऽत्मानं विभज्यावस्थित एकैको देवः प्राणभेद एव उपासनार्थ-

याज्ञवल्क्येति होवाच शाकल्यः । (त्यो) यदिदङ्कुरुपञ्चालानाम्ब्राह्मणानत्यवादीः किम्ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठाऽइति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ २० ॥

किन्देवतोऽस्याम्प्राच्यान्दिश्यसीति । ( त्या ) आदित्यदेवतऽइति सऽआदित्यः कस्मिन्प्रतिष्ठितऽइति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितम्भवतीति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानि भवन्तीति हृदयऽइति हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

---

याज्ञवल्क्येति होवाच शाकल्यः। यदिदं कुरुपंचालानां ब्राह्मणानत्यवादीः । किं ब्रह्म विद्वानिति। दिशो वेद सदेवाः सप्रतिष्ठाः इति। यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ २० ॥

किंदेवतोऽस्यां प्राच्यां दिश्यसीति। आदित्यदेवत इति। स आदित्यः कस्मिन्प्रतिष्ठित इति। चक्षुषीति। कस्मिन्नु चक्षुः प्रतिष्ठितं भवतीति। रूपेष्विति। चक्षुषा हि रूपाणि पश्यति। कस्मिन्नु रूपाणि प्रतिष्ठितानि भवंतीति। हृदय इति। हृदयेन हि रूपाणि जानाति। हृदये ह्येव रूपाणि प्रतिष्ठितानि भवंतीति। एवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

---

मुपदिष्टः। अधुना दिग्विभागेन पंचधा विभक्तस्य सर्वस्य जगतो हृदयात्मनि उपसंहारार्थं श्रुतिः प्रवर्तते, तत्र याज्ञवल्क्यो यदपि अस्यावशिष्टं तन्मां पृच्छतु इति चेतसि निधाय, तूष्णींभूतं शाकल्यं ग्रहेणेवावेशयन्नाह—**शाकल्येति होवाच याज्ञवल्क्य** इति। हे 'शाकल्य!'। स्विदिति वितर्के। नूनमिमे ब्राह्मणास्त्वामंगारावक्षयणं अंगारा अवक्षीयन्ते निरुध्यन्ते यस्मिन् संदंशादौ तदंगारावक्षयणं सन्दंशादि। तत् 'अक्रता ३' इति प्लुतिर्विचारणार्था। 'अक्रत' कृतवन्तः इति 'याज्ञवल्क्यः' 'उवाच'। त्वमंगारस्थानीयेन मया दह्यमानमात्मानं न बुध्यसे इत्यभिप्रायः ॥ १९ ॥

एवमुक्तं हितोपदेशं शाकल्यो विपरीतार्थं गृहीत्वा चोदयतीत्याह—**याज्ञवल्क्येति होवाच शाकल्य** इति। हे 'याज्ञवल्क्य' त्वं 'यत्' 'इदं कुरुपंचालानां' 'ब्राह्मणान् अत्यवादीः' उक्तवानसि स्वयं भीतास्त्वामंगारावक्षयणं कृतवन्त इति। तत्किं 'ब्रह्म विद्वान्' जानन् सन् एवं ब्राह्मणानधिक्षिपसि 'इति शाकल्य उवाच'। एवमुक्तो याज्ञवल्क्यो मम दिग्विषयं ब्रह्मविज्ञानं तावदस्तीत्याह—**दिशो वेदेति**। अहं 'दिशो वेद' जाने। दिग्विषयं विज्ञानं ममास्तीत्यर्थः। तच्च न केवलं दिङ्मात्रं जाने। अपि तु—'सदेवाः' देवैर्दिगधिष्ठातृभिः सह वर्तमानाः। किंच—'सप्रतिष्ठाः' दिशः 'वेद' जानामीति पुनः पृच्छति शाकल्यः—सकलं दिग्विज्ञानं यदि त्वया प्रतिज्ञातम् ॥ २० ॥

तर्हि हे याज्ञवल्क्य! त्वं 'अस्यां प्राच्यां दिशि' 'किंदेवतोऽसि' का देवता यस्यासौ किंदेवतः। कया देवतया त्वं प्राचीदिग्रूपेण संपन्न इत्यर्थः। अस्या दिशः का देवतेति प्रष्टव्ये 'किंदेवतः' इति प्रश्न-

किन्देवतोऽस्यान्दक्षिणायान्दिश्यसीति । यमदेवतऽइति स यमः कस्मिन्प्रतिष्ठितऽइति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठिता भवतीति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणान्ददाति श्रद्धायाᳬ ह्येव दक्षिणा प्रतिष्ठिता भवतीति कस्मिन्नु श्रद्धा प्रतिष्ठिता भवतीति हृदयऽइति हृदयेन हि श्रद्धत्ते हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति । यमदेवत इति । स यमः कस्मिन्प्रतिष्ठित इति । दक्षिणायामिति । कस्मिन्नु दक्षिणा प्रतिष्ठिता भवतीति । श्रद्धायामिति । यदा ह्येव श्रद्धत्ते । अथ दक्षिणां ददाति । श्रद्धायां ह्येव दक्षिणा प्रतिष्ठिता भवतीति । कस्मिन्नु श्रद्धा प्रतिष्ठिता भवतीति । हृदय इति । हृदयेन हि श्रद्धत्ते हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति । एवमेवैतद्याज्ञवल्क्य ॥ २२ ॥

करणं मुनेर्दिगुपासनात् तादात्म्यसंपत्तिर्जातेति बोधयितुम् । स हि याज्ञवल्क्यो दिक्षु पंचधा विभक्तं दिगात्मभूतं हृदयात्मानं तद्वारेण सर्वजगदात्मत्वेनोपगम्याहमस्मि दिगात्मेति पूर्वाभिमुखो व्यवस्थित आह–आदित्यदेवत इति । प्राच्यां दिशि आदित्यो देवता यस्य मम सोऽहमादित्यदेवतः । तया देवतया प्राचीदिग्रूपमापन्न इत्यर्थः । " सदेवाः " इत्युक्तम् । " सप्रतिष्ठाः " इति तु वक्तव्यमित्यत आह–स आदित्यः कस्मिन् प्रतिष्ठित इति । स्वोत्पत्तिकारणे एव प्रतिष्ठितत्वमाह–चक्षुषीति । " चक्षोः सूर्यो अजायत "–( वा. सं. ३१–१२ ) इति मंत्रवर्णात् । कार्यं हि कारणे प्रतिष्ठितं भवति । पुनश्चक्षुरुत्पादकं पृच्छति–कस्मिन्नु चक्षुः प्रतिष्ठितं भवतीति । उत्तरमाह–रूपेष्विति । अत्र हेतुमाह–चक्षुषा हि रूपाणि पश्यतीति । अतो रूपारब्धं चक्षुः व्यंजकस्य व्यंग्यसमानजातीयत्वात् । रूपोत्पादकं पृच्छति–कस्मिन्नु रूपाणि प्रतिष्ठितानि भवंतीति । उत्तरमाह–हृदये इति । हृदयमिति बुद्धिमनसी एकीकृत्य निर्देशः । न तु मांसखंडविषयः । हृदयारब्धानि रूपाणि रूपाकारेण हृदये परिणतानि । अत्र हेतुः–' हि ' यस्मात् ' हृदयेन ' हृदयस्थबुद्ध्या सर्वो लोकः ' रूपाणि ' सर्वाणि ' जानाति ' । बुद्ध्यभिन्नमनोमात्रकल्पितानीति स्मरतीत्यर्थः । तस्मात् ' हृदये ह्येव ' सर्वाणि वासनात्मकानि ' रूपाणि ' ' प्रतिष्ठितानि ' भवतीत्युपसंहृते शाकल्योऽङ्गीकरोति–एवमेवैतदिति । हे ' याज्ञवल्क्य ' ! ' एतत् ' त्वदुक्तं ' एवमेव ' । मयाऽप्येवं ज्ञायत इत्यर्थः ॥ २१ ॥

" किंदेवतोऽस्यां दक्षिणायां दिश्यसीति " । पूर्ववत्सामान्यतोऽर्थो बोद्धव्यः । विशेषस्तु कथ्यते । तव दक्षिणायां दिशि का देवता । ' यमदेवत इति ' । मम दक्षिणादिग्भूतस्य यमो देवता । ' स यमः ' धर्मराजः ' कस्मिन्प्रतिष्ठित इति ' । ' दक्षिणायामिति ' । सयमा हि दक्षिणा दिक् । यमस्य तत्राधिपत्यात् । ' कस्मिन्नु दक्षिणा प्रतिष्ठिता भवतीति ' पृष्टो मुनिः–" दक्षिणा दक्षतेः समर्द्धयतिकर्मणो व्यृद्धं समर्द्धयति "–( निरु. १ । ३–७ ) इति निरुक्तमाश्रित्योत्तरमाह–श्रद्धयामिति । श्रद्धा नाम भक्तिसहिता आस्तिक्यबुद्धिर्दित्सुत्वलक्षणा । तस्यां कथं प्रतिष्ठिता दक्षिणेति । ' हि ' यस्मात् ' यदेव श्रद्धत्ते ' श्रद्धां करोति । ' अथ ' तदा ' दक्षिणां ददाति ' नाश्रद्दधद्दक्षिणां ददाति । तस्मात् ' श्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति ' । ' कस्मिन्नु श्रद्धा प्रतिष्ठि-

किन्देवतोऽस्याम्प्रतीच्यान्दिश्यसीति । व्वरुणदेवतऽइति स व्वरुणः कस्मिन्प्रतिष्ठितऽइत्यप्स्विति कस्मिन्न्वापः प्प्रतिष्ठिता भवन्तीति रेतसीति कस्मिन्नु रेतः प्प्रतिष्ठितम्भवतीति हृदयऽइति तस्मादपि प्प्रतिरूपञ्जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्म्मितऽइति हृदये ह्येव रेतः प्प्रतिष्ठितम्भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किन्देवतोऽस्यामुदीच्यान्दिश्यसीति । सोमदेवतऽइति स सोमः कस्मिन्प्रतिष्ठितऽइति दीक्षायामिति कस्मिन्नु दीक्षा प्प्रतिष्ठिता भवतीति सत्यऽइति तस्मादपि दीक्षितमाहुः सत्यम्वदेति सत्ये ह्येव दीक्षा प्प्रतिष्ठिता भवतीति कस्मिन्नु सत्यम्प्रतिष्ठितम्भवतीति हृदयऽइति हृदयेन हि सत्यञ्जानाति हृदये ह्येव सत्यम्प्रतिष्ठितम्भवतीत्येवमेवैतद्याज्ञवल्क्य॥२४॥

---

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति । वरुणदेवत इति । स वरुणः कस्मिन्प्रतिष्ठित इति । अप्स्विति । कस्मिन्नु आपः प्रतिष्ठिता भवन्तीति । रेतसीति । कस्मिन्नु रेतः प्रतिष्ठितं भवतीति । हृदय इति । तस्मादपि प्रतिरूपं जातमाहुः—हृदयादिव सृप्तो हृदयादिव निर्मित इति । हृदये ह्येव रेतः प्रतिष्ठितं भवतीति । एवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किंदेवतोऽस्यामुदीच्यां दिश्यसीति । सोमदेवत इति । स सोमः कस्मिन्प्रतिष्ठित इति । दीक्षायामिति । कस्मिन्नु दीक्षा प्रतिष्ठिता भवतीति । सत्य इति । तस्मादपि दीक्षितमाहुः—सत्यं वदेति । सत्ये ह्येव दीक्षा प्रतिष्ठिता भवतीति । कस्मिन्नु सत्यं प्रतिष्ठितं भवतीति । हृदय इति । हृदयेन हि सत्यं जानाति । हृदये ह्येव सत्यं प्रतिष्ठितं भवतीति । एवमेवैतद्याज्ञवल्क्य ॥ २४ ॥

---

तेति' । 'हृदय इति' हृदयस्य हि वृत्तिः श्रद्धा । 'हि' यस्मात् 'हृदयेन श्रद्धत्ते' । वृत्तिश्च वृत्तिमति प्रतिष्ठिता भवति । तस्मात् 'हृदये ह्येव श्रद्धा प्रतिष्ठिता भवति' । 'इत्येवमेवैतद्याज्ञवल्क्य' इति । पूर्ववत् ॥ २२ ॥

'किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति' । तस्यां वरुणोऽधिदेवता । मम प्रतीचीदिग्भूतस्य स वरुणो देवता । 'स वरुणः कस्मिन्प्रतिष्ठित इति' । 'अप्स्विति' । अपां हि वरुणः कार्यम् । "श्रद्धा वा आपः" । "श्रद्धातो वरुणमसृजत" इति श्रुत्यन्तरात् । 'आपश्च रेतसि प्रतिष्ठिता इति' । "रेतसो ह्यापः सृष्टाः" इति श्रुत्यन्तरात् । तच्च रेतो हृदये । यस्मात् हृदयस्य कार्यं रेतः कामो हृदयस्य वृत्तिः । कामिनो हि हृदयाद्रेतः अविस्कन्दति । अत्रैव लोकप्रसिद्धिमाह—तस्मादपीति । 'तस्मादपि' प्रतिरूपमनुरूपं पुत्रं 'जातं' आहुर्लौकिकाः । अस्य पितुर्हृदयादिवायं पुत्रः 'सृप्तः' विनिःसृतः । 'हृदयादिव निर्मितः' । यथा सुवर्णेन निर्मितः कुंडलः, एवमित्यर्थः ॥ २३ ॥

'किंदेवतोऽस्यामुदीच्यां दिश्यसीति' । 'सोमदेवत इति' । 'अत्र सोमलतां सोमदेवतां चैकीकृत्य

क्रिन्देवतोऽस्यान्द्ध्रुवायान्दिश्यसीति । ( त्यु ) अग्निदेवतऽइति सोऽग्निः कस्मिन्प्रतिष्ठितऽइति व्वाचीति कस्मिन्नु व्वाक्प्रतिष्ठिता भवतीति मनसीति कस्मिन्नु मनः प्प्रतिष्ठितम्भवतीति हृदयऽइति कस्मिन्नु हृदयम्प्रतिष्ठितम्भवतीति ॥ २९ ॥

( त्यु ) अहँल्लिकेति होवाच याज्ञवल्क्यः । ( ल्क्यो ) यत्रैतदन्यत्रास्मन्मन्यासै यत्रैतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्व्वयाᳬंसि वैनद्विमथ्नीरन्निति ॥ २६ ॥

---

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति । अग्निदेवत इति । सोऽग्निः कस्मिन्प्रतिष्ठित इति । वाचीति । कस्मिन्नु वाक् प्रतिष्ठिता भवतीति । मनसीति । कस्मिन्नु मनः प्रतिष्ठितं भवतीति । हृदय इति । कस्मिन्नु हृदयं प्रतिष्ठितं भवतीति ॥ २९ ॥

अहँल्लिकेति होवाच याज्ञवल्क्यः । यत्रैतदन्यत्रास्मन्मन्यासै । यत्रैतदन्यत्रास्मत्स्यात् । श्वानो वैनदद्युः । वयांसि वा एनद्विमथ्नीरन्निति ॥ २६ ॥

---

निर्देशः । 'स सोमो दीक्षायां प्रतिष्ठित इति' । दीक्षितो हि यजमानः सोमं क्रीणाति । क्रीतेन सोमेनेष्ट्वा ज्ञानवान् सोमदेवताऽधिष्ठितां सौम्यामुत्तरां दिशं प्रतिपद्यत इति भावः । सा च दीक्षा सत्ये यस्मात्प्रतिष्ठिता । 'तस्मादपि' तस्मादेव 'दीक्षितं सत्यं वदेत्याहुः' । कारणनाशे कार्यनाशो मा भूत्, इत्यभिप्रायवन्तः पंडिता इति शेषः ॥ २४ ॥

'किंदेवतोऽस्यां ध्रुवायां दिश्यसीति' । मेरोः समन्ततो वसतां अव्यभिचारात् ऊर्ध्वा दिक् ध्रुवेत्युच्यते । ऊर्ध्वायां हिं प्रकाशभूयस्त्वादग्निर्देवता । स चाग्निर्वाचि प्रतिष्ठितः । सा च वाङ्मनसि प्रतिष्ठिता । "मनसा वा इयं वाग् धृता मनो वा इदं पुरस्ताद्वाच इत्थं वद मैतद्वादीरित्यलग्लमिव ह वै वाग् वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति" ( श. प. ३ । २ । ४ । ११ ) इत्यध्वरे श्रुतत्वात् वाचो मनसि प्रतिष्ठितत्वं युक्तम् । तस्यच मनसोविलासरूपत्वात् अर्थान्मनोद्वारा हृदये उपसंहार उक्तः । तच सर्वात्मकं हृदयं पृच्छति— **कस्मिन्नु हृदयं प्रतिष्ठितं भवतीति** ॥ २९ ॥

एवं पृष्टः 'याज्ञवल्क्यः' उत्तरमाह—**अहँल्लिकेति** । अहनि लीयते इति व्युत्पत्तेः नूनं त्वं प्रेतभूतोऽसीति लक्ष्यते । यतो यत्किंचित्प्रेतवद्भाषसे इति प्रेतनाम्ना शाकल्यं सम्बोधयन् 'ह याज्ञवल्क्य उवाच' । 'यत्र' यस्मिन् काले 'एतत्' हृदयं अस्य शरीरस्य आत्मभूतं अस्मदस्मत्तः एतस्माच्छरीरादन्यत्र क्वचिद्देशांतरे वर्तते इति यदि 'मन्यासै' मन्यसे । 'यत्र' यदा 'एतत्' हृदयं अस्मदस्मत्तः अस्माच्छरीरादन्यत्र देशांतरे स्याद्भवेत् । तदा 'श्वानो वा' एनच्छरीरं अद्युर्भक्षयेयुः । 'वयांसि वा' पक्षिणो गृध्रादय एनच्छरीरं 'विमथ्नीरन्' विलोडयेयुः विकर्षेरन्निति । तस्मान्मयि शरीरे एव हृदयं प्रतिष्ठितम् । तच्छरीरमपि नामकर्मरूपात्मकत्वात् हृदये प्रतिष्ठितमिति अर्थादुक्तमित्यर्थः ॥ २६ ॥

कुस्मिन्नु त्वुञ्चात्मा च प्प्रतिष्ठितौ स्थऽइति । प्प्राणऽइति कुस्मिन्नु प्प्राणः प्प्रतिष्ठितऽइत्यपानऽइति कुस्मिन्न्वपानः प्प्रतिष्ठितऽइति व्व्यानऽइति कुस्मिन्नु व्व्यानः प्प्रतिष्ठितऽइत्युदानऽइति कुस्मिन्नूदानः प्प्रतिष्ठितऽइति समानऽइति ॥ २७ ॥

सुऽएष नुेति नेुत्यात्मा । (त्मुाऽग्गृ) अुग्गृह्यो न हि ग्गृह्यतेुऽशीर्य्यो न हि शीर्य्यतेऽसङ्ग्गोुऽसितो नु सुज्यते न व्व्युथतऽइत्येतान्यष्टावायतनान्यष्टौ लोकुाऽअष्टौ पुुरुषाः स यस्तान्पुरुषान्व्युदुह्य प्प्रत्युह्यात्युक्रामी त्तुन्त्वौपनिषदम्पुरुषम्पृच्छामि तञ्चेन्मे नु व्विवक्ष्युसि मूुर्द्धा ते व्विपतिष्यतीति तुछुँ ह शाकल्यो नु मेने तुस्य हु मूुर्द्धा व्विपपात तुस्य ह्याप्यन्यन्मुन्यमानाः परिमोषिणोऽस्थीन्युपजह्रुः ॥ २८ ॥

---

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति । प्राण इति । कस्मिन्नु प्राणः प्रतिष्ठित इति । अपान इति । कस्मिन्न्वपानः प्रतिष्ठित इति । व्यान इति । कस्मिन्नु व्यानः प्रतिष्ठित इति । उदान इति । कस्मिन्नूदानः प्रतिष्ठित इति । समान इति ॥ २७ ॥

स एष नेति नेत्यात्मा । अगृह्यो, न हि गृह्यते । अशीर्यो, न हि शीर्यते । असंगोऽसितो न सज्यते न व्यथते । इत्येतान्यष्टावायतनानि । अष्टौ लोकाः । अष्टौ पुरुषाः । स यस्तान्पुरुषान् व्युदुह्य प्रत्युह्यात्यक्रामीत् । तं त्वौपनिषदं पुरुषं पृच्छामि । तं चेन्मे न विवक्ष्यसि, मूर्द्धा ते विपतिष्यतीति । तं ह शाकल्यो न मेने । तस्य ह मूर्द्धा विपपात । तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः ॥ २८ ॥

---

एवं कार्यकारणयोर्हृदयशरीरयोरन्योऽन्यप्रतिष्ठा उक्ता । अतस्ते अपि कुत्र प्रतिष्ठिते इति पृच्छति—कस्मिन्निति । देहात्मानौ ऊर्ध्ववृत्त्यात्मके प्राणे 'प्रतिष्ठितौ' । 'कस्मिन्नु प्राणः प्रतिष्ठित इति' । 'अपाने इति' साऽपि प्राणवृत्तिः अपानवृत्त्या चेन्न निगृह्यते । तर्हि प्रागेव गच्छेत् । स चापानः 'व्याने' मध्यस्थवृत्तिरूपे । अन्यथा उभयोरूर्ध्वाधोगमनमेव भवेत् । स च व्यानः 'उदाने' नाभिस्थवृत्तिरूपे कीलकस्थानीये । तिस्रोऽपि वृत्तयस्तत्र चेन्न निबद्धाः । तर्हि नानागतयो भवेयुः । स चोदानः 'समाने' सूत्रात्मशब्दवाच्ये । समप्रतिष्ठा ह्येताः सर्वा वृत्तय इत्यर्थः ॥ २७ ॥

सोऽपि समानः अंतर्यामिणि । सोऽप्यक्षरे कूटस्थे ब्रह्मणि इति अर्थाद्दर्शितमेवेति मत्वा श्रुतिः स्वयमेव ब्रह्मणः स्वरूपमाह—स एष इति । यः सूत्रांतर्यामित्वकल्पनाधिष्ठानभूतः 'सः' परमात्मा 'एषः' प्रत्यगात्मैव मूर्तामूर्तब्राह्मणे "नेति नेति"—( श. प. बृ. उ. १४।५।३।११ ) इत्येवं संकल्पोपाधिनिषेधेन निर्दिष्ट आत्मा । निषेधद्वारा निर्दिष्टमेव स्पष्टयति—अगृह्य इत्यादिना । सोऽयमात्मा न गृह्यः 'अगृह्यः' । यस्मात् सर्वकार्यधर्मातीतः तस्मादगृह्यः । कुतः ? यस्मान्न हि गृह्यते । विकरणगोचरं व्याकृतं वस्तु तत् ग्रहणगोचरम्,

( २ ) अथ ह याज्ञवल्क्य उवाच । ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छानि सर्वान्वा वः पृच्छानीति ते ह ब्राह्मणा न दधृषुः ॥ २९ ॥

---

अथ ह याज्ञवल्क्य उवाच । ब्राह्मणा भगवंतो यो वः कामयते स मा पृच्छतु । सर्वे वा

---

इदं तु तद्विपरीतमात्मतत्वम् । तथा 'अशीर्यः' यद्धि मूर्तं संहतं शरीरादि तच्छीर्यते । अयं तु तद्विपरीतः । अतः 'न हि शीर्यते' । तथा 'असंगः' अमूर्तः । 'असितः' अबद्धः । बद्धो मूर्तांतरेण संबध्यमानः सज्यते । अयं च तद्विपरीतः । अतः न सज्यते । तथा अबद्धत्वान्न व्यथते इति । अथ पुनः पूर्वामेवाख्यायिकामनुसृत्य अयं प्रतिभूतः अब्रह्मवित्सन्नेव मां ब्रह्म पृच्छतीति सापराधत्वं संपादयितुं याज्ञवल्क्यः पृच्छति—एतान्यष्टावायतनानीत्यादिना । 'एतानि' उक्तानि पृथिव्यादीनि 'अष्टावायतनानि'। 'अष्टौ लोकाः' "चक्षुर्लोको मनो ज्योतिः"—इत्येवंरूपाः । 'अष्टौ पुरुषाः' "शारीरः पुरुषः" इत्यादयः । 'तान्'शारीरप्रभृतीनष्टौ पुरुषान् 'स यः' कश्चित् ब्रह्मज्ञः आयतनलोकपुरुषैतत्त्रिकभेदेन 'व्युदुह्य' विक्षिप्य लोकस्थितिमुपपाद्य पुनः प्राचीदिगादिद्वारेण हृदयात्मनि 'प्रत्युह्य' उपसंहृत्य पश्चात् हृदयाद्यात्मविलक्षणमपि समानांतमुपाधिधर्ममत्यंक्रामीदतिक्रांतवान् स्वेनैवात्मना व्यवस्थितः 'तमौपनिषदं' उपनिषत्स्वेव विज्ञेयं नान्यप्रमाणगम्यं 'पुरुषं' अशनायादिधर्मवर्जितं हे शाकल्य ! 'त्वा' त्वां ब्रह्मविद्याभिमानिनं 'पृच्छामि' । 'तं चेत्' पुरुषं 'मे' मह्यं 'न विवक्ष्यसि' विस्पष्टं न कथयिष्यसि तर्हि 'ते' तव अब्रह्मविदः ब्रह्मवित्त्वाभिमानिनः 'मूर्द्धा' शिरः 'विपतिष्यति' विस्पष्टं पतिष्यतीति । इतिशब्दआख्यायिकासमाप्तिद्योतकः ।

एवं शापे दत्ते किं वृत्तमिति जिज्ञासायां श्रुतिरेवाह—तं ह शाकल्य इति । तमौपनिषदं पुरुषं 'शाकल्यो न मेने ह' न विज्ञातवान् । किंतु—'तस्य ह' शाकल्यस्य 'मूर्द्धा विपपात' विपतितः । ब्रह्मविद्विद्वेषे परलोकविरोधोऽपि स्यादिति दर्शयितुं अष्टाध्याय्यां ( श. प. ११ । ६ । ३ । ११ ) निर्वृत्तामाख्यायिकां सूचयति—तस्य हाप्यन्यदिति । न केवलमसौ मृत एव । किंच—'तस्य' शाकल्यस्याग्निहोत्रेण संस्कारार्थं शिष्यैर्वस्त्रखंडेन बद्ध्वा गृहान्प्रति नीयमानानि 'अस्थीन्यपि' परिमोषिणस्तस्कराः अन्यद्धनमेतैर्नीयत इति 'मन्यमानाः' संतोऽपजहुः अपहृतवंत इत्यर्थः । इति पूर्ववृत्ताख्यायिका इह सूचिता । अष्टाध्याय्यां किल शाकल्येन सह याज्ञवल्क्यस्य समानांत एव संवादो निवृत्तः । तत्र याज्ञवल्क्येन शापो दत्तः । "पुरेतिथ्यै मरिष्यसि न तेऽस्थीनि चन गृहान् प्राप्स्यंतीति । स ह तथैव ममार । तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजहुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति" ( श. प. ११ । ६ । ३ । ११ ) इति । पुरेतिथ्यै इति पञ्चम्यर्थे चतुर्थी । आगामिन्यास्तिथेः पुरस्तादेवेति । अस्थीनि चनेत्यत्र चनशब्दोऽप्यर्थः । 'उपवादी' परिभवकर्ता इति समितिश्रुतेरर्थः । ब्रह्मविदि विनीतेन भवितव्यमिति आचारार्थं महती हीयं ब्रह्मविद्यायुतनिष्ठावज्ञायां ऐहिकामुष्मिकविरोधः स्यात् इति विद्यास्तुतये च इह सा एषा आख्यायिका सूचितेति भावः ॥ २८ ॥

यस्य ब्रह्मणो नेति नेतीति अन्यप्रतिषेधद्वारेण निर्देशः कृतः तस्यैव इदानीं विधिमुखेन निर्देशः कर्तव्यः, जगतो मूलं च वक्तव्यं, इत्येतदर्थं श्रुतिराख्यायिकामेव पुनरनुसृत्य ब्राह्मणानुमतिमनापाद्य ब्रह्मस्वं

( स्ता ) तान्हैतैः श्लोकैः पप्रच्छ । यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा । तस्य पर्णानि लोमानि त्वगस्योत्पाटिका बहिः ॥ ३० ॥

त्वचऽएवास्य । रुधिरम्प्रस्यन्दि त्वचऽउत्पटः । तस्मात्तदातुन्नात्प्रैति रसो वृक्षादिवाहतात् ॥ ३१ ॥

माꣳसान्यस्य शकराणि । किनाटꣳ स्नाव तत्स्थिरम् । अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३२ ॥

---

मा पृच्छत । यो वः कामयते । तं वः पृच्छानि । सर्वान् वा वः पृच्छानीति । ते ह ब्राह्मण न दधृषुः ॥ २९ ॥

तान् हैतैः श्लोकैः पप्रच्छ—" यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा । तस्य पर्णानि लोमानि त्वगस्योत्पाटिका बहिः ॥ ३० ॥

त्वच एवास्य रुधिरं प्रस्यंदि त्वच उत्पटः । तस्मात्तदातुन्नात्प्रैति रसो वृक्षादिवाहतात् ॥ ३१ ॥

मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम् । अस्थीन्यंतरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३२ ॥

---

नीयमानमनर्थाय स्यादिति न्यायं दर्शयितुं ब्राह्मणानुमतिसम्प्रत्तिहेतुभूतं पराजयं कर्तुं याज्ञवल्क्यो ब्राह्मणान् पृष्टवान् इत्याह—अथ हेति । ' ह उवाच ' ' वः ' युष्माकं मध्ये ' यः ' याज्ञवल्क्यं पृच्छामीति ' कामयते ' इच्छति । ' सः ' ' मा ' मां पृच्छतु । ' सर्वे वा ' यूयं ' मा ' मां ' पृच्छत ' । यद्वा ' वः ' युष्माकं मध्ये याज्ञवल्क्यो मां पृच्छत्विति ' यः कामयते ' ' तं ' पुरुषं ' वः ' युष्माकं मध्ये वर्तमानं अहं ' पृच्छानि ' । ' सर्वान् वा ' ' वः ' युष्मान् अहं ' पृच्छानि ' । इत्येवमुक्ता अपि ' ते ब्राह्मणा ह ' ' न दधृषुः ' । किंचिदपि प्रत्युत्तरं दातुं न प्रगल्भाः संवृत्ता इत्यर्थः ॥ २९ ॥

जगत्कारणं प्रष्टुं तावत् पुरुषवृक्षयोः साधर्म्यं श्लोकत्रयेणाह—तान् हैतैः श्लोकैरिति । ' तान् ' अप्रगल्भानपि ब्राह्मणान् एतैर्वक्ष्यमाणैः ' श्लोकैः ' ' ह ' किल ' पप्रच्छ ' । ' यथा ' लोके ' वृक्षः ' । तस्य विशेषणं वनस्पतिरिति । तच्च वृक्षस्य महत्त्वमिति अपुनरुक्तितेति भावः । " अपुष्पाः फलवंतो ये ते वनस्पतयः स्मृताः " इति । यथा अश्वत्थः । ' तथैव ' तत्सधर्मैव ' पुरुषः ' इत्येतत् ' अमृषा ' न मिथ्या सत्यमेवैतत् । यतस्तस्य पुरुषस्य ' लोमानि ' तत्स्थानीयानि वनस्पतेः ' पर्णानि ' । ' त्वक् ' ' अस्य ' पुरुषस्यवृक्षस्य तु तत्स्थानीया ' बहिरुत्पाटिका ' बहिर्भूता नीरसा त्वक् ॥ ३० ॥

' त्वचः ' एव सकाशात् ' अस्य ' पुरुषस्य ' रुधिरं प्रस्यंदि ' निःसरतीति शेषः । प्रस्यंदते निःसरतीति प्रस्यंदि । वृक्षस्यापि ' त्वचः ' सकाशादेव ' उत्पटः ' वृक्षनिर्यासः प्रस्यंदी निःसरतीति शेषः । एवमुक्तं साधर्म्यं अनुभवेन गमयति—तस्मात्तदिति । यस्मात् वनस्पतेः पुरुषस्य च सर्वमेवं समानम् ' तस्मात् तत् आतुन्नात् ' हिंसितात् पुरुषात् ' तत् ' रुधिरं ' प्रैति ' निर्गच्छति । ' आहतात् ' छिन्नात ' वृक्षात् ' वनस्पतेः ' रस इव ' निर्यासो यथा प्रैतीति शेषः ॥ ३१ ॥

किंच—' अस्य ' पुरुषस्य । ' मांसानि ' वनस्पतेस्तु तत्स्थानीयानि ' शकराणि ' शकलानीत्यर्थः ।

य॒द्वृ॒क्षो वृ॒क्णो रो॑हति । मू॒लान्नव॑तरः॒ पुनः॑ । मर्त्यः॒ स्विन्मृ॒त्युना॑ वृ॒क्णः कस्मा॒न्मूला॒त्प्ररो॑हति ॥ ३३ ॥

रेत॑सऽइति॒ मा वो॑चत । जी॒वत॒स्तत्प्र॑जायते । जा॒तऽए॒व न जा॑यते को॒ न्वे॑नञ्जनयेत्पु॒नः ॥ धा॒ना॒रु॒हऽउ॒ वै वृ॒क्षोऽन्य॒तः प्रे॒त्य सम्भ॑वः । य॒त्स॒मू॒लमु॒द्वृहे॑युर्वृ॒क्षन्न पु॒नरा॒भवे॑त् । मर्त्यः॒ स्विन्मृ॒त्युना॑ वृ॒क्णः कस्मा॒न्मूला॒त्प्ररो॑हति ॥ वि॒ज्ञान॑मान॒न्दं ब्रह्म॒ राते॑र्दा॒तुः प॒राय॑णम् ॥ ति॒ष्ठ॒मान॑स्य त॒द्विद॒ऽइति॑ ॥ ३४ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीये प्रपाठके सप्तमं ब्राह्मणम् ॥ १४ । ( ५ ) ३ । ७ ॥ ( ६ ) ३-९ ॥

---

यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ ३३ ॥

रेतस इति मा वोचत जीवतस्तत्प्रजायते । जात एव न जायते को न्वेनं जनयेत्पुनः ॥ धानारुह उ वै वृक्षोन्यतः प्रेत्य संभवः । यत्समूलमुद्वृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥ विज्ञानमानंदं ब्रह्म रातेर्दातुः परायणम् । तिष्ठमानस्य तद्विदः " इति ॥ ३४ ॥

---

'किनाटं' नाम वृक्षस्य शकलेभ्य आभ्यन्तरं काष्ठसंलग्नं वल्कलरूपं उच्यते । 'तत्' तत्स्थानीयं पुरुषस्य 'स्नाव' अस्थिसंलग्नो धातुविशेषः । तदुभयं किनाटं स्नाव च 'स्थिरं' दृढम् । पुरुषस्य स्नावभ्योऽभ्यंतरतः 'अस्थीनि' भवंति । तथा वृक्षस्य किनाटस्याभ्यंतरतः 'दारूणि' काष्ठानि । 'मज्जा' मज्जैव वनस्पतेः पुरुषस्य च 'मज्जोपमा कृता' मज्जाया उपमा मज्जोपमा । नान्यो विशेषोऽस्तीत्यर्थः । मज्जाशब्देनोभयत्र अस्थिकाष्ठगतः सार उच्यते ॥ ३२ ॥

अथ वृक्षपुरुषयोर्वैधर्म्यकथनपुरःसरं जगत्कारणं पृच्छति—यद्वृक्ष इत्यादिना । यद्यदि वृक्षो वृक्णश्छिन्नः 'पुनः' पुनरपि मूलान्नवतरः पूर्वस्मात् अभिनवतरः 'रोहति' प्ररोहति प्रादुर्भवति । स्विदिति वितर्के । 'मर्त्यः' मनुष्यः 'मृत्युना' यमेन 'वृक्णः' मारितः कस्मान्मूलात्कारणात् 'प्ररोहति' पुनर्जायते । यत् एतस्माद्विशेषणात् प्राक् वृक्षपुरुषयोः सर्वं सामान्यमवगतम् । अयं तु वनस्पतौ विशेषो दृश्यते यत् छिन्नस्य प्ररोहणम् । न तु पुरुषे मृत्युना वृक्णे पुनः प्ररोहणं दृश्यते । भवितव्यं तु कुतश्चित् प्ररोहणेन । तस्मान्मृतस्य पुरुषस्य कुतः प्ररोहणमिति युष्मानहं पृच्छामीत्यर्थः ॥ ३३ ॥

तत्र शंकामुद्भाव्य निराचष्टे—रेतस इति । हे ब्राह्मणाः ! 'रेतसः' सकाशात्पुरुषः प्ररोहतीति 'मा वोचत' मैवं वक्तुमर्हथ । कस्मात् ? यस्माज्जीवतः पुरुषात्तद्रेतः 'प्रजायते' न मृतात् । अतो न रेतः कारणमित्यर्थः । अयं भावः—न चात्र मृतपुरुषशब्देन एकः शरीरी अभिधीयते । किंतु प्रलयकाले विलीनं सर्वमेव शरीरजातं

जगत् अभिधीयते । तदा च तदानीं जीवतः कस्यापि पुरुषस्याभावात् मृतस्य च रेतसः असद्भावात् न रेतः कारणमिति । इदानीं स्वभाववादमवलंब्य नोदयति–जात एवेति । यस्तु मृतः स पुनर्नैव जायते ' जातत्वादेवेति । जनिष्यतो हि संभवः प्रष्टव्यः न जातस्य । अयं तु जात एव । अतः अस्मिन् विषये प्रश्न एव नोपपद्यत इति चेत् तन्न, नेति पृथक् वाक्यम् । यन्मतं जात एवेति । तन्न, किं तर्हि मृतः पुनरपि जायत एव । अन्यथा अकृताभ्यागमनकृतनाशप्रसंगः स्यात् । अतो वः पृच्छामि । ' एनं ' पुरुषं मृतं ' नु ' वितर्के । ' पुनः को जनयेत् ' उत्पादयेत् । अपि च ' धानारुह उ वै वृक्षः ' । धाना बीजं वटकणिकादि । तस्याः सकाशात् रोहतीति धानारुहः । उशब्दः अप्यर्थः । न केवलं कांडरुह एव । किंतु बीजरुहो वृक्षो भवति । वैशब्दः प्रसिद्धिद्योतकः । तथा च यथा यथा वै वृक्षः कांडरुहो धानारुहश्च ' प्रेत्य ' मृत्वा ' अन्यतः संभवः ' कांडात् धानातोऽपि प्रेत्य संभवो भवेत् इति प्रसिद्धम् । न तथा मृतस्य पुरुषस्य पुनरुत्पत्तौ किंचिदपि कारणं दृश्यते, भवितव्यं च तेनेति भावः । यद्यदि ' वृक्षं समूलं ' सह मूलेन धानया वा उद्वृहेयुरुच्छेयुरुत्पाटयेयुः । तदा ' न पुनराभवेत् ' पुनरागत्य न भवेत् । तस्मात् वः पृच्छामि सर्वस्यैव जगतो मूलम् । "मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहतीति " । अनन्तरमेव व्याख्यातार्थम् । तन्न विजज्ञुर्ब्राह्मणाः यतो मृतः पुनः प्ररोहतीति । ब्राह्मणैर्जगतो मूलं न विज्ञातम् । अतो ब्रह्मिष्ठत्वात् याज्ञवल्क्येन गावो हृताः ब्राह्मणाश्च जिताः । समाप्ता आख्यायिका । यज्जगतो मूलं येन च शब्देन साक्षात् व्यपदिश्यते ब्रह्म यद्याज्ञवल्क्यो ब्राह्मणान् पृष्टवान् । तत् स्वेन रूपेण श्रुतिरस्मभ्यमाह–विज्ञानमानंदमिति । विज्ञप्तिर्विज्ञानं कूटस्थचिन्मात्ररूपं, तच्चानंदं, न विषयविज्ञानवत् दुःखानुविद्धम् । किं तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसमित्यर्थः । किं तत् उभयविशेषणवत् ' ब्रह्म ' अक्षरम् । रातेर्धनस्य दक्षिणारूपस्य ' दातुः ' कर्मकृतो यजमानस्य ' परायणं ' परागतिः । कर्मफलस्य प्रदातृब्रह्मणः सर्वफलदातृत्वं भाष्यकृद्भिः समर्थितम् " फलमत उपपत्तेः " ( वे. ब्र. सू. ३ । २ । ८ । ३८ ) इत्यस्मिन्नधिकरणे । अधिकरणार्थ-[१]स्तत एवावसेयः । किं च एषणाभ्यो व्युत्थाय तस्मिन्नेव मोहातीते ब्रह्मणि तिष्ठत्यकर्मकृदिति ' तिष्ठमानः ' तस्य तदेव ब्रह्म वेत्तीति तद्वित् तस्य ब्रह्मणि तिष्ठमानस्य ' तद्विदः ' ब्रह्मविदश्च 'परायणं' परा गतिरिति । इति–शब्दः समाप्तिद्योतकः ॥ ३४ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य
श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्-
बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्याये नवमं शाकल्यब्राह्मणं
शाकल्यब्राह्मणग्रन्थो वा परिसमाप्तः ॥ १४ । ( ६ ) ३ । ९ ॥

---

१–अधिकरणार्थसंग्रहस्तु–" कर्मैव फलदं यद्वा कर्माराधित ईश्वरः । अपूर्ववान्तरद्वारा कर्मणः फलदातृता ॥ १ ॥
अचेतनात्फलासूतेः शास्त्रीयात्पूजितेश्वरात् । कालान्तरे फलोत्पत्तेर्नापूर्वपरिकल्पना " ॥ २ ॥
( वै. न्या. ३ । २ । ८ ) इति ।

जनको ह व्वैदेहऽआसाञ्चक्रे। ( क्रेऽथ ) अथ ह याज्ञवल्क्यऽआवव्व्राज स ह होवाच जनको व्वैदेहो याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानित्युभयमेव सम्म्राडिति होवाच यत्ते कश्चिदब्ब्रवीत्तच्छृणवामेति ॥ १ ॥

( त्यु ) अब्ब्रवीन्मऽउदङ्कः शौल्बायनः । प्प्राणो वै ब्ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्ब्रूयात्तथा तच्छौल्बायनोऽब्ब्रवीत्प्राणो वै ब्ब्रह्मेत्यप्राणतो हि किꣳ स्यादित्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्येकपाद्वाऽएतत्सम्म्राडिति ॥ २ ॥

---

षडाचार्यब्राह्मणं वा उदंकब्राह्मणम् ।

जनको ह वैदेह आसांचक्रे । अथ ह याज्ञवल्क्य आवव्राज । स होवाच जनको वैदेहः । याज्ञवल्क्य किमर्थमचारीः । पशूनिच्छन्नण्वंतानिति । उभयमेव सम्राडिति होवाच । यत्ते कश्चिदब्रवीत् । तच्छृणवामेति ॥ १ ॥

अब्रवीन्म उदंकः शौल्बायनः । प्राणो वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान्ब्रूयात् । तथा तच्छौल्बायनोऽब्रवीत् । प्राणो वै ब्रह्मेति । अप्राणतो हि किं स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति ॥ २ ॥

---

एवं शाकल्यब्राह्मणे सच्चिदानंदब्रह्म निर्द्धारितम् । इदानीं तस्यैव प्राणाद्यधिष्ठात्रीषु वाय्वादिदेवतासु ब्रह्मदृष्टिद्वारा निर्णयाय षडाचार्यब्राह्मणं कूर्चब्राह्मणं चेति ब्राह्मणद्वयमारभ्यते । ब्राह्मणद्वयस्य तु आख्यायिका आचार्यव्रतश्रद्धादिसंपन्नेन विद्या लब्धव्या इत्याचारप्रदर्शनार्था बोद्धव्या । 'जनको ह वैदेह आसांचक्रे' आसनं कृतवान् दर्शनकामेभ्य आस्थायिकां दत्तवानित्यर्थः । 'अथ ह' तस्मिन्नेवावसरे याज्ञवल्क्य आजगाम । तदनु च याज्ञवल्क्यं यथावत् संपूज्य 'ह' जनक उवाचोक्तवान् । हे 'याज्ञवल्क्य !' किमर्थमचारीरागतोऽसि । 'किं' पुनरपि 'पशून्' गाः 'इच्छन्' । आहोस्वित् 'अण्वन्तान्' सूक्ष्मांतान् सूक्ष्मवस्तुनिर्णयप्रश्नान् मत्तः श्रुत्वा तदुत्तरं वक्तुं आगतोऽसि ? इति पृष्टः किमुक्तवान् इत्यत आह-उभयमेवेति । हे 'सम्राट्' ! हे सार्वभौम ! 'उभयमेव' पशवः प्रश्नाश्चेति द्वयमपि ममागमने निमित्तमिति 'ह' मुनिरुवाच । सम्राडिति । "राजा वै राजसूयेनेष्ट्वा भवति, सम्राड् वाजपेयेन" ( श. प. ५ । १ । १ । १३ । ) इत्युक्तत्वात् वाजपेययाजिनो लिंगम् । यद्वा, हिमवत्सेतुपर्यंतस्य देशस्य राजा इति सूचितम् । राज्ञा अज्ञातमर्थं उपदेष्टुकामो मुनिः पृच्छति-यत्ते कश्चिदिति । अनेकाचार्यसेवी हि भवानिति 'ते' तुभ्यं कश्चिदाचार्यो यदब्रवीत् 'तत्' वयं 'श्रृणवाम' उपदेशस्य सदसत्परीक्षार्थमिति ॥ १ ॥

इतर आह-अब्रवीन्म उदंकः शौल्बायनः प्राणो वै ब्रह्मेति । 'उदंकः' नामतः । शुल्बस्यापत्यं 'शौल्बायनः' । 'प्राणः' वायुर्देवता 'ब्रह्मेति' 'मे' मह्यं उक्तवान् । उदंकोपदिष्टमर्थं स्तोतुकामो याज्ञवल्क्यः तस्याप्तत्वप्रयोजकभूतशुद्धित्रयमाह-यथा मातृमानिति । यस्य पुत्रस्य सम्यगनुशास्त्री माता

स वै नो ब्रूहि याज्ञवल्क्य । प्राणऽएवायतनमाकाशः प्रतिष्ठा प्रिय मित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राणऽएव सम्म्राडिति होवाच प्राणस्य वै सम्म्राट्कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधशङ्का भवति यान्दिशमेति प्राणस्यैव सम्म्राट्कामाय प्राणो वै सम्म्राट्परमं ब्रह्म नैनम्प्राणो जहाति सर्व्वाण्येनम्भूतान्यभिक्षरन्ति ॥ ३ ॥

---

स व नो ब्रूहि याज्ञवल्क्य । प्राण एवायतनम् । आकाशः प्रतिष्ठा । प्रियमित्येनदुपासीत । का प्रियता याज्ञवल्क्य । प्राण एव सम्राडिति होवाच । प्राणस्य वै सम्राट् कामायायाज्यं याजयति । अप्रतिगृह्यस्य प्रतिगृह्णाति । अपि तत्र वधशंका भवति । यां दिशमेति । प्राणस्यैव सम्राट् कामाय । प्राणो वै सम्राट् परमं ब्रह्म । नैनं प्राणो जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति ॥ ३ ॥

---

विद्यते । 'स मातृमान्' । तत ऊर्ध्वं यस्य पिता अनुशास्ता वर्तते 'स पितृमान्' । उपनयनादूर्ध्वं आसमावर्तनात् आचार्यो यस्यानुशास्ता विद्यते 'स आचार्यवान्' । एवमातत्वप्रयोजकभूतशुद्धित्रयसंयुक्तः कश्चिदाचार्यो यथा स्वशिष्याय ब्रूयात् 'तथा असौ शौल्बायनः' तुभ्यं 'तत्' "प्राणो वै ब्रह्म" इति 'अब्रवीत्' । अत्र मुनिरेव हेतुमाह—अप्राणतो हीति । 'अप्राणतः' प्राणनक्रियामकुर्वतः 'किं हि स्यात्' ? । न हि तस्य इह वा अमुत्र वा किंचन प्रयोजनं स्यात् । यथोक्तविद्यया कृतकृत्यत्वं मन्वानं राजानं प्रत्याह—अब्रवीत्तु ते इति । हे राजन् ! 'ते' तुभ्यं 'तस्य' प्राणदेवस्य ब्रह्मणः 'आयतनं प्रतिष्ठां' च 'तु' पुनरब्रवीत् किम् ? । आयतनं नाम शरीरम् । प्रतिष्ठा नाम त्रिष्वपि कालेषु य आश्रयः तम् । एवं पृष्टो राजा आह—न मेऽब्रवीदिति । तदुभयं शौल्बायनः 'मे' मह्यं 'नाब्रवीत्' । यद्येवं तर्हि हे 'सम्राट् !' एतदुपासनं 'एकपाद्वै' एकः पादो यस्य ब्रह्मणः । तदिदमेकपादेव ब्रह्म त्रिभिः पादैः शून्यमुपास्यमानमपि फलाय न भवतीत्यर्थः ॥ २ ॥

एवं मुनिना उक्तो राजा सविस्मयं पृच्छति—स वै नो ब्रूहीति । हे याज्ञवल्क्य ! 'सः' त्वं विद्वान्वै नोऽस्मभ्यं 'ब्रूहि' कथय । प्रतिष्ठामायतनं चेति शेषः । एवमुक्तो मुनिराह—प्राण एवायतनमिति । 'प्राण एव' घ्राणेन्द्रियमेव प्राणदेवस्य ब्रह्मणः 'आयतनं' शरीरं 'आकाशः' अव्याकृतः 'प्रतिष्ठा' । तस्योत्पत्तिस्थितिलयकालेषु आश्रयः । एनत्प्राणदेवताख्यं ब्रह्म प्रियमित्येतन्नाम्नोपासीत । प्रियमिति उपनिषद्ब्रह्मणश्चतुर्थः पादः । चतुर्भिः पादैः पूर्णत्वेन फलदत्वात् 'प्रियमिति' कृत्वा 'एनत्' ब्रह्मोपासीतेति भावः । प्राणदेवब्रह्मस्वरूपात्प्रियमितीयमुपासनामुपनिषत् प्रतिष्ठायतनवत् भिन्ना वा इति जिज्ञासया पृच्छति—का प्रियतेति । हे 'याज्ञवल्क्य !' 'का प्रियतेति ?' । एवं पृष्टो मुनिरुवाचोक्तवान् । हे 'सम्राट् !' 'प्राण एव' प्राणदेवब्रह्मैव 'प्रियता' । न ततो व्यतिरिक्ता प्रियतेति । कथं ? पुनः प्राण एव प्रियतेत्युच्यते—प्राणस्य वै इति । हे 'सम्राट् !' 'प्राणस्य वै कामाय' प्राणाभिरक्षणार्थाय हि पुमान् 'अयाज्यं' पतितादिमपि 'याजयति' । तथा अप्रतिगृह्यस्योग्रादेः 'प्रतिगृह्णाति' । अपि च—धनाद्यर्थं यां तस्करादिसंकीर्णामपि दिशमेति गच्छति ।

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क एव ते किमब्रवीदिति ॥ ४ ॥

( त्य ) अब्रवीन्मे जित्वा शैलिनः । ( नो ) वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनोऽब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वाऽएतत्सम्राडिति ॥ ५ ॥

स वै नो ब्रूहि याज्ञवल्क्य वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच वाचा वै

---

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामि इति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत—नाननुशिष्य हरेतेति । क एव ते किमब्रवीदिति ॥ ४ ॥

अब्रवीन्मे जित्वा शैलिनः । वाग्वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान्ब्रूयात् । तथा तच्छैलिनोऽब्रवीत् । वाग्वै ब्रह्मेति । अवदतो हि किं स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति ॥ ५ ॥

स वै नो ब्रूहि याज्ञवल्क्य । वागेवायतनम् । आकाशः प्रतिष्ठा । प्रज्ञेत्येनदुपासीत । का प्रज्ञता याज्ञवल्क्य । वागेव सम्राडिति होवाच । वाचा वै सम्राड्बन्धुः प्रज्ञायते । ऋग्वेदो यजुर्वेदः साम-

---

'तत्र' तस्यां दिशि 'वधशङ्का' शस्त्रादिहननिमित्ता शंका भवति । तदेतत्सर्वं 'प्राणस्यैव सम्राट् कामाय' तस्मात्प्राणः 'वै' 'सम्राट् परमं ब्रह्म' । एवमुपासितुः फलमाह—नैनं प्राण इति । 'एनं' यथोक्तब्रह्मविदं प्राणदेवता 'न जहाति' । 'सर्वाणि' च 'भूतानि' एनमुपासकं 'अभिक्षरन्ति' बलिदानादिभिः संयोजयन्ति ॥ ३ ॥

य एवं विद्वान् एतत्प्राणदेवतारूपं ब्रह्मोपास्ते स इहैव 'देवो भूत्वा' आविर्भूतदेवभावो भूत्वा पुनः शरीरपातोत्तरकालं 'देवान् अप्येति' अपिगच्छति । विद्यानिष्क्रयार्थं प्रतिजज्ञे इत्याह—**हस्त्यृषभमिति** । हस्तितुल्य ऋषभो यस्मिन् गोसहस्रे तदेवंभूतं 'सहस्रं' ददामीति 'ह' 'जनको वैदेह उवाच' । एवमुक्तः 'सः' याज्ञवल्क्यः 'उवाच' । 'अननुशिष्य' शिक्षामकृत्वा शिष्यं कृतार्थमकृत्वा शिष्याद्धनं 'नाहरेत' इति 'मे पिता अमन्यत' मन्यते स्म । ममापि अयमेवाभिप्राय इत्यर्थः । 'क एव' कश्चिदेव 'ते' तुभ्यं 'किमब्रवीदिति' ॥ ४ ॥

एवं मुनिना पृष्टो राजा आह—**अब्रवीन्मे जित्वा शैलिन** इति । 'जित्वा' नामतः । शिलिनस्यापत्यं 'शैलिनः' । 'वाग्वै ब्रह्मेति' । वागभिमानिनी देवताऽग्निरित्यादि पूर्ववत् । 'अवदतः' मूकस्य ॥ ५ ॥

**स वै नो ब्रूही**ति । 'वागेवायतनमाकाशः प्रतिष्ठा' । एतद्वाग्देवताख्यं ब्रह्म 'प्रज्ञेत्युपासीत' । 'का

सम्म्राड्बन्धुः प्प्रज्ञायतऽऋग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरसऽ इतिहासः पुराणम्विद्याऽउपनिषदः श्लोकाः सूत्त्राण्यनुव्याख्यानानि व्याख्यानानि व्वाचैव सम्म्राट् प्प्रज्ञायन्ते व्वाग्वै सम्म्राट्परमम्ब्रह्म नैनम्व्वाग्जहाति सर्व्वाण्येनम्भूतान्यभिक्षरन्ति ॥ ६ ॥

देवो भूत्वा देवानप्येति । यऽएवम्विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति कऽएव ते किमब्रवीदिति ॥ ७ ॥

( त्य ) अब्रवीन्मे बर्क्कुर्व्वार्ष्णः । ( श्र ) चक्षुर्व्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्व्वै ब्रह्मेत्यपश्यतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वाऽ एतत्सम्म्राडिति ॥ ८ ॥

स वै नो ब्रूहि याज्ञवल्क्य । चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्य-

---

वेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि वाचैव सम्राट् प्रज्ञायन्ते । वाग्वै सम्राट् परमं ब्रह्म । नैनं वाग्जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति ॥ ६ ॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत—नाननुशिष्य हरेतेति । क एव ते किमब्रवीदिति ॥ ७ ॥

अब्रवीन्मे बर्कुर्वार्ष्णः । चक्षुर्वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान् ब्रूयात् । तथा तद्वार्ष्णोऽब्रवीत् । चक्षुर्वै ब्रह्मेति । अपश्यतो हि किं स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति ॥ ८ ॥

स वै नो ब्रूहि याज्ञवल्क्य । चक्षुरेवायतनम् । आकाशः प्रतिष्ठा । सत्यमित्येनदुपासीत ।

---

प्रज्ञतेति ' पृष्टो मुनिः वाग्देवतैव प्रज्ञता न ततो व्यतिरिक्ता इत्युक्त्वा तत्र हेतुमाह—वाचा वै सम्राडिति । ' वाचा वै ' वाग्देवतयैव ' बन्धुः प्रज्ञायते ' । अयमस्माकं बन्धुरित्युक्ते प्रकर्षेण ज्ञायते सर्वैरिति शेषः । तथा ऋग्वेदादीनि व्याख्यानांतानि मैत्रेयीब्राह्मणे उक्तार्थानि ' वाचैव ' ' प्रज्ञायन्ते ' अतः ' वाग्वै परमं ब्रह्म '॥ ६ ॥

" देवोभूत्वा " इति व्याख्यातम् ॥ ७ ॥

अब्रवीन्मे बर्कुर्वार्ष्ण इति । बर्कुरिति नामतः वृष्णस्यापत्यं ' वार्ष्णः ' तदधिष्ठात्री देवता आदित्यः । ' अपश्यतो हीति ' विशेषः ॥ ८ ॥

स वै न इति । तस्य ' चक्षुरेव ' चक्षुरिन्द्रियमेवायतनम् । सत्यमित्यादि ब्रह्मण उपनिषत् । चक्षुषः सत्यत्वं

मित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्म्राडिति होवाच चक्षुषा वै सम्म्राट्पश्यन्तमाहुरद्राक्षीरिति सऽआहाद्राक्षमिति तत्सत्यम्भवति चक्षुर्वै सम्म्राट्परमम्ब्रह्म नैनञ्चक्षुर्ज्जहाति सर्व्वाण्येनम्भूतान्यभिक्षरन्ति ॥ ९ ॥

देवो भूत्वा देवानप्येति । यऽएवम्विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति कऽएव ते किमब्रवीदिति ॥ १० ॥

( त्य ) अब्रवीन्मे गर्द्दभीविपीतो भारद्वाजः । श्रोत्रम्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रम्वै ब्रह्मेत्यश्रृण्वतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वाऽएतत्सम्म्राडिति ॥ ११ ॥

स वै नो ब्रूहि याज्ञवल्क्य । श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्तऽइत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिशऽएव सम्म्राडिति होवाच

---

का सत्यता याज्ञवल्क्य । चक्षुरेव सम्राडिति होवाच । चक्षुषा वै सम्राट् पश्यन्तमाहुः । अद्राक्षीरिति । स आह । अद्राक्षमिति । तत्सत्यं भवति । चक्षुर्वै सम्राट् परमं ब्रह्म । नैनं चक्षुर्जहाति । सर्वाण्येनं भूतान्यभिक्षरान्ति ॥ ९ ॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत नाननुशिष्य हरेतेति । क एव ते किमब्रवीदिति ॥ १० ॥

अब्रवीन्मे गर्द्दभीविपीतो भारद्वाजः । श्रोत्रं वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान् ब्रूयात् । तथा तत् भारद्वाजोऽब्रवीत् । श्रोत्रं वै ब्रह्मेति । अश्रृण्वतो हि किं स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति ॥ ११ ॥

स वै नो ब्रूहि याज्ञवल्क्य । श्रोत्रमेवायतनम् । आकाशः प्रतिष्ठा । अनंत इत्येनदुपासीत ।

---

साधयति—चक्षुषा वै इति । हे सम्राट् ! 'चक्षुषा' 'पश्यन्तं' 'वै' पुरुषं लोकाः 'आहुः' । त्वं हस्तिनमद्राक्षीरिति । स चेदद्राक्षमित्याह । तदा तत्सत्यमेव भवतीति भावः ॥ ९ ॥

"देवो भूत्वा" इति व्याख्यातप्रायमेव ॥ १० ॥

'गर्द्दभीविपीतः इति' नामतः । 'भारद्वाजः इति' गोत्रतः । 'श्रोत्रं' तदभिमानिनी दिग्देवता ॥ ११ ॥

'श्रोत्रमेव' श्रोत्रेन्द्रियमेवायतनम् । दिशः अनंतत्वं साधयति—तस्माद्वै इति । कश्चित्पुमान् 'यां कां च'

तस्माद्वै सम्राड्यांकाञ्च दिशङ्गच्छति नैवास्याऽ अन्तङ्गच्छत्यनन्ता हि दिशः श्रोत्रꣳ हि दिशः श्रोत्रम्वै सम्राट्परमम्ब्रह्म नैनꣳ श्रोत्रञ्जहाति सर्व्वाण्येनम्भूतान्यभिक्षरन्ति ॥ १२ ॥

देवो भूत्वा देवानप्येति । यऽएवम्विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति कऽएव ते किमब्रवीदिति ॥ १३ ॥

( त्य ) अब्रवीन्मे सत्यकामो जाबालः । ( लो ) मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तत्सत्यकामोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वाऽएतत्सम्राडिति ॥ १४ ॥

स वै नो ब्रूहि याज्ञवल्क्य । मनऽएवायतनमाकाशः प्रतिष्ठाऽऽनन्दऽइत्येनदुपासीत काऽऽनन्दता याज्ञवल्क्य मनऽएव सम्राडिति होवाच

---

काऽनंतता याज्ञवल्क्य । दिश एव सम्राडिति होवाच । तस्माद्वै सम्राट् यां कां च दिशं गच्छति । नैवास्या अन्तं गच्छति । अनंता हि दिशः । श्रोत्रं हि दिशः । श्रोत्रं वै सम्राट् परमं ब्रह्म । नैनं श्रोत्रं जहाति । सर्वाण्येनं भूतान्यभिक्षरंति ॥ १२ ॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत—नाननुशिष्य हरेतेति । क एव ते किमब्रवीदिति ॥ १३ ॥

अब्रवीन्मे सत्यकामो जाबालः । मनो वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान् ब्रूयात् । तथा तत्सत्यकामोऽब्रवीत् । मनो वै ब्रह्मेति । अमनसो हि किं स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत् सम्राडिति ॥ १४ ॥

स वै नो ब्रूहि याज्ञवल्क्य । मन एवायतनम् । आकाशः प्रतिष्ठा । आनंद इत्येनदुपासीत ।

---

प्राचीमुदीचीं वा 'दिशं गच्छति' सोऽस्याः 'दिशोऽन्तं' 'नैव गच्छति' नैव प्राप्नोति । अतः, 'अनंता हि दिशः' । तथाऽपि श्रोत्रब्रह्मणः किमायातमित्यत आह—श्रोत्रं हि दिश इति । दिग्भागो हि पार्थिवाधिष्ठानावच्छिन्नः श्रोत्रमित्युच्यते । अतः तयोरेकत्वमित्युपपन्नम् । तस्माद्दिगानंत्यमेव श्रोत्रस्यानंत्यम् ॥ १२ ॥

"देवो भूत्वा" इत्येतद्व्याख्यातम् ॥ १३ ॥

'सत्यकाम इति' नामतः । जबालाया अपत्यं 'जाबालः' । 'मनो वै ब्रह्मेति' । तदधिष्ठात्री चन्द्रो देवता ॥ १४ ॥

'मन एवायतनमिति' करणोक्तिः । मनस आनंदत्वं साधयति—मनसा वै इति । हे 'सम्राट्' ।

मनसा वै सम्राट्स्त्रियमभिहर्य्यति तस्याम्प्रतिरूपः पुत्रो जायते स ऽआनन्दो मनो वै सम्राट्परमम्ब्रह्म नैनम्मनो जहाति सर्व्वाण्येनम्भूतान्यभिक्षरन्ति ॥ १५ ॥

देवो भूत्वा देवानप्येति । य ऽएवम्विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क ऽएव ते किमब्रवीदिति ॥ १६ ॥

(त्थ) अब्रवीन्मे विदग्धः शाकल्यः । (ल्यो) हृदयम्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयम्वै ब्रह्मेत्यहृदयस्य हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठाम्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्राडिति ॥ १७ ॥

स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितिता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच

---

का आनंदता याज्ञवल्क्य । मन एव सम्राडिति होवाच । मनसा वै सम्राट् स्त्रियमभिहर्यति । तस्यां प्रतिरूपः पुत्रो जायते । स आनंदः । मनो वै सम्राट् परमं ब्रह्म । नैनं मनो जहाति । सर्वाण्येनं भूतान्यभिक्षरंति ॥ १५ ॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामि इति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत—नाननुशिष्य हरेतेति । क एव ते किमब्रवीदिति ॥ १६ ॥

अब्रवीन्मे विदग्धः शाकल्यः । हृदयं वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान् ब्रूयात् । तथा तच्छाकल्योऽब्रवीत् । हृदयं वै ब्रह्मेति । अहृदयस्य हि किं स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीत् इति । एकपाद्वा एतत्सम्राडिति ॥ १७ ॥

स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनम् । आकाशः प्रतिष्ठा । स्थितिरित्येनदुपासीत ।

---

'मनसा' 'स्त्रियं' 'अभिहर्यति' अभिहर्यतिः कांतिकर्मनामसु पठितः । 'तस्यां' स्त्रियां 'प्रतिरूपः' पितृभावनाऽनुरूपः 'पुत्रो जायते' । 'सः' पुत्रः आनंदहेतुत्वात् 'आनंदः' ॥ १५ ॥

"देवो भूत्वा"—इति व्याख्यातमेव ॥ १६ ॥

'विदग्धः' नामतः । शकलस्यापत्यं 'शाकल्यः' । 'हृदयं वै ब्रह्मेति' । हृदयाभिमानिनी देवता प्रजापतिरित्युच्यते ॥ १७ ॥

'हृदयमेवायतनमिति' आध्यात्मिकहृदयोक्तिः । हृदयस्य स्थितितां साधयति—'हृदयं वै सम्राट् सर्वेषां

हृदयम्वै सम्म्राट्सुर्व्वेषाम्भूतानाम्प्रतिष्ठा हृदयेन हि सुर्व्वाणि भूतानि प्प्रतितिष्ठन्ति हृदयम्वै सम्म्राट्परमम्ब्रह्म नैनᳪं हृदयञ्जहाति सुर्व्वाण्येनम्भूतान्यभिक्षरन्ति ॥ १८ ॥

देवो भूत्वा देवानप्येति । युऽएवम्विद्वानेतदुपास्ते हुस्त्यृषभᳪं सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ १९ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीये प्रपाठकेऽष्टमं ब्राह्मणम् ॥ १४ । (५) ३।८ ॥ (६) ३–१० ॥

अथ ह जनको व्वैदेहः कूर्च्चादुपावसुर्प्पन्नुवाच । नुमस्ते याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्म्राण्महान्तमुध्वानमेष्यन्त्रथम्वा नावम्वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवम्वृन्दारकऽआढ्यः सन्नधीतवेदऽउक्तोपनिषत्कऽइतो व्विमुच्यमानः क्व गमिष्य-

---

का स्थितिता याज्ञवल्क्य । हृदयमेव सम्राडिति होवाच । हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा । हृदयेन हि सर्वाणि भूतानि प्रतितिष्ठंति । हृदयं वै सम्राट् परमं ब्रह्म । नैनं हृदयं जहाति । सर्वाण्येनं भूतान्यभिक्षरंति ॥ १८ ॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामि इति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत–नाननुशिष्य हरेतेति ॥ १९ ॥

कूर्चब्राह्मणम् ।

अथ ह जनको वैदेहः कूर्चादुपावसर्पन्नुवाच । नमस्ते याज्ञवल्क्य । अनु मा शाधीति । स होवाच । यथा वै सम्राट् महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीत । एवमेव एताभि-

---

भूतानां प्रतिष्ठेति' । 'हि' यतः 'हृदयेन सर्वाणि भूतानि' नामरूपकर्मात्मकानि 'प्रतितिष्ठंति' । 'तस्मात् हृदयं परमं ब्रह्म' ॥ १८ ॥

"देवो भूत्वेति"–पूर्ववत् ॥ १९ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-ब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्याये दशमं षडाचार्यब्राह्मणमुदङ्कब्राह्मणं वा परिसमाप्तम् ॥ १४ ( ६ ) ३ । १० ॥

पूर्वस्मिन्षडाचार्यब्राह्मणे कानिचिदुपासनानि ज्ञानसाधनान्युक्तानि । इदानीं तज्ज्ञेयस्य ब्रह्मणो जागरादिद्वारा ज्ञानार्थं कूर्चब्राह्मणमारभ्यते–अथ ह जनको वैदेह इति । अथानंतरं 'ह' किल 'जनको वैदेहः' कूर्चा-

सीति नाहन्तुद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहन्तुद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥

स होवाच । ( चे ) इन्धो वै नामैष योऽयन्दक्षिणेऽक्षन्पुरुषस्तम्वाऽ एतमिन्धꣳ सन्तमिन्द्रऽइत्याचक्षते परोऽक्षेणेव परोऽक्षप्रियाऽइव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

---

रुपनिषद्भिः समाहितात्माऽसि । एवं वृन्दारक आढ्यः सन् अधीतवेद उक्तोपनिषत्कः इतो विमुच्यमानः क गमिष्यसीति । नाहं तत् भगवन् वेद । यत्र गमिष्यामीति । अथ वै ते अहं तत् वक्ष्यामि । यत्र गमिष्यसीति । ब्रवीतु भगवानिति ॥ १ ॥

स होवाच । इन्धो वै नामैषः । योऽयं दक्षिणेऽक्षन्पुरुषः । तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोऽक्षेणेव । परोऽक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

---

दासनविशेषात् उत्थाय ' उप ' समीपं 'अवसर्पन्' तत्पादयोः पतन्नित्यर्थः । उवाचोक्तवान् । हे ' याज्ञवल्क्य ! ' ते ' तुभ्यं ' नमः ' नतिः अस्त्विति शेषः । त्वं तु ' मा ' मां ' अनुशाधि ' शिक्षय । येन परमात्मज्ञानेन विना अहमकृतार्थ एव तत् ज्ञानं उपदिशेति भावः । इतिशब्दो वाक्यपरिसमाप्त्यर्थः । मुमुक्षवे द्वयं वाच्यं ज्ञानं तत्साधनं च । तत्र ज्ञानसाधनं राज्ञोऽस्तीति दृष्टांतपूर्वकं कथयतीत्याह—स होवाचेति । ... पः' एवं प्रार्थितो याज्ञवल्क्यः ' ह ' ' उवाच ' हे ' सम्राट् ! ' ' यथा वै ' लोके पुमान् महान्तं दीर्घमध्वानं मार्गं स्थलेन जलेन वा ' एष्यन् ' गमिष्यन् यथाक्रमं ' रथं वा ' ' नावं वा ' ' समाददीत ' सम्यक् प्रकारेण .गृह्णीयात् । एवमेताभिः " प्रियमित्येनदुपासीत " (श.प.बृ.१४।२।१०।३) इत्याद्युक्ताभिः ' उपनिषद्भिः ' ' समाहितात्मा ' संयुक्तात्मा अत्यन्तसंस्कृतान्तःकरणोऽसि । न केवलमुपनिषत्समाहितः । किंच 'एवं वृन्दारकः' पूज्यः 'आढ्यः' ईश्वरो न दरिद्र इत्यर्थः । धनादिसम्पन्नोऽपि 'सन्' ' अधीतवेदः ' अधीतो वेदो येन सोऽयमधीतवेदः । आचार्यैरुक्ता उपनिषदो यस्मै तुभ्यं स त्वं ' उक्तोपनिषत्कः ' । एवं सर्वविभूतिसम्पन्नोऽपि सन् भयमध्यस्थ एवेति यावत्परं ब्रह्म न विदितम्, तावदकृतार्थ एवेति बोधयितुं ज्ञानसाध्यां प्रणाड्योपासनफलभूतां मुक्तिं पृच्छति—इतो विमुच्यमान इति । इतोऽस्माद्देहात् ' विमुच्यमानः ' एताभिर्नौरथस्थानीयाभिरुपासनाभिः समाहितोऽपि सन् ' क ' कस्मिन् ' गमिष्यसि ' किं वस्तु प्राप्स्यसि । इत्येवं पृष्टो राजा आह—नाहमिति । हे ' भगवन् ! ' पूजावन् ! ' अहं ' तद्गंतव्यं वस्तु ' न वेद ' न जाने । ' यत्र ' ' गमिष्यामि ' यत्र गतः कृतार्थः । एवमुक्तो मुनिराह—अथ वै तेऽहमिति । ' ते ' तुभ्यमहं तद्वस्तु ' वक्ष्यामि ' कथयिष्यामि । ' यत्र गमिष्यसि ' यत्र गतः कृतार्थः स्याः इत्यर्थः । राजा आह—ब्रवीतु भगवानिति । मां ' भगवान् ' प्रसन्नः तर्हि ' ब्रवीतु ' कथयतु इत्यर्थः ॥ १ ॥

इदानीं वैश्वतैजसप्राज्ञानुवादेन वक्तव्यतया प्रतिज्ञातं तुरीयं ब्रह्म प्रतिपादयितुं आदौ वैश्वानराभिन्नं जाग्रदभिमानिनं वैश्वं दर्शयति—स होवाचेन्धो वै नामैष इति । ' सः ' याज्ञवल्क्यः ' ह उवाच ' । ' इन्द्धे ' दीप्यते जागरिते स्थूलार्थभोक्तृत्वेन सदा स्फुरणात् इतीन्धो नाम ' वै ' प्रसिद्ध एव । आदित्यांतर्गतः पुरुषश्चक्षुर्वै ब्रह्मेति पुरोक्तः । कोऽसाविन्धो नामेति अधिदैवतं पुरुषमुक्त्वा अध्यात्मं तमाह योऽयमिति । 'योऽयं'

( षोऽथ ) अथैतद्वामेऽक्षणि पुरुषरूपम् । ( षे ) एषाऽस्य पत्नी विराट्तयोरेष सꣳस्तावो यऽएषोऽन्तर्हृदयऽआकाशोऽथैनयोरेतदन्नं यऽएषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सती सञ्चरणी यैषा हृदयादूर्ध्वा नाड्योच्चरति ॥ ३ ॥

---

अथैतद्वामेऽक्षणि पुरुषरूपम् । एषाऽस्य पत्नी विराट् । तयोरेष संस्तावः । य एषोऽन्तर्हृदये आकाशः । अथैनयोरेतदन्नम् । य एषोऽन्तर्हृदये लोहितपिंडः । अथैनयोरेतत्प्रावरणम् । यदेतदंतर्हृदये जालकमिव । अथैनयोरेषा सृतिः सती संचरणी । या एषा हृदयादूर्ध्वा नाड्योच्चरति ॥ ३ ॥

---

' दक्षिणेऽक्षन् ' अक्षणि पुरुषोऽध्यात्मरूपमापन्नः । ' तं वै एतं ' पुरुषं दीप्तिगुणत्वादस्य ' इन्धः ' इति प्रत्यक्षनाम । तमिन्धं सन्तमिन्द्र इति परोऽक्षेणेव ' इन्द्र इत्याचक्षते ' । इवशब्दोऽवधारणार्थः । परोऽक्षेणैव कथयन्तीत्यर्थः । कुतः ? ' हि ' यस्मात् ' देवाः परोऽक्षप्रिया इव ' परोऽक्षनामग्रहणप्रिया एव । अपि च-प्रत्यक्षनामग्रहणं द्विषन्तीति ' प्रत्यक्षद्विषः ' ॥ २ ॥

एकस्यैव वैश्वानरस्योपासनार्थं प्रासंगिकं इन्द्रश्चेन्द्राणी चेति मिथुनं कल्पयति-**अथैतद्वामेऽक्षणि पुरुषरूप**मित्यादिना । प्रासंगिकध्यानार्थः अथशब्दः । 'अथ' एतदेवोक्तं पुरुषरूपं ' वामे अक्षणि ' अक्षिगतं सत् अस्यैवोक्तस्य इंद्रस्य भोक्तुर्वैश्वानरस्य ' एषा विराट् पत्नी ' भोग्यत्वात् । तथा च यदेतन्मिथुनं जागरिते वैश्वशब्दवाच्यं तदेवैकं स्वप्ने तैजसशब्दवाच्यमिति अर्थादुक्तमेव । अत एव अस्य स्वप्नावस्थस्य मिथुनस्थानमाह-**तयोरेष** इति । तयोरिन्द्रेन्द्राण्योः स्वप्नावस्थामापन्नयोः ' एष संस्तावः ' । संभूय यत्रान्योऽन्यं संस्तवं कुर्वाते सः ' संस्तवः ' । कोऽसौ ? ' य एषः ' प्रसिद्धः ' अन्तर्हृदये ' हृदयस्य मांसपिंडस्यांतर्मध्ये ' आकाशः ' सुषिरः । स इत्यर्थः । ' अथ ' एनयोरुक्तावस्थयोरिन्द्रेन्द्राण्योः एतद्वक्ष्यमाणमन्नं भोज्यस्थितिहेतुः । किं तत् ? ' य एषः ' ' अन्तर्हृदये ' ' लोहितपिंडः ' इति । प्रथमं तावत् जग्धमन्नं द्वेधा विपरिणमते । तत्र यत् स्थूलं तदधो गच्छति । यदन्यत्सूक्ष्मं तत्पुनरग्निना पच्यमानं द्वेधा विपरिणमते । तयोर्मध्ये यो मध्यमो रसः । स पांचभौतिकशरीरमुपचिनोति । यः पुनरणिष्ठो रसः । ' स एषः ' लोहित एव पिंडः ' लोहितपिंडः ' । ननु-लोके भुक्तवतोः स्वपतोश्च ' प्रावरणं ' दृष्टम् । तथा अनयोरपि प्रावरणेन भवितव्यम् । किं तत् इत्यपेक्षायामाह-**अथैनयोरेतत्प्रावरण**मिति । ' अथ ' भोगस्वपनानन्तरं ' एनयोः ' पूर्वोक्तयोः ' एतत्प्रावरणं ' 'यदेतत्' ' अंतर्हृदये जालकमिव ' अनेकनाडीच्छिद्रबहुलत्वात् जालकवत्प्रतिभासमानमित्यर्थः । इदानीं तयोः स्वप्नात् जागरितगमनमार्गमाह-**अथैनयोरेषा सृति**रिति । ' अथ ' स्वापानन्तरं जाग्रत्स्थानमाजिगमिषतोरेनयोर्दंपत्योरेषा 'सती' शोभना 'सृतिः' मार्गः ' संचरणी ' संचरतः स्वप्नाज्जागरितमनयेति संचरणी । का सा ? ' या एषा ' 'हृदयात् ' हृदयदेशात् ' ऊर्ध्वा ' अभिमुखा सती ' नाड्या उच्चरति ' उद्गच्छति । सा सृतिरित्यर्थः ॥ ३ ॥

ता वाऽअस्यैताः । ( ० ) हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नऽएताभिर्वाऽएतमास्रवदास्रवति तस्मादेष प्रविविक्ताहारतरऽइव भवत्यस्माच्छारीरादात्मनः ॥ ४ ॥

( स्तु ) तस्य वाऽएतस्य पुरुषस्य । प्राची दिक्प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणाः प्राणाः प्रतीची दिक्प्रत्यञ्चः प्राणाऽउदीची दिगुदञ्चः प्राणाऽऊर्ध्वा दिगूर्ध्वाः प्राणाऽअवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः ॥ ५ ॥

---

ता वा अस्यैता हिता नाम नाड्यः । यथा केशः सहस्रधा भिन्नः । एताभिर्वा एतमास्रवत् आस्रवति । तस्मादेष प्रविविक्ताहारतर इव भवत्यस्माच्छरीरादात्मनः ॥ ४ ॥

तस्य वा एतस्य पुरुषस्य । प्राची दिक् प्रांचः प्राणाः । दक्षिणा दिक् दक्षिणाः प्राणाः । प्रतीची दिक् प्रत्यंचः प्राणाः । उदीची दिक् उदंचः प्राणाः । ऊर्ध्वा दिक् ऊर्ध्वाः प्राणाः । अवाची दिक् अवांचः प्राणाः । सर्वा दिशः सर्वे प्राणाः ॥ ५ ॥

---

इदानीं वैश्वतैजसयोः अन्नविवेकः भोक्तुश्च सूक्ष्मता इत्येतत्प्रदर्शनार्थं इन्द्रियाश्रितानां नाड्यंतराणां परिमाणं सदृष्टांतमाह—ता वा अस्यैता हिता इति । 'यथा' लोके एकः 'केशः' 'सहस्रधा भिन्नः' अत्यन्तं सूक्ष्मो भवति । एवं सूक्ष्माः 'अस्य' पुरुषस्य देहसम्बन्धिन्यः 'एताः' स्वप्नात् जाग्रद्गमनादिव्यवहारहेतुभूताः 'नाड्यः' शिराः 'हिता नाम' हिता इत्येवं नाम्ना ख्याताः अन्तर्हृदये प्रतिष्ठिताः सन्तीति शेषः । हृदयाच्च विरूढास्ताः सर्वत्र कदम्बकेसरवत् युगपत् स्थानविशेषेषु प्रसृताः सत्यो व्यवस्थिता इत्यर्थः । उक्त-नाडीनामुपयोगकथनपूर्वकं सूक्ष्मतमत्वकथनप्रयोजनमाह—एताभिर्वा एतमास्रवदिति । एताभिर्नाडीभिरत्यन्त-सूक्ष्माभिर्वै एव 'एतं' देहं आस्रवद्गच्छत् शरीरं व्याप्नुवत् पूर्वोक्तं सूक्ष्मतरमन्नं कर्तृ 'आस्रवति' करणांतः-करणक्षेत्रज्ञानदेवतारूपान् व्याप्नोतीत्यर्थ. । यदर्थमेतासां सूक्ष्मतमत्वमुक्तं तत्प्रयोजनमाह—तस्मादेष प्रविविक्ताहारतर इवेति । यस्मान्नाड्याश्रितं सूक्ष्ममन्नं देवताद्वारा भुंजानः सन् अयं लिंगात्मा करणदेवताः करणानि अन्तःकरणं च लिंगाख्यं प्रीणयति । राजस्थानीयेन चिदात्मना अनधिष्ठितानां भोगे स्वातन्त्र्या-भावात् । तस्मात् एष तैजसः 'प्रविविक्ताहारतरः' अतिशयेन प्रविविक्ताहारः प्रविविक्ताहारतर इति विग्रहः । कस्मात्प्रविविक्ताहारतरत्वमित्यत आह—अस्माच्छारीरादात्मन इति । 'शारीरात्' स्थूलशरीरोपाधेः वैश्वानरात्मनः सकाशादिति यावत् । तस्य हि मूत्रपुरीषादिस्थूलापेक्षया पिंडोपचयकरणमप्यन्नं प्रविविक्तमेव लिंग-स्थितिकरं त्वन्नं ततोऽपि सूक्ष्मतरम् । इवशब्द उपमार्थः । तथा च—यथा प्रविविक्ताहारो वैश्वः । तथा अयं तैजसो न प्रविविक्ताहार एव । किं तु प्रविविक्ताहारतरः इति योजना ॥ ४ ॥

वैश्वतैजसयोरेव श्रुत्या साक्षान्निर्दिष्टत्वात् तैजसप्राज्ञद्वारा तुरीयब्रह्मात्मनिलयः साक्षादेव निर्देष्टव्य इत्यभिप्रेत्य तुरीये लीनस्य तैजसस्य लयात्प्रागवस्थायां परिच्छेदहेतुभूता ये अध्यात्मप्राणाः तेषां लयानंतरं संवृत्तावस्थोप-न्यासव्याजेन तैजसस्य प्राज्ञद्वारा तुरीये लयं दर्शयति—तस्य वा एतस्य पुरुषस्य प्राची दिक् प्रांचः प्राणा

स॒ऽएष नेति॒ नेत्यात्मा । ( तमाऽग्गृ ) अग्गृह्यो न हि गृह्यतेऽशीर्यो॑ न हि शीर्य॑तेऽसङ्गोऽसितो न सज्यते न व्यथतेऽभयं॒ वै जनक प्राप्तो॒ऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहो नमस्ते याज्ञवल्क्याभयन्त्वा गच्छताद्यो नो भगवन्नभयं वेदयसऽइमे विदेहाऽअयमह॒मस्मीति ॥ ६ ॥

इति चतुर्दशे काण्डे पञ्चमप्रपाठके बृहदारण्यकोपनिषदि तृतीये प्रपाठके नवमं ब्राह्मणम् ॥ १४ । ( ५ ) ३।९॥ ( ६ ) ३–११ ॥

इति षष्ठोऽध्यायः पञ्चमः प्रपाठकश्च समाप्तः ॥

इति बृहदारण्यकोपनिषदि तृतीयोऽध्यायः तृतीयः प्रपाठकश्च समाप्तः ॥ प्रपाठककण्डिकासंख्या ॥ १०७ ॥ अध्यायकण्डिकासंख्या ॥ १३३ ॥

---

स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असंगोऽसितो न सज्यते न व्यथते । अभयं वै जनक प्राप्तोऽसि इति होवाच याज्ञवल्क्यः । स होवाच जनको वैदेहः । नमस्ते याज्ञवल्क्य । अभयं त्वा गच्छतात् । यो नो भगवन्नभयं वेदयसे । इमे विदेहाः । अयमहमस्मीति ॥ ६ ॥

---

इति । स एष हृदयभूतस्तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति । ' तस्य वै एतस्य पुरुषस्य ' विदुषः क्रमेण वैश्वानरात् तैजसं प्राप्तस्य तस्य अकार्यकारणाखण्डतुरीयपदाविष्टस्य तैजसस्य ये ' प्रांचः ' प्रागंचंतीति प्रांचः ' प्राणाः ' नासाद्वारा अग्रतः संचरंतः प्राची दिगेव संवृत्ताः अध्यात्मादिपरिच्छिन्नाः प्राणाः सर्वासु दिक्षु स्थिताः विदुषस्तुरीयपदप्राप्तस्य परिच्छेदहेतुनाशात् तस्मिन्नेकीभूताः संतः तत्तद्दिङ्मात्ररूपाः प्रत्यङ्मात्रे लीना इत्यर्थः । एवं ' दक्षिणा दिग्दक्षिणाः प्राणाः ' इत्यादि व्याख्येयम् । तथा च–उपाधिभूतानां लयं दर्शयन्ती श्रुतिः रूपरहितस्याप्यात्मनो लयं कारणात्मनि दर्शितवतीति भावः ॥ ५ ॥

एवं सर्वोपसंहारं कृत्वा अवस्थितस्य पुरुषस्य विदुषः किं स्वरूपमित्यपेक्षायां अविद्यातत्कार्यभावाभावसाक्षित्वेन तद्विलक्षणं निष्प्रपंचं स्वरूपमिति दर्शयति–**स एष नेति नेत्यात्मे**त्यादिना **न व्यथते** इत्यन्तेन । व्याख्यातार्थं वाक्यम् । इदानीं यत् प्रत्यगात्मस्वरूपज्ञापनार्थं ब्राह्मणद्वयात्मको ग्रन्थ उपदिष्टः । तस्य ज्ञानस्यापरोक्षानुभवरूपस्य फलमाह–**अभयं वा** इति । हे ' जनक ' ! त्वं ' अभयं ' जन्ममरणादिनिमित्तभयाभावं ' वै ' निश्चयेन ' प्राप्तोऽसि ' । नातः परं तव शोकः । ' इति ह ' ' याज्ञवल्क्यः ' उवाचोक्तवान् । एतावता " अथ वै तेऽहं तद्वक्ष्यामीति " यत्प्रतिज्ञातं तदुपदिष्टम् । इदानीं शिष्यं कृतार्थमकृत्वा ततो दक्षिणा न ग्राह्या इति मुनिमतं स्मरन् राजा दक्षिणां दित्सुः ममानुभवपर्यन्तं ज्ञानं कृतार्थताहेतुभूतं जातं इति ज्ञापितवानित्याह श्रुतिः–**स होवाच जनको वैदेहो नमस्ते याज्ञवल्क्ये**ति । ' सः जनक उवाच ' । हे ' याज्ञवल्क्य ' ! साक्षा-

दात्मानमेव दत्तवते ' ते ' तुभ्यं किमहं विद्यानिष्क्रयाय दास्ये । तस्मात्तुभ्यं ' नमः ' नमस्कारः अस्तु । स्वात्मनि संपन्नं ज्ञानं ज्ञापयित्वा गवादीनां दक्षिणानां एतज्ज्ञानाननुरूपत्वमभिप्रेत्य दक्षिणांतरं निवेदयति—**अभयं त्वा गच्छताद्यो नो भगवन्नभयमिति** । हे ' भगवन् ! ' यस्त्वं नोऽस्मान् ' अभयं ' ब्रह्म ' वेदयसे ' ज्ञापयसि अज्ञानव्यवधानापनयनेन प्रापितवानसीति यावत् । तं ' त्वा ' त्वामपि ' अभयं ' ' गच्छतात् ' गच्छतु । ' इमे विदेहाः ' तव यथेष्टं भोगाय संतु । अयं चाहं तव दासभावे स्थितोऽस्मि । यथेष्टं मां राज्यं च प्रपद्यस्वेति वाक्यार्थः । इदं दक्षिणादानं व्यवहारदृष्टिमवष्टभ्योक्तम् । तत्त्वतस्तु नास्त्येव दक्षिणेति राज्ञोऽभिप्रायः । अद्वितीयब्रह्मात्मैक्यमनुभवतः स्वात्मातिरिक्तस्य वस्तुनः अभावात् । तदुक्तं—" अहं ममेत्यविद्याधीः सहेतुर्नाशिता यदा । पूर्णात्मनि तदा दृष्टे कः कस्मै किंच दित्सति " इति ॥ ६ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीयेऽध्याये एकादशं कूर्चब्राह्मणं परिसमाप्तम् ॥ १४ (६) ३–११ ॥

तृतीयोऽध्यायश्च समाप्तः ॥ १४ ( बृ. उ. ) ३ ॥

# अथ चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठके च प्रथमं ब्राह्मणम् ।

## आदितः सप्तमेऽध्याये बृ० आ० चतुर्थेऽध्याये च प्रथमं ब्राह्मणम् ।

जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम । स मेने न वदिष्यऽइत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदतुस्तस्मै ह याज्ञवल्क्यो वरन्ददौ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ ह सम्राडेव पूर्वः पप्रच्छ ॥ १ ॥

---

### ज्योतिर्ब्राह्मणम् ।

जनकं ह वैदेहं याज्ञवल्क्यो जगाम । स मेने । न वदिष्य इति । अथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदतुः । तस्मै ह याज्ञवल्क्यो वरं ददौ । स ह कामप्रश्नमेव वव्रे । तं हास्मै ददौ । तं ह सम्राडेव पूर्वः पप्रच्छ ॥ १ ॥

---

मधुकाण्डे तावत् बुद्ध्यनुप्रविष्ट ईश्वरः अविद्यया अकृत्स्नत्वमापन्न इति "तन्न पश्यन्त्यकृत्स्नो हि सः" (श. प. बृ. १४ । १ । २ । १६) इत्यादिनोक्तम् । पुनस्तस्यैवाविद्यानिरासेन स्वरूपावस्थानं चागमप्राधान्येन निर्द्धारितम् । एवं मधुकाण्डे निरूपित आत्मा यत्साक्षादपरोक्षादित्यादिलक्षणो जल्पन्यायमवलंब्य अखंडप्रत्यक्त्वेन निरूपितः । तस्यैव वादन्यायेन स्वरूपनिर्णयाय वागादिदेवतासु ब्रह्मदृष्टिद्वारा "इन्धो ह वै" (श.प.बृ.१४।३।११।२) इत्यादिना जागराद्यवस्थविश्वादिप्रदर्शनेन तुरीयं "नेति नेति" इत्यादिलक्षणं ब्रह्मात्मतत्त्वमुपदिष्टम् । इदानीं पूर्वोक्ता जागराद्यवस्था अनुसृत्य महता तर्केण अनेकविप्रतिपत्तिनिरासद्वारेण देहादिव्यतिरिक्तशुद्धस्वयंप्रकाशानतिशयानन्दस्वभावलक्षणं पूर्वोक्तमेवात्मानं अधिगमयितुं ज्योतिर्ब्राह्मणमारभ्यते **जनकं ह वैदेहं याज्ञवल्क्यो जगामेति** । विद्याग्रहणे शिष्यस्य श्रद्धादिलक्षणाचारविधिप्रकाशनार्था ब्रह्मविद्यास्तुत्यर्था च इयमाख्यायिका । ऐतिह्यद्योतको हशब्दः । 'जनकं वैदेहं' प्रति 'याज्ञवल्क्यः' योगक्षेमार्थं 'जगाम' गतवान् । 'सः' गच्छन् याज्ञवल्क्यो राज्ञे अहं किंचिदपि 'न वदिष्ये इति मेने' विचारयामास । यद्वा—'सम् एनेन' इति छेदः । तथा च 'एनेन' राज्ञा अहं 'संवदिष्ये' इत्यभिप्रायवान् 'वैदेहं जनकं' जगामेत्यर्थः । ननु—'न वदिष्ये' इति संकल्पेऽपि राजकृतेषु प्रश्नेषु उत्तरदानेन मुनेः स्वप्रतिज्ञाहानौ को हेतुरिति अपेक्षायां संवदिष्य इति च व्याख्याया वरदानमेव हेतुरिति कथयितुं कर्मकाण्डवृत्तामाख्यायिकामाह—**अथ ह यज्जनकश्च वैदेह** इत्यादिना । 'ह' किल यद्यत्र कर्मकाण्डे (श.प. ११।६।२।१०) 'वैदेहो जनकः' 'याज्ञवल्क्यश्च' परस्परं 'अग्निहोत्रे' निमित्ते 'समूदतुः' सम्वादं कृतवन्तौ । तत्र जनकस्याग्निहोत्रविषयं विज्ञानं विशदमुपलभ्य परितुष्टो याज्ञवल्क्यः 'तस्मै' जनकाय किल 'वरं ददौ' वरं वृणीष्वेत्युक्तवानित्यर्थः । 'सः' जनकः 'ह' किल, 'कामप्रश्नमेव' इच्छाप्रश्नमेव 'वव्रे' वरं वृतवान् । 'तं' च वरं याज्ञवल्क्यः 'ह' 'अस्मै' राज्ञे

याज्ञवल्क्य किञ्ज्योतिरयम्पुरुषऽइति । (त्या) आदित्युज्योतिः सम्म्राडिति होवाचादित्येनैवायञ्ज्योतिषाऽऽस्ते पुल्ययते कुर्म्म कुरुते विपुर्ध्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥

( ल्क्या ) अुस्तमितऽआदित्ये याज्ञवल्क्य । किञ्ज्योतिरेवायम्पुरुषऽइति चन्द्रुज्योतिः सम्म्राडिति होवाच चन्द्रेणैवायञ्ज्योतिषाऽऽस्ते पुल्ययते कुर्म्म कुरुते विपुर्ध्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥

---

याज्ञवल्क्य किंज्योतिरयं पुरुष इति । आदित्यज्योतिः सम्राट् इति होवाच । आदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीति । एवमेवैतद्याज्ञवल्क्य ॥ २ ॥

अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति । चन्द्रज्योतिः सम्राट् इति होवाच । चन्द्रेणैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीति । एवमेवैतद्याज्ञवल्क्य ॥ ३ ॥

---

‘ददौ’ दत्तवान् । एवं प्राप्तवरो राजा किं कृतवानित्याह—**तं ह सम्राडेवेति** । ‘पूर्वः’ इत्यत्र लिंगमविवक्षितम् । ‘न वदिष्ये’ इत्यागतं तूष्णीम्भूतं ‘तं सम्राडेव’ ‘पूर्वः’ पूर्वं ‘पप्रच्छ’ लब्धवरत्वात्पृष्टवानिति भावः ॥ १ ॥

किं पप्रच्छेत्यपेक्षायां प्रत्यगात्मचैतन्यस्वरूपं जिज्ञासमानः कार्यकरणसंघातात्मा पुरुषो ज्योतिर्निर्वर्त्यमासनगमनादिकार्यं स्वाभिन्नेनैव ज्योतिषा अनुगृहीतो निर्वर्तयति, किं वा—स्वव्यतिरिक्तेनेति सन्दिहानः पृच्छति—**याज्ञवल्क्य किंज्योतिरयं पुरुष इतीति** । हे ‘याज्ञवल्क्य !’ ‘अयं पुरुषः’ कार्यकरणसंघातरूपः शिरःपाण्यादिमान् पिण्डः ‘किंज्योतिः’ किं ज्योतिरस्य विद्यते स किंज्योतिः । येन ज्योतिषा अनुगृहीतोऽयमासनादिव्यवहारं करोति इति पप्रच्छ इत्यर्थः । तत्किं देहादि तद्व्यतिरिक्तं वा इति प्रष्टुरभिप्रायज्ञो मुनिः अयं हि राजा व्यतिरिक्तं ज्योतिरेव पृच्छति इति तथाविधमेव इतरसर्वज्योतीरहितस्वप्नाद्यवस्थायां विविक्ततया बोधयितुकामो जागरिते तावत् दृष्टांतभूतानि आदित्यादीनि वागन्तानि ज्योतींषि उपन्यस्यतीति दर्शयति—**आदित्यज्योतिः सम्राडिति होवाचेत्यादिना** । आदित्यो ज्योतिर्यस्यासावादित्यज्योतिः पुरुष इति होवाचेत्यर्थः । तदेवोपपादयति—**आदित्येनैवायं ज्योतिषाऽऽस्ते** इति । ‘आदित्येनैव’ चक्षुषोऽनुग्राहकेण देहकरणाद्यतिरिक्तेनैवायं प्राकृतः ‘पुरुष आस्ते’ उपविशति ‘पल्ययते’ पर्येति गच्छतीति यावत् । “उपसर्गस्यायतौ” (पा.सू.८।२।१९) इति परे रस्य लत्वम् । गत्वा क्षेत्रमरण्यं वा तत्र ‘कर्म कुरुते’ पश्चाद्विपर्येति भूयो निवर्तते इत्यर्थः । संघातादिव्यतिरिक्तमेव ज्योतिरासनादिकारणमित्युक्तं राजा अंगीकरोति—**एवमेवैतद्याज्ञवल्क्येति** ॥ २ ॥

यद्यपि एकेनैवादित्यपर्यायेण व्याप्तिग्रहसंभवः । तथाऽपि बहवो दृष्टांताः व्याप्तिं द्रढयन्ति, इति मत्वा प्रश्नप्रतिवचनाभ्यां ज्योतिःपर्यायान्तराणि दर्शयति—**अस्तमित आदित्य** इत्यादिकण्डिकाचतुष्टयेन “कतम आत्मा” इत्यतः प्राक्तनेन । पदविशेषोऽत्र व्याख्यायते-**किंज्योतिरेवायं पुरुष** इति । प्रश्नं दृढीकर्तुं सर्वत्र एवकारः । चन्द्रो ज्योतिरस्य स चन्द्रज्योतिः ॥ ३ ॥

( लक्या ) अस्तमितऽआदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते किञ्ज्योतिरेवायम्पुरुषऽइत्यग्निर्ज्योतिः सम्राडिति होवाचाग्निनैवायञ्ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥

( लक्या ) अस्तमितऽआदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते शान्तेऽग्नौ किञ्ज्योतिरेवायम्पुरुषऽइति वाग्ज्योतिः सम्राडिति होवाच वाचैवायञ्ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥

---

अस्तमित आदित्ये याज्ञवल्क्य चंद्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इति । अग्निर्ज्योतिः सम्राट् इति होवाच । अग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीति । एवमेवैतद्याज्ञवल्क्य ॥ ४ ॥

अस्तमित आदित्ये याज्ञवल्क्य चंद्रमस्यस्तमिते शांतेऽग्नौ किंज्योतिरेवायं पुरुष इति । वाग्ज्योतिः सम्राट् इति होवाच । वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीति । तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायते ; अथ यत्र वागुच्चरति ; उपैव तत्र न्येतीति । एवमेवैतद्याज्ञवल्क्य ॥ ५ ॥

---

एवं अग्निर्ज्योतिरस्य सः ' अग्निज्योतिः ' इत्येवं सर्वत्र बोद्धव्यम् । अग्निनैवायमित्येतत् प्रभावन्मण्यादीनामप्युपलक्षणम् । ततोऽपि पुरुषप्रवृत्तिदर्शनादित्यर्थः ॥ ४ ॥

वाचैवायमित्यत्र वाक्पदेन शब्दः परिगृह्यते, नेन्द्रियम् । तस्मिन् शब्दाख्ये विषये श्रोत्रसंबद्धेऽप्यासनादिज्योतिःकार्यदर्शनात् । ननु—शब्दस्यादित्यवत् ज्योतिष्ट्वस्याप्रसिद्धेः कथं ? तस्य ज्योतिष्ट्वेनासनादिकार्यहेतुतेति चेत्; उच्यते । प्रथमं तावत् श्रोत्रसंबद्धे शब्दाख्ये विषये श्रोत्रेन्द्रियं दीप्यते । दीप्ते च तस्मिन् मनसि विवेक उपजायते । तेन च मनसा पुरुषो बाह्यां चेष्टां प्रतिपद्यते । " मनसा ह्येव पश्यति मनसा शृणोति "—( श.प.बृ.१।३।८ ) इति श्रुतेः । इत्येतत्सर्वमभिप्रेत्याह—**तस्माद्वै सम्राडपि यत्र स्वः पाणिरिति** । यस्मात् शब्दाख्यया वाचा ज्योतिषा अयं व्यवहरति । तस्मात्प्रसिद्धं वाचो ज्योतिष्ट्वम् । कथं ? ' यत्र ' यस्मिन् काले प्रावृड्रात्र्यादौ ' स्वः ' स्वकीयोऽपि पाणिर्हस्तः ' न विनिर्ज्ञायते ' विस्पष्टं न दृश्यते । अथ तस्मिन् काले बाह्यज्योतिषः अभावेन सर्वचेष्टानिरोधे प्राप्ते ' यत्र ' यस्मिन्प्रदेशे ' वागुच्चरति ' कश्चित् श्वा भषति गर्दभो वा रौति । तेन शब्देन ज्योतिषा ' तत्र ' तस्मिन्प्रदेशे ' उपन्येति ' उपगच्छत्येव सन्निहितो भवति । मार्गं गृहं वा प्रतिपद्यत इति यावत् । एतद्वाग्ज्योतिर्ग्रहणं गन्धादेरप्युपलक्षणम् । परं तेषामपि शब्दवत्प्रवृत्तिहेतुत्वात् इति भावः ॥ ५ ॥

( त्क्या ) अस्तमितऽआदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायाम्वाचि किञ्ज्योतिरेवायम्पुरुषऽइत्यात्मज्ज्योतिः सम्म्राडिति होवाचात्मनैवायञ्ज्योतिषाऽऽस्ते पल्ययते कर्म्म कुरुते विपर्ल्येतीति ॥ ६ ॥ शतम् ७४०० ॥

कतमऽआत्मेति । योऽयम्विज्ञानमयः पुरुषः प्प्राणेषु हृद्यन्तर्ज्ज्योतिः स समानः सन्नुभौ लोकौ सञ्चरति ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति ॥ ७ ॥

---

अस्तमित आदित्ये याज्ञवल्क्य चंद्रमस्यस्तमिते शांतेऽग्नौ शांतायां वाचि किंज्योतिरेवायं पुरुष इति । आत्मज्योतिः सम्राट् इति होवाच । आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीति ॥ ६ ॥

कतम आत्मेति । योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यंतर्ज्योतिः । स समानः सन्नुभौ लोकौ संचरति । ध्यायतीव लेलायतीव । सधीः स्वप्नो भूत्वा इमं लोकमतिक्रामति ॥ ७ ॥

---

एतावता यो व्यवहारः स व्यवहर्तृदेहेन्द्रियाद्यतिरिक्तज्योतिःसाध्यः । यथा आदित्यादिसाध्यो जाग्रद्व्यवहारः, इति व्याप्तिः सिद्धा । एवं सिद्धायां व्याप्तौ स्वप्नसुषुप्त्योरपि बन्धुसंगमवियोगदेशांतरगमनादेः उत्थानस्य च ज्योतिःकार्यस्य दर्शनाद्भवितव्यं तत्राप्यतिरिक्तेन केनचित् ज्योतिषा, इत्यनुमानतो ज्योतिर्मात्रे सिद्धे उपन्यस्तानां ज्योतिषां तत्र योग्यानुपलब्धिबाधितत्वात् केन ज्योतिषा तदा असौ व्यवहारं करोतीति तद्विशेषं राजा पृच्छतीति दर्शयति–**अस्तमित आदित्य** इत्यादिना । उत्तरमाह–**आत्मज्योतिः सम्राडिति होवाचेति** । आत्मैव ज्योतिरस्य स तथा । आत्मेति कार्यकरणातिरिक्तं तदवभासकं अपराधीनप्रकाशं ज्योतिरभिधीयते । तस्यात्मनो ज्योतिषः अर्थात् अंतःस्थस्य सूर्यादिविलक्षणस्य कार्येणान्वयमाह–**आत्मनैवायं ज्योतिषाऽऽस्त** इत्यादिना ॥ ६ ॥

यद्यपि संघातानुग्राहकमात्मज्योतिः संघातातिरिक्तं तद्विजातीयं चेति न्यायतो निर्णीतम् । तथाऽपि सूक्ष्मन्यायस्य दुर्विज्ञेयत्वादनुग्राहकादित्यादेरनुग्राह्यसंघातसमानजातीयत्वदर्शनाच्च बुद्ध्यादिव्यतिरिक्तत्वनिश्चयाभावात् सन्दिहानो राजा पृच्छति–**कतम आत्मेतीति** । कोऽसावात्मा किंस्वरूप इति प्रश्नार्थः । बुद्ध्यवभासकः स्वयमनवभासमान आत्मेति प्रतिवचनमाह-**योऽयं विज्ञानमयः पुरुषः प्राणेष्विति** । हे राजन् ! 'यः' आत्मा त्वया पृष्टः । 'सोऽयं' 'विज्ञानमयः' विज्ञायते अनेनेति व्युत्पत्तेर्विज्ञानं बुद्धिः तन्मयस्तत्प्रायो विज्ञानमयः 'पुरुषः' नित्यपूर्ण इत्यर्थः । "पुरुष एवेदं सर्वम्" ( वा. सं. ३१ । २ ) इति श्रुतेः । प्राणेष्विति सामीप्यलक्षणा सप्तमी विज्ञानमयस्य तद्व्यतिरेकप्रदर्शनार्था । यो हि येषु भवति स तद्व्यतिरिक्त एव भवति । अतः 'प्राणेष्विति' प्राणेभ्यो व्यतिरिक्त इत्यर्थः । एवं प्राणसमीपस्थो विज्ञानमय इत्युक्ते प्राणसाजात्यं तस्य स्यात् । अतो विशिनष्टि–**हृद्यंतर्ज्योतिरिति** । हृच्छब्दो मांसपिंडविषयः । तात्स्थ्यात् अत्र हृच्छब्देन लक्षणया

**स वुाऽअयम्पुरुषः । ( षो ) जायमानः शुरीरमभिसम्पुद्यमानः पाप्मुभिः सुᳪँसृज्ज्यते सुऽउत्क्रामन्म्रियमाणः पाप्मुनो विुजहाति मृत्त्यो रूपाणि ॥८॥**

---

**स वा अयं पुरुषः जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते । स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति मृत्योः रूपाणि ॥ ८ ॥**

---

बुद्धिरुच्यते 'हृदि' बुद्धौ अन्तर्वर्तमानं ज्योतिरात्मा । "आत्मनैवायं ज्योतिषाऽऽस्ते" इत्यादौ तस्यैव ज्योतिष्ट्वेन प्रकृतत्वात् पूर्णो बुद्धिदर्पणाभिव्यक्तः सर्वावभासकः शुभ्रो निरतिशयस्वप्रकाशकस्वभाव आत्मेति वाक्यार्थः । एवमात्मनो नित्यमुक्तस्य अविद्यया बुद्ध्यादितादात्म्याध्यासादेव संसारित्वं इति दर्शयितुं सूक्ष्मदेहादिव्यतिरिक्ततया आत्मनः शुद्धत्वदर्शनाय वा स्वप्नं प्रक्रमते—**स समानः सन्निति** । यो हृदंतर्ज्योतिः पुरुष आत्मा 'स समानः' सन् हृच्छब्दवाच्याया बुद्धेः प्रकृतत्वात् सन्निहितत्वाच्च तया समानः सदृशः अन्योऽन्यधर्माध्यासेन तप्तायःपिंडवत् तादात्म्यमापन्नः सन् 'उभौ लोकौ' प्रतिपन्नप्रतिपत्तव्यौ इहलोकपरलोकावनुक्रमेण उपात्तदेहेन्द्रियसंघातं त्यजन् अन्यं चोपाददत् 'संचरति' परिभ्रमति । आत्मा संचरतीति भ्रमः । न तस्य स्वतः संचरणमित्यर्थः । एतदेव प्रत्यक्षेणाभिनीय दर्शयति—**ध्यायतीव लेलायतीवेति** । यतो ध्यानव्यापारवतीं बुद्धिं तत्स्थेन चित्स्वभावज्योतीरूपेणावभासयन् तत्सदृश आत्मा 'ध्यायतीव' ध्यानं करोतीव यथा चतुष्कोणं लोहपिंडं अवभासकत्वेनानुगतो वह्निश्चतुष्कोण इव प्रतीयते तद्वत् । तथा 'लेलायतीव' चलतीव बुद्ध्यादिषु करणेषु प्राणादिषु वायुषु चलत्सु तदवभासकतया तत्समान आत्माऽपि चलतीवेति प्रतीयते । यथा चलन्त्यां नावि तत्स्थेन वृक्षाश्चलंतीवेति प्रतीयते तद्वत् । न तु ज्योतीरूपस्यात्मनः परमार्थतो ध्यानं चलनं वेत्यर्थः । कुतो हेतोरेतदवगम्यते; इत्यत आह—**सधीः स्वप्न** इति । प्रकृत आत्मा यस्मात्सधीः बुद्ध्यैक्यमापन्नः 'स्वप्नो भूत्वा' स्वप्नाकारपरिणतधीवृत्त्यवभासकत्वेन तदाकारो भूत्वा इमं लोकं जागरितलक्षणं लौकिकशास्त्रीयव्यवहारास्पदकार्यकरणसंघातं 'अतिक्रामति' अतीत्य क्रामति । तदभिमानं त्यजतीत्यर्थः ॥ ७ ॥

यथा एकस्मिन् देहे स्वप्नजागरिते संचरत आत्मनो देहाद्व्यतिरेकः । तथा इहलोकपरलोकयोः संचारोक्त्याऽपि तस्य तद्व्यतिरेक उच्यते इति दर्शयति—**स वा अयं पुरुषो जायमान** इति । 'सोऽयं' प्रकृतः 'पुरुषो जायमानः' 'पाप्मभिः संसृज्यते' इत्यन्वयः । नात्मनो जायमानत्वं घटादिवत् । स्वरूपेणानिष्पद्यमानत्वात् । किं तु—शरीरं देहेन्द्रियादिसंघातमभिसंपद्यमानः तत्रात्मभावं प्रतिपद्यमान इत्यर्थः । जायमाने शरीरे आत्माभिमान एव जायते इत्युक्तं भवति । वैशब्दोऽवधारणार्थः, अभिसंपद्यमान एवेत्यत्र संबध्यते । पाप्मशब्दो धर्मस्याप्युपलक्षकः । पाप्मशब्देन देहसम्बन्धहेतुमात्रं विवक्षितम् । "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" (     ) इति श्रुत्यंतरात् । तथा च—पाप्मभिर्धर्माधर्माश्रयैः करणैः 'संसृज्यते' संयुज्यते । शरीरमात्मत्वेनाभिमन्यमानः पुरुष इत्यर्थः । स एव पुनर्देहाद्यारंभकीभूतकर्मक्षये सति 'म्रियमाणः' सन् 'उत्क्रामन्' शरीरांतरं प्रति ऊर्ध्वं क्रामन् तानेव संसृष्टान् 'पाप्मनः' कार्यकरणलक्षणान् 'विजहाति' परित्यजति । तत्राभिमानपरित्यागमात्रेणैव तैर्वियुज्यत इत्यर्थः । 'म्रियमाणः' इत्यस्य व्याख्या उत्क्रामन्निति । तथा 'मृत्योः' 'रूपाणि' च विजहातीत्यन्वयः । मृत्युरज्ञानं तस्य रूपाणि अहंकारादिकार्यकरणानि रूप्यन्ते प्रतीयन्ते न प्रमीयन्त इति रूपाणि । अतः संचरणादिकं नात्मनः स्वाभाविकम् । वह्नेरिवौष्ण्यस्वभावः । स्वाभाविके सति परित्यागायोगादिति ज्ञेयम् ॥ ८ ॥

तस्य वाऽएतस्य पुरुषस्य । द्वेऽएव स्थाने भवतऽइदञ्च परलोकस्थानञ्च सन्ध्यन्तृतीयꣳ स्वप्नस्थानन्तस्मिन्त्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च ॥ ९ ॥

( आ ) अथ यथाऽऽक्रमोऽयम्परलोकस्थाने भवति । तमाक्रममाक्रम्योभयान्पाप्मनऽआनन्दांश्च पश्यति स यत्रायम्प्रस्वपितीत्यस्य लोकस्य सर्व्वावतो मात्रामपादाय स्वयम्विहत्य स्वयन्निर्म्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायम्पुरुषः स्वयञ्ज्योतिर्भवति ॥ १० ॥

---

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः । इदं च परलोकस्थानं च । सन्ध्यं तृतीयं स्वप्नस्थानम् । तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यति, इदं च परलोकस्थानं च ॥ ९ ॥

अथ यथाऽऽक्रमोऽयं परलोकस्थाने भवति । तमाक्रममाक्रम्य उभयान् पाप्मन आनंदांश्च पश्यति । स यत्रायं प्रस्वपितीति । अस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति । अत्रायं पुरुषः स्वयंज्योतिर्भवति ॥ १० ॥

---

एवमुत्क्रामन् म्रियमाणः शरीरमभिसंपद्यमान इत्यागमवशात्परलोकास्तित्वे सिद्धेऽपि प्रत्यक्षेण न तत्सिद्धम् । परलोकविषयं च प्रत्यक्षं नास्ति । अतो नास्ति परलोक इत्याशंक्य, अस्ति परलोकः प्रत्यक्षसिद्ध इति प्रतिपादनाय " तस्मिन् संध्ये स्थाने " इत्यारभ्य " स यत्रायं प्रस्वपिति " ( कं. ९–१० ) इत्यतः प्राक्तनो ग्रन्थः प्रवर्तिष्यते । प्रथमं तदुपोद्घातत्वेन स्थानभेदं दर्शयति–**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत** इति । ' वै ' प्रसिद्धौ । तस्यैतस्य प्रकृतस्य ' पुरुषस्य ' ' द्वे एव स्थाने भवतः ' । न तृतीयं चतुर्थं वा स्थानमस्तीति यावत् । के ते द्वे स्थाने । ' इदं च ' यद्वर्तमानं प्रतिपन्नजन्मशरीरेन्द्रियविषयसम्बन्धि सुखादिवेदनाविशिष्टं प्रत्यक्षतोऽनुभूयमानं, परलोक एव स्थानं ' परलोकस्थानम् ' तदेतच्छरीरादिवियोगोत्तरकालानुभाव्यं द्वितीयम् । देहद्वयव्यतिरिक्तस्वप्नदेहस्यापि विद्यमानत्वात् कथं द्वे एवेत्यवधार्यते इत्यस्योत्तरं–**सन्ध्यं तृतीयमिति** । यत् ' तृतीयं ' स्वप्नस्थानं तत्संध्यम् । इहलोकपरलोकयोः सन्धौ भवं सन्ध्यं न स्थानान्तरम् । यद्वा स्वप्नस्तृतीयमेव स्थानम् । त्रयाणां पूरणं तृतीयम्, इति पूरणप्रत्ययश्रवणात् । इदानीं यदर्थमुपोद्घातः कृतः, तद्दर्शयति –**तस्मिन्त्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने** इति । ' सन्ध्ये स्थाने ' स्वप्नभूमौ ' तिष्ठन् ' वर्तमानः सन् ' इदं च ' ' परलोकस्थानं ' चेत्युभे स्थाने पश्यति । एतदुक्तं भवति आद्ये वयसि यं स्वप्नं पश्यति तं पूर्वजन्मानुभूतविषयमेव तद्वासनावासितः सन् पश्यति, तदानीं बालस्य ऐहिकपुत्राद्यनुभवाभावात् । मध्यमे तु वयसि इन्द्रियाणां स्थूलार्थग्रहणसामर्थ्यात् इह जन्मनि अनुभूतविषयकमेव स्वप्नं प्रायः पश्यति । अन्ते वयसि पुनः परलोकं यियासुः विद्याकर्मादिसम्भृतो भाविजन्मविषयकं स्वप्नं प्रायः पश्यति । तस्मात् अन्ते वयस्यादौ चेह जन्मनि असम्भाव्यमानस्य दर्शनं परलोकसद्भावे प्रत्यक्षं प्रमाणमिति ॥ ९ ॥

ननु–स्वप्नस्थानं गत आत्मा किमाश्रितः सन् केन विधिना परलोकं पश्यतीत्यपेक्षायामाह–**अथ यथाऽऽक्रमोऽयं परलोकस्थाने भवतीति** । अथेति वाक्योपक्रमार्थः । आक्रमत्यनेनेति आक्रम आश्रयोऽव-

---

१–इति शब्दः कुत्रचिन्नास्ति ।

न तत्र रथा न रथयोगा न पन्थानो भवन्ति । ( न्त्य ) अथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः स्रवन्त्यः पुष्करिण्यो भवन्त्यथ वेशान्ताः* स्रवन्तीः पुष्करिणीः सृजते स हि कर्त्ता ॥ ११ ॥

---

न तत्र रथा न रथयोगा न पंथानो भवंति । अथ रथान् रथयोगान् पथः सृजते । न तत्रानंदा मुदः प्रमुदो भवंति । अथानंदान् मुदः प्रमुदः सृजते। न तत्र वेशांताः स्रवंत्यः पुष्करिण्यो भवंति । अथ वेशांताः स्रवंतीः पुष्करिणीः सृजते । स हि कर्ता ॥ ११ ॥

---

दृंभः विद्याकर्मपूर्वप्रज्ञालक्षणो यादृश आक्रमो यस्य सोऽयं 'यथाऽऽक्रमोऽयं पुरुषः' । 'परलोकस्थाने' प्रतिपत्तव्ये निमित्ते यथाऽऽक्रमो भवति । यादृशेन परलोकप्रतिपत्तिसाधनेन विद्याकर्मपूर्वप्रज्ञालक्षणेन युक्तो भवति । 'तमाक्रमं' परलोकस्थानाय उन्मुखीभूतं बीजभूतं आक्रम्यावष्टभ्य 'उभयान्पाप्मनः' पापफलानि दुःखानि 'आनंदान्' धर्मफलभूतान् सुखविशेषांश्च पश्यतीत्यर्थः ।

पूर्वं आदित्यादिज्योतिरभावेऽपि आसनादिज्योतिःकार्यदर्शनात् 'अयं' पुमान् आत्मज्योतिषैव व्यवहरतीत्युक्तम् । इदानीं आदित्यादिज्योतिर्भिः असंस्पृष्टश्चिदात्मा यथा साक्षादेव प्रत्यग्भावेन स्वप्रकाश इत्यवगंतुं शक्यते, तथा प्रदर्शनायाह–**स यत्रायं प्रस्वपितीति** । 'सः' प्रकृतः आत्मा 'यत्र' यस्मिन् काले 'प्रस्वपिति' प्रकर्षेण स्वापं स्वप्नमनुभवतीत्यर्थः । स च संध्याख्यं स्वप्नं प्रतिपद्यमानः किमाश्रयः केन विधिना प्रतिपद्यत इत्याकांक्षायामाह–**अस्य लोकस्य सर्वावत** इति । 'अस्य' दृष्टस्य 'लोकस्य' जागरितलक्षणस्य स्थूलदेहस्य कथंभूतस्य 'सर्वावतः' सर्वमवतीति सर्वावन् तस्य सर्वावतः । सर्वावत्त्वं चास्य "अथो अयं वा आत्मा सर्वेषां भूतानां लोकः"–(श.प.बृ.१४।४।२।२८) इत्यादौ व्याख्यातम् । यद्वा सर्वाः भूतभौतिकमात्रा अध्यात्मादिविभागयुक्ताः संसर्गकारणभूता अस्य विद्यंत इति सर्ववानेव सर्वावान् । दैर्घ्यं छांदसम् । तस्य 'सर्वावतः' मात्रामेकदेशमवयवं अपादायापच्छिद्य गृहीत्वा जाग्रद्दृष्टवासनावासितः सन्नित्यर्थः । इदानीं केन विधिना स्वप्नं प्रपद्यत इत्याह–**स्वयं विहत्ये**त्यादिना । स्वप्नं प्रतिपद्यमान आत्मा 'स्वयं' स्वेनैव स्वरूपेण न तु करणतदेवतादिना 'विहत्य' देहं पातयित्वा निश्चेष्टं कृत्वा । तथा 'स्वयमेव' स्वकर्मानुसारिस्वप्नदेहं प्रातिभासिकं 'निर्माय' निष्पाद्य । 'स्वेन भासा' इति इत्थंभावे तृतीया । स्वेनात्मीयेन मात्रोपादानलक्षणेन 'भासा' दीप्त्या सर्ववासनात्मकेन अंतःकरणवृत्तिप्रकाशरूपेणेति यावत् । 'स्वेन ज्योतिषा' इति कर्तरि तृतीया । स्वेनात्मज्योतिषा अलुप्तदृक् स्वभावेन निमित्तं वस्तु विषयीकुर्वन् 'प्रस्वपितीति' प्रस्वापप्रकार उक्त इत्यर्थः । फलितमाह–**अत्रायं पुरुष** इति । 'अत्र' एतस्यां स्वापावस्थायां 'अयं पुरुषः' आत्मा स्वयमेव ज्योतिर्भवति । आदित्यादेस्तदानीमभावात् इंद्रियाणां चोपसंहृतत्वात् मनसश्च विषयाकारेणैवोपक्षयात् परिशेषादात्मा स्वयंज्योतिरित्यर्थः ॥ १० ॥

ननु–स्वप्नेऽपि सर्वस्यादित्यादेः दृश्यमानत्वात् कथं परिशेषात् स्वयंज्योतिष्ट्वसिद्धिरित्याशंकायां तस्य सर्वस्य वासनामात्रनिर्मितत्वात् तत्रात्मा विविक्तः स्वयंज्योतिरिति निश्चेतुं स्वप्ने बाह्यरथाद्यभावं तावदाह–**न तत्र रथा न रथयोगा न पंथानो भवंतीति** । 'तत्र' स्वप्ने 'रथाः' प्रसिद्धाः । रथैर्युज्यंत इति 'रथ-

---

*–"वेशान्तान्" इति काण्वपाठः ।

तदप्येते श्लोकाः । स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पुनरैति स्थानꣳ हिरण्मयः पौरुषऽएकहꣳसः ॥१२॥
प्राणेन रक्षन्नपरङ्कुलायम् । (म्ब) बहिष्कुलायादमृतश्चरित्वा । सऽईयतेऽअमृतो यत्रकामꣳ हिरण्मयः पौरुषऽएकहꣳसः ॥ १३ ॥

---

तदप्येते श्लोकाः-" स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पुनरैति स्थानं हिरण्मयः पौरुष एकहंसः ॥ १२ ॥

प्राणेन रक्षन्नपरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयते अमृतो यत्रकामं हिरण्मयः पौरुष एकहंसः ॥ १३ ॥

---

योगाः ' अश्वादयः । ' पंथानः ' रथमार्गाः । एते प्रत्येकं ' न भवंतीति ' सर्वत्राभिसंबध्यते न संत्येवेत्यर्थः । रथाद्यभावोक्तिस्तदनुग्राहकेन्द्रियालोकादेरप्युपलक्षणार्था । ननु-स्वप्ने रथादीनामभावश्चेत् ः कथं भासंते ? इत्याशंक्य, रथादिसाधनानां वृक्षादीनामभावेऽपि वासनामात्रनिर्मिता भासंते इत्याह-**अथ रथान् रथयोगान्पथः सृजते** इति । अथापि सर्वानेव रथादीन् वासनात्मकान् ' सृजते ' । एतच्च ' सर्वावतो मात्राम् ' इत्यादिना उक्तस्य प्रपंच इत्यर्थः । एवमन्यस्यापि स्वप्ने दृश्यमानस्य बाह्यत्वभावप्रदर्शनपुरःसरं वासनात्मत्वं दर्शयति-**न तत्रानंदा मुदः प्रमुद** इति । ' तत्र ' स्वप्ने ' आनंदाः ' सुखसामान्यानि ' मुदः ' पुत्रादिसम्बन्धनिमित्ता हर्षाः मुद एव प्रकर्षोपेताः ' प्रमुदः ' ' वेशांताः ' क्षुद्रसरांसि ' स्रवंत्यः ' नद्यः ' पुष्करिण्यः ' तडागाः । आनंदादयो वेशांतादयश्च स्वप्ने न भवंतीति । अथ तु " तत्सर्वं सृजते " इति पूर्ववत् व्याख्या । इदं तु "आत्मनैवायं ज्योतिषाऽऽस्ते" इत्यादेः प्रपंचः । कथमसत्सर्वमात्मा सृजतीत्याशंक्याह-**स हि कर्तेति** । ' हि ' यस्मात् ' सः ' आत्मा ' कर्ता ' । तस्मात् सृजतीति योजना । न हि अत्र कर्तृत्वं वास्तवं आत्मनोऽभिप्रेतम्, किं तु परिणममानवासनासाक्षितामात्रमेवेत्यर्थः ॥ ११ ॥

इदानीं उक्तेऽर्थे मंत्राणामपि संमतिरस्तीत्याह-**तदप्येते श्लोका** इति । ' तत् ' तस्मिन्नुक्तेऽर्थे स्वयंज्योतिष्ट्वादिलक्षणे ' एते ' वक्ष्यमाणाः ' श्लोकाः ' मन्त्राः संतीति शेषः । तत्र स्वप्नप्रवेशतत्साक्षित्वप्रकाशकं मन्त्रार्द्धं पठति-**स्वप्नेन शारीरमिति** । स आत्मा ' स्वप्नेन ' स्वप्नभावेन वासनामात्रोपग्रहेण । शारीरमिति स्वार्थे वृद्धिः । ' शरीरं ' ' अभिप्रहत्य ' निश्चेष्टमापाद्य अलुप्तदृक्शक्तिस्वाभाव्यात् स्वयमसुप्तः सन् सुप्तान् वासनाकारेणोद्भूतान् अन्तःकरणवृत्त्याश्रयान् बाह्याध्यात्मिकान् सर्वानेव भावान् स्वेन रूपेण प्रत्यस्तमितान् ' अभिचाकशीति ' अलुप्तया आत्मदृष्ट्या अभितः सर्वात्मना पश्यति अवभासयतीत्यर्थः । स्वाप्नभोगक्षये पुनर्जागरितमेतीति द्वितीयार्द्धेन दर्शयति-**शुक्रमादायेति** । ' शुक्रं ' शुद्धं ज्योतिष्मत् इन्द्रियादिमात्रारूपं ' आदाय ' गृहीत्वा ' पुन ' स्वप्नहेतुकर्मोपरमणानंतरं जाग्रद्भोगहेतुकर्मणा जागरितं ' स्थानमेति ' । ' आ एति ' आगच्छति । ' हिरण्मयः ' चैतन्यज्योतिःस्वभावः । ' पौरुषः ' पुरुषः स्वार्थे वृद्धिः । ' एकहंसः ' एकश्चासौ हंसश्चेति एकहंसः । " हन हिंसागत्योः "-( धा. पा. अ. प. २ ) इत्यस्य रूपम । हंसः एक एव जाग्रत्स्वप्नः इहलोकपरलोकौ च हन्ति गच्छति हिनस्तीति वा एकहंसः इत्यर्थः ॥ १२ ॥

पुनरपि स्वप्नगतं विशेषं वक्तुं मन्त्रान्तरं पठति-**प्राणेन रक्षन्निति** । ' प्राणेन ' पंचवृत्तिकेन ' अपरं '

स्वप्नान्तऽउच्चावचमीयमानः । ( नो ) रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवाऽपि भयानि पश्यन् ॥ १४ ॥

आराममस्य पश्यन्ति । न तङ्कश्चन पश्यतीति तन्नायतम्बोधयेदित्याहुर्दुर्भिषज्यᳫं हास्मै भवति यमेष न प्रतिपद्यते ॥ १५ ॥

---

स्वप्नांत उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवाऽपि भयानि पश्यन् ॥ १४ ॥

आराममस्य पश्यन्ति न तं कश्चन पश्यति "–इति । तं नायतं बोधयेदित्याहुः । दुर्भिषज्यं हास्मै भवति । यमेष न प्रतिपद्यते ॥ १५ ॥

---

निकृष्टं अनेकाशुचिसंभवत्वात् अत्यन्तबीभत्सं कौ पृथिव्यां लीयत इति 'कुलायं' नीडं शरीरमिति यावत् । 'रक्षन्' पालयन् अन्यथा मृतभ्रांतिः स्यात् सा माऽभूदिति रक्षन् । स्वयं चामृतः असंगः सन् तस्मात् 'कुलायात् बहिश्चरित्वा' यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथाऽपि तस्यात्मनो देहस्थाकाशस्येव तत्संबंधाभावात् बहिश्चरणमिव कृत्वेत्युच्यते । बुद्धिसञ्चरणात्तदनुकुर्वन् संचरणमिव कृत्वा । 'यत्रकामं' यत्र यत्र विषयेषु उद्भूतवृत्तिः कामो भवति तं 'कामं' 'अमृतः' अमरणधर्मा सन् 'ईयते' गच्छति प्राप्नोतीत्यर्थः ॥ १३ ॥

पुनरपि स्वप्नस्थं विशेषांतरमाह–स्वप्नांत इति । 'स्वप्नांते' स्वप्नस्थाने 'उच्चं' देवादिभावं 'अवचं' तिर्यगादिभावं च, उच्चं चावचं चेत्युच्चावचम् इति समाहारद्वन्द्वः ! स्वकर्मोद्भासितं वासनामयं उत्कृष्टं निकृष्टं च स्वेनैवात्मना स्वयं 'ईयमानः' गम्यमानः प्राप्नुवन् 'देवः' द्योतनात्मकः 'रूपाणि' वासनामयानि शरीरजातानि 'बहूनि' असंख्येयानि 'कुरुते' । तत्तदाकृतिप्रदर्शनेनानुवर्तते । उतापि 'स्त्रीभिः सह मोदमानः इव' क्रीडमान इव । उतापि 'जक्षदिव' वयस्यादिभिः सह हसन्निव । 'अपि भयानि' बिभेति एभ्य इति भयानि सिंहव्याघ्रादीनि 'पश्यन्निव' भवतीत्यर्थः । तथा च–इवशब्दप्रयोगात् वास्तवहेत्वभावाच्च स्वप्ने सुखाद्यनुभवः अविद्यामयो मृषेति भावः ॥ १४ ॥

एवं स्वप्ने निरूपिते किं पर्यवसितं इत्यपेक्षायां तत्रात्मा विविक्तः स्वयंज्योतिः पर्यवसित इति प्रदर्शनाय मंत्रशेषं पठति–आराममस्य पश्यन्तीति । अस्यात्मनः 'आरामं' आक्रीडनं ग्रामनगरयोषिदन्नाद्ययानमार्गादिलक्षणं वासनानिर्मितमेव पश्यन्ति, सर्वे जना इति शेषः । 'न' तु तमात्मानं तत्र विविक्तरूपत्वेनावभासकं कश्चन कोऽपि 'पश्यति' । तस्मादात्मा स्वप्ने अदृश्य एव सन् अवभासते इति सिद्धम् । आत्मनः स्वयंज्योतिष्ट्वमित्यर्थः । इतिशब्दो मंत्रोदाहरणसमाप्त्यर्थः । अहो भाग्यहीनता लोकस्य ! यच्छक्यदर्शनमपि अहरहर्विविक्ततया अनुभूयमानमपि आत्मानं "अयमहमस्मीति" 'न पश्यतीति' लोकं प्रति शिरस्ताडं अनुक्रोशति मंत्रात्मिकेयं श्रुतिरित्यभिप्रायः । किं च–स्वप्नं गत आत्मा विविक्त एवेत्यत्र लोकप्रसिद्धिरप्यस्तीत्याह–तन्नायतमिति । तमात्मानं सुप्तं 'आयतं' भृशं न बोधयेदित्याहुश्चिकित्सका जनाः लोके कथयन्तीत्यर्थः । जाग्रद्देहगतेन्द्रियद्वारलक्षणाः प्रबोधनाडीः परित्यज्य आत्मा स्वप्ननाडीः प्रविष्टो विविक्त एव स्वप्ने वर्तते इति लोकः प्रायः पश्यतीति । अत एव नाडीव्यत्यासागमनशंकयैव सुप्तं न बोधयेद्भृशं इत्यनुज्ञाऽस्ति लौकिकी

( तेऽथो ) अथो खल्वाहुः । ( र्जा ) जागरितदेशऽएवास्यैष यानि ह्येव जाग्रत्पश्यति तानि सुप्तऽइत्यत्रायम्पुरुषः स्वयञ्ज्योतिर्भवतीत्येव-मेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्यतऽऊर्ध्वम्विमोक्षायैव ब्रूहीति ॥ १६ ॥

---

अथो खल्वाहुः । जागरितदेश एवास्य एषः । यानि ह्येव जाग्रत्पश्यति । तानि सुप्त इति । अत्रायं पुरुषः स्वयंज्योतिर्भवतीति । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्रं ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥

---

इत्यभिप्रायः । भवत्वेवं स्वप्ने विविक्तः । तथाऽपि भृशमप्रबोधने को हेतुरित्यत आह–**दुर्भिषज्यं हास्मा** इति । यस्माद्देशाच्छुक्रमादायापसृतः । तं यं इन्द्रियदेशं 'एषः' आत्मा पुनर्न प्रतिपद्यते । सहसा प्रबोधितः कदा-चित् व्यत्यासेन इंद्रियमात्राः प्रवेशयति । ततश्चांध्यबाधिर्यादिदोषप्राप्तौ 'अस्मै' देहाय स्फुटं 'दुर्भिषज्यं' दुःखेन भिषक्कर्म भवति कष्टेन चिकित्सनीयो देहो भवतीत्यर्थः ॥ १५ ॥

इदानीं अन्यदीयं मतं स्वयंज्योतिष्ट्वविघातकं दुष्टं इति अस्मान् बोधयितुं स्वमतपरिशुद्ध्ये च तदुपन्यस्यति–**अथो खल्वाहुर्जागरितदेश एवास्यैष** इत्यादिना । 'अथो' अपि 'खलु' अन्ये 'आहुः' । किं ? 'एषः' प्रसिद्धः 'जागरितदेशः' एवास्य विषयः, न तु सन्ध्यमिदं स्थानांतरं इहलोकपरलोकाभ्यां व्यतिरिक्त-मित्यर्थः । जागरितदेशस्यैव स्वप्नविषयत्वे हेतुमप्याचक्षत इत्याह–**यानि ह्येव जाग्रदिति** । 'हि' यस्मात् हस्त्यादीनि पदार्थजातानि 'यानि' जाग्रज्जागरितदेशे 'पश्यति' लौकिकः । तान्येव सुप्तोऽपि पश्यतीत्यर्थः । इतिशब्दो मतान्तरोपन्यासससमाप्त्यर्थः । ननु–कथमेतत् स्वयंज्योतिष्ट्वविघातकमिति चेत्; शृणु, यदि जागरित-देश एवायं स्वप्नो जातः । तदा जागरित इव स्वप्नेऽपि कार्यकरणसंघातमिश्रितत्वेन न ततो व्यतिरिक्तं स्वयंज्योतिः सिध्येत् इति स्वयंज्योतिष्ट्वं बाधितं स्यादिति । अयं च पूर्वः पक्षः "अग्निहोत्रं जुहोति" "यवागूं पचति" (     ) इति न्यायेनार्थक्रमपरिग्रहेण "स यत्रायं प्रस्वपिति" इत्यतः प्रागेवाव-गन्तव्यः । पूर्वपक्षस्य प्राथम्यं इत्यस्यैव क्रमस्य न्याय्यत्वात् सन्ध्यस्थानस्य तृतीयत्वाक्षेपकत्वेन तत्रोचितत्वा-च्चेति द्रष्टव्यम् । नैतत्सारम्, "सयत्र" इत्यादिना युक्तितः प्रमाणेन स्वप्नस्य मृषात्वनिरूपणं कृतम् इत्येतत्सूचयन्ती श्रुतिरुत्तरमाह–**अत्रायं पुरुषः स्वयंज्योतिर्भवतीति** । अक्षरार्थः पूर्ववत् । एवं मुनिना "स्वयज्योतिरात्मेति" सपरिकरमुपसंहारे कृते मुनिवचनं राजा अंगीकरोति-**एवमेवैतद्याज्ञवल्कये**ति । हे 'याज्ञवल्क्य !' एतद्भगव-तोक्तं स्वप्नादावात्मनः स्वयंज्योतिष्ट्वमेवमेव । ततः किं कृतवान् राजा इत्याह–**सोऽहं भगवते सहस्रं ददा-मी**ति । यस्त्वया एवं बोधितः 'सोऽहं' जनकः 'भगवते' गुरवे तुभ्यं विद्यानिष्क्रयार्थं 'सहस्रं ददामि' । अर्थात् गवामिति संबध्यते इत्यर्थः । "कतम आत्मा" इति पृष्टे "योऽयं विज्ञानमयः" इत्यादिना देहे-न्द्रियमनोबुद्धिप्राणाहंकृतिविलक्षणः "स्वयंज्योतिरात्मेति" प्रतिवचनेन निर्णीय मुनिरुपरतः । राजा तु काम-प्रश्नवरप्राप्त्यवष्टंभेन कामकर्मादिसकलसंसारधर्मातीतस्वरूपस्यांगिभूतस्य विजिज्ञासितस्य मोक्षस्यानिर्द्धारितत्वात् तन्निश्चयाय मुनिमपृच्छदिति दर्शयति–**अत ऊर्ध्वं विमोक्षायैव ब्रूहीतीति** । विशिष्टो मोक्षो भवत्यनेनेति विमोक्षः सम्यक् ज्ञानम् । यतः स्वयंज्योतिष्ट्वरूपं मोक्षांगमात्रमेव निर्णीतम् । अतः कारणादूर्ध्वमंगनिर्णया-

**स वाऽएषऽ एतस्मिन्त्स्वप्नान्ते । रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्प्रतिन्यायम्प्रतियोन्याद्रवति बुद्धान्तायैव स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्पुरुषऽइत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्युतऽऊर्ध्वम्विमोक्षायैव ब्रूहीति ॥ १७ ॥**

---

स वा एष एतस्मिन् स्वप्नांते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति, बुद्धान्तायैव । स यदत्र किंचित्पश्यति, अनन्वागतस्तेन भवति । असंगो ह्ययं पुरुष इति । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्रं ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति १७

---

दनंतरं ' विमोक्षायैव ' मोक्षसाधनभूताद्वितीयब्रह्मात्मज्ञानायैव ' ब्रूहि ' । यथा मोहत्रासादिजनको मृत्युरात्मनः स्वभावो न भवति तथा मामुपदिशेत्यर्थः ॥ १६ ॥

एवं राज्ञा नियुक्तो मुनिः मोहत्रासाद्यभावप्रदर्शनपुरःसरं तत्कारणभूतः कर्मलक्षणो मृत्युर्नात्मनः स्वभाव इति दर्शयितुं प्रवर्तमानस्तावत् स्वप्नस्थानाज्जागरितदेशागमनमाह—**स वा एष एतस्मिन्त्स्वप्नान्त** इति । यः ' एषः ' स्वप्ने दर्शितः स्वयंज्योतिः ' सः ' प्रकृत आत्मा ' वै ' प्रसिद्धः ' स्वप्नांते ' स्वप्नस्थाने ' रत्वा ' स्त्रीपुत्रादिसापेक्षं मनोवाक्कायचेष्टालक्षणं रमणं कृत्वा वासनामात्रसाधनः सन् ' चरित्वा ' इतस्ततः अनेकधा आचरणं कृत्वा ' दृष्ट्वैव ' ' पुण्यं च पापं चेति ' पुण्यं पुण्यफलं सुखं च पापं च पापफलं दुःखं च अनुभूयैव ' पुनः ' स्वप्नादूर्ध्वं प्रति पूर्वस्माद्गमनात् प्रातिलोम्येन न्यायं निश्चयेनागमनं यथा स्यात् तथा ' प्रतियोनि ' जागरितसर्गाय पूर्वगृहीतवासनामयं स्थानं प्रति 'आद्रवति' आगच्छतीत्यर्थः । किमर्थमित्यत आह—' बुद्धान्तायैव ' जागरणायैव जागरणानुभवायैवेत्यर्थः । अत्र दृष्ट्वैवेत्येवकारादात्मनः स्वप्ने पुण्यपापकर्तृत्वं व्यावर्तते । स्थानात् स्थानान्तरप्राप्तौ अभ्यासं दर्शयितुं पुनःशब्दप्रयोगः । प्रतिशब्दः प्रातिलोम्यवाची । जागरितात्स्वापं स्वप्नात्सुषुप्तमित्यानुलोम्यं तद्विपरीतं प्रातिलोम्यम् । निशब्दो निश्चयवाची । अयनं आयः गमनम् । इणो धातोर्गत्यर्थात् भावेऽर्थे घञि विहिते आय इति रूपम् । योनिशब्दो वासनावचनः । ननु—स्वप्ने आत्मा रत्यादिकं करोति चेत्; तत्फलेनापि सम्बध्यते । यथा जागरिते कर्म कुर्वंस्तत्फलेन सम्बध्यते इत्याशंकां वारयति—**स यदत्र किंचित्पश्यत्यनन्वागतस्तेन भवतीति** । ' सः ' आत्मा ' अत्र ' स्वप्ने ' यत् ' किमपि पुण्यपापफलं ' पश्यति ' । ' तेन ' दृष्टेनानन्वागतः अननुबद्धो भवतीत्यक्षरार्थः । स्वप्ने तावदात्मनः कर्तृत्वं न वास्तवमित्युक्तम् । अतो न स्वप्नकृतेन कर्मणा आत्मा बध्यते । यदि वस्तुतः कर्ता सन् बध्येत । तर्हि स्वप्नकृतेन अपेयपानादिना स्वात्मानं पापकारिणं मन्येत लोकः । न च कश्चिदपि तथा मन्यते । न वा स्वप्ने अहमपेयपानमकार्षमित्युक्तवंतं प्रामाणिका गर्हयन्तः तत्संसर्गं परिहरन्ति । ननु—" स्वप्ने चेन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा क्षरेद्यदि । प्रायश्चित्तं तु तस्योक्तं प्राणायामास्तु षोडश " ( ) इति वचनेन स्वप्ने रेतःस्खलननिमित्तप्रायश्चित्तविधानमात्मनः स्वप्ने कर्मसंबंधाभावे नोपपद्यत इति चेत्; शृणु, नैतत्स्वप्नसम्भोगनिमित्तं प्रायश्चित्तम् । किं तु सत्यादेव इन्द्रियलक्षणादाधारात् रेतसः क्षरणनिमित्तं तस्य जागरिते प्रपन्नत्वनिमित्तं च । अन्यथा परनारीसंगमनिमित्तमपि प्रायश्चित्तं विदध्यात्, न स्कन्ननिमित्तमात्रम् । तस्मान्न स्वप्नकृतेन कर्मणा तत्फलेन चात्मा सम्बध्यत इति तात्पर्यार्थः । कथं स्वप्नदृष्टेनात्मा अनन्वागत इत्यपेक्षायां हेतुमाह—**असंगो ह्ययं पुरुष इतीति** । ' हि ' यस्मात् ' अयं पुरुषः ' ' असंगः ' तस्मादनन्वागत इत्यर्थः । मुनिनोक्तं आत्मनः

तद्यथा महामत्स्युः । ( २ ) उभे कूलेऽअनुसञ्चरति पूर्व्वञ्चापरञ्चैवमुमे-वायम्पुरुषऽएताऽउभावुन्तावनुसुञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च ॥ १८ ॥

तद्यथाऽस्मिन्नाकाशे । श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः सꣳहृत्य पक्षौ सँल्लयायैव ध्रियतऽएवमेवायम्पुरुषऽएतस्माऽअन्ताय धावति यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्यति ॥ १९ ॥

---

तद्यथा महामत्स्य उभे कूले अनुसंचरति, पूर्वं चापरं च । एवमेवायं पुरुष एता उभावंता-वनुसंचरति, स्वप्नांतं च बुद्धांतं च ॥ १८ ॥

तद्यथा अस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रांतः संहृत्य पक्षौ सँल्लयायैव ध्रियते । एवमेवायं पुरुष एतस्मा अंताय धावति । यत्र सुप्तो न कंचन कामं कामयते । न कंचन स्वप्नं पश्यति ॥ १९ ॥

---

कर्मासंबंधं राजा अङ्गीकरोति–**एवमेवैतद्याज्ञवल्क्येति** । हे ' याज्ञवल्क्य '' एतत् ' ' भगवता ' उक्तं स्वप्ने आत्मनः कर्मासम्बद्धत्वं ' एवमेव ' इत्यङ्गीकृतं राज्ञा इत्यर्थः । मुनिनिरूपितेऽर्थे स्वात्मनो दार्ढ्यं सूचयन् राजा दक्षिणां प्रतिजानीते–**सोऽहं भगवते सहस्रं ददामीति** । उक्तार्थमेतत् । राजा मुनेः स्वस्मिन्नैराकांक्ष्य-शकां वारयति–**अत ऊर्ध्वं विमोक्षायैव ब्रूहीतीति** । कर्मप्रविवेकस्यापि मोक्षैकहेतुत्वात् ' विमोक्षायैव ब्रूहीति ' पृष्टवानित्यर्थः ॥ १७ ॥

एवं " स वाऽएषऽएतस्मिन् स्वप्नांते "–( श. प. १४ । ४ । १ । १७ ) इत्यनया कण्डिकया स्वतंत्रः ज्योतिरात्मा अवस्थाद्वयेऽपि कामकर्मप्रयुक्तस्थानद्वयसंचरणसंसारधर्मैरसंस्पृष्टोऽवशीकृतोऽसंगत्वादिति प्रतिपादि-तम् । तत्र संचरन्नपि कथं तेन न वशीक्रियते ? इत्यत्र दृष्टांत उच्यते । यद्वा स्वप्नांतबुद्धांतात्मकावस्था-द्वयस्य मिथो व्यभिचारात् तदनुस्यूतस्यात्मनः तद्विलक्षणत्वं तद्गतकामकर्मात्मकात् असंगान्मृत्योर्विविक्तत्वं च यद्-र्शितम्, तत्रेदानीं दृष्टांतमाह–**तद्यथा महामत्स्य** इति । तत्तत्र एतस्मिन्नुक्ते ' तद्यत् ' प्रसिद्धमिति वा ' यथा ' लोके ' महामत्स्यः ' महांश्चासौ मत्स्यश्चेति महामत्स्यो नादेयस्रोतसा अप्रकंप्यः अवशीकृतो मत्स्योऽत्र दृष्टांतः । महच्छब्दविशेषणेन तादृग्रूपस्य विवक्षितत्वात् । तथा च यथा स मत्स्यः नद्याः 'पूर्वमपरं' चेत्युभे 'कूले' तीरे तटौ ' अनु ' क्रमेण ' संचरति ' । स्रोतश्च विष्टंभयन् स्वच्छंदचारी तटाभ्यां भिन्न एव सन् संचरतीत्यर्थः ॥

उक्ते दृष्टांते दार्ष्टांतिकं योजयति–**एवमेवायं पुरुष एता उभावंतावनुसंचरतीति** । यथा अयं दृष्टांतः ' एवमेवायं पुरुषः ' ' स्वप्नांतं च ' स्वप्नं ' बुद्धांतं च ' जागरितं च इत्येतौ ' उभावंतौ ' ' अनु ' क्रमेण ' संचरति ' । अतः अवस्थाद्वयेऽपि उक्तरूप एवात्मेत्यर्थः । अतः अस्यात्मनः संसारित्वमाविद्यकमेव न स्वतः । तस्यां निवृत्तायां तु स्वतःसिद्धैव तस्य मुक्तिरिति " स वा अयं पुरुषो जायमानः "–( श. प. १४ । ४ । १ । ८ ) इत्यारभ्य महामत्स्यवाक्यांतस्य ग्रन्थस्य समुदायार्थः ॥ १८ ॥

एवं महामत्स्यदृष्टांतोपन्यासेनावस्थाद्वयेऽपि यद्यपि कार्यकरणादिभ्यो व्यतिरिक्तं शुद्धबुद्धमुक्तस्वभावं आत्म-स्वरूपं दर्शितम्, तथाऽपि एकैकस्मिन् वाक्ये एकैकव्यतिरेकस्यैव प्रदर्शनात् न पुंजीकृत्य तथाविधमात्म-

ता वाऽअस्यैताः । (०) हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाऽअथ यत्रैनङ्घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्त्तमिव पतति यदेव जाग्रद्भयम्पश्यति तदत्राविद्यया भयम्मन्यतेऽथ यत्र राजेव देवऽइवाहमेवेदꣳ सर्व्वमस्मीति मन्यते सोऽस्य परमो लोकोऽथ यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्यति ॥ २० ॥

---

ता वा अस्यैता हिता नाम नाड्यः । यथा केशः सहस्रधा भिन्नः तावताऽणिम्ना तिष्ठंति । शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः । अथ यत्रैनं घ्नंतीव जिनंतीव हस्तीव विच्छाययति गर्तमिव पतति । यदेव जाग्रद्भयं पश्यति । तदत्राविद्यया भयं मन्यते । अथ यत्र राजेव देव इवाहमेवेदं सर्वमस्मीति मन्यते । सोऽस्य परमो लोकः । अथ यत्र सुप्तो न कंचन कामं कामयते । न कंचन स्वप्नं पश्यति ॥ २० ॥

---

स्वरूपं दर्शितम् । अतः सुषुप्तौ तथाविधमात्मस्वरूपं सकृदेव सुखं प्रतिपत्तुं शक्यमिति " तद्वा अस्यैतदात्मकामम् "–इत्यादिना तथा दर्शयितुं तथाविधसुषुप्तिप्राप्तौ दृष्टांतत्वेन श्येनवाक्यं प्रवर्तत इति श्रीमतां शंकराचार्याणां अवतारिका । वार्तिककृदवतारिका तु एवं स्वप्नबुद्धांतयोः संचरत आत्मनः संसारविलक्षणत्वेन महामत्स्यदृष्टांत उक्तः । इदानीं सुषुप्तावपि तद्विलक्षणत्वं दर्शयितुं श्येनादिदृष्टांतमाह–**तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो** वेति । ' श्येनः ' महाकायो मन्दवेगः पक्षिविशेषः । ' सुपर्णस्तु ' वेगवत्तरः अल्पविग्रहः । तथा च तत्प्रसिद्धं निदर्शनम् । ' यथा ' लोकेऽस्मिन् प्रसिद्धे भौतिके ' आकाशे ' ' श्येनो वा सुपर्णो वा ' पक्षी ' विपरिपत्य ' विविधं परिपतनं कृत्वा भक्षणादानार्थमनेकशो श्रांत्वा ' श्रांतः ' परिपतनलक्षणेन कर्मणा खिन्नः सन् ' पक्षौ संहत्य ' संगमय्य सम्प्रसार्य पक्षयोः स्वनीडगमनाभिमुख्यमापाद्य ' संल्लयायैव ' नीडायैव ' ध्रियते ' स्वात्मनैव स्वयं धार्यत इत्यर्थः । सम्यक् लीयते अस्मिन्निति सल्लयो नीडः तस्मै । दार्ष्टांतिकमाह–**एवमेवायं पुरुष** इति । यथा अयं दृष्टांतः ' एवमेवायं पुरुषः ' आत्मा जाग्रत्स्वप्नयोः परिभ्रमणेन श्रांतः सन् तच्छ्रमस्य हानार्थं ' एतस्मै ' प्रसिद्धायांताय जाग्रत्स्वप्नयोरंतोऽवसानं यस्मिन् ज्ञाते ब्रह्मणि सोऽन्तः तस्मै ' अंताय ' अज्ञातब्रह्मलक्षणस्वनीडाय धावतीत्यर्थः । अन्तशब्दस्य यथोक्तब्रह्मविषयत्वं परिशेषयितुं विशेषणद्वयमाह–**यत्र सुप्तो न कञ्चन कामं कामयत** इति । ' यत्र ' यस्मिन् अन्ते ' सुप्तः ' पुमान् ' कञ्चन ' कमपि काममभिलाषगोचरं, ' न कामयते ' ' न कञ्चन स्वप्नं ' च ' पश्यति ' । सोऽन्तशब्दवाच्यः । तस्मै अंताय धावतीत्यन्वयः ॥ १९ ॥

ननु–जाग्रत्स्वप्नोपाध्यपगमेन सुषुप्तिगतस्याप्यात्मनो न ब्रह्मैकत्वं तत्रापि भेदहेतोरविद्यायाः सत्त्वात् इत्याशंक्य न तावदविद्या आत्मनः स्वभावः, तथा सति चैतन्यवत् तदनिवृत्तेरमोक्षापत्तेः । अस्वभावत्वे तु कामकर्मादिवत् तन्निवृत्तेर्मोक्षं उपपद्यते, इति विचारपुरःसरं अस्वभावत्वकथनद्वारा विद्याकामकर्मादिहीनतया निरूपितात्मस्वरूपस्य प्रत्यक्षेण प्रदर्शनेच्छया उत्तरा कण्डिका प्रवर्तते–**ता वाऽअस्यैता हिता नाम नाड्य** इति । याः पूर्वं प्रकृताः ' ताः ' ' वै ' प्रसिद्धाः ' अस्य ' शिरःपाण्यादिलक्षणस्य संघातस्य ' हिताः ' इत्येवं नामवत्यः

'नाड्यः' शिराः। 'यथा' लोके 'केशः' वालः 'सहस्रधा' भिन्नः सन् यावत्परिमाणो भवति। 'तावता' तावत्परिमाणेन 'अणिम्ना' अणुत्वेन तिष्ठन्ति। अर्थात् हृदये इति गम्यते। "हृदयात् ऊर्ध्वा नाड्युच्चरति" (श.प. १४।६।११।३)इति नाडीनां हृदयात् विप्रसृतत्वश्रवणादित्यर्थः। एताश्च सूक्ष्मा नाड्यो धातुवैषम्यवशात् भुक्तान्नरसस्य नानाविधैः परिणामैः पूर्यन्ते। तासु चैवंविधासु सकलदेहव्यापिनीषु प्रत्यगात्मोपाधिभूतं जाग्रद्दृष्टपदार्थवासनाश्रयं स्फटिकमणिवत्स्वच्छं लिंगं तिष्ठतीत्यभिप्रेत्याह—**शुक्लस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णा** इति। षष्ठ्यस्तृतीयार्थे। शुक्लेन पूर्णा इत्येवं प्रत्येकं सम्बध्यते। श्लेष्मबाहुल्ये वातपित्तयोर्गुणत्वेन संसर्गात् भुक्तान्नरसो नाडीस्थः श्वेतो भवति। वातभूयस्त्वे सति इतरयोर्गुणत्वात् नाडीस्थोऽन्नरसो नीलो भवति। पित्तबाहुल्यादितरयोः उपसर्जनत्वे सति नाडीस्थो रसः पिंगलो भवति। वातश्लेष्माधिक्येन पित्ते मन्दे सति नाडीस्थोऽन्नरसो हरितो भवति। तेषां च धातूनां साम्ये नाडीस्थोऽन्नरसः अत्यन्तं लोहितो भवति। एवंविधान्नरसव्याप्तानां नाडीनामपि तादृशा वर्णा जायन्ते। तदुक्तं सुश्रुते—"अरुणाः शिरा वातवहा नीलाः पित्तवहाः शिराः। असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः स्मृताः" ( ) इत्यादि। तथा च—तासु नाडीषु पुरुषस्य स्वापकाले धर्मादिनिमित्तवशात् पूर्वोक्तं लिंगं स्वगतचिदाभाससहितं मिथ्यैव नानाकारं अवभासत इति भावः। भवत्वेवं, यथोक्तासु नाडीषु यथोक्तस्य लिंगस्यावस्थितिः, कथमेतावता कार्यद्वारा अविद्यासिद्धिरित्याकांक्षायामाह—**अथ यत्रैनं घ्नन्तीव जिनंतीवेति**। 'अथ' मूलाविद्याकार्यत्वात् अविद्यात्मके पूर्वोक्ते लिङ्गे प्रागुक्तनाडीषु व्यवतिष्ठमाने सति 'यत्र' यस्मिन् स्वप्नकाले 'एनं' स्वप्नदृशं केचन शत्रवः अन्ये वा तस्करादयः 'घ्नन्तीव' अन्ये केचित् 'जिनंतीव' वशीकुर्वंतीव दासादिरूपेण। कदाचिदेनं 'हस्ती' 'विच्छाययतीव' विद्रावयतीवेति यावत्। "विच्छ गतौ"—(धा. पा. तु. प. १४२)। "गुपूधूपविच्छपणिपनिभ्य आयः"—(पा. सू. ३।१।२८) इति स्वार्थे आयः प्रत्ययः। तथा 'गर्तं' जीर्णकूपादिकं प्रति 'पततीव'। वस्तुतो हननादिकारकाभावेऽपि मृषैव स्वप्नद्रष्टुः एवंविषयो वासनानिमित्तः प्रत्ययः अविद्याख्यः जायते। सर्वत्र इवशब्दप्रयोगादित्यर्थः। निकृष्टाधर्मोद्भासितांतःकरणवृत्त्याश्रयवासनावशाद्दुःखात्मक एवंविधः प्रतिभासो भवतीति भावः। एवं स्वप्नस्य मिथ्यात्ववर्णने को हेतुरित्यपेक्षायामाह—**यदेव जाग्रद्रूपं पश्यतीति**। 'यदेव' जागरितः 'भयं' भयहेतुं हस्त्यादिकं 'पश्यति'। तदेव भयकारणम् अत्रास्मिन् स्वप्ने 'अविद्यया' वासनात्मिकया मृषैवोद्भूतया आत्मा मन्यते 'पश्यति'। अतो मृषैव स्वप्न इत्यर्थः। एतेन वाक्येन कार्यद्वारा अधर्मसहकारिका अनात्मस्वभावा अविद्या दर्शिता। यतो यदा कदाचित् विद्यायां तिरोधीयमानायां अविद्यायां चोत्कृष्यमाणायामेव घ्नन्तीवेत्यादिनोक्तं प्रत्यक्षत उपलभ्यत इति। इदानीं धर्मसहकारिकां च तां शुभवासनात्मिकां अनात्मभूतामविद्यां तत्कार्यप्रदर्शनद्वारा निरूपयति—**अथ यत्र राजेव देव इवेति**। 'अथ' अविद्यायामपकृष्यमाणायां विद्यायां उत्कृष्यमाणायां सत्यां 'यत्र' स्वप्नकाले 'राजेव' 'देव इव' स्वात्मानं 'मन्यते' पश्यतीत्यन्वयः। यदा जागरे राज्ये अभिषिक्तो राजाऽस्मीत्यभिमानवान् भवति। तदा तद्वासनावासितः स्वप्नेऽपि राजाऽहमस्मीति स्वात्मानं मन्यते। तथा जागरे देवादिविषयोपास्तिरूपा अविद्या अस्य द्रष्टुर्जाता। तदा तद्वासनावासिततया देवोऽहमस्मीति स्वप्नहेतुकर्मोद्भवे मन्यत इत्यर्थः। एतदपि दर्शनं मृषैव। इवशब्दप्रयोगादित्यवगन्तव्यम्। इदानीं सत्ये एवात्मनि विद्योत्कर्षवशात् अविद्याया विनश्यमानत्वादपि तस्या अनात्मस्वभावतेत्यभिप्रेत्य आत्मविद्योत्कर्षवता सर्वात्मभावलक्षणं मोक्षफलं आत्मस्वरूपमपि स्वप्ने प्रत्यक्षतः अनुभूयत इत्याह—**अहमेवेदं सर्वमस्मीति मन्यत** इति। 'अहमेव' 'इदं सर्वं' सर्वात्मकं ब्रह्म। न मत्तः अन्यदिति दर्शनेन यदा जागरे आत्मा ध्वस्तात्ममोहतत्कार्यो भवति। तदा स्वप्नेऽपीदं सर्वमहमेव चिन्मात्रम्। न तु मदतिरेकेण अस्ति किंचिदिति 'मन्यते' जानाति। 'सः' सर्वात्मभावः अस्यात्मनः पूर्वोक्तान् लोकानपेक्ष्य 'परमः'

तद्वाऽअस्यैतत् । ( दा ) आत्मकाममाप्तकाममकामꣳ रूपन्तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यङ्किञ्चन वेद नान्तरमेवमेवायꣳ शारीरऽआत्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यङ्किञ्चन वेद नान्तरम् ॥ २१ ॥

---

तद्वा अस्यैतदात्मकाममाप्तकाममकामं रूपम् । तत् यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नांतरम् । एवमेव अयं शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ॥ २१ ॥

---

पूर्णः ' लोकः ' विद्यया संपादितः । इदं तु दर्शनं परमार्थविषयमेव, न तु आविद्यकम् । पूर्ववदत्र इवशब्द-प्रयोगाभावात् । अन्यत्सर्वमाविद्यकम । तत्र इवशब्दप्रयोगादित्यर्थः । उक्तस्य लोकस्य यथोक्तविषयत्वं दर्शयितुं विशेषणद्वयमाह-**अथ यत्र सुप्तो न कञ्चन कामं कामयत** इत्यादिना । अक्षरार्थः पूर्ववत् ॥ २० ॥

एवं अविद्या आत्मस्वभावो न भवतीति निर्णीतम् । यः पुनरेकत्र पुंजीकृत्य नित्यशुद्धत्वादिलक्षण आत्मा दर्शयितुमिष्टः स पूर्वकण्डिकामध्ये "अहमेवेदं सर्वमस्मीति मन्यते सोऽस्य परमो लोकः" इत्यंतेन संगृहीतः । स एवेदानीं व्यक्ताविद्याविहीनां सुषुप्त्यवस्थां अवलंब्य कण्डिकाद्वयेन प्रकटीकुर्वन्नाह-**तद्वा अस्यैतदात्मकाममाप्तकाममकामं रूपमिति** । 'तदेतत्' प्रसिद्धं ' अस्य ' सर्वात्मभावमापन्नस्य आत्मनः ' रूपं ' स्वरूपमित्यन्वयः । किं तदित्यपेक्षायामाह-**आत्मकाममिति** । आत्मैव कामो यस्मिन् रूपे ' तदात्मकामं ' सुखसाक्षात्कारो हि काम्यत इति कामः, स चात्मैव, "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः ( श.प.१४बृ.उ.३।७ ) । अनेन पदेनात्मरूपं समस्तव्यस्तभावरहितं सच्चिदानंदात्मकमित्युक्तमित्यर्थः । तत एव ' आप्तकामं ' काम्यन्त इति कामाः सुखादयः । ते आप्ता यस्मिन् रूपे तदाप्तकामम् । परमानन्दरूपब्रह्मैकत्वसम्पत्तौ जागरादाविव स्वात्मव्यतिरिक्तस्य काम्यमानपदार्थजातस्याभावात् सुषुप्तावाप्तकामरूपमित्यर्थः । यत एवाप्तकाममेतद्रूपं, अत एवाकामम् कामाश्रयत्वरहितम् । कामः संकल्प इत्यत्र मनस एव तदाश्रयत्वावधारणात् नात्माश्रयत्वं कामस्येत्यर्थः । सुषुप्तौ भेदाभावादेव विशेषविज्ञानाभावः, न तु आत्मनः स्वयंज्योतिष्ट्वाभावात् । तस्मात् स्वयंज्योतीरूपस्यात्मनः सुषुप्तौ सर्वैकत्वमेव विशेषविज्ञानाभावे हेतुरिति वक्तुं तावत् दृष्टांतमाह-**तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमिति** । तत्तत्र सुषुप्तौ एकत्वे सति विशेषविज्ञानाभावे अयं दृष्टांतः । ' यथा ' लोके ' स्त्रिया ' स्त्रीगुणोपेतया ' प्रियया ' मनोहरणसमर्थया कामुक्या ' सम्परिष्वक्तः ' सम्यक् परिष्वक्तः । परिष्वंगफलं स्त्रीचिह्ने पुरुषचिह्नस्यानुप्रवेशलक्षणं व्यामिश्रीभावमापन्न इति यावत् । एवंविधसम्भोगफलं एकत्वप्राप्तिलक्षणं अनुभवन् पुमान् स्वस्मात् ' बाह्यं ' बहिर्भूतं ' किंचन ' किंचिदपि ' न वेद ' । इदं मत्तः अन्यद्वस्त्विति न जानाति । ' न ' वा ' आन्तरं ' अहं सुखी दुःखी वा इत्येवंलक्षणं ' वेद ' जानाति । परिष्वंगात्पूर्वं यथा बाह्यमांतरं च स्फुटं वेद । तथा ' परिष्वक्तो न वेद ' । सम्भोगफलप्राप्तिलक्षणैकत्वापत्तिवशादित्यर्थः । अत्र स्त्रीपुरुषयोः परिष्वंगे तत्फलरूपे अवाच्यकर्मणि तत्फलैकत्वाधीनबाह्याभ्यन्तरविज्ञानाभावे च समानेऽपि पुंसः प्राधान्यात परिष्वक्तो न वेदेति तस्य निर्देशः कृत इति भावः । दार्ष्टांतिकमाह-**एवमेवायं शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्त** इति । यथा अयं दृष्टांतः । ' एवमेव ' ' अयं शारीर आत्मा ' यो भूतमात्रासंसर्गात् सैन्धवखिल्य-

( न्त ) तद्वाऽअस्यैतत् । ( इ ) अतिच्छन्दोऽपहतपाप्माऽभयꣳ रूपमशोकान्तरमत्र पिताऽपिता भवति माताऽमाता लोकाऽअलोका देवाऽअदेवा वेदाऽअवेदा यज्ञाऽअयज्ञाऽअत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतम्पुण्येनानन्वागतम्पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥ २२ ॥

---

तद्वा अस्यैतदतिच्छन्दोऽपहतपाप्माऽभयं रूपमशोकान्तरम् । अत्र पिता अपिता भवति । माता अमाता । लोका अलोकाः । देवा अदेवाः । वेदा अवेदाः । यज्ञा अयज्ञाः । अत्र स्तेनः अस्तेनो भवति । भ्रूणहाऽभ्रूणहा । पौल्कसोऽपौल्कसः । चांडालः अचांडालः । श्रमणः अश्रमणः । तापसः अतापसः । अनन्वागतं पुण्येन । अनन्वागतं पापेन । तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति ॥ २२ ॥

---

वत् प्रविभक्तः सन् जलादौ चन्द्रप्रतिबिंबवत् इह कार्यकरणे प्रविष्ट इवासीत् । सोऽयं शारीरः क्षेत्रज्ञ आत्मा जलाद्यपगमने चन्द्रप्रतिबिंबस्य चन्द्रैकत्ववत् कार्यकरणेषु स्वकारणेषु विलीनेषु सत्सु भूतमात्रासंसर्गरहितः प्राज्ञेन निरतिशयपरिपूर्णज्ञानरूपेण परमार्थेन स्वाभाविकेन स्वेनात्मना परज्योतीरूपेणाविद्यासाक्षिणा संपरिष्वक्तः अत्यन्तमेकीभूतः सन् सर्वात्मा ‘ न बाह्यं किंचन ’ वस्त्वन्तरं स्वविलक्षणं किंचिद्वेद । ‘ नाभ्यन्तरं ’ अयमहं देवदत्तो ब्राह्मणः सुखी दुःखी वेति ‘ न वेद ’ । न विशेषतः किमपि जानातीत्यर्थः ॥ २१ ॥

एवं सुषुप्तिमुपेयुषः पुरुषस्य विशेषविज्ञानाभावे स्वाभाविकात्मैकत्वमेव हेतुः, न स्वयंज्योतिष्ट्वाभावः, इति दृष्टान्तेनोपपादनात् नात्मनः कामादिवत् स्वयंज्योतिष्ट्वमस्वभाव इति प्रासंगिकं परिसमाप्य इदानीं प्रकृतिरूपं स्पष्टीकरोति—तद्वा अस्यैतदतिच्छन्दोऽपहतपाप्माभयं रूपमशोकान्तरमिति । यस्मादयं सुषुप्तौ परमात्मना सहैक्यापत्त्या सर्वात्मा संवृत्तः । तस्मात् अस्यात्मनः तदेतत् पूर्वप्रकृतं ‘ रूपं ’ स्वरूपं ‘ वै ’ प्रसिद्धं वक्ष्यमाणलक्षण इत्यन्वयः । कीदृशं तत् ? इत्यपेक्षायां कामकर्मभयशोकहीनमिति विशेषणचतुष्टयेन विशिनष्टि—अतिच्छंद इति । छंदः कामः अतिक्रांतः अस्मादतिच्छंदः कामवर्जितमिति यावत् । छन्दःशब्दस्य गायत्र्यादिच्छन्दोविषयत्वेऽपि अत्र कामवाचित्वं छन्दःशब्दस्य बोध्यम् । “ स्वच्छन्दः ” इत्यादौ दर्शनात् । “ न कंचन कामं कामयते ” ( १९ कं. ) इति कामस्य प्रकृतत्वात् तत्प्रयोज्यकर्मवाचिपाप्मपदेन सह पाठाच्च कामविषय एव छन्दःशब्दो विवक्षितः । तस्य रूपविशेषणत्वादतिच्छन्द इति भवति । तथा ‘ अपहतपाप्म ’ अपहतः पाप्मा धर्माधर्मलक्षणो यस्मिन् रूपे तत् ‘ अपहतपाप्म ’ धर्माधर्मविवर्जितमिति यावत् । “ पाप्मभिः संसृज्यते-पाप्मनो विजहाति ”—( कं.८ ) इत्युपक्रमानुसारेण पाप्मशब्दो धर्माधर्मविषय इति बोध्यम् । तथा ‘ अभयं ’ न विद्यते भयं यत्र रूपे तदभयम् । तथा ‘ अशोकांतरमिति ’ न विद्यते शोकः अंतरे मध्ये यस्य तदशोकांतरम् । शोकशून्यमिति यावत् । सुषुप्तौ विक्षेपकाज्ञानाभावात् कूटस्थमेवात्मरूपं अवतिष्ठत इत्यर्थः । एवमाविद्यककामादिरहितमात्मस्वरूपं प्रत्यक्षतः प्रदर्श्य,

इदानीं तद्धेतुभूतकर्माख्याविद्यासम्बन्धरहितत्वमप्यात्मनः सुषुप्तौ प्रत्यक्षमित्याह—**अत्र पिताऽपिता भवतीत्यादिना** । "अतिच्छन्दोऽपहतपाप्माभयं रूपम्" इत्याद्युक्तस्यात्मरूपस्यात्र सुषुप्तिस्थाने 'पिता' जनयिताऽप्यपिता 'भवति' । तस्य हि पितृत्वं पुत्रं प्रति जनयितृत्वसम्बन्धहेतुकर्मनिमित्तम् । तेन च पुत्रसम्बन्धनिमित्तकर्मणा अयमस्मिन् काले असम्बद्ध एव । तस्मात्पितुरपि तत्रापितृत्वमेव । सामर्थ्यात् पुत्रोऽपि तत्रापुत्र इति गम्यते । उभयोर्जन्यजनकतालक्षणसम्बन्धनिमित्तकर्महेतुकं हि पितृत्वं पुत्रत्वं च । तत्कर्मातिक्रमश्च "अपहतपाप्म" इत्यत्रोक्तः । अतः पुत्रोऽपि तत्र अपुत्रो भवतीति । तथैव 'माताऽमाता' । 'लोकाः' कर्मविद्याभ्यां जिताः अजिताश्च 'अलोकाः' अस्य तत्कर्मसम्बन्धाभावात् । 'देवाः' कर्माङ्गभूताः 'अदेवाः' तत्कर्मसम्बन्धाभावात् । 'वेदाः' प्रमाणत्वेन प्रमेयत्वेन च साध्यसाधनसम्बन्धाभिधायका मन्त्रब्राह्मणलक्षणा अधीता अध्येतव्याश्चापि 'अवेदाः' सम्पद्यन्ते तस्मिन् काले । 'यज्ञाः' अग्निष्टोमादिकर्मरूपाः कृताः कर्तव्याश्च 'अयज्ञाः' । ते हि पुरुषेण सह कर्मनिमित्तमेव सम्बध्यन्ते । कर्म तु परमात्मैकत्वमापन्ने सुषुप्ते पुरुषे नास्ति तदतिक्रमस्य तत्रोक्तत्वादित्यर्थः । न केवलशुभकर्मसम्बन्धातीत आत्मा । किं तर्हि अशुभैरपि अत्यन्तघोरैः कर्मभिरसम्बद्ध एव सुषुप्तौ वर्तते इत्याह—**अत्र स्तेनोऽस्तेनो भवतीत्यादिना** । 'अत्र' सुषुप्तिस्थाने परमात्मना एकीभूतः अयमात्मा 'स्तेनोऽप्यस्तेनो भवति' । अत्र स्तेनशब्देन ब्राह्मणसुवर्णहर्ता उच्यते महापातकी । भ्रूणघ्ना सह पाठात् । षोडशमाषपरिमितं कांचनं सुवर्णं तावत् ततोऽधिकं वा ब्राह्मणस्यापहर्ता स्तेन इति यावत् । स तेन महापातकेन तस्मिन् काले विनिर्मुक्तो भवतीत्यर्थः । तथा मुख्यब्रह्महा भ्रूणहा, न प्रेरयितृनुमंत्रादिसाधारणः । तदुक्तं—"वरिष्ठो ब्रह्महा चैव भ्रूणहेत्यभिधीयते" ( ) इति । स 'भ्रूणहा' तदा 'अभ्रूणहा' भवतीत्यर्थः । न खल्वेवं केवलं आगंतुकेन घोरकर्मणा विनिर्मुक्तः । किं तर्हि—अत्यंतनिकृष्टजातिप्रापकेण सहजेनापि कर्मणा विनिर्मुक्त एवायमित्याह—**पौल्कसोऽपौल्कसश्चांडालोऽचाण्डाल इति** । शूद्रायां ब्राह्मणाज्जातो निषादः । तस्मात् क्षत्रियायां जातः पुल्कसः । पुल्कस एव पौल्कसः । स्वार्थेऽण् । तथा ब्राह्मण्यां शूद्राज्जातो जात्या चण्डालः । चण्डाल एव चाण्डालः । एतौ 'पौल्कसचाण्डालौ' तदानीं जातिनिमित्तकर्मणा असंबंधात् 'अपौल्कसः अचाण्डालश्च' भवेतामित्यर्थः । तथा श्रमणहेतुभूतैरपि कर्मभिस्तदा मुक्त इत्याह—**श्रमणोऽश्रमणस्तापसोऽतापस इति** । 'श्रमणः' परिव्राट् । स यत्कर्मनिमित्तो भवति । तेन विनिर्मुक्तत्वात् 'अश्रमणः' । तथा 'तापसः' वानप्रस्थः 'अतापसः' इत्यर्थः । अत्र परिव्राड्वानप्रस्थग्रहणं वर्णाश्रमहेतूनां सर्वेषामपि कर्मणामुपलक्षणार्थम् । इदानीं मोहोत्थानां सम्बन्धानां अनन्तत्वेन तेषां कल्पकोटिभिरपि संख्यातुमशक्यत्वात् तत्प्रापकाणां कर्मणां द्वैविध्येनोपसंहारपूर्वकं सर्वकर्मातीतत्वमाह—**अनन्वागतं पुण्येनानन्वागतं पापेनेति** । "अपहतपाप्माभयं रूपम्" इत्यनेनोपक्रांतस्यानुवर्तमानत्वात् अनन्वागतमिति रूपविषयो नपुंसकनिर्देशः । तथा च—तदात्मरूपं 'पुण्येन' शास्त्रविहितेन कर्मणा अनन्वागतमसंबद्धम् । तथा 'पापेन' विहिताकरणप्रतिषिद्धक्रियालक्षणेनापि अनन्वागतमात्मरूपमि[illegible] । ननु—तत्र सर्वपुण्यपापासम्बद्धत्वे को हेतुरित्यपेक्षायां तद्धेतुभूतकामात्यय एवेत्याह—**तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति** । 'हृदयं' पुण्डरीकाकारो मांसपिण्डः । तात्स्थ्यात् इह हृदयशब्दो बुद्धिवचनः । शोकशब्द इह कामवाची । कामः खलु इष्टप्रार्थनालक्षणः । अप्राप्तं वियुक्तं वा इष्टवस्तु उद्दिश्य संतप्यमाने पुंसि शोकत्वं प्रतिपद्यते । अतो युक्तं शोकशब्दस्य कामवाचित्वम् । "न कंचन कामं कामयते अतिच्छन्दः" इत्यादिना सह पाठाच्च । तथा च—'हि' यस्मात् "अतिच्छन्दः" इत्यादिवाक्योक्तरूपः अयमात्मा 'तदा' तस्मिन् सुषुप्तिकाले 'हृदयस्य' हृदयस्थाया बुद्धेः सम्बन्धिनः 'सर्वान् शोकान्' कामान् 'तीर्णः' अतिक्रांतो

यद्वै तन्न पश्यति । पश्यन्वै तद्द्रष्टव्यन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥ २३ ॥

( ख ) यद्वै तन्न जिघ्रति । जिघ्रन्वै तद्घ्रातव्यन्न जिघ्रति न हि

---

यद्वै तन्न पश्यति । पश्यन्वै तद्द्रष्टव्यं न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यद्विभक्तं यत् पश्येत् ॥ २३ ॥

यद्वै तन्न जिघ्रति । जिघ्रन्वै तत् घ्रातव्यं न जिघ्रति । न हि घ्रातुर्घ्राणात् विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यत् विभक्तं यज्जिघ्रेत् ॥ २४ ॥

---

भवति । " सता सौम्य तदा संपन्नो भवति " (       ) इति छांदोग्ये सुषुप्तौ परमात्मैक्यापत्तेरित्युक्तत्वात् कामाश्रयाया बुद्धेः सुषुप्तावभावाचेत्यर्थः । ततश्च सुषुप्तौ कामनिवृत्त्या तत्कार्यभूतसकलकर्मनिवृत्तेः युक्तं तत्रात्मनः पुण्यपापाभ्यामनन्वागतत्वमित्यर्थः ॥ २२ ॥

कामकर्मादिवत् सुषुप्तौ विशेषविज्ञानाभावात् न स्वयंज्योतिष्ट्वमात्मनः स्वभाव इति चोदिते स्त्रीपुंसपरिष्वंगदृष्टांतेनैकत्वापत्तिवशाद्विज्ञानाभावो न स्वयं ज्योतिष्ट्वाभावादिति समाधिरुक्तः । तत्र चार्थात् विशेषाभावादेव विशेषविज्ञानाभाव इत्यपि सूचितम् । तदानीं चोद्यानुवादपूर्वकमतितरां स्पष्टीकर्तुं प्रवर्तते—**यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यती**त्यादिना । ' वै ' इत्यवधारणार्थः । तत्तत्र सुषुप्तौ आत्मानैव पश्यतीति यज्जानीषे तत्तथा माऽमंस्थाः । यतः तत्तत्र स्वरूपचैतन्येन सर्वसाक्षित्वात् पश्यन्नेव सन् द्रष्टव्यं पदार्थजातं ' **न** पश्यतीति ' अभिसंभवतीति स्वरूपदर्शनं विशेषादर्शनं च प्रतिज्ञायत इत्यर्थः । ' पश्यन्नेवास्ते ' इत्यस्यां प्राथमिकप्रतिज्ञायां तावत् हेतुमाह- **न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते** इति । ' हि ' हेतौ । द्रष्टुर्या सर्वसाक्षिभूता ' दृष्टिः ' । यद्वा, ' द्रष्टुः ' कूटस्थचिन्मात्रस्य स्वरूपभूता या दृष्टिस्तस्याः ' हि ' यस्मात् ' विपरिलोपः ' विनाशौ नैव ' विद्यते ' । अग्निस्वभावभूतौष्ण्यस्येव । तस्मात् तत् जाग्रत्स्वप्नवत् सुषुप्तावपि आत्मा स्वयंज्योतिरेवेत्यर्थः । ननु—दृष्टेः कर्ता हि द्रष्टा । यतः अनित्यक्रियाकर्तृविषय एव तृच्प्रत्ययांतस्य शब्दस्य प्रयोगो दृष्टः । यथा छेत्ता भेत्ता गन्तेति । तथा अत्रापि अनित्यक्रियाकर्तृविषय एव तृजन्तशब्दप्रयोगः । अतो न नित्यदृष्टिस्वरूपो द्रष्टेति चेत् ; नैष दोषः । सविता प्रकाशयितेत्यादौ प्रकाशरूपेऽपि सवितरि तृचो दर्शनात् । तस्मान्नित्यदृष्टिस्वरूप एवात्मेति सिद्धम् । आत्मदृष्टेर्नित्यत्वं साधयति-**अविनाशित्वा**दिति । अविनाशित्वमविपरिणामित्वम् । तस्माद्विनाशहेतुभूतविपरिणामहीनत्वादित्यर्थः । विशेषविज्ञानाभावप्रतिज्ञायां हेतुमाह—**न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्ये**दिति । तत्तत्र द्वितीयं प्रमातृस्वरूपं सामासांत.करणलक्षणं न त्वस्ति । तत आत्मस्वरूपादन्यच्चक्षुरादिलक्षणं न त्वस्ति । ' ततो विभक्तं ' रूपादिलक्षणं च न त्वस्ति । यत्पश्येत्प्रमाता प्रमाणेनेति योजना । तत इत्यपादानं सर्वत्रानुषंजनीयम् । तथा च स्वरूपचैतन्यस्य सत्त्वेऽपि प्रमातृकरणविषयकृतत्वात् विशेषदृष्टेः तेषां च सुषुप्तावभावात् तत्कार्यविशेषदृष्टेरपि अभावः । अतो विशेषविज्ञानाभावो न आत्मनः प्रकाशाभावकृत इति स्वयंज्योतिष्ट्वं तस्यावधार्यत इत्यर्थः ॥ २३ ॥

यद्वै तन्न जिघ्रति ॥ २४ ॥

घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततो-ऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥

( य ) यद्वै तन्न रसयति । विजानन्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥

( य ) यद्वै तन्न वदति । वदन्वै तद्वक्तव्यन्न वदति न हि वक्तु र्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥

( य ) यद्वै तन्न शृणोति । शृण्वन्वै तच्छ्रोतव्यन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततो-ऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥

( य ) यद्वै तन्न मनुते । मन्वानो वै तन्मन्तव्यन्न मनुते न हि मन्तु-र्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्वि-भक्तं यन्मन्वीत ॥ २८ ॥

---

यद्वै तन्न रसयति । विजानन्वै तद्रसं न रसयति । न हि रसयितू रसाद्विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यद्विभक्तं यत् रसयेत् ॥ २५ ॥

यद्वै तन्न वदति । वदन् वै तत् वक्तव्यं न वदति । न हि वक्तुर्वक्तेः विपरिलोपो विद्यते, अवि-नाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यद्विभक्तं यद्वदेत् ॥ २६ ॥

यद्वै तन्न शृणोति । शृण्वन्वै तत् श्रोतव्यं न शृणोति । न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यत् विभक्तं यत् शृणुयात् ॥ २७ ॥

यत् वै तन्न मनुते । मन्वानो वै तन्मन्तव्यं न मनुते । न हि मन्तुर्मतेर्विपरिलोपो विद्यते, अवि-नाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यद्विभक्तं यत् मन्वीत ॥ २८ ॥

---

यद्वै तन्न रसयति ॥ २५ ॥

यद्वै तन्न वदति ॥ २६ ॥

यद्वै तन्न शृणोति ॥ २७ ॥

यद्वै तन्न मनुते ॥ २८ ॥

यद्वै तन्न स्पृशति । स्पृशन्वै तत्स्प्रष्टव्यन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥

( द्य ) यद्वै तन्न विजानाति । विजानन्वै तद्विज्ञेयन्न विजानाति न हि विज्ञातुर्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

( त्स ) सलिलऽएको * द्रष्टाऽद्वैतो भवति । ( त्ये ) एष ब्रह्मलोकः सम्राडिति हैनमुवाचैषाऽस्य परमा सम्पदेषोऽस्य परमो लोकऽएषोऽस्य परमऽआनन्दऽएतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३१ ॥

---

यत् वै तन्न स्पृशति । स्पृशन् वै तत् स्प्रष्टव्यं न स्पृशति । न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यद्विभक्तं यत् स्पृशेत् ॥ २९ ॥

यत् वै तत् न विजानाति । विजानन् वै तत् विज्ञेयं न विजानाति । न हि विज्ञातुर्विज्ञानात् विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततः अन्यत् विभक्तं यद्विजानीयात् ॥ ३० ॥

सलिल एको * द्रष्टा अद्वैतो भवति । एष ब्रह्मलोकः सम्राट्, इति हैनमुवाच । एषा अस्य परमा संपत् । एषोऽस्य परमो लोकः । एषोऽस्य परम आनंदः । एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३१ ॥

---

यद्वै तन्न स्पृशति ॥ २९ ॥

यद्वै तन्न विजानाति । इत्येते पर्यायाः पूर्वेण समानार्थाः । यद्यपि मननविज्ञानयोश्चक्षुरादिसहकारित्वात् ततो न पृथक् ग्रहणार्हता । तथाऽपि चक्षुरादिनिरपेक्षतयाऽपि भूतभविष्यद्वर्तमानविषयव्यापारः स्मरणादिरूपो दृष्ट इति तयोः पृथग्ग्रहणमिति बोध्यम् ॥ ३० ॥

एवं "यद्वै तन्न पश्यति" इत्यादिविस्तरेण उक्तरूपस्य प्राज्ञेनात्मना संपरिष्वक्तस्यात्मनः स्वरूपोपसंहारार्थमाह— सलिलऽएको द्रष्टाऽद्वैतो भवतीति । सलिलम् इव सलिलः सलिलवच्छुद्ध इति यावत् । अनेन विजातीयसंबंधशून्यत्वमुक्तम् । सजातीयभेदव्युदासायैक इति विशेषणम् । न तु एकसंख्यावैशिष्ट्यार्थम् । "साक्षी चेता केवलो निर्गुणश्च" (          ) इति अगुणत्वश्रुतिविरोधात् । यस्मात्सजातीयविजातीयभावस्य द्रष्टव्यस्याभावः, तस्मादकारकस्वभावत्वात् अद्रष्टेति पूर्णात्मकज्योतिरभिधीयते । द्रष्टेति पदच्छेदे उक्तविशेषणद्वयोपलक्षितस्यात्मनो जडत्वशंकावारणार्थं 'द्रष्टेति' विशेषणम् । सजातीयविजातीयभेदरहितत्वेऽपि धर्मधर्मिभावलक्षणः स्वगतो भेदः स्यात् इत्याशंक्य तन्निवृत्त्यर्थं 'अद्वैतः' इति विशेषणम् । द्विधा इतं द्वीतं द्वीतस्य भावो द्वैतं तन्न विद्यते यस्मिन् स 'अद्वैतः' एकरस इत्यर्थः । एतेनात्मनो भिन्नाभिन्नत्वसंभावनाऽपि अप्रामाणिकीति

---

* अत्र "एकोऽद्रष्टा" इत्येवमपि पदच्छेदो मन्तव्यो भाष्यानुरोधात् ।

**स यो मनुष्याणाᳬं राद्धः सुमृद्धो भवति । ( त्य ) अन्येषामुधिपतिः सुर्व्वैर्म्मानुष्यकैः कामैः सुम्पन्नतमः स मनुष्याणाम्परमुऽआनन्दुः ॥ ३२ ॥**

---

स यो मनुष्याणां राद्धः समृद्धो भवति, अन्येषामधिपतिः सर्वैर्मानुष्यकैः कामैः संपन्नतमः । स मनुष्याणां परम आनंदः ॥ ३२ ॥

---

दर्शितम् । इदानीमत ऊर्ध्वं विमोक्षायैव ब्रूहीति यत्पुनः पुनः पृष्टं, तस्योत्तरमुक्तवान्मुनिः, इति श्रुतिरस्मान्प्रत्याह—**एष ब्रह्मलोकः सम्राडिति हैनमुवाचेति** । आत्मनः अत्यन्तं सन्निहितत्वात् 'एषः' इति निर्देशः । 'एषः' सुषुप्त्यवस्थामापन्नः प्रत्यगात्मा 'ब्रह्मलोकः' । लोकनं लोकः ब्रह्मैव लोको 'ब्रह्मलोकः' । स्वयंज्योतीरूपं ब्रह्मैवेति यावत् । अत्र षष्ठीतत्पुरुषविग्रहे अद्वैतश्रुतिविरोध इति द्रष्टव्यम् । हे 'सम्राट्'! राजन्निति संबोध्य 'इति' एवमुक्तप्रकारेण 'ह' किल 'एनं' राजानं जनकं उवाचोपदिष्टवान्, याज्ञवल्क्य इति शेषः । कथं पुनरुवाचेत्यपेक्षायामाह—**एषाऽस्य परमा संपदिति** । 'एषा अस्य' विज्ञानमयस्य 'परमा' उत्कृष्टा 'संपत्' विभूतिः अकृतकत्वात् । अन्यास्तु विपरीताः हेया इत्यर्थः । 'एषः' एव यथोक्तः 'अस्य' विज्ञानमयस्य सुषुप्तौ परमात्मैक्यमापन्नस्य 'परमः' मोक्षलक्षणो लोकः । स्वयंज्योतिःस्वभावाल्लोकशब्दस्य मुख्यवृत्तिविषयः स्वाभाविकः । अन्यस्तु साध्यत्वात्क्षयिष्णुः । लोकशब्दस्यामुख्यवृत्तिविषयो गौणो हेय इत्यर्थः । 'एषः' एव यथोक्तः 'अस्य' सुषुप्तस्य 'परमः' स्वरूपानुभवलक्षणो मुख्यो निरतिशयः 'आनंदः' पूर्णानन्दः विषयेन्द्रियसंबन्धजनिता आनंदाः परिच्छिन्ना अमुख्याः अपरमाः हेया इत्यर्थः । किं च—वस्तुतो नास्त्येव आत्मसुखातिरिक्तं वैषयिकमपि सुखं इत्याह—**एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति** । 'एतस्यैव' ब्रह्मानंदस्य 'मात्रां' कलां पूर्णस्याप्यानंदस्य अविद्योत्थानेकबुद्धिवृत्त्यवच्छेदवशात् मात्राशब्दार्हां विषयेन्द्रियसंबन्धकाले विभाव्यमानां 'अन्यानि' अविद्यया ब्रह्मणोऽन्यत्वेन परिकल्पितानि ब्रह्मादिस्तंबपर्यंतानि 'भूतानि' 'उपजीवन्ति' उपभुंजते । तावन्मात्रेणैव आनंदीनि भवन्तीत्यर्थः ॥ ३१ ॥

यथा लोके लवणावयवैर्लवणाब्धिं लोको बोधयति । तथा मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तं उत्तरोत्तरशतगुणितातिशयशालिनां परब्रह्मानन्दावयवानां प्रतिपादनद्वारेण अवयविनं निवृत्तगुणितभेदं अनतिशयं ब्रह्मानन्दं दर्शयितुं उत्तरश्रुतिः प्रवर्तते । तत्र तावत् परमकाष्ठां गतस्य मानुषानन्दस्य स्वरूपमाह—**स यो मनुष्याणां राद्धः समृद्धो भवतीति** । 'मनुष्याणां' मध्ये 'सः यः' कश्चित् भोगक्षमावयवैः आध्यात्मिकैः 'राद्धः' संसिद्धः इति अन्तःसाधनसम्पत्तिरुच्यते । संसिद्धाऽप्यन्तःसाधनसम्पत् बाह्यसाधनसम्पदभावे भोगासम्भवान्न फलवतीत्यत उच्यते—**समृद्ध** इति । 'समृद्धः' बाह्योपभोगसाधनैः स्रक्चन्दनालंकारादिभिः सम्पन्न इति यावत् । एतदुभयसाधनसम्पन्नत्वेऽपि आधिपत्यं विना न निरंकुशो भोगः स्यात् इत्यतो विशेषणम्—**अन्येषामधिपतिरिति** । 'अन्येषां' समानजातीयानां स्वतन्त्रः 'अधिपतिः' । न माण्डलिक इति यावत् । ननु—बाह्यसाधनसम्पत्तिं वदन् समृद्धपदं दैवसाधनस्यापि बाह्यत्वाविशेषात् तत्संपत्तिमपि वदत्येव संकोचकाभावात् । अतो मानुषानन्दस्यापि गन्धर्वानन्दादिष्वन्तर्भावोपपत्तेः अस्य पृथग्ग्रहणं अनर्थकमितीमामाशंकां मानुष्यकैरित्यनेन परिहरंती श्रुतिः पूर्वोक्तविशेषणसम्पत्तिं स्पष्टयति—**सर्वैर्मानुष्यकैः कामैः संपन्नतम** इति । मनुष्येषु भवैः 'मानुष्यकैः' कामैर्भोगोपकरणैः सर्वैरसंकुचितैः 'सम्पन्नतमः' अतिशयेन सम्पन्नः सम्पन्नतमः

(न्द्रोऽथ) अथ ये शतम्मनुष्याणामानन्दाः । सऽएकः पितृणाञ्जितलोकानामानन्दः ॥ ३३ ॥

(न्द्रोऽथ) अथ ये शतम्पितृणाञ्जितलोकानामानन्दाः । सऽएकः कर्म्मदेवानामानन्दो ये कर्म्मणा देवत्वमभिसम्पद्यन्ते ॥ ३४ ॥

(न्तेऽथ) अथ ये शतङ्कर्म्मदेवानामानन्दाः । सऽएकऽआजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३५ ॥

---

अथ ये शतं मनुष्याणामानन्दाः, स एकः पितॄणां जितलोकानामानन्दः ॥ ३३ ॥

अथ ये शतं पितॄणां जितलोकानामानन्दाः, स एकः कर्मदेवानामानंदः । ये कर्मणा देवत्वमभिसंपद्यन्ते ॥ ३४ ॥

अथ ये शतं कर्मदेवानामानन्दाः, स एक आजानदेवानामानन्दः । यश्च श्रोत्रियः अवृजिनः अकामहतः ॥ ३५ ॥

---

युधिष्ठिरादिसदृशः । 'सः' 'मनुष्याणां परम आनन्दः' । आनन्दानंदिनोरभेदात् एवंविधः पुमान् आनन्द इति निर्देश इत्यर्थः ॥ ३२ ॥

एवंविधमनुष्यानंदैः शतगुणितैः समानः पितृलोकवासिनां एक आनन्द इत्याह-**अथ ये शतं मनुष्याणामानंदा** इति । आनन्दांतरोपक्रमार्थः अथशब्दः । 'मनुष्याणां' 'ये' उक्तप्रकाराः 'शतं' शतगुणिताः आनन्दभेदाः 'स एकः' एवानन्दः 'पितॄणां' दक्षिणमार्गानुयायिनां इत्यन्वयः । के ते पितर इत्यतस्तान्विशिनष्टि-**जितलोकानामिति** । श्राद्धपिंडपितृयज्ञादिकर्मभिः पितृतोषणद्वारा जितो लोको यैः ते । यद्वा जिता लोका येषामिति जितलोकाः, तेषां पितॄणामित्यर्थः ॥ ३३ ॥

तथा पितृलोकानन्दोऽपि शतगुणीकृत एक एव कर्मदेवानन्द इत्याह-**अथ ये शतं पितॄणां जितलोकानामानन्दा** इति । व्याख्यानं प्राग्वत् । के कर्मदेवा इत्यपेक्षायामाह-**ये कर्मणा देवत्वमभिसम्पद्यन्त** इति । 'ये' अग्निहोत्रादिश्रौतेन 'कर्मणा' 'देवत्वमभिसम्पद्यन्ते' देवलोकं प्राप्नुवन्ति ते कर्मदेवा इत्यर्थः ॥ ३४ ॥

तथा कर्मदेवानामानन्दः शतगुणीकृतः सन् स्वाभाविकदेवानामेक आनन्द इत्याह-**अथ ये शतं कर्मदेवानामानन्दा** इति । मनुष्यादिसर्गस्य प्रकृतेः प्रागेव देवत्वं प्राप्ताः 'ते' आजानदेवा उच्यंते । ते तु सूक्ष्मव्यापिशरीरधारिणो महात्मान इत्यर्थः । इदानीमाजानदेवेषूक्त आनंदः तदुपास्त्यधिकारिण आजानदेवानन्दात् प्राक्तनानन्देषु जातवैराग्यस्य आजानदेवाद्यानंदेषु सतृष्णस्य मनुष्यदेह एव जीवतः श्रोत्रियस्यापि समान एवेत्याह-**यश्च श्रोत्रियोऽवृजिनोऽकामहत** इति । अर्थज्ञानान्तं एकशाखाविषयमध्ययनं यस्यास्ति स श्रोत्रियशब्देनोच्यते । "श्रोत्रियंश्छन्दोऽधीते" ( पा. सू. ५।२।८४ ) इति पाणिनिनोक्तत्वात् । वृजिनं पापं तन्न विद्यते यस्य सः 'अवृजिनः' पापरहितः कृत्स्नवेदोक्तकारित्वात् । 'अकामहतः' । आजानदेवाद्यधिपूर्वानन्देषु

(तोऽथ) अथ ये शतमाजानदेवानामानन्दाः । सऽएको देवलोकऽ आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३६ ॥

(तोऽथ) अथ ये शतन्देवलोकऽआनन्दाः । सऽएको गन्धर्व्वलोकऽ आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३७ ॥

(तोऽथ) अथ ये शतङ्गन्धर्व्वलोकऽआनन्दाः । सऽएकः प्रजापति-लोकऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३८ ॥

(तोऽथ) अथ ये शतम्प्रजापतिलोकऽआनन्दाः । सऽएको ब्रह्म-लोकऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतऽएष ब्रह्मलोकः सम्राडिति हैनमनुशशासैतदमृतꣳ सोऽहम्भगवते सहस्रन्ददाम्यतऽऊर्ध्वं-म्विमोक्षायैव ब्रूहीति ॥ ३९ ॥

---

अथ ये शतमाजानदेवानामानन्दाः, स एको देवलोक आनन्दः । यश्च श्रोत्रियः अवृजिनः अकामहतः ॥ ३६ ॥

अथ ये शतं देवलोक आनन्दाः, स एको गन्धर्वलोक आनन्दः । यश्च श्रोत्रियः अवृजिनः अकामहतः ॥ ३७ ॥

अथ ये शतं गन्धर्वलोक आनन्दाः, स एकः प्रजापतिलोक आनन्दः । यश्च श्रोत्रियः अवृजिनः अकामहतः ॥ ३८ ॥

अथ ये शतं प्रजापतिलोक आनंदाः, स एको ब्रह्मलोक आनन्दः । यश्च श्रोत्रियः अवृजिनः

---

वितृष्ण इति यावत् । चकारादेवंविधस्य पूर्वानन्देषु विरक्तस्य आजानदेवानन्दसमान एवानन्द इति प्रदर्शितमित्यर्थः । एवमुत्तरत्रापि श्रोत्रियाणां पूर्वपूर्वानंदेषु वैराग्यं उत्तरोत्तरानन्देष्वभिलाषश्चेत्युभयं तत्तदानंदसाम्यप्रयोजनं तत्तदुपासकानामिति द्रष्टव्यम् । श्रोत्रियस्य चेहानंदोपदेश उपास्योपासकयोस्तुल्यानन्दप्रदर्शनद्वारा परब्रह्मविदः तदानंदलाभप्रदर्शनार्थमित्यभिप्रायः ॥ ३९ ॥

आजानदेवानन्दः शतगुणितः सन् उपास्येन्द्रादीनां वसतिभूमौ तदुपासके च एक आनन्द इत्याह—अथ ये शतमाजानदेवानामानन्दा इति । 'देवानां' सृष्ट्यादिभूतानां यष्टव्यानां निसर्गसिद्धदेवापेक्षयाऽपि उत्कृष्टानां 'लोकः' स्थानं तस्मिन् । शेषं पूर्ववत् ॥ ३६ ॥

देवलोकानन्दः शतगुणितः एक एवानन्दो गन्धर्वलोके तदुपासके च भवतीत्याह—अथ ये शतं देवलोक आनन्दा इति । व्याख्यानं पूर्ववत् । गार्गीब्राह्मणेऽपि देवलोकानां गन्धर्वलोकेष्वेव ओतप्रोतभाव उक्तः । तथैवात्रापि देवलोकानन्तर्यं गन्धर्वलोकस्य युक्तम् ॥ ३७ ॥

गन्धर्वलोकानन्दः शतगुणित एक एवानन्दो विराट्शरीरे तदुपासके च भवतीत्याह—अथ ये शतं गन्धर्वलोक आनंदा इति । 'प्रजापतिलोकः' विराट्शरीरम् । शेषं पूर्ववत् ॥ ३८ ॥

विराडानन्दः शतगुणीकृतो हिरण्यगर्भस्य तदुपासकस्य च एक आनन्द इत्याह—अथ ये शतं प्रजापति-

स वाऽएषः । (ऽ) एतस्मिन्त्सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायम्प्रतियोन्याद्रवति बुद्धान्तायैव स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्पुरुषऽइत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्यतऽऊर्ध्वम्विमोक्षायैव ब्रूहीति ॥ ४० ॥

---

अकामहतः । एष ब्रह्मलोकः सम्राट् इति हैनमनुशशास । एतदमृतम् । सोऽहं भगवते सहस्रं ददामि, अत ऊर्ध्वं विमोक्षायैव ब्रूहि इति ॥ ३९ ॥

स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धांतायैव । स यदत्र किंचित् पश्यति । अनन्वागतस्तेन भवति । असंगो हि अयं पुरुष इति । एवमेवैतत् याज्ञवल्क्य । सः अहं भगवते सहस्रं ददामि, अत ऊर्ध्वं विमोक्षायैव ब्रूहि इति ॥ ४० ॥

---

लोक आनन्द इति । ' ब्रह्मलोकः ' हिरण्यगर्भात्मा तस्मिन्नित्यर्थः । गन्धर्वादिषु आनन्दोत्कर्षापकर्षौ तत्र तत्र सत्वशुद्धितारतम्यात् ब्रह्मानन्दमात्राविर्भावतारतम्यमपेक्ष्य निर्दिश्येते । " यश्च श्रोत्रियः " इत्यादि मानुषादिपर्यायेष्वपि योज्यम् । यतः श्रोत्रियत्वादिषु न सार्वभौमत्वादिसुखमनुभवति । अतः पूर्वेष्वपि योजयितुं युक्तम् । पूर्वं सलिल एकोऽद्रष्टेत्युपक्रम्य-" मात्रामुपजीवन्तीत्यन्तेन " कार्यकरणविनिर्मुक्तो यः प्रत्यगात्मा निरतिशयानन्दः परिपूर्णः प्रतिज्ञातः । स एव " स यो मनुष्याणाम् " इत्यारभ्य "स एको ब्रह्मलोक आनन्दः" इत्यन्तेन प्रतिपादितः । तस्येदानीमुपसंहारमाह-एष ब्रह्मलोकः सम्राडिति हैनमनुशशासैतदमृतमिति । ' एषः ' वितृष्णः श्रोत्रियः प्रत्यक्षो निरतिशयानन्दः ' ब्रह्मलोकः ' ' एतदमृतं ' मुख्यं मोक्षस्वरूपमिति ' एनं ' जनकं ' ह ' किल अनुशशासानुशासितवान् उपदिष्टवानित्यर्थः । एवं मुनिकृतमुपसंहारं श्रुत्वा राजोवाचेत्याह-सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति । यथोक्तरीत्या सम्यक् ज्ञाने निर्द्धारितेऽपि तन्निर्द्धारणात्प्रागेव यन्मुक्तये परं साधनं तस्मादूर्ध्वमपि मह्यं ' ब्रूहीति ' विद्यानिष्क्रयार्थं सहस्रदानप्रतिज्ञापूर्वकं राजा मुनिं पप्रच्छेत्यर्थः ॥ ३९ ॥

तत्र " तद्यथाऽस्मिन्नाकाशे " इति वाक्यमारभ्य " एष ब्रह्मलोकः सम्राडिति हैनमनुशशासैतदमृतं " इत्यन्तं वाक्यजातं सुषुप्तिविषयम् । तथा च सुषुप्तिविषयप्रविष्ट आत्मा स इदानीं संसाररूपदार्ष्टांतिकप्रदर्शनार्थं जाग्रद्भूमिं प्रापयितव्यः । सुषुप्तौ दार्ष्टांतिकसम्बन्धस्य अत्यन्तं स्पष्टयितुमशक्यत्वात् यदभिप्रेत्यात्मनः सुषुप्तिस्थानाज्जागरितस्थानप्राप्तिमाह-स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वेत्यादिना । सम्यक् प्रसीदत्यस्मिन्निति संप्रसादः सुषुप्तिस्थानं तस्मिन् ' संप्रसादे ' । " तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति " "सलिल एको द्रष्टाऽद्वैतो भवति " इति चोक्तत्वात् अवस्थांतरापेक्षया सुषुप्तौ प्रसादातिशयाच्चेति भावः । ' बुद्धांताय ' जागरणायेत्यर्थः । अक्षरार्थः पूर्ववत् । अत्रापि राजा विद्यानिष्क्रयार्थं सहस्रदानप्रतिज्ञापूर्वकं मुनिं पुनः पप्रच्छेत्यर्थः ॥ ४० ॥

( ४१ ) अत्र ह याज्ञवल्क्यो बिभयाञ्चकार । मेधावी राजा सर्वेभ्यो माऽन्तेभ्यऽउदरौत्सीदिति स यत्राणिमानं न्येति जरया वोपतपता वाऽणिमानं निगच्छति यथाऽऽम्रम्वोदुम्बरम्वा पिप्पलम्वा बन्धनात्प्रमुच्यतेऽवमेवायᳪं शारीरऽआत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायम्प्रतियोन्याद्रवति प्राणायैव ॥ ४१ ॥

---

अत्र ह याज्ञवल्क्यो बिभयांचकार । मेधावी राजा सर्वेभ्यो मा अंतेभ्यः उदरौत्सीत् इति । स यत्राणिमानं न्येति जरया वा उपतपता वा अणिमानं निगच्छति । यथा आम्रं वा उदुंबरं वा पिप्पलं वा बन्धनात्प्रमुच्येत । एवमेव अयं शारीर आत्मा एभ्यः अंगेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोनि आद्रवति प्राणायैव ॥ ४१ ॥

---

ततः किं वृत्तमित्यपेक्षायामाह–अत्र ह याज्ञवल्क्यो बिभयांचकारेति । 'अत्र' " विमोक्षायैव ब्रूहीति " अस्मिन् वाक्ये श्रुते सति 'ह' किल 'याज्ञवल्क्यः' 'बिभयांचकार' भीतवानित्यर्थः । ननु–कुतोऽस्य मुनेर्भयम् ? किं वक्तृत्वासामर्थ्यात् उत्तराज्ञानाद्वा इत्याशंकायां नैतदुभयमस्य भयकारणं, सर्वज्ञत्वात् । किन्तु अयं राजा मेधावित्वात् कामप्रश्नव्याजेन मोक्षफलकज्ञानलक्षणं मदीयं सर्वस्वं ग्रहीष्यति इत्येतदेव भयकारणम्, इत्येतदाह–मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सीदितीति । यतः अयं ' राजा मेधावी ' प्रज्ञाशाली । अतः ' मा ' मां ' अन्तेभ्यः ' प्रश्ननिर्णयावसानेभ्यः ' उत् अरौत्सीत् ' आवृणोत् पुनः पुनरवरोधं कृतवानित्यर्थः । इतिशब्दो भयहेतुकथनरूपश्रुतिवचनसमाप्त्यर्थः । जनको हि कामप्रश्नांकुशेन मम सर्वस्वं ग्रहीष्यति, अतो हेतोर्मया अस्मात् भेतव्यमेव । न हि योग्येऽपि पात्रे मुक्तिफलं ज्ञानं सहसोपदेष्टव्यमित्यभिप्रायः । ननु–" किंज्योतिरेवायं " इत्याद्युक्ताः प्रश्नाः आदित्यज्योतिरित्यादिभिर्निर्णीताश्चेत् किमनिर्णीतमुद्दिश्य " अत ऊर्ध्वं विमोक्षायैव ब्रूहीति " राज्ञः प्रश्न इति चेत् सत्यं, यद्यपि पूर्वं सहेतुकौ संसारमोक्षौ मुनिना उक्तौ, तथाऽपि तत्र या चात्मनः स्वप्नजागरणयोः संचरणोक्तिः सा सर्वा तस्य लोकद्वयसंचरणरूपसंसारदृष्टांतार्थैवोक्ता । या पुनस्तस्य सम्प्रसादोक्तिः सा तु मोक्षदृष्टांतार्था, इत्येवममन्यत राजा । अतो दार्ष्टांतिकजिज्ञासया " अत ऊर्ध्वमिति " प्रश्न उपपद्यते । तत्र " स यत्राणिमानं न्येति " इत्यारभ्य " इति तु कामयमानः " इत्यन्तो ग्रन्थः " उभावन्तावनुसंचरति " इत्यादौ सूचितसहेतुसंसाररूपदार्ष्टांतिककथनपरो बोध्यः । " अथो कामयमानः " इत्यारभ्य आशारीरकब्राह्मणसमाप्तेः ससाधनमोक्षरूपदार्ष्टांतिककथनमिति सामान्यसंगतिः । इदानीं स्वप्नाज्जागरणप्राप्तिवल्लोकांतरं गच्छत्यात्मा इत्यस्यार्थस्य सुखप्रतिपत्त्यर्थं तावदाह–स यत्राणिमानं न्येतीति । ' सः ' प्रकृतः शिरःपाण्यादिमान् देहः ' यत्र ' यस्मिन् काले ' अणिमानं ' अणोर्भावं कार्श्यं 'न्येति' नितरामतिशयेन एति गच्छति प्राप्नोतीत्यर्थः । ननु–अयं अणिमानमपि कस्माद्धेतोर्गच्छतीत्यपेक्षायामाह–जरया वोपतपता वाऽणिमानं निगच्छतीति । ' जरया वा ' स्वयमेव कालपक्वफलवत् जीर्णः अणिमानं निगच्छति । ' उपतपता वा ' उपतपतीत्युपतपन् ज्वरादिरोगः, तेनोपतपता वा ' अणिमानं निगच्छति ' । तेन हि उपतप्यमानो विषमाग्नितया भुक्तान्नजरणाभावात् अन्नरसेनानुपचीयमानः पिंडः कार्श्यमापद्यत एवेत्यर्थः । जराऽभिभवो रोगादिपरिपीडनं कार्श्यापत्तिश्च इत्येते अनर्थाः शरीरवतः अवश्यंभाविन इत्येतदपि लोकप्रसिद्धं श्रुत्वा

तद्यथाऽनः सुसमाहितम् । ( सु ) उत्सुर्ज्जद्यायादेवमेवायुᳫँ शारीरऽ आत्मा प्राज्ञेनात्मनाऽन्वारूढऽउत्सुर्ज्जद्याति * ॥ ४२ ॥

तद्यथा राजानमायन्तम् । ( सु ) उग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवᳫँ हैवम्विदᳫँ सर्वाणि भूतानि प्रतिकल्पन्तऽइदम्ब्रह्मायातीदमागच्छतीति ॥ ४३ ॥

---

तद्यथाऽनः सुसमाहितमुत्सर्जद्यायात् । एवमेव अयं शारीर आत्मा प्राज्ञेनात्मना अन्वारूढः उत्सर्जद्याति ॥ ४२ ॥

तद्यथा राजानमायन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पंते । अयमायाति । अयमागच्छतीति । एवं ह, एवंविदं सर्वाणि भूतानि प्रतिकल्पन्ते । इदं ब्रह्मायाति । इद-मागच्छतीति ॥ ४३ ॥

---

वैराग्याद्यर्थमेवोच्यत इति भावः । ततः कथं शरीरं विमुंचतीत्यपेक्षायां दृष्टांतमाह–**यथाऽऽम्रं वोदुम्बरं** वेति । ‘ यथा ’ दृष्टांतो लोके ‘ आम्रं ’ फलं ‘ उदुंबरं वा फलं ‘ पिप्पलं वा ’ फलं ‘ बन्धनात् ’ वृंतेन सह फलं येन रसेन बध्यते स रसो बन्धनहेतुत्वात् बन्धनम् , वृंतमेव वा बन्धनं यस्मिन् फलं रसेन बध्यते तद्बन्धनं, तस्मा-द्बन्धनात् ‘ प्रमुच्येत ’ वाताद्यनेकनिमित्तवशात् विच्छिद्येत इत्यर्थः । दार्ष्टांतिकमाह-**एवमेवायं शारीर आत्मैभ्योऽङ्गेभ्य** इति । यथा अयं दृष्टांतः ‘एवमेव’ ‘ अयं शारीर ·आत्मा ’ शरीरे स्थूले भवः शारीर आत्मा लिंगोपाधिको लिंगदेह एव आत्मप्रकाशितः ‘ एभ्योऽङ्गेभ्यः ’ देहावयवेभ्यः चक्षुरादीन्द्रियस्थानेभ्यः ‘ संप्र-मुच्य ’ सम्यगेकीभावेन प्रकर्षेण निर्लेपतया मुक्त्वा पुनर्वारंवारं ‘प्रतिन्यायं’ प्रतिगमनं यथागतं तथा ‘ प्रति-योनि ’ योनिं प्रति स्थानविशेषं प्रति विद्याकर्मपूर्वसंस्कारवशात् ‘ आद्रवति ’ गच्छतीत्यर्थः । यथा स्वप्नाज्जाग-रितं ततः स्वप्नमिति पुनः पुनः पुमान् प्रतिपद्यते, तथैव पुनर्देहांतरमिति प्रतिपादनार्थः पुनःशब्दः । प्रति-न्यायमिति शब्दावयवार्थः पूर्ववत् । किमर्थमित्यपेक्षायामाह–**प्राणायैवेति** । ‘ प्राणाय ’ प्राणव्यूहायैव प्राणानां स्थानविशेषविन्यासेनावस्थानाय देहान्तरग्रहणायेत्यर्थः ॥ ४१ ॥

इदानीं लोकाल्लोकांतरं गच्छत्यात्मा इत्यस्यार्थस्य सुखप्रतिपत्त्यर्थं दृष्टांतमाह–**तद्यथाऽनः सुसमाहितमु-त्सर्जद्यायादिति** । तत्र दृष्टांतः–‘ यथा ’ लोके ‘ अनः ’ शकटं ‘ सु ’ सुष्ठु भृशं वा ‘ समाहितं ’ उलूखल-मुसलशूर्पभांडादिगृहोपकरणेनान्नाद्येन च संपन्नं भाराक्रांतं सत् ‘ उत्सर्जत् ’ नानाविधं शब्दं कुर्वत् यायाद्गच्छेत् शाकटिकेनाधिष्ठितं सदित्यर्थः । दार्ष्टांतिकमाह–**एवमेवायं शारीर आत्मेति** । यथा अयं दृष्टांतः । ‘ एवमेव ’ ‘अयं शारीरः’ शरीरे स्थूले भवः आत्मा लिंगोपाधिकः स्वप्नबुद्धान्ताविव जन्ममरणाभ्यां कार्यकरणसंयोगलक्षणाभ्यां इहलोकपरलोकानुसंचारी सन् ‘ प्राज्ञेन ’ परेणात्मना स्वयंज्योतिःस्वभावेनान्वारूढोधिष्ठितोवभास्यमानः ‘ उत्सर्जत् ’ मरणकाले मर्मकृंतनसंभूतवेदनापीडितमानसो हिक्किकालक्षणं शब्दं कुर्वन् ‘ याति ’ गच्छति । आत्मज्योतिषा अवभास्यमाने लिंगे प्राणप्रधाने गच्छति सति तदुपाधिक आत्मा गच्छतीव, न तु परमार्थतो निरुपाधिक आत्मा गच्छति ॥ ४२ ॥

ननु–अस्य मुमूर्षोः कुतो देहांतरं यदसौ गच्छेत्, तत्कर्तुरभावात् । न तावत् स्वकृतं स्यात् , देहेन्द्रिय-

---

* “ उत्सर्जन्याति ” इति काण्वः पाठः । १–“ आयान्तम् ” इति काण्वः पाठः ।

**तद्यथा राजानम्प्रयियासन्तम् । ( मु ) उग्राः प्रत्येनसः सूतग्रामण्यऽउपसमायन्त्येवꣳ हैवम्विदꣳ सर्वे प्राणाऽउपसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ४४ ॥**

**इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ १४ ( ६ ) ४ । १ ॥ ( ७ ) ४–१ ॥**

---

तद्यथा राजानं प्रयियासन्तं उग्राः प्रत्येनसः सूतग्रामण्य उपसमायन्ति । एवं ह, एवंविदं सर्वे प्राणा उपसमायन्ति । यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ४४ ॥

---

वियुक्तस्य तन्निर्माणे असामर्थ्यात् । न चान्यकृतं राज्ञो गृहनिर्मातृकर्तृभृत्यादिवत् अस्य देहनिर्मात्रन्यस्यासंभवात्, इति शंकायां स्वकर्मोपार्जितान्येव भूतानि तत्कर्मप्रेरितानि तद्विद्याकर्मपूर्वप्रज्ञानुसारतः शुभमशुभं वा देहं कृतकर्मोपभोगार्थं कृत्वा प्रतीक्षन्ते, इत्येवं समाधास्यमाने अर्थे दृष्टांतमाह—**तद्यथा राजानमायंतमुग्राः प्रत्येनस** इति । ' उग्राः ' जातिविशेषाः । यद्वा उग्रे हिंस्रे कर्मणि राज्ञा नियुक्ताः क्रूरकर्माण उग्राः । ' प्रत्येनसः ' एनः पापं तद्वान् इह एनःशब्देनोच्यते तथा च—एनः एनः पापिनं पापिनं प्रति शासनार्थं नियुक्ताः क्रूरकर्माणः ' प्रत्येनस ' उग्रेभ्यो भिन्नाधिकारा इति यावत् । ' सूताः ' ब्राह्मण्यां क्षत्रियाज्जाताः संकरजातिविशेषाः रथवाहनकोविदाः । ' ग्रामण्यः ' ग्रामनेतारः । सूताश्च ग्रामण्यश्चेति द्वन्द्वः । तथा च- तत्तत्र दृष्टांतः । यथा लोके राजानं राज्याभिषिक्तं आयन्तमागच्छन्तं ' उग्राः प्रत्येनसः ' ' सूतग्रामण्यः ' राजकीयाः । एते राज्ञः आगमनं बुद्ध्वा तदागमनात् पूर्वमेव अन्नैर्भक्ष्यभोज्यलेह्यचोष्यलक्षणैश्चतुर्विधैः ' पानैः ' क्षीरोदकादिभिरावसथैश्च प्रासादगोपुरतोरणादिभिः प्रतिकल्पंते निष्पन्नैरेव प्रतीक्षंते इत्यर्थः । किं कुर्वंतः प्रतीक्षन्ते इत्यत आह—**अयमायात्ययमागच्छतीति** । अयं राजा ' आयाति अयमागच्छति ' इत्येवं वदन्तः सन्तः प्रतीक्षन्ते । पुनरुक्तिरादरार्थेत्यर्थः । दार्ष्टांतिकमाह—**एवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्त** इति । यथा अयं दृष्टांतः । ' एवं ह ' किल ' एवंविदं ' कर्मफलवेदितारं संसारिणं सर्वाणि भूतानि पंचभूतानि शरीरकर्तॄणि करणानुग्रहीतॄणि च आदित्यादीनि संसारिकर्मप्रयुक्तानि तैरेव कर्मफलोपभोगसाधनैः शरीरादिभिः ' प्रतिकल्पंते ' प्रतीक्षन्ते । स्वात्मनि देहाद्याकारपरिणते आत्माभिव्यक्तिं कांक्षन्ते इत्यर्थः । तानि भूतानि कथं प्रतीक्षन्ते इत्यपेक्षायामाह—**इदं ब्रह्मायातीदमागच्छतीति** । ' इदं ब्रह्म ' भोक्तृ कर्तृ तु अस्माकं ' आयाति ' आगच्छति इत्यादरेण वदन्ति प्रतीक्षन्तः इत्यर्थः । संसारिणि जीवे असंसारिब्रह्मशब्दप्रयोगस्तु तस्य वस्तुतो ब्रह्माभिन्नत्वज्ञापनार्थः, कथं वा अस्य "ब्रह्मास्मीति " मतिर्भवेत् इति तत्त्वबोधनार्थं वा श्रुत्या कृत इति भावः । अत्र शरीरारंभकत्वमात्मनो वर्तते इत्येतावानेवांशो विवक्षितः । न तु पूर्वं भूतानि राजभृत्यवत् देहमारभ्य प्रतीक्षन्ते, पश्चादात्मा राजवत्तत्र गच्छतीत्यंशोऽपि शरीरारंभकभूतैः सहैवात्मनो गमनमिति सिद्धांतस्थितेः । प्रतीक्षणाद्युपन्यासस्तु एवंविदमित्युक्तकर्म्मफलोत्क्रांतिवेदनस्तुत्यर्थो ज्ञातव्यः ॥ ४३ ॥

एवमात्मनो वर्तमानदेहं हित्वा देहान्तरं जिगमिषतः तन्निर्माणे सहायसम्पत्तिरुक्ता । इदानीं गच्छंतं संसारिणं के अनुगच्छन्ति । अनुगच्छन्तोऽपि किं स्वातन्त्र्येण, संसारिकर्मप्रयुक्त्या वा अनुगच्छन्तीति जिज्ञा-

स य॒त्राय॒ꣳ शारी॒रऽआत्मा॒ । ( त्मा॒ऽब ) अबल्यन्नी॒त्य स॒म्मोह॒मिव न्ये॒त्यथै॒नमे॒ते प्रा॒णाऽअ॒भिस॒मा॒यन्ति स॒ऽए॒ता॒स्तेजो॒मा॒त्राः स॒मभ्या॒द॒दानो॒ हृ॒दयमे॒वान्व॒व॒क्राम॒ति ॥ १ ॥

---

## शारीरकब्राह्मणम् ।

स यत्रायं शारीर आत्मा अबल्यं नीत्य सम्मोहमिव न्येति । अथैनमेते प्राणा अभिसमायन्ति । स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ॥ १ ॥

---

सायां संसारिकर्मप्रेरिता एव वागादयोऽनुगच्छन्तीति निर्णेतुं तावत् दृष्टांतमाह–तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्य उपसमायन्तीति । तत्तत्र दृष्टांतः । यथा–' प्रयियासंतं ' प्रकर्षेण यातुमिच्छंतं राजानं पूर्वोक्ताः उग्रादयः ' उप ' समीपे सम्यगेकीभावेन ' आयन्ति ' आगच्छन्ति । राज्ञा सहगमनार्थं अनाज्ञप्ता एव केवलं तज्जिगमिषाभिज्ञा इत्यर्थः । दार्ष्टांतिकमाह--एवं हैवंविदं सर्वे प्राणा उपसमायन्तीति । यथा अयं दृष्टांतः ' एवं ह ' किल ' एवंविदं ' कर्म्मफलवेदितारं संसारिणं ' प्रयियासंतं ' मरणकाले सर्वे प्राणाः वागादयः ' उपसमायन्ति ' अनाकारिता एव सन्तस्ते तत्कर्मप्रेरिताः सहगमनार्थं ' उप ' समीपे ' सम् ' एकीभावेन ' आयन्ति ' आगच्छन्तीत्यर्थः । एवमात्मना सह गच्छन्तः प्राणाः स्वाश्रयेणापञ्चीकृतभूतपञ्चकेन शरीरारंभकीभूतेन सहैव गच्छन्ति । आश्रयगमनमन्तरेण आश्रयिणो गमनासंभवात् इति द्रष्टव्यम् । अचेतनानामपि रथादीनां चेतनाधिष्ठितानां प्रवृत्तिवत् वागादीनामपि भोक्तृकर्मनियन्त्रितानां प्रवृत्तिः सम्भवतीति भावः । कस्मिन् काले इदं दुःखात्मकं गमनमित्यपेक्षायामाह--यत्रैतदूर्ध्वोच्छ्वासी भवतीति । एतदिति क्रियाविशेषणम् । तथा च–मृतावुपस्थितायां उदानाख्ये वायौ प्रबले सति ' एतत् ' ऊर्ध्वोच्छ्वासित्वं यथा स्यात्तथा ' यत्र ' यस्मिन् काले ' ऊर्ध्वोच्छ्वासी ' ' भवति ' तस्मिन् काले तद्गमनमित्यर्थः । मरणावसरे हि प्राणाः सर्वेषु प्राणिषु क्लेशमादधतीत्युत्सर्गः । शास्त्रोक्तोत्क्रान्तिवेदिनि तु पुरुषे न ते क्लेशाधायिनः, ज्ञानमाहात्म्यादिति भावः ॥ ४४ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्-बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां चतुर्थेऽध्याये प्रथमं ज्योतिर्ब्राह्मणं परिसमाप्तम् ॥ १४ । ( ७ ) ४ । १ ॥

प्रस्तुते संसारोपवर्णने "अयं शारीर आत्मा एभ्यः अंगेभ्यः सम्प्रमुच्य" इत्यादिना साकल्येन सम्प्रमोक्षणादि सूचितम् । तदिदानीं कस्मिन् काले कथं चेति जिज्ञासायां संसरणं वर्णयितव्यं इत्याद्याशयवती उत्तरा श्रुतिस्तदर्थं प्रवर्तते- स यत्रायं शारीरऽ आत्माऽबल्यं नीत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्तीति । " तद्यथाऽनः सुसमाहित " इत्यादौ प्रकृत. ' सोऽयं ' 'शारीर आत्मा' ' यत्र ' यस्मिन् काले जरायुक्तहेतुभिः अभिभवे सति ' अबल्यमिव ' अबलभावमिव दौर्बल्यमिव ' नीत्य ' नितरामित्वा प्राप्य यदा ' सम्मोहमिव ' संमूढतामिव अविवेकतामिव ' नितरां एति ' याति । ' अथ ' तदा एनमात्मानं करणस्वामिनं प्रति ' एते

**स यत्रैष चाक्षुषः पुरुषः । पराङ्पर्य्यावर्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुतऽइत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः ॥ २ ॥**

---

स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते । अथारूपज्ञो भवति । एकीभवति न पश्यतीत्याहुः । एकीभवति न जिघ्रतीत्याहुः । एकीभवति न रसयतीत्याहुः । एकीभवति न वदतीत्याहुः । एकीभवति न शृणोतीत्याहुः । एकीभवति न मनुत इत्याहुः । एकीभवति न स्पृशतीत्याहुः । एकीभवति न विजानातीत्याहुः ॥ २ ॥

---

प्राणाः ' वागादयः ' अभिसमायन्ति ' आभिमुख्येन सम्यक् निर्लेपतया स्वस्थानात् आयन्ति आगच्छन्ति । करणानि सामस्त्येनात्माऽभिमुखान्यायान्तीत्यर्थः । ननु—सम्मोहमिवेत्यत्रैव श्रुत इवशब्दः कथमबल्यमिवेत्यत्रापि सम्बद्धो व्याक्रियते, इति चेत्; शृणु, संमोहो हि करणानां स्वस्थानादाढर्यवशात्स्वगोचरेषु अशक्ततया व्याकुलीभावः । स च मोहकार्यभूतदेहनिष्ठः, न त्वात्मनिष्ठः । तस्य तु देहैक्ये अध्यासवशात् आत्मा संमोहं न्येति इत्येतदुपचर्यते इत्यात्मनि संमोहस्योपचरितत्वद्योतनार्थं इवशब्दः प्रयुक्तः । अबल्यं नीत्येत्यत्र च ल्यप्प्रत्ययश्रुतेः । अबल्यस्य संमोहेन समानकर्तृता अवगता । अतस्तत्प्रसक्त्या अपि आत्मनः कर्तृत्वं वक्तव्यम् । तच्च तस्य साक्षान्नोपपद्यते, असंगत्वात् अमूर्तत्वात् " अजरः " इत्यादिश्रुतेः अबल्यहेतुजराद्यभिभवासंबद्धत्वाच्च । तस्मात्तत्राप्युपचरितत्वं द्योतयितुं इवशब्दमाकृष्य व्याख्यानमुचितम् । उभयत्रापि आत्मनि कर्तृत्वस्य परोपाधिनिमित्तकत्वस्य तुल्यत्वादिति । कथं करणानि आत्मानमभिमुखतः सामस्त्येनायांति इत्यपेक्षायां तदागमनप्रकारमाह—स **एतास्तेजोमात्राः समभ्याददान** इत्यादिना । ' सः ' प्रकृतः अविद्वानात्मा ' तेजोमात्राः ' तेजःशब्देन भूतपंचकमुच्यते । मीयंते विषया याभिस्ता मात्राः इति व्युत्पत्तेः, विषयप्रकाशहेतुभूतानि चक्षुरादिकरणानि मात्रा अंशाः तेजोमात्राः । रूपादिप्रकाशकानि करणानीति यावत् । ताः ' समभ्याददानः ' सम्यक् निश्शेषं आभिमुख्येन आददान उपसंहरमाणः मृतिकाले ' हृदयमेव ' हृदयस्थां बुद्धिमेव ' अन्ववक्रामति ' अन्वागच्छति बुद्धावेवाभिव्यक्तविज्ञानो भवतीत्यर्थः । समभ्याददान इति शानच्प्रत्ययप्रयोगात् आत्मनः करणादानस्वात्मोपसंहारयोः यौगपद्यं दर्शितम् । करणोपाधिमंतरेण आत्मनः स्वतःसंकोचविकासयोरभावात् । हृदयमेवेत्येवकारः स्वप्नसुषुप्तिव्यावृत्त्यर्थः । स्वप्ने हि देहस्थानेव नाडीगतान् वासनात्मकान् विषयान् भुंजानः तदनुसरन् आत्मा अवतिष्ठते । सुषुप्तौ च कारणब्रह्मात्मना अग्निरिव तप्तलोहं देहं संव्याप्य तिष्ठति । तदुभयमुत्क्रांतिकाले नास्तीति भावः ॥ १ ॥

एवं हृदि करणोपसंहरणेन स्वात्मोपसंहरणे सति किं स्यात् इत्यपेक्षायां करणानुग्राहकनिवृत्तिनिमित्तकं रूपाद्यदर्शनं स्यादित्याह—**स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवतीति** । यो भोक्तृकर्मप्रयुक्तो यावद्देहधारणं चक्षुषः अनुग्रहं कुर्वन् चक्षुषि वर्तते आदित्यपुरुषः ' सः ' एव ' चाक्षुषः पुरुषः ' आदित्यांशः स्वप्रयोजकभोक्तृकर्मक्षये सति ' यत्र ' यस्मिन् काले भोक्तुर्भोगेभ्यः ' पराङ् ' विमुखः सन् स्वांशिभूतदेवतारूपं प्रति ' पर्यावर्तते ' आसमंताद्भावेन परिवर्तते । ' अथ ' तदा मुमूर्षुः ' अरूपज्ञो

( स्तु ) तस्य हैतस्य हृदयस्याग्रम्प्रद्योतते । तेन प्रद्योतेनैषऽआत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तम्प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणाऽअनूत्क्रामन्ति सञ्ज्ञानमेवान्ववक्रामति सऽएष ज्ञः सविज्ञानो भवति तम्विद्याकर्म्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ ३ ॥

---

तस्य हैतस्य हृदयस्याग्रं प्रद्योतते । तेन प्रद्योतेनैष आत्मा निष्क्रामति, चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः । तमुत्क्रामतं प्राणोऽनूत्क्रामति । प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंति । संज्ञानमेवान्ववक्रामति । स एष ज्ञः सविज्ञानो भवति । तं विद्याकर्मणी समन्वारभेते । पूर्वप्रज्ञा च ॥ ३ ॥

---

भवति ' । रूपं न जानातीत्यर्थः । ननु—तर्हि आदित्यानुग्रहादादित्यांशे गते चक्षुषः अत्यंताभाव एव स्यात् । अतश्चक्षुरभाव एव मुमूर्षोररूपज्ञत्वव्यवहारहेतुः स्यात् इतीमामाशंकां परिहरति—एकीभवति न पश्यतीत्याहुरिति । चक्षुर्देवताऽऽदित्यांशस्य चक्षुषि अनुग्रहनिवृत्तिद्वारेण अधिदेवतया ऐक्ये सति यदा चक्षुर्लिंगात्मना ' एकीभवति ' तदा मुमूर्षुः पार्श्वस्थान् न पश्यतीत्याहुः । अतश्चक्षुषः स्वानुग्रहनिवृत्तौ स्वस्य हृदये लिंगात्मनि एकीभाव एव मुमूर्षोः अरूपज्ञत्वव्यवहारः । न तु चक्षुरभाव इत्यर्थः । एवं " एकीभवति न जिघ्रतीत्याहुः " इत्यादि—" न विजानातीत्याहुः " इत्यंतं व्याख्येयम् । अत्र घ्राणेन्द्रियस्य " अथ प्राणमत्यवहत् " इत्याद्युद्गीथब्राह्मणोक्तो वायुः अनुग्राहकदेवता । रसनस्य वरुणः सोमो वा तस्याप्यात्मकत्वात् । वाचो वह्निः । श्रोत्रस्य दिशः । मनसश्चंद्रमाः । स्पर्शस्य वायुः । बुद्धेः प्रजापतिरिति तत्तदिन्द्रियाणां क्रमेण देवता बोद्धव्याः । अत्र पाठक्रमः, नोत्क्रांतिक्रमाभिधायकः । कस्यचित् श्रोत्राद्युत्क्रमगस्यैव प्रथमं दर्शनात् । अतोऽत्रानियत एव क्रम इति भावः । एवं मरणकाले रूपदर्शनराहित्ये देवतानिवृत्तिः, करणानां हृदये लिंगात्मना एकीभावश्चेत्यर्थद्वयं साधकमित्युक्तम् ॥ २ ॥

इदानीं करणेषूपसंहृतेषु सत्सु निष्क्रमणसाधनीभूतो यः अंतर्व्यापारो भवति तमाह—तस्य हैतस्य हृदयाग्रं प्रद्योतते इति । 'तस्य' लिंगोपाधिकस्य 'ह' किल 'एतस्य' प्रकृतस्य उपसंहृतकरणस्य मुमूर्षोः 'हृदयस्य' हृदयच्छिद्रस्य 'अग्रे' नाडीमुखं 'प्रद्योतते' प्रकाशते । यथा स्वप्ने प्रतिपित्सोः जाग्रद्वासनादानरूपेण स्वेन भासा चैतन्यज्योतिषा च करणव्यतिरेकेण हृदये वासनाप्रकाशात्मकं ज्ञानं भवतीति ज्योतिर्ब्राह्मणे श्रुतम् । तथा मृतिदशायामपि तेजोमात्राऽऽदानकृतेन वासनारूपेण आत्मचैतन्यज्योतिषा च प्राप्यदेहादेहादिविषयबुद्धिवृत्त्यात्मना हृदयाग्रप्रद्योतनं भवति । ' तेन ' हृदयाग्र ' प्रद्योतेन ' प्रद्योतितः ' एष आत्मा ' विज्ञानमयः लिंगोपाधिकः ' निष्क्रामति ' । लिंगगमनात् स्वयमपि तदवष्टंभेन निर्गच्छतीत्यर्थः । ननु—उक्तप्रद्योतेन कर्मार्जितं लोकं पश्यन् आत्मा मरणकाले हृदयात्केन मार्गेण निर्गच्छतीत्याकांक्षायां तमाह—चक्षुष्टो वा मूर्ध्नो वेति । यदि अस्य आदित्यलोकप्राप्तिनिमित्तं ज्ञानं कर्म वा स्यात्, तदा असौ ' चक्षुष्टः ' चक्षुषः सकाशात् निष्क्रामति । यदि ब्रह्मलोकप्राप्तिनिमित्तं ज्ञानं कर्म वा स्यात् तदा ' मूर्ध्नः ' द्वारा निष्क्रामति । यथाकर्म यथाज्ञानं

'अन्येभ्यो वा शरीरदेशेभ्यः' श्रोत्रादिभ्यः सकाशात् निष्क्रामतीत्यर्थः । तस्मात् सकर्मैवानुष्ठेयमिति भावः । ननु–निर्गच्छतां प्राणानां मध्ये कस्य प्राधान्यमित्यपेक्षायामाह–**तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति** । यथाकर्म यथाश्रुतं 'तं' विज्ञानात्मानं 'उत्क्रामन्तं' परलोकाय प्रस्थितं परलोकाय उद्भूताभिप्रायं 'अनु' सृत्य 'प्राणः' सर्वाधिकारस्थानीयो राज्ञ इवाधिकारी राजानमुत्क्रामति । तं च 'प्राणमनूत्क्रामन्तं' अनुगच्छन्तं सन्तं 'सर्वे प्राणाः' वागादयः प्रधानस्य परिवारस्थानीयाः अनूत्क्रामन्तीत्यर्थः । न चात्रानुशब्दः क्रमावद्योतकः । किं तु–विज्ञानमयादेः प्राधान्यद्योतकः । तथा हि–वागादयो हि प्राणा मुख्यप्राणाधीनाः इति उद्गीथब्राह्मणे निर्णीतम् । अतो वागाद्यपेक्षया मुख्यप्राणस्य प्राधान्यम् । तथा मुख्यप्राणोऽपि स्थित्युत्क्रमणादौ भोक्तुः कर्माधीनः । अतो मुख्यप्राणापेक्षया विज्ञानात्मनः प्राधान्यम् । इदं च प्राधान्यमभिप्रेत्य इह अनुशब्दः प्रयुक्तः । लिंगावभासकस्यात्मनो लिंगस्य च उत्क्रमणे देशकालभेदाभावात् न क्रमार्थः अनुशब्द इति भावः । एवं म्रियमाणस्यार्थसिद्धमाह–**संज्ञानमेवान्ववक्रामतीति** । यथोत्क्रमणात्प्राक् स्वकर्मानुसारिभाविदेहविज्ञानसहितो भवति । तथा उत्क्रान्त्यनन्तरं 'संज्ञानमेव' विशेषज्ञानोद्भासितमेव गन्तव्यं 'अन्ववक्रामति' अनुगच्छतीत्यर्थः । तथा च दुःखहानिमिच्छता मरणकाले स्वातन्त्र्यार्थं तत्साधनोपनिषद्विहितशमादौ यत्नवता भवितव्यम् । किं च–सर्वशुभकर्मविधायित्वेन अशुभकर्मनिषेधित्वेन च शास्त्रस्य इह कर्मभूमौ महानारम्भो दृश्यते । सोऽपि मृतिकाले स्वातन्त्र्यार्थं पुण्योपचयकर्तव्यतां दर्शयति । अतस्तदपि यथाऽधिकारं कर्तव्यमिति प्रकरणार्थः । यदुक्तं हृदयाग्रप्रद्योतनं तदेव स्पष्टयति–**स एष ज्ञः सविज्ञानो भवतीति** । 'स एषः' मुमूर्षुः आत्मा 'ज्ञः' ज्ञातृस्वभाव एव सन् सविज्ञानः' पूर्वप्रज्ञाऽभ्यासभावनाप्राधान्येन विज्ञानेन सह वर्तमानो भवति । स्वप्ने इव विशेषविज्ञानवान् भवतीत्यर्थः । एतच्च सविज्ञानत्वं कर्मवशादेवास्य भवति न स्वतंत्रतः । स्वातंत्र्येण हि सविज्ञानत्वे सर्वः कृतकृत्यः स्यात् । नैव तु तल्लभ्यते । तस्मात् कर्मणोद्भाव्यमानेन भाविदेहविषयकान्तःकरणवृत्त्याश्रितवासनात्मकविशेषज्ञानेन सर्वो लोकः अन्तकाले सविज्ञानो भवतीति भावः । पूर्वं शकटवत् संभृतसंभार उत्सर्जद्यातीत्युक्तम् । तत्रेदानीं किं तस्य परलोकाय प्रस्थितस्य पाथेयं शाकटिकसम्भारस्थानीयं परलोकं गत्वा यद्भुंक्ते । तत्र शरीराद्यारंभकं च किमिति जिज्ञासायामाह–**तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति** । प्रमाणात् अप्रमाणाद्वा जातं सम्यक्ज्ञानसंशयज्ञानमिथ्याज्ञानसाधारणं संसारहेतुभूतं ज्ञानमात्रं इह विद्याशब्देनोच्यते न परमात्मज्ञानम् तस्य संसारविरोधित्वात् । शास्त्रतो लोकतो वा स्वभावतो वा यत् दृष्टादृष्टार्थस्वरूपं वाङ्मनःकायसाध्यं तत्सर्वं इह कर्मशब्देनोच्यते । क्रियमाणस्य कर्मणः तत्फलस्य च भुक्तस्य यः संस्कारो हृदि संश्रितः सा पूर्वप्रज्ञेत्युच्यते । इह विद्याकर्मणोः कार्यकोटिरूपत्वात् समस्य वचनं कृतम् । पूर्वप्रज्ञायास्तदुद्भवप्राधान्यार्थं पृथक्करणम् । प्राधान्यं तस्याः भुज्यमानस्य कर्मणः परिशेषरूपत्वाजायमानस्य मूलत्वाच्च । न च–एतस्याः कर्माद्यनुष्ठानादौ प्रयोजकत्वमेव नास्ति कुतः प्राधान्यमिति वाच्यम् । पूर्वप्रज्ञोद्भवानुद्भवनिमित्तकस्य बहुतरस्य कार्यस्य दर्शनात् । तथा हि–केषांचित् कासुचित् क्रियासु चित्रकर्मादिलक्षणासु विनैवेहाभ्यासं जन्मत एवारभ्य कौशलं दृश्यते । केषांचित् पुनरत्यन्तसुगमास्वपि क्रियासु रज्जुनिर्माणादिलक्षणासु अकौशलं दृश्यते । अतः पूर्वप्रज्ञया विना विद्याकर्मणी तत्फलभोगे वा न कस्यचित् प्रवृत्तिनियुक्तं तस्याः प्राधान्यम् ( ? ) । अथवा विद्याकर्मभ्यां च पूर्वप्रज्ञाया उद्भवात् तयोः कारणकोटित्वात् समस्य वचनम् । इतरस्याः कार्यत्वात् पृथक्ग्रहणम् । सर्वथाऽपि कार्यकारणकोटयोः द्वैराश्यसिद्ध्यर्थमित्थं निर्देशः । तस्मादेतत् त्रयं विद्याकर्मपूर्वप्रज्ञाख्यं शाकटिकसंभारस्थानीयं परलोकपाथेयमिति । तथा च–तं परलोकं गच्छंतं विद्या च कर्म च 'विद्याकर्मणी' उक्तरूपे 'समन्वारभेते' सम्यगन्वारभेते अनुगच्छतः । पूर्वप्रज्ञा चोक्तलक्षणा

तद्यथा तृणजलायुका । तृणस्यान्तं गत्वाऽऽत्मानमुपसꣳहरत्येवमेवा- यम्पुरुषऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वाऽऽत्मानमुपसꣳहरति ॥ ४ ॥

तद्यथा पेशस्कारी । पेशसो मात्रामपादायान्यन्नवतरङ्कल्याणतरꣳ रूपन्तनुतऽएवमेवायम्पुरुषऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वाऽन्यन्नवतरꣳ रूपन्तनुते पित्र्यम्वा गान्धर्वम्वा ब्राह्मम्वा प्राजापत्यम्वा दैवम्वा मानुषम्वाऽन्येभ्यो वा भूतेभ्यः ॥ ५ ॥

---

तद्यथा तृणजलायुका तृणस्यान्तं गत्वा आत्मानमुपसंहरति । एवमेव अयं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वा आत्मानमुपसंहरति ॥ ४ ॥

तद्यथा पेशस्कारी पेशसो मात्रामपादाय अन्यन्नवतरं कल्याणतरं रूपं तनुते । एवमेव अयं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वा अन्यन्नवतरं रूपं तनुते । पित्र्यं वा । गांधर्वं वा । ब्राह्मं वा । प्राजापत्यं वा । दैवं वा । मानुषं वा । अन्येभ्यो वा भूतेभ्यः ॥ ५ ॥

---

समन्वारभते, इति वाक्ययोजना । तस्मादेव विद्याकर्मपूर्वप्रज्ञाख्यं त्रयं देहांतरप्रतिपत्त्युपभोगसाधनम् । तस्मात् विद्याकर्मादि शुभमेव समाचरेत् शुभफलायेति प्रकरणार्थः ॥ ३ ॥

एवं संभृतविद्यादिसम्भारो देहान्तरं प्रतिपद्यमानः कथं तत्प्रतिपद्यते इत्यत्रार्थे दृष्टांतमाह—**तद्यथा तृणजलायुका तृणस्यांतं गत्वाऽऽत्मानमुपसंहरतीति** । तत्तत्र उद्भूतवासनस्य म्रियमाणस्य तया वासनया देहान्तरसञ्चारे अयं दृष्टांतः । ' यथा ' येन प्रकारेण ' तृणजलायुका ' तृणस्यान्तमवसानं गत्वा अर्थात्तृणान्तरमाश्रित्य आत्मानमात्मनः पूर्वावयवमुपसंहरति अग्रिमावयवस्थाने इत्यर्थः । दार्ष्टांतिकमाह—**एवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वाऽऽत्मानमुपसंहरतीति** । यथाऽयं दृष्टांतः । ' एवमेवायं पुरुषः ' यः प्रकृतः संसारी ' इदं शरीरं ' पूर्वोपात्तं ' निहत्य ' स्वप्नप्रतिपित्सुरिव पातयित्वा ' अविद्यां गमयित्वा ' अचेतनं कृत्वा आत्माभिमानत्यागेन प्रसारितया वासनया अर्थाच्छरीरान्तरं गृहीत्वा ' आत्मानमुपसंहरति ' । तत्रैवाहमिति आत्मभावं प्रतिपद्यते न पूर्वदेहे इत्यर्थः । एतेन एतदपास्तं यद्वदन्ति पौराणिकाः—तृणजलायुकादृष्टान्तात् देहान्तरं गृहीत्वा पूर्वदेहं मुञ्चत्यात्मेति स्थूलदेहविशिष्टस्यैव परलोकगमनमिति । यस्मात् देहनिर्गमनात्प्रागवस्थायामेव यथोक्ता हृदयस्था वासना विद्याकर्मनिमित्तं भाविदेहं स्पृशति । जीवोऽपि तत्राभिमानं करोति । पुनस्तु पूर्वदेहं त्यजतीत्येतस्मिन्नर्थे तृणजलायुकादृष्टांतः श्रुत्या दर्शितः । तस्मात् पूर्वदेहविशिष्टस्यैव परलोकगमनमिति अयुक्तमिति ॥ ४ ॥

एवं जलायुकावत् वासनयैव शरीरान्तरं गच्छत आत्मनः तदारम्भकाणि पञ्च भूतानीति "तद्यथा राजानं" इत्यादावुक्तम् । तत्र किं नित्योपात्तमेव भूतपञ्चकं पूर्वपूर्वदेहद्वयोपमर्देन अन्यदन्यदेहद्वयमारभते । किं वा अन्यदन्यदेव भूतपञ्चकमन्यमन्यं देहं जनयतीति सन्देहे तत्तद्भूतपञ्चकोत्पत्तावपि कारणान्तरस्य मृग्यत्वात् मायायाः सर्वकारणत्वेऽपि तत्तद्देहारम्भसमये तत्तदुपादानभूतपञ्चकोत्पादकत्वे प्रमाणाभावात् प्रतिदेहारंभं भूतपञ्चक-

स वाऽअयमात्मा ब्रह्म । विज्ञानमयो मनोमयो वाङ्मयः प्राणमयश्चक्षुर्मयः श्रोत्रमयऽआकाशमयो वायुमयस्तेजोमयऽआपोमयः पृथिवीमयः क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेदम्मयोऽदोमयऽइति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति ॥ ६ ॥

---

स वा अयमात्मा ब्रह्म । विज्ञानमयः । मनोमयः । वाङ्मयः । प्राणमयः । चक्षुर्मयः । श्रोत्रमयः । आकाशमयः । वायुमयः । तेजोमयः । आपोमयः । पृथिवीमयः । क्रोधमयः । अक्रोधमयः । हर्षमयः । अहर्षमयः । धर्ममयः । अधर्ममयः । सर्वमयः । तद्यदा इदंमयः अदोमयः, इति । यथाकारी यथाचारी तथा भवति । साधुकारी साधुर्भवति । पापकारी पापो भवति । पुण्यः पुण्येन कर्मणा भवति । पापः पापेनेति ॥ ६ ॥

---

व्यक्तिभेदे मानाभावाच्च न द्वितीयः पक्षः सम्भवतीत्यभिप्रेत्य प्रथमपक्षमेवांगीकारयितुं दृष्टान्तमाह–तद्यथा पेशस्कारीति । तत्तत्र नित्योपात्तमेव मायामयं भूतपञ्चकं प्रतिदेहारम्भं उपादानम् इत्यस्मिन्नर्थे दृष्टांतः । 'यथा' लोके पेशः सुवर्णं तत्करोतीति 'पेशस्कारी' सुवर्णकारः 'पेशसः' सुवर्णस्य 'मात्रां' पूर्वरचनामपादायापच्छिद्योपमृद्य 'अन्यत्' पूर्वस्माद्रचनाविशेषात् भिन्नं नवादपि नवं 'नवतरं' अभिनवतरं कल्याणादपि कल्याणं कल्याणतरमतिशोभनं 'रूपं' 'तनुते' निर्मिनोति इत्यर्थः । दार्ष्टान्तिकमाह–एवमेवायं पुरुषऽ इदं शरीरं निहत्येत्यादिना । 'रूपं' संस्थानविशेषं देहान्तरम् । अन्यत्तु पूर्ववत् । किं तदारभ्यमाणं शरीरमित्यपेक्षायामाह–पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वेति । पितृभ्यो हितं 'पित्र्यं' पितृलोकोपभोग्यमिति यावत् । एवं तत्तल्लोकोपभोगयोग्यं तत्तन्नामकं व्याख्येयम् । 'ब्रह्म' हिरण्यगर्भः तल्लोकोपभोगयोग्यं ब्राह्मम् । प्रजापतिर्विराट् तल्लोकोपभोगयोग्यं 'प्राजापत्यं वा' शरीरम् । 'तनुते' इति प्रत्येकमभिसम्बध्यते । देहव्यक्तीनामानन्त्येन प्रत्येकं कथयितुमशक्यत्वात् अनुक्तं सर्वनामान्यशब्देन गृह्णाति–अन्येभ्यो वा भूतेभ्य इति । यथाकर्म यथाश्रुतं 'अन्येभ्यो भूतेभ्यः' प्रेततिर्यगादिभ्यः सकाशात् शरीरं तनुते इति सम्बध्यते । तस्माद्वर्तमानदेहारम्भकाण्येव भूतानि शरीरान्तरारम्भकाणि । तद्वशाच्चास्य संसरणमिति भावः ॥ ९ ॥

योऽयमात्मनः संसारसम्बन्धः स वास्तवो न भवति किं तु–औपाधिक एवेति तदुपाधिनो दर्शयितुं आत्मनो वास्तवस्वरूपमाह–स वाऽ अयमात्मा ब्रह्मेति । 'सः' प्रकृतः संसारी । वैशब्दस्तत्स्मृत्यर्थः । अयमपि विद्यातत्कार्यविनिर्मुक्तः स्वप्रकाशः अपरोऽक्षात्मा कूटस्थः साक्षी चिद्धातुः एवंभूतः सोऽहमात्मा 'वै' 'ब्रह्म' अशनायाद्यतीतपरमात्मैव अस्य संसारिणो वास्तवं रूपमित्यर्थः । ब्रह्मैव सन्नयमात्मा अविद्याऽब्रह्मवत् प्रतिपन्नः । पुनः सम्यक् ज्ञानात्तद्ध्वंसे ब्रह्मैवावतिष्ठत इति भावः । इदानीं यत्प्रयुक्तः एवंविधब्रह्मात्मनो

बन्धः तानुपाधीन् आह--**विज्ञानमयो मनोमयो वाङ्मयः प्राणमय** इति। विज्ञानं बुद्धिः तन्मयः तत्प्रायः । बुद्ध्यैक्याध्यासाद्धि धर्मस्य कर्तृत्वादेः आत्मन्यारोपः । अतस्तत्प्रायः । अस्मिन् प्रकरणे सर्वोऽपि मयट् प्रायार्थः, न तु विकारार्थः । मनसः सन्निकर्षान्मनोमयः। विज्ञानमयत्वं चिन्मयत्वोपलक्षणम्। मनोमयत्वमहंकारमयत्वोपलक्षणमिति द्रष्टव्यम् । वदनव्यापारकाले वाङ्मयः सः । प्राणमयः पंचवृत्तिकस्तन्मयस्तत्प्रायः। तथा रूपदर्शनकाले चक्षुर्मयः । शब्दश्रवणकाले श्रोत्रमयः । एतच्च रसनादेः कर्मेंद्रियाणां चोपलक्षणपरमित्यर्थः । एवं प्राणबुद्ध्यादिद्वारेण चक्षुरादिकरणमयः सन्नात्मा शरीरारंभकभूतमयोऽपि भवतीत्याह–**आकाशमयो वायुमयस्तेजोमय आपोमयः पृथिवीमय** इति । आकाशशरीरारंभे आकाशमयः । तथा वायव्यशरीरारंभे वायुमयः । तैजसशरीरारंभे तेजोमयः । तथा वरुणलोकेषु आप्यशरीरारंभे आपोमयः । पार्थिवशरीरारंभे पृथिवीमयः । एवं कार्यकरणसंघातमयः सन्नात्मा तत्राभिव्यज्यमानांतरात्मवृत्त्युपाधिकश्च भवतीत्याह–**क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमय** इति । प्राप्ताप्राप्तवस्त्वंतरदर्शनेन तद्विषयाभिलाषः स्वविषयभोगावसानमन्तरेण केनचित् प्रतिहन्यमानश्चेद्भवति, तदा क्रोधरूपेण परिणमते । तन्मयः क्रोधमयः । स क्रोधो यदि केनचिदुपायेन निवर्तितः स्यात् तदा प्रसन्नं चित्तं अक्रोधः तन्मयोऽक्रोधमय इत्यर्थः। तथा इष्टवस्तुसंयोगनिमित्तो हर्षः, तन्मयः 'हर्षमयः' । इष्टवस्तुवियोगनिमित्तः 'अहर्षः' तन्मयः 'अहर्षमयः' । एवमक्रोधहर्षमयत्वे क्रोधाहर्षमयत्वे चात्मनः क्रमेण पुण्यापुण्यमयत्वं भवतीत्याह–**धर्ममयोऽधर्ममय** इति। न हि क्रोधादिभिर्विना धर्माधर्मप्रवृत्तिरुपपद्यत इत्यर्थः । एवं धर्माधर्ममयः सन् सर्वप्रायो भवतीत्याह–**सर्वमय** इति । सर्वस्य व्याकृताव्याकृतस्य जगतो धर्माधर्मकार्यत्वेन तयोः फलं प्रतिपद्यमानस्तन्मयः सन् 'सर्वमयः' भवतीत्यर्थः । ननु–व्याकृतमयत्वस्य प्रत्यक्षसिद्धत्वेऽपि अव्याकृतमयत्वस्य तदभावात् कथं सर्वमयत्वं ज्ञातुं शक्येत इत्याकांक्षायां अपरोऽक्षेण कार्यलिंगेन तत्कारणीभूतः परोऽक्षोऽपि धूमाद्वह्निरिव ज्ञातुं शक्यते इत्यभिप्रेत्य सर्वमयत्वं साधयति–**तद्यदेतदिदंमयोऽदोमय** इति । यत्किमपि कर्म शुभाशुभचेष्टारूपं साक्षादुपलभ्यते । तत् इदमित्येवोच्यते । तेन प्रत्यक्षेण लिंगेन भावनारूढपरोऽक्षतत्कारणत्वेन अनुमीयमानं अद इत्युच्यते । तथा च यदा यस्मिन् समये अयमात्मा गृह्यमाणविषयादिमयः तदा 'इदंमयः' इत्यर्थः । तथा कार्येण अनुमिमानभावनात्मकविषयादिमयः 'अदोमयः' । तदिति पदं सर्वमयत्वसाधनोपसंहारार्थम् । तदिदं सर्वमयत्वं सिद्धमित्यर्थः । इदानीं विज्ञानमयादिवाक्यार्थं संक्षिप्याह–**यथाकारी यथाचारी तथा भवतीति** । यथा कर्तुं शीलमस्यास्तीति 'यथाकारी' । यथा चरितुं शीलमस्यास्तीति 'यथाचारी' । सः 'तथा' तादृशो 'भवति' । करणचरणानुरूपो भवति । करणं नाम विधिप्रतिषेधगम्या नियता क्रिया, चरणं तु अनियतक्रिया, इति विशेषः । एवं यथाकारीत्याद्यनूद्य तथा भवतीत्येतत् व्याचष्टे–**साधुकारी साधुर्भवति पापकारी पापो भवतीति** । साधुरुत्कृष्टः पितृगन्धर्वादिलोके भवति । 'पापः' निकृष्ट एव स्थावरादौ 'भवति' जायत इत्यर्थः । ननु–साधुकारीत्यादौ ताच्छील्यप्रत्ययश्रवणात् भूयोऽभ्यासादेव पुण्यपापसम्बन्धो भवति न सकृदनुष्ठानात्, इत्याशंकायां प्राप्तायां सकृदनुष्ठानादपि पुण्यपापसम्बन्धो भवत्येवेति दर्शयितुं शंकाबीजं ताच्छील्यप्रत्ययं विहाय आह–**पुण्यः पुण्येन कर्मणा भवति पापः पापेन इतीति** । 'पुण्यः' पुण्यवान् 'पापः' पापवान् । तथा च पुण्यपापकर्माभ्यासे तत्फलातिशयो भवतीत्येवंपरतैव ताच्छील्यप्रत्ययोपादानस्य । न तु सकृदनुष्ठानात् तत्फलसम्बन्धाभावपरतेत्यर्थः । यत एवं उत्कृष्टापकृष्टयोनिप्राप्तौ पुण्यापुण्ययोरेवासाधारणकारणत्वं, इतरेषां तु साधारणत्वम्; अतः सर्वदा पुण्यमेवानुष्ठेयम् । नेतरत्, इति भावः ॥ ६ ॥

(त्य) अथो खल्वाहुः । काममयऽएवायम्पुरुषऽइति स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति तत्कर्म्म कुरुते यत्कर्म्म कुरुते तदभिसम्पद्यतऽइति ॥ ७ ॥

तदेष श्लोको भवति । तदेव सक्तःसह कर्म्मणैति लिङ्गम्मनो यत्र निषक्तमस्य । प्राप्यान्तङ्कर्म्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्म्मणऽइति नु कामयमानोऽथाकामयमानो योऽकामो निष्कामऽआत्मकामऽआप्तकामो भवति न तस्मात्प्राणाऽउत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥ ८ ॥

---

अथो खल्वाहुः । काममय एवायं पुरुष इति । स यथाकामो भवति तथाक्रतुर्भवति । यथाक्रतुर्भवति तत्कर्म कुरुते । यत्कर्म कुरुते तदभिसम्पद्यते इति ॥ ७ ॥

तदेष श्लोको भवति—"तदेव सक्तःसह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यांतं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे ।"

---

पुण्यपापयोरेव संसारासाधारणकारणत्वमिति यदिदमुक्तं तत् पूर्वपक्षीकृत्य इदानीं कामस्यैवासाधारणकारणत्वमिति सिद्धांतमभिप्रेत्याह—**अथो खल्वाहुः काममय एवायं पुरुष इतीति** । पूर्वपक्षानन्तरं सिद्धांतप्रतियोग्यताद्योतकः अथोशब्दः । 'खलु' निश्चये । स्थूलदृश एके आचार्याः पुण्यापुण्यमयोऽयं पुरुष इत्याहुः कथयंति । अन्ये पुनर्बंधमोक्षकुशलाः 'अयं पुरुषः' खलु 'काममय एव' कामो विषयादित्सा तन्मय इत्याहुः । न चैवं सति अविद्यायाः संसारहेतुत्वानुपपत्तिः, तस्याः स्वतः तद्धेतुत्वानुपपत्तेः इष्टत्वात् । सहकार्यपेक्षायां तु कामस्यैव प्राधान्यात् काम एव असाधारणं कारणं संसारस्य । उक्तयोः पुण्यपापयोरपि तदभावेऽनुदयात् "अकामस्य क्रिया काचित् दृश्यते नेह कस्यचित् । यद्यद्धि कुरुते किंचित् तत्तत्कामस्य चेष्टितम्"—इति मनुस्मरणात् । कामान् यः कामयते मन्यमानः स कामस्यैवासाधारणकारणत्वात् युक्तं काममय एवेत्यवधारणमित्यर्थः । कया प्रणाड्या कामस्य संसारकारणत्वमित्यपेक्षायामाह—**स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति** इत्यादिना । स आत्मा सामान्यतः काममयः सन् 'यथाकामः' यादृशेन कामविषयेन युक्तो भवति, तथाक्रतुर्भवति । क्रतुर्नामाध्यवसायः, यदनन्तरा क्रिया प्रवर्तते । काम एव ईषदभिलाषमात्रे यस्मिन् विषये अभिव्यक्तो भवति । स तस्मिन् विषये अविहन्यमानः स्फुटीभवन् क्रतुत्वमापद्यते तन्मय आत्मा भवतीति यावत् । सः 'यथाक्रतुर्भवति' यादृशकर्मविषयेण क्रतुना युक्तो भवति । 'तत्कर्म कुरुते' । यद्विषयः क्रतुः स्वयं तत्फलसिद्धये तद्योग्यं कर्म निर्वर्तयतीति यावत् । 'यत्कर्म कुरुते' 'तदभिसंपद्यते' तदीयं फलमभिसंपद्यते प्राप्नोति । तस्मात्सर्वमयत्वे काममयत्वं हेतुरित्यर्थः ॥ ७ ॥

ब्राह्मणोक्तेऽर्थे मंत्रसम्मतिमाह—**तदेष श्लोको भवति तदेव सक्तःसह कर्म्मणैतीति** । तत्तत्र ब्राह्मणोक्तेऽर्थे एष सार्द्धः 'श्लोकः' मन्त्रो भवति । 'अस्य' उद्भूताभिलाषस्य 'लिंगं' सप्तदशावयवात्मकं मनः प्रधान-

**इति नु कामयमानः । अथाकामयमानः । योऽकामो निष्काम आत्मकाम आप्तकामो भवति । न तस्मात् प्राणा उत्क्रामन्ति । अत्रैव समवनीयन्ते । ब्रह्मैव सन् ब्रह्माप्येति ॥ ८ ॥**

---

त्वात् मनःशब्दवाच्यम् । यद्वा प्रमात्रादिसाक्षी येन साक्ष्येण मनसा लिंग्यते, तन्मनो लिंगमिति तल्लिंग '**मनो** यत्र ' यस्मिन् गंतव्ये फले ' निषक्तं ' निश्चयेन सक्तं भवति । तन्मनः तद्गंतव्यफलरूपापन्नं ' सत ' ' कर्मणा ' फलारंभकीभूतकर्मणा ' सह ' ' तदेव ' गंतव्यं फलमेति गच्छतीत्यर्थः । तथा च–यदभिलाषात् यत्कर्म कृतवान् तत्र मनोऽभिषङ्गवशात् तेन कर्मणा सहास्य तत्फलप्राप्तिरिति वाक्यार्थे स्थिते कामो मूलं संसारस्येत्यवगतम् । तथा च पर्याप्तकामस्य कृतात्मनश्च '' इहैव सर्वे प्रविलीयंति कामाः ''–( ) इति श्रुत्यंतरात् अवाप्तपरमपुरुषार्थस्य शुद्धबुद्धेर्जीवन्मुक्तस्य ब्रह्मविद इहैव जीवदवस्थायामेव कामविनाशश्रवणात् अर्थात् विद्यमानान्यपि कर्माणि कामहीनस्य निष्फलप्रसवानि इत्यवगतेः काम एव संसारे हेतुरिति भावः । ननु-कामप्रधानः संसरति चेत्; कर्मफलभोगानंतरं कामाभावात् मुक्तिरेव भविष्यतीत्याशंकायामाह–**प्राप्यांतं कर्मण** इत्यादिना । अयं फलासक्तः कामी इहास्मिन् लोके यत्किंचित्कर्म करोति ' तस्य ' ' कर्मणः ' भोगेन अन्तमवसानं ' प्राप्य ' कर्मफलभोगसमाप्तिं गत्वा ' तस्मात् लोकात् ' भुक्तभोगात् ' पुनरैति ' आगच्छति । ' अस्मै लोकाय कर्मणे ' । कर्मप्रधानत्वात् अस्य लोकस्य कर्मण इति विशेषणम् । अस्मिन्मनुष्यलोके कर्मकरणार्थमित्यर्थः । तस्मादेवं फलासक्तः सन् कर्म कृत्वा तत्फलभोगार्थं गच्छति । ततश्च पुनः कर्मकरणार्थमागच्छतीत्येवंभूतसंसरणप्रवाहस्य विना ब्रह्मज्ञानमनुच्छेदात् न कर्मफलभोगावसाने मुक्तिः शक्येति भावः । इदानीमज्ञानकारणकः काम एव संसारासाधारणकारणमित्युक्तमुपसंहरति–**इति नु कामयमान** इति । इत्येवं ' नु ' खलु ' कामयमानः ' संसरतीति शेषः । एवं इयता प्रबन्धेन अवस्थाद्वयदृष्टांतस्य दार्ष्टांतिकभूतः संसारः सकारणको दर्शितः । इदानीं योषिदालिङ्गनेनेव पुंसः सुषुप्तिप्राप्तस्यात्मनः कामादिहीनं रूपं मोक्षदृष्टांतभूतं यत् अतिच्छन्दोवाक्येनोक्तं तस्य दार्ष्टांतिकभूतं सोपायं मोक्षस्वरूपमाह–**अथाकामयमान** इत्यादिना । अथशब्दः संसारप्रकरणविच्छेदार्थः । यस्मात् कामयमान एव एवं संसरति । तस्मादकामयमानो विद्वान्न कचित्संसरति । '' न तस्मात्प्राणा उत्क्रामंति '' इति वचनात् कामाभावे तदुत्थतत्संसरणहेतुकर्माभावाच्च । किं तर्हि '' ब्रह्मैव सन् ब्रह्माप्येति '' इत्यग्रिमेणान्वयः । कुतोऽकामयमानः स्यादित्यत आह–**योऽकाम** इति । बाह्येषु शब्दाद्यर्थेषु दृष्टिश्रुतिपूर्वकाः कामा यस्य न सन्ति सः ' अकामः ' इत्यर्थः । अकामोऽपि कुतो हेतोरित्यत आह–**निष्काम** इति । अतिग्रहशब्दिताः शब्दादिवासनात्मका अन्तस्था ये कामाः ते निर्गता यस्मात् सः ' निष्कामः ' । अतः अकामपदेन बाह्या निरस्यन्ते । निष्कामपदेन तद्धेतुभूता आंतरा इति अपौनरुक्त्यमित्यर्थः । कथं च निष्कामत्वं भवतीत्यपेक्षायामाह–**आत्मकाम** इति । आत्मैव सर्वमिति ज्ञानेन सर्वशब्दादिप्रपंचस्य आत्ममात्रत्वे प्रतिपन्ने स्वातिरिक्तकामयितव्यराहित्यं आत्मकामत्वम् । अतः शब्दादिसाध्यसुखस्यापि आत्ममात्रत्वात् आत्मैव कामो यस्य सः ' आत्मकामः ' इत्यर्थः । अत एव–**आप्तकाम** इति । आप्ताः कामा येन सः ' आप्तकामः ' । आत्मकामत्वादाप्तकामत्वमित्यर्थः । अर्थादात्मैकत्वज्ञानाभावे अकामयमानत्वासंभवात् संसारो दुर्वार इति आत्मनो ज्ञानाय यतितव्यमिति सूचितं भवति । किमेवंविधस्य भवतीत्यपेक्षायां मोक्ष एव भवतीत्याह–**न तस्मात्प्राणा उत्क्रामंत्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति** । ' तस्मात् ' अकामयमानात्सकाशाद्धि ' प्राणाः ' वागादयः ' नोत्क्रामन्ति ' । कामाभावेन कर्माभावे सति गमनकारणाभावात् । किं तु–तप्तलोहनिक्षिप्तोदकबिंदुवत् अत्रैव ब्रह्मस्वरूपे एव ' समवनीयते ' संप्रलीयन्ते इत्यर्थः । स चाकामयमानो जीवन्नेव ' ब्रह्मैव

तदेष श्लोको भवति । यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः * । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुतऽइति ॥ ९ ॥

तद्यथाऽहिनिर्ल्वयनी । वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदᳫं शरीरᳫं शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञऽआत्मा ब्रह्मैव लोकऽएव सम्राडिति होवाच याज्ञवल्क्यः सोऽहम्भगवते सहस्रन्ददामीति होवाच जनको वैदेहः ॥ १० ॥

---

तदेष श्लोको भवति–" यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते "–इति ॥ ९ ॥

तद्यथा अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेव इदं शरीरं शेते । अथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राट्, इति होवाच याज्ञवल्क्यः । सोऽहं भगवते सहस्रं ददामि, इति होवाच जनको वैदेहः ॥ १० ॥

---

सन् ' सुषुप्त्यवस्थायामिव अपरिच्छिन्ननिर्विशेषाद्वैतालिप्तचिज्ज्योतिःस्वभावः सन् ' ब्रह्माप्येति ' प्राप्नोति नित्यप्राप्तत्वादेव अप्येतिशब्देन प्राप्तिरुपचर्यते इत्यर्थः ॥ ८ ॥

इदानीं काममयः संसरतीति ब्राह्मणोक्तेऽर्थे यथा पूर्वप्रकरणे मन्त्रोदाहरणं कृतं तथा अत्राप्युक्तेऽर्थे मन्त्रमुदाहरति–**तदेष श्लोको भवति यदा सर्वे प्रमुच्यंत** इति । तत्तस्मिन्नुक्ते मोक्षतत्साधनेऽर्थे ' एष श्लोकः ' मन्त्रः ' भवति ' अस्यात्मकामस्य ब्रह्मविदः ' यदा ' यस्मिन् काले विद्यापरिपाकावस्थायां 'हृदि श्रिताः' ' ये कामाः ' तृष्णात्वेन व्यवह्रियमाणा द्विविधेन्द्रियप्रवृत्तिहेतुभूताः सन्तो जगज्जनका वासनात्मकाः । ते ' सर्वे ' समस्ताः ' प्रमुच्यन्ते ' समूलतो विशीर्यंते । न तु सुषुप्ताविव कारणात्मना अवतिष्ठन्ते । ' अथ ' अतो हेतोः समूलतः कामवियोगलक्षणात् तदा ' मर्त्यः ' मरणधर्माऽपि सन् ' अमृतः ' अमरणधर्मा भवतीति यावत् । ततश्च कामवियोगादमृतो भवतीति निर्देशसामर्थ्यात् अविद्यालक्षणा अनात्मविषयाः कामा मृत्यवो भवंतीत्यवगम्यते । किं तदमृतत्वं क्व वा भवतीत्यत उच्यते–**अत्र ब्रह्म समश्नुत** इति । अत्रास्मिन्नेव शरीरे स्थितः सन् ' ब्रह्म ' ' समश्नुते ' ब्रह्मीभूतो भवति ब्रह्मभावापत्तिलक्षणो मोक्ष एवामृतत्वम् । तच्च विज्ञानिशरीर एव कामनिवृत्त्या अभिव्यज्यते । स्वतः सिद्धमेवेत्यर्थः ॥ ९ ॥

ननु–विदुषः सर्वात्मविद्यया आत्ममात्रत्वेन प्राणादिषु बाधितेष्वपि असौ देहे चेद्वर्तते ततोऽस्य पूर्ववत् देहं हित्वा द्विधा वैयर्थ्यमेवेत्याशंकायां तन्निराकरणार्थं तावत् दृष्टांतमाह–**तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतेति** । तत्तत्र दृष्टान्तः । ' यथा ' लोके अहिः सर्पः यस्यां त्वचि नितरां लीयते सा सर्पस्य त्वक् ' अहिनिर्ल्वयनी ' । सा ' मृता ' अहिदेहवियुक्ता ' वल्मीके ' सर्पाश्रये ' प्रत्यस्ता ' प्रतिक्षिप्ता सर्पेणानात्मभावेन परित्यक्ता सती ' शयीत ' वर्तेत । सर्पश्च यथा तत्र निर्गमनप्रवेशौ कुर्वन्नपि निर्ममाहंकृतिको वर्तत इति अपरो दृष्टांतः अर्थात् विवक्षित इत्यर्थः । निर्मोकदृष्टांतस्य

---

* " स्थिताः " इति काण्वः पाठः ।

( स्त ) तदप्येते श्लोकाः । ( ८ ) अणुः पन्था वितरः पुराणो माᳪ

तदप्येते श्लोकाः–" अणुः पंथा वितरः पुराणो मां स्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः ॥ ११ ॥

तावद्दार्ष्टांतिकमाह–**एवमेवेदं शरीरं शेत** इति । यथाऽयं दृष्टांतः 'एवमिदं शरीरं' स्थूलं सूक्ष्मं च सर्पस्थानीयेन मुक्तेन परित्यक्तं मृतमिव सम्बन्धवर्जितं 'शेते' विद्यया सम्बन्धहेतोरविद्यायाः समुच्छेदादिति । ननु–दृष्टांते सर्पतन्निर्मोकयोर्भेदेनावस्थितिवत् दार्ष्टांतिकेऽपि विद्वत्तद्देहयोस्तथा स्यात् । अन्यथा देहदेहिभावासिद्धेरिति चेन्मा मंस्थाः । यथा अहिनिर्मोकयोः पूर्ववदिदानीं मिथः सम्बन्धो नास्ति । तद्वद्देहिदेहयोरपि पूर्ववत् मिथ्याऽभिमानाख्यः सम्बन्ध इदानीं नास्तीत्येतावन्मात्रार्थस्यात्र विवक्षितत्वादित्यभिप्रेत्य सर्पदृष्टांतस्य दार्ष्टांतिकमाह–**अथाऽयमनास्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्म्राडिति होवाच याज्ञवल्क्य** इति । अथशब्दो हेत्वर्थः । अथ सकारणस्य देहस्य त्यागादित्यर्थः । अयमात्मा आत्मस्वरूपापन्नो विद्वान् 'अनस्थिकः' । अस्थीति मरणधर्मकशरीरगतमज्जाऽस्थिस्नावमेदोऽसृक्त्वचामुपलक्षणम् । न विद्यते अस्थि मरणधर्मकं मज्जादिकं यस्मिन् सः अनस्थिकः अमृत इत्यर्थः । तथा चाग्निरहस्ये श्रूयते–" उभयं हैतदग्रे प्रजापतिरास मर्त्यं चैवामृतं च " ( श. प. १०।१।४।१ ) इति प्रक्रम्य " अथ पुरीषं निवपति तद्वास्यैतदसृगेव त्वगेव तद्वै तन्मर्त्यं मर्त्यं ह्यसृङ्मर्त्या त्वक् " ( श. प. १० । १ । ४ । ७ ) इति । अमृतः कुतो हेतोरित्यत आह–'अशरीरः' । अविद्वद्दृष्ट्या शरीरस्थः स्वदृष्ट्या 'अशरीरः' एव । अत एव 'प्राज्ञः' साक्षी । स च एतद्विशेषणविशिष्टो विद्वान् 'ब्रह्मैव' अशनायादिवर्जितः परमात्मैव । ब्रह्मशब्दस्य कमलासनादिविषयत्वं वारयितुं 'लोक एव' स्वप्रकाश एवेति विशेषणं बोध्यम् । 'याज्ञवल्क्यः' मुनिः 'सम्राडिति' राजानं संबोध्य इत्येवं 'ह' किल 'उवाच' उक्तवान् । तथा च–अखंडैकरसब्रह्मभूतस्य विदुषो देहसम्बन्धहेत्वज्ञानध्वस्तौ पूर्ववच्छरीराभिमानाभावान्न विद्यावैयर्थ्यमिति भावः । यः पूर्वं मुनिना विमोक्षार्थः कामप्रश्नो वरो दत्तः । स यद्यपि सहेतुको बन्धमोक्षार्थलक्षणो दृष्टांतपूर्वको जनकयाज्ञवल्क्याख्यायिकारूपधारिण्या श्रुत्या सविस्तरो निर्णीतः । तथापि मोक्षसाधनात्मज्ञानहेतुसंन्यासस्य पूर्वमसकृदुक्तत्वेऽपि ज्ञानोत्पत्त्यन्तरंगभूतशमादीनां तत्रानुक्तत्वात् तैः सह भूयोऽपि संन्यासो विद्यासाधनत्वेन विधातव्य इति वक्तव्यविशेषसम्भवात् सहस्रदानमेव राजा स्वजिज्ञासानिवृत्त्यभावं सूचयन् प्रतिजज्ञे, न सर्वस्वं इत्यभिप्रेत्याह श्रुतिः–**सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेह** इति । 'सोऽहं' इत्थं विमोक्षितवते 'भगवते' 'सहस्रं ददामीति' पूर्ववत् । नन्वेवं वक्तव्यशेषोऽस्ति चेत्, राजा पूर्ववत् " अत ऊर्ध्वं विमोक्षायैव ब्रूहीति " कस्मान्न पृच्छेदिति चेत् सत्यं, शास्त्रे आलोच्यमाने ज्ञानादन्यन्न साक्षान्मोक्षसाधनमीक्ष्यते । संन्यासादेस्तु तद्वारैव साधनत्वादिति विवक्षन् विमोक्षायेति नापृच्छत् । विदुषो हि निःशेषक्लेशोपशमात्मकस्वरूपावस्थितस्य स्वतः सिद्धः संन्यासादिः, न ज्ञानसाधनम् । किं तु " संन्यासेन तनुं त्यजेत् " (          ) इति स्मृतेः प्रतिपत्तिकर्मानुष्ठानमिति न तत्र जिज्ञासा । विविदिषोः पुनः " त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् " इति वचनात् ज्ञानार्थत्वेन संन्यासः सपरिकरो वक्तव्यः इति युक्तं तदर्थं सहस्रदानमिति भावः ॥ १० ॥

" अथाकामयमानः " इत्यादिब्राह्मणेन " यदा सर्वे प्रमुच्यते " इति मन्त्रेण च ज्ञानादेव मुक्तिरिति यः

स्पृष्टोऽनुवित्तो मयैव । तेन धीराऽअपियन्ति ब्रह्मविदऽउत्क्रम्य स्वर्गं लोकमितो विमुक्ताः ॥ ११ ॥

तस्मिञ्छुक्लमुत नीलमाहुः । पिङ्गलꣳ हरितं लोहितञ्च । एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च ॥ १२ ॥

---

तस्मिन् शुक्लमुत नीलमाहुः पिंगलं हरितं लोहितं च । एष पंथा ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च ॥ १२ ॥

---

संक्षिप्तोऽर्थः, तस्यैव विवरणार्थाः 'श्लोकाः' मंत्राः संतीति शेषः । 'अणुः' स्थूलादिनिखिलविशेषातीतत्वात् । 'वितरः' वितीर्णो विस्तृत इति यावत् दुर्विज्ञेयत्वात् अनंतात्मावगाहित्वाद्वा । 'पुरागः' चिरंतनः नित्यश्रुतिप्रकाशितत्वात् । एवंभूतः 'पंथाः' ऐकात्म्यज्ञानलक्षणो मार्गः । सः 'मां स्पृष्टः' शास्त्राचार्योक्तितो मामनुप्राप्तः । यद्वा तृतीयार्थे द्वितीया । मामिति मया स्पृष्टो लब्ध इति यावत् । न केवलं लब्धः । किंतु—'मयैव चानुवित्तः' अनुवेदनं नाम विद्यायाः परिपाकापेक्षया फलावसानतालक्षणा निष्ठाप्राप्तिर्भुजेरिव तृप्त्यवसानता । तथा चानुवित्तः उक्तलक्षणांनिष्ठां प्रापितः । एवकारः मया अनुवित्त एवेति अयोगव्यवच्छेदार्थः । सर्वथा नान्ययोगव्यवच्छेदार्थः । "तद्योऽभिदेवानां प्रत्यबुध्यत"—( ) इति श्रुत्या ब्रह्मविद्यायाः सर्वसाधारणत्वोक्तेरिति भावः । एवकारः अत्रान्ययोगव्यवच्छेदको न भवति, इत्येतदेवाह—**तेन धीराऽअपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ता** इति । न केवलं मयैवायं मार्गोऽनुवित्तः । किं तु—अन्येऽपि ये ब्रह्मवादिनः प्रज्ञावंतः 'धीराः' सदा निर्द्वंद्वा जीवन्त एव 'विमुक्ताः' सन्तः इतोऽस्माच्छारीरात् 'उत्क्रम्य' शरीरपातानंतरमेव 'तेन' ब्रह्मविद्यामार्गेण 'स्वर्गं' परमानंदलक्षणं मोक्षप्रकरणात् न तु-त्रिविष्टपलक्षणं 'लोकं' स्वप्रकाशमपियन्ति अपिगच्छन्तीत्यर्थः ॥ ११ ॥

यथोक्ते अस्मिन्मोक्षमार्गे अविद्योपप्लुताशयाः यथारुचि विचित्राणि दर्शनानि कल्पयंतीत्याह—**तस्मिञ्छुक्लमुत नीलमाहुरिति** । 'तस्मिन्' ब्रह्मज्ञानलक्षणे मोक्षमार्गे शुक्लमतिसंशुद्धं ब्रह्मेत्याहुः । 'आहुरिति' सर्वत्रानुषंगः । अपरे शरद्व्योमवत्तु ब्रह्म नीलमिति । अन्ये तु वह्निज्वालात् पिंगलमिति । केचित् पुनर्वैडूर्यमणिवद्धरितं ब्रह्मेति । अपरे तु जपाकुसुमवल्लोहितमिति । चकारो ब्रह्मणः शब्दस्पर्शादितादात्म्यकल्पनासमुच्चयार्थः । प्राप्यस्य आदित्यादिब्रह्मणः शुक्लादिरूपत्वमुपेत्य तत्प्राप्तिमार्गे अर्वाग्दृशो विवदन्ते इत्यर्थः । वस्तुतस्तु उपासनामार्ग एव एवंविधः । न मोक्षमार्गः । तथा हि—उपासको हि नाडीद्वारा आदित्यादिलोकं प्रति निष्क्रामति । नाडीनां च—"शुक्लस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णाः" इति नाडीखण्डे अनेकवर्णात्मकत्वस्योक्तत्वात् उपास्यस्यादित्यादिब्रह्मणः शुक्लादिविशिष्टो मार्ग उपासनामार्ग एव । न तु ब्रह्मविद्यालक्षणे मोक्षमार्गे निर्गुणश्रुतिविरोधात् । तस्मादाप्तकामतया निर्गुणब्रह्मात्मविषयज्ञानमेव मोक्षमार्ग इत्येतदाह—**एष पंथा ब्रह्मणा हानुवित्त** इति । यथा तैलादिविलये प्रदीपस्य ज्वलनानुपपत्तौ तेजोमात्रे निर्वाणमिष्यते । तथा स्थूलसूक्ष्मात्मकस्य सर्वस्यैव कामस्य ज्ञानात् प्रक्षये सति प्रवृत्त्यनुपपत्तौ अत्रैव प्रत्यगात्ममात्रे कार्यकरणानामेकीभावेनावसानमित्येष 'पंथाः' ज्ञानमार्गो 'ब्रह्मणा' परमात्मस्वरूपेण ब्राह्मणेन त्यक्तसर्वैषणेनानुवित्तः पूर्वोक्तनिष्ठां प्रापित इत्यर्थः । एवं विप्रतिपत्तिनिराकरणपुरःसरं मोक्षमार्गं निश्चित्य 'तेन धीरा अपियन्ति' इत्यत्रोक्तं निगमयति—**तेनैति ब्रह्मवि-**

अन्धन्तमः प्रविशन्ति । ये ऽसम्भूतिमुपासते । ततो भूय ऽ इव ते तमो यऽउ सम्भूत्याꣳ रताः ॥ १३ ॥

असुर्य्या नाम ते लोकाः । ( ऽ ) अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्यापिगच्छन्त्यविद्वाꣳसोऽबुधा जनाः ॥ १४ ॥

तदेव सन्तः । ( स्तु ) तदु नद्वयामो न चेदवेदी महती विनष्टिः । ये तद्विदुरमृतास्ते भवन्त्यथेतर दुःखमेवोपयन्ति ॥ १५ ॥

---

अन्धं तमः प्रविशन्ति ये ऽसंभूतिमुपासत । ततो भूय इव ते तमो य उ संभूत्यां रताः-( वा. सं. ४० । ९ ) ॥ १३ ॥

असुर्या नाम ते लोका अंधेन तमसाऽऽवृताः । तांस्ते प्रेत्यापिगच्छंत्यविद्वांसोऽबुधा जनाः । ( वा. सं. ४० । ३ ) ॥ १४ ॥

तदेव संतस्तदु तद्भवामो न चेदवेदी महती विनष्टिः । ये तद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवोपयंति ॥ १५ ॥

---

तैजसः पुण्यकृच्चेति । अन्योऽपि ब्रह्मवित् ' तेन ' ब्रह्मविद्यामार्गेण मोक्षमेति प्राप्नोति । ब्रह्मविच्चे हेतुस्तैजस इति । तेजसि शुद्धसत्त्वे भवस्तैजसः क्षपिताशेषकल्मषतया आत्मप्रवणबुद्धिरिति यावत् । तैजसत्वे हेतुः पुण्यकृदिति । इष्टापूर्तलक्षणं पुण्यं करोतीति ' पुण्यकृत् ' । चकारः उक्तहेतुहेतुमद्भावक्रमसमुच्चयार्थः । न ज्ञानकर्मणोः समसमुच्चयार्थः । तदुक्तं-" कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते "-(　　) इति । किं च-" अर्थस्य मूलं निकृतिः क्षमा च कामस्य रूपं च वपुर्वयश्च । धर्मस्य यागादि दया दमश्च मोक्षस्य सर्वोपरमः क्रियाभ्यः "-(　　) इति । चतुर्विधे पुरुषार्थे साधनभेदोपदेशाच्च नात्र समुच्चयोऽभिमत इत्यर्थः ॥ १२ ॥

प्रस्तुतज्ञानमार्गस्तुत्यर्थं मार्गांतरं निन्दति-' अंधं ' अदर्शनात्मकं ' तमः ' मोहादिपदवाच्यं संसारनियामकं ' प्रविशंति ' प्रपद्यन्ते । के ते ? ' ये ' ' असंभूतिं ' संभवनं संभूतिः सा यस्य कार्यस्य सा संभूतिः । तस्या अन्या ' असंभूतिः ' देवताप्रकृतिकारणमव्याकृताख्यं, तां असंभूतिमव्याकृताख्यां प्रकृतिकारणं अविद्याकामकर्मबीजभूतां अदर्शनात्मिकां ' उपासते ' अनुवर्तंते इति यावत् । ततस्तस्मादपि ' भूय इव ' बहुतरमिव ' ते ' ' तमः ' प्रविशन्ति । के ? ' ये ' ' उ ' तु ' संभूत्यां ' कार्ये ब्रह्मणि हिरण्यगर्भाख्ये ' रताः ' आसक्ता उपनिषदर्थानपेक्षिण इति यावत् । अतो युक्तं आत्मज्ञानहीनानां तेषां अपि अधःपतनमित्यर्थः ॥ १३ ॥

नन्वेवं-यदि ते अदर्शनलक्षणं तमः प्रविशन्ति, तर्हि का क्षतिरिति आशंकायामाह-असुर्या नाम ते लोका इति । ये ' लोकाः ' ' अंधेन तमसाऽऽवृताः ' व्याप्ताः ' ते लोका असुर्याः ' तीव्रदुःखसमन्विताः ' नाम ' प्रसिद्धाः । असुषु रमंते इति व्युत्पत्तेः । परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः । तेषां स्वभूता असुर्या निकृष्टा इति यावत् । ' तान् ' लोकान् ' प्रेत्य ' मृत्वा ' अपिगच्छंति ' अप्ययमेकीभावं प्राप्नुवन्ति । के ते ? ये ' अविद्वांसः ' न केवलं सामान्यतः अविद्वांसः । किं तु-' अबुधाः ' आत्मावगमवर्जिताः ' जनाः ' प्राकृताः जनधर्मिणो वा । अतो दुःखप्राप्तेः सुखहानिरेव क्षतिरित्यर्थः ॥ १४ ॥

न केवलं ब्रह्मविदो विद्यया कृतकृत्यत्वे श्रुतिसम्प्रतिपत्तिरेव किं तु स्वानुभवसंवादोऽप्यस्तीत्याह-तदेव संत-

---

१-माध्यंदिनसंहितायां त्वत्र " ये के चात्महनो जनाः " इति पाठोऽस्ति ।

आत्मानञ्चेद्विजानीयात् । (द ) अयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसञ्चरेत् ॥ १६ ॥

यस्यानुवित्तः प्रतिबुद्धऽआत्मा । (तमाऽ) अस्मिन्त्सन्देहे गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः सऽउ लोकऽएव ॥ १७ ॥

---

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंचरेत ॥ १६ ॥

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् संदेहे गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥ १७ ॥

---

इतदु तद्भवाम इति । ' तदेव ' तत्रैव प्रसिद्धे अनेकानर्थसंकुले देहे एव अज्ञानदीर्घनिद्रारहिताः ' सन्तः ' वर्तमाना वयं ' तदु ' तदानीमेव कथंचित् कल्मषक्षयात् तद्ब्रह्म ' भवामः ' वर्तामहे । अहो कृतार्था वयमित्यभिप्रायः । ब्रह्मभावज्ञाने सति कृतार्थत्वं श्रुत्यनुभवाभ्यामुक्त्वा तदभावे दोषमाह—न चेदवेदी महती विनष्टिरिति । यद्ब्रह्म भवामः तद्ब्रह्मतत्त्वं न चेद्विदितवंतः । तर्हि अहं ' अवेदी ' अविद्वान् भवेयमिति शेषः । वेदनं वेदः सोऽस्यास्तीति वेदी न वेदी अवेदी । तदा ' महती ' अनंतपरिणामा जन्ममरणादिलक्षणा ' विनष्टिः ' विनशनं स्यात् इति शेषः । एवं पूर्वार्द्धेन उक्तमेवार्थं उत्तरार्द्धेन प्रपंचयति—ये तद्विदुरमृतास्ते भवंतीति । यथा वयं ब्रह्मविदो भूत्वा अस्माद्विनशनाद्विमुक्ताः । एवं ' ये ' तद्ब्रह्म विदुः ' तेऽप्यमृताः ' मुक्ता भवंति । अथ पुनर्ये एवं न विदुः ते ' इतरे ' अब्रह्मविदः जननमरणलक्षणं दुःखमेवोपयन्ति प्रतिपद्यन्ते । न कदाचिदपि दुःखान्निवर्तंते इत्यर्थः ॥ १९ ॥

तदेवं मार्गांतरनिंदाव्याजेन आत्मज्ञानमार्गः स्तुतः । पुनरपि तत्स्तुत्यर्थमेव तन्निष्ठस्य कायक्लेशराहित्यं दर्शयति—आत्मानं चेद्विजानीयादिति । " अयमात्मा ब्रह्म " " अहं ब्रह्माऽस्मि " " तत्त्वमसि "—इत्यादिवाक्यात् ' पूरुषः ' पुमान् ' अयं ' परमात्माख्यः अहमेवेत्यात्मानं इत्थं अशनायाद्यतीतं च कथंचित् सत्वशुद्धितो यदि ' विजानीयात् ' । तर्हि सः ' किमिच्छन् ' सर्वस्य वस्तुजातस्यात्ममात्रत्वात् स्वरूपव्यतिरिक्तं किं वस्तु फलभूतमिच्छेत्, न किंचिदपि, इत्यपेक्षायां किंशब्दः । एतदेव प्रकटयति—' कस्य कामाय ' कस्मै फलाय ' शरीरमनुसंचरेत् ' अनुसंगच्छेत् शारीरोपाधिकृतदुःखमनुदुःखी स्यात् शरीराद्भिन्नत्वेनात्मनः साक्षात्कृतत्वात् न तद्दुःखेन विद्वान् दुःखी स्यात् इत्यर्थः ॥ १६ ॥

न केवलं आत्मविद्यारसिकस्य कायक्लेशराहित्यं किं तु कृतकृत्यता चास्तीत्याह—यस्यानुवित्तः प्रतिबुद्ध आत्मेति । ' अस्मिन् ' प्रसिद्धे ' संदेहे ' तेजोऽबन्नादिभिर्भूतैः संदिह्यते समुपचीयते इति संदेहो देहः । तस्मिन् देहे । कथंभूते ? आध्यात्मिकादीनामर्थानामतिसंकराद्गुणप्रधानभावेन पृथक्करणयोग्यतया 'गहने' दुर्विज्ञेये जलसूर्यवत्प्रविष्टः ' आत्मा ' ' यस्य ' ब्राह्मणस्य । यद्वा येन ब्राह्मणेन ' अनुवित्तः ' अनुलब्धः ' प्रतिबुद्धः ' ' अहमस्मि परं ब्रह्म ' इत्येवं प्रत्यगात्मत्वेन साक्षात्कृतश्च वर्तते इति शेषः । ' सः ' ब्राह्मणः ' विश्वकृत् ' विश्वकर्ता कृतकृत्यः पूर्ण इत्यर्थः । ननु—विश्वकर्तृत्वं परप्रयुक्तमेव स्यादित्यत आह—तस्य लोक इति ।

य॒दै॒तम॑नु॒प॒श्य॑ति । ( त्या ) आ॒त्मा॒न॑न्दे॒वम॑ञ्ज॒सा । ई॒शा॒न॑म्भू॒त॒भ॒व्य॑स्य न त॒दा वि॒चि॒कि॒त्स॒ति ॥ १८ ॥

य॒स्मि॒न्प॒ञ्च प॑ञ्चज॒नाः । (ऽ) आ॒का॒श॒श्च प्र॒ति॒ष्ठि॒तः । त॒मे॒व म॑न्य॒ऽआ॒त्मा॒न॒म्वि॒द्वान्ब्र॒ह्मा॒मृ॒तो॒ऽमृ॒त॒म् ॥ १९ ॥

य॒स्मा॒द॒र्वा॒क्स॒म्व॒त्स॒रः । ( रो॒ऽ ) अ॒हो॒भिः॒ प॒रि॒व॒र्त्त॒ते । त॒द्दे॒वा ज्यो॒ति॒षा॒ञ्ज्यो॒ति॒रा॒यु॒र्ह्यो॒पा॒स॒ते॒ऽमृ॒त॒म् ॥ २० ॥

---

यदैतमनुपश्यत्यात्मानं देवमंजसा । ईशानं भूतभव्यस्य न तदा विचिकित्सति ॥ १८ ॥

यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १९ ॥

यस्माद‌र्वाक् सम्वत्सरोऽहोभिः परिवर्तते । तद्देवा ज्योतिषां ज्योतिरायुर्ह्योपासतेऽमृतम् ॥ २० ॥

---

'तस्य' ब्राह्मणस्य सर्वोऽपि प्रपञ्चः 'लोकः' आत्मेत्यर्थः । ननु–तर्हि लोकलोकिनोर्भेद एव स्यादित्यत आह–स उ लोक एवेति । सोऽपि ब्राह्मणः सर्वस्य प्रपंचस्य 'लोकः एव' आत्मैवेत्यर्थः । तथा च–येन ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धतया अनुवित्तः स न संसारी । किं तु पर एव । यस्मात् विश्वकर्ता सर्वस्य चात्मा सर्वं चास्यात्मा । तस्मात् यः परमात्मा सर्वप्रकारभेदरहितः पूर्णतया वर्तते स एवाहमस्मीति आत्मा अनुसंधातव्य इति तात्पर्यार्थः ॥ १७ ॥

किंच–विदुषः विहिताकरणादिप्रयुक्तं भयं नास्तीति विद्यां स्तोतुं मन्त्रान्तरमाह–**यदैतमनुपश्यतीति** । 'यदा' पुनः कथंचित् परमकारुणिकं कंचिदाचार्यं प्राप्य ततो लब्धप्रसादः सन् 'अनु' पश्चात् 'एतं' हृदयस्थं 'आत्मानं' 'देवं' द्योतनात्मकं, यद्वा यथाकर्मानुरूपसर्वप्राणिकर्मफलानां दातारं देवं भूतभव्यस्य कालत्रयस्य 'ईशानं' स्वामिनं 'अंजसा' साक्षात् 'पश्यति' अहं ब्रह्मास्मीत्यात्मत्वेन विजानाति । 'तदा' तदानीं 'न विचिकित्सति' न संशयानो भवति । अहमस्मि सर्वात्मा परं ब्रह्मेति निश्चितमतिर्भवतीत्यर्थः । "विचिकित्सा तु संशयः" इत्यमरः । यद्वा 'न विचिकित्सति' न निन्दति सर्वस्यात्ममात्रत्वदर्शने निंदनीयस्य स्वस्य इतरस्य वा अभावादित्यर्थः । यद्वा, तद्दर्शनानन्तरं स्वात्मानं अकृतार्थत्वेन न गर्हयतीत्यर्थः ॥ १८ ॥

इदानीं तस्य तस्यात्मनः अमृतत्वं सर्वाधिष्ठानत्वेन साधयति–**यस्मिन् पञ्च पञ्चजना** इति । 'यस्मिन्' ब्रह्मणि 'पञ्च' पञ्चसंख्याताः 'पञ्चजनाः' पञ्चजनसंज्ञकाः गन्धर्वाः पितरो देवा असुराः रक्षांसि आकाशांताः 'प्रतिष्ठिताः' । यद्वा, प्राणादयः "वाक्यशेषात्"(पू.मी.१।४।(१९)२९) इति न्यायेन प्राणश्चक्षुः श्रोत्रमन्नं मनश्चेति 'पञ्चजनाः प्रतिष्ठिताः' आकाशश्च यस्मिन् सूत्रमोतं प्रोतं च सोऽव्याकृताख्यश्च यस्मिन् प्रतिष्ठितः । "एतद्वै तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्च" (श.प.१४बृ.उ.३।६।११) इत्युक्तत्वात् । तमेवात्मानं ब्रह्मामृतं विद्वान् अहममृत इति 'मन्ये' जाने । मर्त्यत्वस्याज्ञानमात्रकृतत्वात् तस्य च नष्टत्वादित्यर्थः ॥ १९ ॥

ननु–ईश्वरोऽपि कालावच्छिन्नः अतो न कालत्रयं प्रति अस्य ईश्वरत्वसम्भव इत्यत आह–**यस्माद‌र्वाक्**

प्राणस्य प्राणम् । (मु) उत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नम्मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम्मनसैवाप्तव्यं नेह नानाऽस्ति किञ्चन ॥ २१ ॥

मृत्योः स मृत्युमाप्नोति । सऽइह नानेव पश्यति । मनसैवानुद्रष्टव्यमेतदप्रमयन्ध्रुवम् ॥ २२ ॥

---

प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यं मनसैवाप्तव्यं नेह नानाऽस्ति किञ्चन ॥ २१ ॥

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ॥ २२ ॥

---

**सम्वत्सर** इति । अयं सम्वत्सराख्यः कालः स्वावयवैः अहोभिरहोरात्रैः कार्यजातं परिच्छिन्दन् यस्मादीश्वरादर्वागेव 'परिवर्तते' न तमपि परिच्छिनत्ति । एवमीश्वरस्य समस्तविक्रियाहेतुकालातिक्रमणोक्त्या जन्मादिविकाराः प्रतिषिद्धा वेदितव्याः । एवंभूतं तदीश्वरात्मकं ज्योतिषामादित्यादीनामपि ज्योतिरवभासकम् । यज्ज्योतिषा ज्योतिष्मन्तश्च ते प्रसिद्धाः । 'अमृतं' अमरणधर्मकमायुः इत्येवं 'हि' निश्चयेन देवा आ सामस्त्येन 'उपासते' अनुसन्दधते । तस्मादायुःकामेनायुर्गुणेन ब्रह्मोपास्यमित्यर्थः ॥ २० ॥

पूर्वतरस्मिन्मन्त्रे पञ्चजनप्रतिष्ठाभूतब्रह्मवित् अमृतो भवतीत्युक्तम् । कथं पुनरेवंविधब्रह्मविद्योदयः स्यादित्यपेक्षायां तदुदयप्रकारमाह—**प्राणस्य प्राणमिति** । प्राणनादिक्रियां कुर्वन् हि प्राणः स्वस्यानात्मत्वजडत्वाभ्यां सत्तास्फूर्त्योः स्वतः असम्भवात् नित्यसिद्धस्वप्रकाशात्मज्योतिषा अवभास्यमान एव स्फूर्तिं कुरुते । अतस्तस्य ब्रह्म 'प्राणस्यापि प्राणं' तथा चक्षुरादीनामपि ब्रह्म काशक्रेशेऽनधिष्ठितानां का लोष्टादिसमत्वेन दर्शनादिक्रियायां अस्वातन्त्र्यात् तदवभासकमात्मज्योतिश्चक्षुषोऽपि 'चक्षुः' इत्यादि तुल्यं व्याख्यानम् । उतशब्दोऽप्यर्थे । तथा च—तानि केनचिदधिष्ठितानि वर्तंते, करणत्वाद्वास्यादिवत् इति । एवं प्राणादिव्यापारानुमितास्तित्वं तद्विलक्षणत्वेन शुद्धं प्रत्यगात्मानं 'ये' 'विदुः' । 'ते' ब्राह्मणाः 'अग्र्यं' अग्रे भवम् अत एव 'पुराणं' चिरन्तनं 'ब्रह्म निचिक्युः' निश्चयेन ज्ञातवन्तः । अत एव त्वंपदार्थपरिशोधनप्रकारेण यथोक्तब्रह्मविद्योदयः स्यादिति भावः । एवंविधब्रह्मावाप्तौ किं साधनमित्यपेक्षायां श्रवणादिसंस्कृतं मन एव यथोक्तप्रकारब्रह्मधीसाधनमित्याह—**मनसैवाप्तव्यमिति** । उक्तलक्षणं ब्रह्म "मनसैवाप्तव्यं" प्राप्यम । न साधनान्तरेणेत्यर्थः । यद्यपि "यतो वाचो निवर्तंते, अप्राप्य मनसा सह" ( तै. उ. ब्र. व.) इत्यादिना मनसाऽप्यनवाप्तव्यमित्युच्यते । तथाप्यत एव वृत्तिव्याप्यं ब्रह्मेत्यभ्युपगच्छन्ति शास्त्रतः । ननु—एवमादिप्राप्तव्यादिभावेन भेदः स्यादित्याशङ्कायामाह—**नेह नानाऽस्ति किञ्चनेति** । 'इह' अवाप्तिविषये ब्रह्मणि किञ्चिदपि 'नाना' भेदः अविद्याध्यारोपणव्यतिरेकेण परमार्थतो नास्तीत्यर्थः ॥ २१ ॥

इदानीं भेददर्शननिन्दया नानात्वाभावं द्रढयति—**मृत्योः स मृत्युमाप्नोतीति** । इवशब्दोऽभिनयार्थः ।

विरजः परऽआकाशात् । ( द ) अजऽआत्मा महान्ध्रुवः । तमेव धीरो विज्ञाय प्रज्ञाङ्कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति ॥ २३ ॥

स वाऽअयमात्मा । सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदम्प्रशास्ति यदिदङ्किञ्च स न साधुना कर्मणा भूयान्नोऽएवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वरऽएष लोकपालः स सेतुर्विधरणऽएषां लोकानामसम्भेदाय ॥ २४ ॥

---

विरजः पर आकाशादज आत्मा महान् ध्रुवः । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहून् शब्दान् वाचो विग्लापनं हि तत् " इति ॥ २३ ॥

स वा अयमात्मा । सर्वस्य वशी । सर्वस्येशानः । सर्वस्याधिपतिः । सर्वमिदं प्रशास्ति । यदिदं

---

' य इह ' ब्रह्मणि ' नानेव पश्यति ' । स मृत्योर्मरणात् पुनः मृत्युमाप्नोति जन्ममरणसंसारचक्रे परिभ्रमतीत्यर्थः । द्वैताभावे कथं अनुद्रष्टव्यं इत्यपेक्षायामाह—मनसैवानुद्रष्टव्यमिति । यस्मात् एतादृशं ब्रह्म, तस्मात् ' मनसैव ' श्रवणादिकमनुद्रष्टव्यं साक्षात्कर्तव्यं यस्मादेकरसं तस्मादेतद्ब्रह्म ' अप्रमयं ' अप्रमेयं, तथा ' ध्रुवं ' नित्यं अविचालीत्यर्थः ॥ २२ ॥

उक्तं ध्रुवत्वं सोपस्करमुपपादयति—विरजः पर आकाशादिति । धर्माधर्मादिलक्षणं रजो विगतं यस्मात् स विरजः । अत आकाशात् अव्याकृताख्यात् ' परः ' व्यतिरिक्तः । अत एव ' अजः ' न जायत इत्यजः । जननिषेधाच्च " जायते अस्ति विपरिणमते वर्द्धते अपक्षीयते विनश्यति " ( निरु. १ । २ । ८ ) इत्युक्ताः सर्वे भावविकाराः निषिद्धा वेदितव्याः, तेषां जन्मादित्वात् । एवंभूत आत्मा किंपरिमाणः इत्युच्यते । ' महान् ' परिमाणतो महत्तमः । "यस्मात्परं नापरमस्ति किञ्चित् । यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् " ( तै. उ. प्र. ४ ) इति श्रुत्यन्तरात् । तस्माद्ध्रुवः अविनाशीत्यर्थः । यथोक्तवस्तुदर्शनं निगमयति—तमेव धीरो विज्ञायेति । ' धीरः ' धीमान् ब्राह्मणः ' तमेव ' नित्यशुद्धत्वादिलक्षणमात्मानं ' विज्ञाय ' पदार्थशुद्धिं सम्पाद्य शास्त्रत उपदेशतश्च ' प्रज्ञां ' वाक्यार्थज्ञानलक्षणां अशेषशोकाकांक्षाशान्तिरूपां परमपुरुषार्थहेतुभूतां तत्त्वमस्यादिवाक्यवशात् ' कुर्वीत ' सम्पादयेदित्यर्थः । बहुशास्त्राध्ययने दोषमाह—नानुध्यायाद् बहूञ्छब्दान् इति । ' बहून् ' प्रभूतान् शब्दान्नानुध्यायात् नानुचिन्तयेत् । बहुशब्दाध्ययननिषेधहेतुः " वाचो विग्लापनं हि तदिति " । ' हि ' यस्माद्बहुशब्दाध्ययनं ' वाचः ' वागिन्द्रियस्य ' विग्लापनं ' विशेषेण ग्लानिकरं श्रमजनकम् । तस्माद्बहुशब्दाभ्यासप्रतिषेधसामर्थ्यात् आत्मयाथात्म्यावबोधहेत्वल्पशब्दाभ्यासोऽनुज्ञायते । " अन्या वाचो विमुञ्चथ ॐ ३ इत्येवं ध्यायतात्मानम् "- ( ) इत्याथर्वणश्रुतेरिति भावः ॥ २३ ॥

पूर्वं " तदेव सत्तत्सह कर्मणैति " ( कं ८ ) इत्यादिमन्त्रेण " स यत्रायं शारीर आत्माऽबल्यम् " ( कं. १ ) इत्यादिब्राह्मणेन च कामादिहेतुसहितो मुमुक्षूणां हेयत्वेनोक्तः " यदा सर्वे प्रमुच्यंते " ( कं. १ ) इत्यादिमन्त्रेण

तुमेतुम्वेदानुवचनेन व्विविदिषन्ति। ब्रह्मचुर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतुमेव विदित्वा मुनिर्भ्भवत्येतुमेव प्प्रव्राजिनो लोकुमीप्सुन्तः प्रव्व्रजन्ति ॥ २५ ॥

---

किं च । स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् । एष भूताधिपतिः । एष लोकेश्वरः । एष लोकपालः । स सेतुर्विधरण एषां लोकानामसंभेदाय ॥ २४ ॥

तमेतं वेदानुवचनेन विविदिषंति । ब्रह्मचर्येण । तपसा । श्रद्धया । यज्ञेन । अनाशकेन । एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमीप्संतः प्रव्रजंति ॥ २५ ॥

---

" अथाकामयमानः " ( कं. ८ ) इत्यादिब्राह्मणेन च तेषामेवाभिलषितः सम्यग्धीहेतुको मोक्ष उक्तः । पुनश्च तत्स्वरूपं " अणुः पंथा वितरः " ( कं. ११ ) इत्यादिश्लोकैः प्रपंचितम् । इदानीं विविदिषावाक्येन ब्रह्मात्मनि कृत्स्नस्य वेदस्य काम्यराशिवर्जितस्य विनियोगकथनार्थमस्मिन्नध्याये उक्तं सकलमात्मज्ञानं–स वा अयमात्मा ( कं २४ ) इत्यारभ्य "एषां लोकानामसम्भेदाय" ( कं. २४ ) इत्येवमन्तेनानूद्यते । सशब्देन ज्योतिर्ब्राह्मणोक्तं विज्ञानलक्षणमयं जीवं परामृश्य तमेव वैशब्देन स्मारयित्वा तस्य " विरजः पर आकाशादज आत्मेति " अव्यवहितोक्तेन परमात्मनैक्यं इतिशब्देन श्रुतिर्निर्दिशतीति–स वा अयमिति पदत्रयसमुदायार्थः । इत्थमुक्तमात्मज्ञानमनूद्य तत्फलमाह–सर्वस्य वशीत्यादिना । सर्वस्य ' ब्रह्मेन्द्रादेः ' वशी ' सर्वो हि ब्रह्मेन्द्रादिगणः अस्य वशे वर्तत इति यावत् । " एतस्य वा अक्षरस्य प्रशासनं "( श. प. बृ. १४।३।६।११) इत्यादिनोक्तत्वात् सर्वस्यैतद्वशित्वे हेतुः । यतः ' सर्वस्य ' ब्रह्मेन्द्रादेरीशानः स्वामी । ननु–यथा बलवत्तरामात्यादीन् प्रति राजपुत्रस्य वशित्वं तद्वदेवास्यापि स्यादित्यतः " सर्वस्याधिपतिः " इति विशेषणम् । ' अधिपतिः ' अधिष्ठाय पालयिता महाराजवत् स्वतंत्र इति यावत् अधिपतित्वादीशानः । ईशित्वाच्च वशीत्यर्थः । किं च–' सर्वमिदं प्रशास्ति यदिदं किंचेति ' यत्किंचित् 'इदं सर्वं' जगत्प्रशास्ति । ननु-एवं शासनाल्लोकवत् धर्माधर्मसंयोग ईश्वरात्मनः स्यात् इत्यत आह–स न साधुना कर्मणा भूयानिति । सोऽधिपतिर्विद्वान् ' ' साधुना ' शास्त्रविहितेन ' कर्मणा ' पूर्वावस्थातो भूयान्न भवति न वर्द्धते । ' असाधुना ' शास्त्रप्रतिषिद्धेन ' कर्मणा ' प्रागवस्थातः ' नो एव कनीयान् ' अल्पीयान् अल्पतरो न भवत्येवेत्यर्थः । पालनादिकर्तुस्तज्जन्यधर्मादिफलसम्बन्धः कथं नास्तीत्यभिप्रेत्य विद्वांसं विशिनष्टि–एष भूताधिपतिरेष लोकेश्वर इति । यस्मादेष विद्वान् ' भूताधिपतिः ' भूतमात्रस्य स्थावरजंगमात्मकस्याधिपतिः तत्सत्तानियामकः, कार्याणां कारणाधीनसत्ताकत्वात् । तथा ' एषः ' ईश्वरः ' लोकेश्वरः ' लोकस्य धर्मादेरपि ईशितुं शीलमस्येति स लोकेश्वरः । धर्मादेरपि नियमनशील इत्यर्थः । तस्मान्न कामकर्माविद्यापरतन्त्राविद्वज्जीववत् अस्य धर्मादिसम्बन्धः अस्ति । तथा ' एष लोकपालः ' लोकान् जनिमत्कार्याणि भूतानि तत्स्फूर्तिरूपेण तत्र तत्र चेतनारूपेण च पालयतीति ' लोकपालः ' । किं च–यथा उदकप्रवाहविष्टंभकः ' सेतुः ' तद्वदेव स परमात्मा सेतुः । किंविशिष्टः–' विधरणः ' विधारकः । यथा सेतुः सीमादिव्यवस्थां विधारयति । तथा वर्णाश्रमादिव्यवस्थाया विधारक इत्यर्थः । किमर्थम् ? एषां भूरादिब्रह्मलोकांतानां 'लोकानां' ' असंभेदाय ' संभेदः सांकर्यं तदभावाय । एवं राजवैलक्षण्यान्नास्य तद्धर्मादिसम्बन्ध इत्यर्थः ॥ २४ ॥

यदर्थं ' एषा ' अस्मिन्नध्याये ' वाचो विग्लापनं हि तत् ' ( कं. २३ ) इति श्लोकांतेन विहिता सफला

ब्रह्मविद्या अनूदिता । तत्काम्यैकदेशवर्जितस्य कृत्स्नस्य कर्मकांडस्य अविद्यायां परंपरया विनियोगं दर्शयति—**तमेतं वेदानुवचनेन विविदिषंति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन च** इति । त्रयाणामपि वर्णानां अध्ययनादौ अधिकृतत्वात् अत्र द्विजमात्रोऽधिकारी बोद्धव्यः । वेदो मन्त्रब्राह्मणात्मकः अनूच्यते गुरूच्चारणानन्तरं पठ्यते । इति वेदानुवचनं वेदाध्ययनम् । तथा च द्विजा अधिकारिणः । '**तमेतं**' मन्त्रोक्तविशेषणं औपनिषदं पुरुषं '**वेदानुवचनेन**' नित्यस्वाध्यायलक्षणेन अन्तःकरणशुद्धिद्वारा '**विविदिषंति**' वेदितुमिच्छंति । न तु विदंत्येव । स्वातंत्र्येण ईश्वरात्मविषयाया बुभुत्साया अपि दुर्लभत्वात् । "तं त्वौपनिषदं पुरुषमिति" तद्धितश्रुतेः पुरुषस्येश्वरस्य उपनिषदेकगम्यत्वावगमाच्च न साक्षाद्वेदनार्थं वेदानुवचनानि । किं तु विविदिषार्थमेवेति । तथा '**ब्रह्मचर्येण**' स्त्रीपरिग्रहनिवृत्तिलक्षणेन नैष्ठिकेन ब्रह्मचारिकर्मणा । तथा '**तपसा**' नियमेन शास्त्रीयपारलौकिकजपाद्यंगविधिवशात् शीतादिद्वन्द्वसहनं तपः, तेन तपसा । तथा '**श्रद्धया**' अदृष्टार्थेषु कर्मसु देवताज्ञानादिषु च वेदबोधितेषु आस्तिक्यबुद्धिः श्रद्धा तया । तथा '**यज्ञेन**' द्रव्ययज्ञेन ज्ञानयज्ञेन च । तथा '**अनाशकेन**' कामानशनलक्षणेन च 'विविदिषंतीति' प्रत्येकं सम्बध्यते । अत्र कामानशनमेवानाशकम् । न तु भोजनाभावः । तथा सति मरणसम्भवेन आत्मविविदिषोत्पत्तेरनवकाशात् । यद्वा संकल्पपूर्वकं मरणांतमशनवर्जनमनाशकम् । वेदानुवचनादेरनाशकस्य च ऐहिकविविदिषासाधनत्वे नियमाभावात् । ऐहिकस्यापि साधनस्य जन्मान्तरविविदिषाद्वारा मुक्तिहेतुत्वाच्च । तथाचास्मिन् जन्मनि साधनचतुष्टयसम्पत्तिश्चेन्न जाता । तर्हि आमरणान्तिकमनशनं कुर्यात् । यदा पुनरिहैव साधनचतुष्टयसम्पन्नो भवति । तदा आमरणमनशनं दूरादेव त्यजेत् । तस्य "श्रोतव्यो मन्तव्यः" इत्यादिश्रुत्या श्रवणादावेव विनियुक्तत्वादिति भावः । तस्माद्वेदे यानि काम्यानि कर्माण्युक्तानि गर्भवासाद्यनर्थहेतव इति यदा ज्ञायन्ते तदा तेषु जिहासा उपावर्तते । ततश्च नित्याद्यनुष्ठानात् परिशुद्धबुद्धेः विविदिषाद्वारा कर्मणो मुक्तिहेतुत्वे सिद्धे काण्डद्वयस्यैकवाक्यता सिद्धेति तात्पर्यं बोध्यम् । एवं कर्मकाण्डोक्तैरध्ययनादिकर्मभिः उत्पन्नवेदनेच्छातः किं स्यात्, इत्यत आह—**एतमेव विदित्वा मुनिर्भवतीति** । उक्तैरुपायैः बुद्धिद्वारा विविदिषोत्पत्तौ गुरुपादोपसर्पणं श्रवणानुष्ठानं चेत्यनेन क्रमेण '**एतमेव**' मोक्षप्रकरणे मन्त्रब्राह्मणाभ्यां उक्तलक्षणमात्मानमेव '**विदित्वा**' साक्षात्कृत्य '**मुनिर्भवति**' मननशीलो योगी भवतीत्यर्थः । एतमेवेत्यवधारणात् प्रत्यगात्मवेदनमेव मुनित्वहेतुः । न कर्मभेदस्तद्भेदज्ञानादिकम् । अतः अविद्याविरोधि अविद्योत्थकर्मत्यागिनां संन्यासिनामेव मुनित्वं भवति न कर्मणा इति अर्थादुक्तं भवति । इदानीं अर्थोक्तं संन्यासं मुनिप्राप्यात्मलोकमिच्छतां तत्साधनत्वेन विदधाति—**एतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्तीति** । '**एतमेव**' प्रकृतमात्मानं स्वं '**लोकं**' अन्तःकरणशुद्धिद्वारा '**ईप्सन्तः**' आप्तुमिच्छन्तः विविदिषन्तः '**प्रव्राजिनः**' प्रव्रजनशीलाः वैराग्यातिशयशालिनो मुमुक्षवः '**प्रव्रजन्ति**' प्रकर्षेण सर्वाणि कर्माणि संन्यस्यन्तीति संन्यासो विधीयते । "आग्नेयोऽष्टाकपालो भवति" इतिवदित्यर्थः । '**एतमेव लोकमीप्सन्तः**' इत्यवधारणात् बाह्यलोकत्रयेप्सूनां पारिव्रज्ये नाधिकार इति गम्यते । न हि गंगाद्वारं प्रति जिगमिषोः काशीनिवासिनः पूर्वाभिमुखगमनं साधनम् । "सोऽयं मनुष्यलोकः पुत्रेणैव जय्यः, नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोकः" ( श. प. बृ. १४ । १ । ३ । १६ ) इति श्रुत्या बाह्यलोकत्रयार्थिनां पुत्रादिसाधनान्तरस्य नियमितत्वात् ॥ २९ ॥

(न्त्ये) एतुद्धस्म वै तत्पूर्व्वे ब्राह्मणाः । (ऽ) अनूचाना विद्वाᳬसः प्रजान्न कामयन्ते किम्प्रजया करिष्यामो येषान्नोऽयमात्माऽयं लोकऽ इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येतेऽएषणे एवऽभवतः ॥ २६ ॥

सऽएष नेति नेत्यात्मा । (त्माऽ) अगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्यते न व्यथतऽइत्यतः पापमकरवमित्यतः

---

एतत् ह स्म वै तत्पूर्वे ब्राह्मणः अनूचाना विद्वांसः प्रजां न कामयन्ते । किं प्रजया करिष्यामः । येषां नः अयमात्मा अयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय, अथ भिक्षाचर्यं चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा । या वित्तैषणा सा लोकैषणा । उभे ह्येते एषणे एव भवतः ॥ २६ ॥

स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असंगोऽसितो

---

ननु-अत्र कथं संन्यासे विधिरिति निश्चेतुं शक्यते "प्रव्रजन्तीति" वर्तमानोपदेशात् इति संशये अनन्यथासिद्धार्थवादवशाद्विधिरेव निश्चेयः इत्यभिप्रेत्य तस्य विधित्वनिर्णयहेतुमर्थवादं दर्शयति—**एतद्ध स्म वैतत्पूर्वे ब्राह्मणाऽ अनूचाना विद्वांसः प्रजां न कामयन्त** इत्यादिना । 'ह स्म' इत्येतौ ऐतिह्यार्थौ निपातौ वैशब्दः स्मरणार्थः । तदेतदिति पदाभ्यां तदेतदात्मलोकार्थिनां पारिव्राज्ये कारणमुच्यत इति श्रुतेः प्रतिज्ञाप्यते । अत्र प्रजाशब्दः कर्मोपासनयोरप्युपलक्षणार्थः । तथा च—तदेतत्पारिव्राज्ये स्पष्टकारणं 'ह' किल 'वै' स्मर्यते । 'पूर्वे' अतिक्रान्तकालिकाः 'ब्राह्मणाः' जातिमन्तो वा 'अनूचानाः' अनुवचनसमर्थाः 'विद्वांसः आत्मज्ञाः' प्रजां' तदुपलक्षिते कर्मविद्ये च 'न कामयंते स्म' पुत्रादिसाधनानि नानुतिष्ठंति स्मेत्यर्थः । ननु—पुत्रादिसाधनं परित्यजतां तेषां कोऽभिप्रायः इत्यत आह—**किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इतीति** । 'येषां' नोऽस्माकं परमार्थदर्शिनां 'अयं' नित्यसन्निहितो अशनायादिवर्जित आत्मैव 'लोकः' पुरुषार्थः । ते वयं 'प्रजया' पुत्रकर्मापरविद्याभिर्लोकस्य साधनभूताभिः 'किं करिष्यामः' । लोकत्रयहेतुपुत्रादिसाध्यं नैव पश्यामः इति पुत्रादिकमाक्षिपंतीत्यर्थः । इतिशब्दः अभिप्रायसमाप्तिद्योतकः । ननु—ते पूर्वे ब्राह्मणाः एवं साध्यसाधनव्यवहारं निन्दन्तः तस्याविद्वद्विषयत्वमापाद्य किं कृतवन्त इत्यपेक्षायामाह—**ते ह पुत्रैषणायाश्चेत्यादि—एषणे एव भवतः** इत्यन्तं व्याख्यातम् । यस्मादेवं पूर्वे विद्वांसः प्रजादिभ्यो निवृत्ताः प्रव्रजिता एव । तस्मात् अधुनातना अपि प्रव्रजेयुरित्येवमर्थवादवाक्यं विधिवाक्यमन्तरेणासम्बध्यमानं स्वसम्बन्धसिद्धये लोकमीप्सन्तः प्रव्रजंतीत्यस्य संन्यासविधिवाक्यत्वं निश्चाययतीति सिद्धम् ॥ २६ ॥

नन्वेवमपि, आत्मलोकार्थिनां किमिति नियमेन पारिव्राज्यमेव विधीयते । कर्मणामपि तत्साधनत्वेनानुष्ठेयत्वादित्याशंकायां तस्यात्मलोकस्य उत्पाद्यादिविलक्षणत्वेन कर्मासम्बन्धान्न कर्मतदर्थिनां अनुष्ठेयमित्यभिप्रेत्याह—

कल्याणमकरवमित्युभेऽउभे ह्येषऽएते तरत्यमृतः साध्वसाधुनी नैनङ्कृताकृते तपतो नास्य केन चन कर्म्मणा लोको मीयते ॥ २७ ॥

तदेतदृचाऽभ्युक्तम् । ( मे ) एष नित्यो महिमा ब्राह्मणस्य न कर्म्मणा वर्द्धते नो कनीयान् । तस्यैव स्यात्पदवित्तम्विदित्वा न कर्म्मणा लिप्यते पापकेनेति तस्मादेवम्विच्छान्तो दान्तऽउपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानम्पश्येत्सर्व्वमेनम्पश्यति सर्व्वोऽस्यात्मा भवति सर्व्वस्यात्मा भवति सर्व्वम्पाप्मानन्तरति नैनम्पाप्मा तरति सर्व्वम्पाप्मान-

---

न सज्जते न व्यथते इति । अतः पापमकरवमिति । अतः कल्याणमकरवमिति उभे । उभे ह्येष एते तरत्यमृतः साध्वसाधुनी । नैनं कृताकृते तपतः । नास्य केन चन कर्मणा लोको मीयते ॥ २७ ॥

तदेतत् ऋचा अभ्युक्तम्–" एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते, नो कनीयान् । तस्यैव स्यात्पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेन "–इति ।

---

स एष नेति नेत्यात्मेत्यादि--न व्यथत इत्यंतम् । व्याख्यातार्थमेतच्छाकल्यब्राह्मणे । ननु–य एवं सर्वैषणाविनिवृत्तः स एष नेति नेत्यादिलक्षणमात्मानमात्मत्वेनावगम्य तद्रूपेणैव वर्तते । तस्य कर्मानारभमाणस्य ब्रह्मविदः किं स्यादित्यपेक्षायामाह–अतः पापमकरवमित्यादि । ' अतः ' अस्मान्निमित्तात् शरीरधारणादिहेतोः अविवेककृतात् रागादेः पापमपुण्यं कर्म ' अकरवं ' कृतवानस्मि । कष्टं खलु मम वृत्तम् । अनेन कर्मणा अहं नरकं प्रतिपत्स्ये इति कर्मकृतः परितापः पूर्वोक्तलक्षणं ब्रह्मविदं न तरति न व्याप्नोति । तथा ' अतः ' फलविषयकामनिमित्तात् ' कल्याणं ' यज्ञादिलक्षणं पुण्यं शोभनं कर्म ' अकरवं ' कृतवानस्मि । अतः अहं देहांतरे अस्य फलं सुखं उपभोक्ष्ये इत्येषोऽपि हर्षः तं न तरति न व्याप्नोतीत्यर्थः । इत्येवमुभे द्वे पापपुण्यफले कष्टहर्षरूपे तं न तरत इति शेषः । एवं यथोक्तात्मविदः तापहर्षासंस्पर्शे को हेतुरित्यपेक्षायां तमाह–उभे ह्येष एते तरत्यमृतः साध्वसाधुनी इति । ' अमृतः ' अमरणधर्मा ' एषः ' ब्रह्मवित् ' उभे एते ' ' साध्वसाधुनी ' पुण्यपापलक्षणे कर्मणी ' हि ' निश्चितं ' तरति ' अतिक्रामति । आरब्धानारब्धयोर्भोगज्ञानाभ्यां क्षीणत्वात् अपूर्वस्य चिकीर्षितत्वेनासंश्लेषादित्यर्थः । इतश्चात्मविदो धर्मादिसम्बन्धो नास्तीत्याह–नैनं कृताकृते तपत इति । नित्याद्यनुष्ठानं ' कृतं ' तस्यैवाकरणमं ' अकृतम् ' एते अपि ' कृताकृते ' क्रमेण फलदानप्रत्यवायोत्पादाभ्यां अब्रह्मविदमिव ' एनं ' ब्रह्मविदं ' न तपतः ' नोद्वेजयत इत्यर्थः । किं च–नास्य केन चन कर्मणा लोको मीयत इति । ' अस्य ' ब्रह्मविदः ' केन चन ' केनापि ' कर्मणा ' शास्त्रप्रतिषिद्धेनापि ' लोकः ' पुरुषार्थः ' न मीयते ' न हिंस्यते । " मीञ् हिंसायाम् " ( धा. पा. क्र्या. उ. ४ ) इति धातुः । ततश्च तत्त्वज्ञानात्प्राक्कालिकयोर्ज्ञानाग्निना भस्मीकरणादुत्तरकालिकयोस्तु अकर्तृत्वेनासंश्लेषात् शरीरारंभकयोस्तु उपभोगेनैव क्षयात् ब्रह्मविदः कर्मकार्यसम्बन्धाभावात् न कर्मसम्बन्ध इति तात्पर्यार्थः ॥ २७ ॥

एवमुक्ते ब्रह्मविद्याफले मन्त्रं संवादयति--तदेतदृचाऽभ्युक्तमेष नित्यो महिमा ब्राह्मणस्येत्यादिना । तदेतद्ब्राह्मणेनोक्तं वस्तुतत्त्वं ' ऋचा ' मन्त्रेणाभ्युक्तम् प्रकाशितम् । कथं ' ब्राह्मणस्य ' ब्रह्मविदस्त्यक्तसर्वैषणस्य

न्तपति नैनम्पाप्मा तपति व्विपापो व्विजरो व्विजिघत्सोऽपिपासो ब्ब्राह्मणो भवति यऽएवम्वेद ॥ २८ ॥

---

तस्मादेवंवित् श्रांतो दांत उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येत् । सर्वमेनं पश्यति । सर्वः अस्यात्मा भवति । सर्वस्यात्मा भवति । सर्वं पाप्मानं तरति । नैनं पाप्मा तरति । सर्वं पाप्मानं तपति । नैनं पाप्मा तपति । विपापो विजरो विजिघत्सः अपिपासो ब्राह्मणो भवति । य एवं वेद ॥ २८ ॥

---

'एषः' साधननिस्पृहः नेतिनेत्यादिलक्षणात्मस्वरूपभूतः 'महिमा' ऐश्वर्यविशेषः स्वाभाविकत्वान्नित्यः । अन्ये त्वविद्याकामकृताः महिमानो न नित्या इत्यर्थः । कुतो विद्वन्महिम्नो नित्यत्वमित्यपेक्षायां हेतुमाह–**न कर्मणा वर्द्धते नो कनीयानिति** । शुभलक्षणेन कृतेन 'कर्मणा' एष महिमा 'न वर्द्धते' वृद्धिलक्षणां विक्रियां न प्राप्नोति । तथा अशुभेन 'कर्मणा' 'नो कनीयान्' नापि अपक्षयलक्षणां विक्रियां प्राप्नोति । एताभ्यां च निषेधाभ्यां अन्या अपि विक्रियाः निषिद्धाः । तासामपि उपचयापचयहेतुत्वात् अतः अविक्रियत्वात् नित्य एष महिमेत्यर्थः । अस्य महिम्नो नित्यत्वेऽपि किं स्यादित्यपेक्षायां स्वस्वरूपं तत्पदार्थलक्षणं जानीयादित्याह–**तस्यैव स्यात्पदविदिति** । यत एष नित्यः । तस्मात्तस्यैव महिम्नः त्वंपदार्थस्य 'पदवित्' पदस्य वेदिता भवेदित्यर्थः । ननु–पदवेदनेऽपि किं स्यादित्यपेक्षायामाह–**तं विदित्वा न कर्मणा लिप्यते पापकेनेतीति** । 'तं' महिमानं स्वरूपं पदं 'विदित्वा' ज्ञात्वा 'पापकेन' धर्माधर्मलक्षणेन 'कर्मणा' 'न लिप्यते' न सम्बध्यते । उभयस्यापि संसारहेतुत्वाविशेषात्–पापकमित्युभयमपि गृह्यते । एवं सति धर्मशब्दप्रयोगेऽपि उभयग्रहसम्भवो यद्यपि स्यात्तथापि धर्माधर्मयोर्हेयत्वद्योतनार्थं पापशब्दप्रयोग इत्यर्थः । इतिशब्द ऋक्समाप्त्यर्थः । तर्हि तत्पदसाक्षात्कारः कथं स्यादित्यपेक्षायामाह–**तस्मादेवंविच्छ्रांतो दांत उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति** । यस्मादेवं अकर्मसम्बन्धी एष ब्राह्मणस्य महिमा नेति नेत्यादिलक्षणः । तस्मात्कारणात् एवंविद आत्मा कर्मतत्फलसम्बन्धशून्य इत्यापाततो जानन् प्रथमं श्रांतः संसारदुःखेन ततः खिन्नो वा । उपरतबाह्येन्द्रियव्यापार इति यावत् । "श्रमु तपसि खेदे च"–(धा.पा.दि.प.९८) इत्यस्य धातोः निष्ठांतं रूपं श्रांत इति । उक्तं च–"निवृत्तेन्द्रियलौल्यस्तु श्रांतः शांतश्च कथ्यते । तपःक्लेशसहो दांतो ह्यंतर्वाणिस्तु शास्त्रवित्" (   -   ) इति । अनन्तरं 'दांतः' अन्तःकरणतृष्णातो निवृत्तः । न हि बाह्यकरणानां विषयाभिनिवेशनिवृत्तिमन्तरेण अन्तःकरणस्य विषयाभिषङ्गो व्यावर्तते । 'उपरतः' सर्वैषणाविनिर्मुक्तः विधिना त्यक्तसर्वकर्मा संन्यासी । 'तितिक्षुः' जीवनविच्छेदहेत्वतिरिक्तशीतोष्णादिद्वन्द्वसहिष्णुः । 'श्रद्धावित्तः' श्रद्धा आस्तिक्यबुद्धिरेव वित्तं साधनं यस्य स श्रद्धावित्तः । इंद्रियांतःकरणचलनरूपव्यापारव्यावृत्त्या तदेकाग्र्यवान् इति यावत् । एतच्च "बाल्यं च पाण्डित्यं च निर्विद्य" इत्येवमुक्तम् । एतावता यत्र कर्तुः स्वातंत्र्यम् तेषां कर्मणां निवृत्तिः श्रांतादिपदैरुक्ता । यत्र तु सम्यग्धीविरोधिनिद्रालस्यादौ पुंसो न स्वातंत्र्यं तन्निवृत्तिः श्रद्धावित्त इति पदेनेति भेदः । तथा चैवं प्रकारेण 'श्रद्धावित्तो भूत्वा' 'आत्मन्येव' स्वे कार्यकारणसंघाते एव 'आत्मानं' प्रत्यक्चेतयितारं 'पश्येत्' साक्षात्कुर्यात् । तथा च–आश्रमाद्यनुष्ठानमिह विधीयत इति विवक्षितमित्यर्थः । तर्हि किं तावत्परिमाणमेवात्मानं पश्येत् इत्यत आह–**सर्वमेनं पश्यतीति** । 'सर्वं' समस्तं एनमात्मानं 'पश्यति' । नान्यदात्मव्यतिरिक्तं किमपि पश्यति । जाग्रत्स्वप्नसुषुप्त्याख्यं स्थानत्रयं हित्वा मननान्मुनिर्भवतीत्यर्थः । कुतो हेतोरित्यत आह–**सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवतीति** । 'अस्य'

स वाऽएष महानजऽआत्मा । ( त्माऽन्ना ) अन्नादो व्वसुदानः स य्यो हैवमेतम्महान्तमजमात्मानमन्नादम्वसुदानं व्वेद व्विन्दते व्वसु ॥ २९ ॥

स वाऽएष महानजऽआत्मा । ( त्माऽज ) अजरोऽमरोऽभयोऽमृतो ब्ब्रह्माभयम्वै जनक प्प्राप्तोऽसीति होवाच याज्ञवल्क्यः सोऽहम्भगवते व्विदेहान्ददामि माञ्चापि सह दास्यायेति ॥ ३० ॥

---

स वा एष महानज आत्मा अन्नादो वसुदानः । स यो हैवमेतं महांतमजमात्मानमन्नादं वसुदानं वेद । विन्दते वसु ॥ २९ ॥

स वा एष महानज आत्मा अजरोऽमरोऽभयोऽमृतो ब्रह्म । अभयं वै जनक प्राप्तोऽसि, इति होवाच याज्ञवल्क्यः । सः अहं भगवते विदेहान् ददामि । मां चापि सह दास्यायेति ॥ ३० ॥

---

ब्रह्मविदः ' सर्वः ' समस्तः प्रपंचः ' आत्मा ' भवति । किं च–' सर्वस्य ' प्रपंचस्य स्वयमात्मा भवति । यथोक्तैः साधनैरुदिते साक्षात्कारे सति किं स्यादित्यपेक्षायामाह–**सर्वं पाप्मानं तरतीति** । अयं तु ब्रह्मवित् ' सर्वं ' पाप्मानमुक्तरूपं ' तरति ' आत्मभावेन व्याप्नोति अतिक्रामतीत्यर्थः । किंच–एवमात्मानं पश्यन्तं ' एनं ' बाह्यपाप्मा पुण्यापुण्यलक्षणः काम्यनिषिद्धाचरणरूपः ' न तरति ' न व्याप्नोतीत्यर्थः । इतश्च विदुषो न कर्मसम्बन्धोऽस्तीत्याह–**सर्वं पाप्मानं तपतीति** । ब्रह्मवित्सर्वं ' पाप्मानं ' कृताकृतलक्षणं सर्वात्मदर्शनरूपवह्निना ' तपति ' भस्मीकरोतीत्यर्थः । किं च–**नैनं पाप्मा तपतीति** । ' एनं ' ब्रह्मविदं ' पाप्मा ' कृताकृतलक्षण उक्तरूपः इष्टफलप्रत्यवायोत्पादनाभ्यां न तपतीत्यर्थः । एवं कर्मासम्बन्धे किं भवतीत्यत आह–**विपापो विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवतीति** । एवंवित् ' विपापः ' विगतः पापो धर्माधर्मलक्षणो यस्य स विपापः । विगता जरा यस्मात् सः ' विजरः ' विगता जिघत्सा अत्तुमिच्छा यस्मात् सः ' विजिघत्सः ' । न विद्यते पिपासा पातुमिच्छा यस्य सः ' अपिपासः ' । एवंभूतः एतस्यामवस्थायां मुख्यब्राह्मणो भवति । एतस्मात् ब्रह्मस्वरूपावस्थानात्प्राक् गौणब्राह्मण्यमित्यर्थः । एवमुपास्यस्वरूपं दर्शयित्वा तदुपासनाफलमाह–**य एवं वेदेति** । ' य एवं ' पूर्वोक्तगुणविशिष्टमात्मानं ' वेद ' उपास्ते अहमस्मि एवंभूत आत्मेति स पूर्वोक्तविपापादिगुणविशिष्ट एव भवतीति शेषः ॥ २८ ॥

एवं निरुपाधिकब्रह्मज्ञानात्कैवल्यं फलमुक्तम् । सम्प्रति सोपाधिकब्रह्मध्यानात् अभ्युदयफलं दर्शयिष्यन् तत्स्वरूपमाह–**स वा एष महानज आत्माऽन्नादो वसुदान** इति । योऽयं जनकयाज्ञवल्क्याख्यायिकायां विख्यातो विज्ञानात्मा ' स वै ' स एव ' एषः महानज आत्मा ' ' अन्नादः ' सर्वभूतस्थः सन् सर्वान्नात्ता । यद्वा अन्नशब्देन चराचरात्मकं जगत् गृह्यते । तस्यात्ता संहारकः । तथा वसु धनं भोगसाधनं सर्वप्राणिकर्मफलं ददातीति ' वसुदानः ' । एवमुपास्यस्वरूपं दर्शयित्वा तदुपासनाफलमाह–**स यो हैवमेतं महांतमजमात्मानमन्नादं वसुदानं वेद विंदते वसु** इति । ' य एवं ' पूर्वोक्तमहदादिगुणविशिष्टं ' आत्मानं वेद ' उपास्ते अहमस्मि एवंभूत आत्मेति सः ' वसु ' कर्मफलजातं ' विंदते ' लभते सर्वात्मत्वादेवेत्यर्थः । अनया कंडिकया " रातेर्दातुः परायणं "–( श. प. बृ. १४ । ३ । ३४ ) इति उक्तस्यैव कर्मफलस्य उपसंहारः कृतः इति अपौनरुक्त्यं द्रष्टव्यम् ॥ २९ ॥

इदानीं सफलां विद्यां मन्त्रब्राह्मणाभ्यामुपदिष्टामुपसंहरति याज्ञवल्क्य इति श्रुतिरस्मान् प्रति दर्शयति–

स वाऽएष महानजऽआत्मा । ( त्माऽज ) अजरोऽमरोऽभयोऽमृतो ब्रह्माभयम्वै ब्रह्माभयᳪं हि वै ब्रह्म भवति यऽएवम्वेद ॥ ३१ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थ-प्रपाठके द्वितीयं ब्राह्मणम् ॥ १४।( ६ )४।२ ॥ ( ७ ) ४–२ ॥

---

स वा एष महानज आत्मा अजरोऽमरोऽभयोऽमृतो ब्रह्म । अभयं वै ब्रह्म । अभयं हि वै ब्रह्म भवति । य एवं वेद ॥ ३१ ॥

---

स वा एष महानज आत्माऽजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्य इति । यो ब्राह्मणादावुक्तो विज्ञानमयो जन्ममरणादिसंततिभान् त्वंपदवाच्यभूतः सोऽयं सशब्देनोच्यते । वैशब्दः प्रसिद्धार्थः । एषशब्देन तु विद्यया प्रध्वस्ताज्ञानतत्कार्यो नित्यमुक्तस्त्वंपदलक्ष्य उच्यते । तस्य शुद्धस्य त्वंपदार्थस्य महानित्यादिविशेषणात् । तथा च–' स वा एषः ' यथोक्तः प्रत्यगात्मा ' महान् ' सत्यज्ञानादिलक्षणः अपरोऽक्षः परमात्मैवेति वाक्यार्थः । एवमहं ब्रह्मेति वाक्योत्थपरमात्मैकत्वविज्ञानात् अविद्यातत्कार्ये प्रध्वस्ते सति प्रत्यगात्मनो यद्रूपं तदिदानीमुच्यते–' अजः ' इत्यादिपदैः । यस्मात् रज्जुसर्पादिवदात्मा विनाविद्यां कार्यकरणात्मना न जायते । तस्मादजो जन्मरहितः । अत एवाजरः कालावच्छिन्नदेहादिवत् न जीर्यतीत्यर्थः । यतः 'अजरः' अत एवामरः प्राणत्यागरूपमरणरहितः । अत एवामृतः निरन्वयनाशशून्यः । अत्र जननप्रतिषेधेनैव विकारांतराणां तन्मूलकत्वात् तत्प्रतिषेधस्यापि अर्थसिद्धत्वेऽपि शब्दतः प्रतिषेधो जरादीनां पारमार्थिकत्वशंकाव्यावृत्त्यर्थः । यत एवं सर्वविकारशून्यः । अत एव ' अभयः ' भयं हि नाम अविद्याकार्यं तत्प्रतिषेधेन भावविकारप्रतिषेधेन च अविद्याऽपि प्रतिषिद्धा वेदितव्येति भावः । हे ' जनक ' सम्राट् ! ' अभयं वै ' अविद्याकार्यरहितमेव ब्रह्म परमात्मतत्त्वं त्वं ' प्राप्तोऽसि ' इत्येवं ' ह ' किल ' याज्ञवल्क्यः ' उवाचेत्यर्थः । राजा तु आत्मीयमशेषविद्यालाभं द्योतयितुं सर्वस्वदानं प्रतिजज्ञ इत्याह–सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति । ' दास्याय ' दासकर्मणे ददामीति चशब्दात्संबध्यते । इतिशब्दो निरूपितायाः सर्ववेदानुशासनरूपाया विद्यायाः परिसमाप्तिद्योतक इत्यर्थः ॥ ३० ॥

इदानीं " तिष्ठमानस्य तद्विदः परायणं " (श.प.बृ.३।९।३४) इत्युक्तस्यैव ब्रह्मात्मैक्यज्ञानफलस्योपसंहारार्थमग्रिमा श्रुतिः प्रवर्तते–स वा एष महानित्यादि ब्रह्मेति पदपर्यंतम् । अक्षरार्थः पूर्ववत् । कथं पुनरभयगुणविशिष्टस्यात्मनो ब्रह्मत्वं, अत आह–अभयं वै ब्रह्मेति । एवं विषयपरिशोधनेन विद्यास्वरूपमुक्त्वा विद्याफलं कथयति–अभयं हि वै ब्रह्म भवति य एवं वेदेति । ' एवं ' यथोक्तमात्मानं ' अभयं ब्रह्म ' ' यो वेद ' । सः ' अभयं ब्रह्मैव हि भवति ' मुक्तो भवतीत्यर्थः । य इह स वा एष महानित्यादिना अन्ते संक्षिप्तोऽर्थः स एव सर्वोपनिषत्प्रतिपाद्यः । एष एव सर्वस्यास्य शास्त्रस्य तात्पर्यार्थ इति ॥ ३१ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्-बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां चतुर्थेऽध्याये द्वितीयं शारीरक-ब्राह्मणं परिसमाप्तम् ॥ १४ । ( ७ ) ४ । २ ॥

३३३२

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः । (म्मैं) मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञेव * कात्यायनी सोऽन्यु-द्वृत्तमुपाकरिष्यमाणः ॥ १ ॥

( णो ) याज्ञवल्क्यो मैत्रेयीति होवाच । प्रव्रजिष्यन्वाऽअरेऽहमस्मा-त्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तङ्करवाणीति ॥ २ ॥

सा होवाच मैत्रेयी । यन्नु मऽइयम्भगोः सर्वा पृथिवी वित्तेन पूर्णा

---

याज्ञवल्क्यमैत्रेयीसंवादब्राह्मणम् ।

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः । मैत्रेयी च, कात्यायनी च । तयोर्ह मैत्रेयी ब्रह्म-वादिनी बभूव । स्त्रीप्रज्ञेव कात्यायनी । सोऽन्यत् वृत्तमुपाकरिष्यमाणः ॥ १ ॥

याज्ञवल्क्यो मैत्रेयीति होवाच । प्रव्रजिष्यन्वा अरे अहमस्मात्स्थानादस्मि । हंत ! ते अनया कात्यायन्या अन्तं करवाणीति ॥ २ ॥

सा होवाच मैत्रेयी । यन्नु मे इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्, स्यां नु अहं तेना-

---

पूर्वमागमप्रधानेन मधुकाण्डेन ब्रह्मात्मतत्त्वं निर्द्धारितम् । पुनस्तस्यैव तत्त्वस्यास्तित्वमुपपत्तिप्रधानेन याज्ञ-वल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रहं कृत्वा जयपराजयप्रधानजल्पन्यायतो विचारितम् । तदेव चास्मिन्नध्याये शिष्याचार्यसंबंधेन तत्त्वनिर्णयप्रधानेन वादन्यायेन सविस्तरं विचार्य उपसंहृतम् । अथेदानीमस्य निगमस्थानीयं मैत्रेयीब्राह्मणमारभ्यते । यद्वा मधुकांडे मैत्रेयीब्राह्मणेन आगमबलान्मुक्तिसाधनभूता संन्याससहिता आत्मविद्या उक्ता । सैवाधुना न्यायप्रधाने मुनिकांडेऽपि मुक्तिहेतुत्वेन न्यायतो मंतव्येत्येतदभिप्रायेणेदं ब्राह्मणं प्रवर्तते—**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुरित्यादि**। तत्र वाक्याक्षराणां व्याख्यानं पूर्ववदेवात्रापि प्रतिपत्तव्यम् । यानि तु अक्षराण्यत्राधिकानि तानि व्याख्यास्यामः । हेतुप्रधानवाक्यानंतरं आगमप्रधानेन मैत्रेयीब्राह्मणेन प्रतिज्ञातोऽर्थो निगम्यते, इत्येवं हेत्वंतरोपदेशानंतयार्थः अथशब्दः । हशब्दः पूर्ववृत्तावद्योतकः । ' याज्ञवल्क्यस्य ' मुनेः ' ह ' किल ' मैत्रेयी कात्यायनी चेति द्वे भार्ये बभूवतुः ' । तयोः पत्न्योर्मध्ये ' ह ' किल ' मैत्रेयी ' ' ब्रह्मवादिनी ' ब्रह्मवदनशीला ' बभूव ' । ' कात्यायनी तु ' स्त्रीप्रज्ञेव ' स्त्रिया उचिता या प्रज्ञा गृहप्रयोजनान्वेषणलक्षणा । सैव विद्यते यस्यां सा स्त्रीप्रज्ञेव । बभूवेत्यनुषंगः । एवं सति ' सः ' याज्ञवल्क्यः पूर्वस्मात् गार्हस्थ्यलक्षणात् वृत्तात् ' अन्यत् ' पारिव्राज्यलक्षणं ' वृत्तं ' वर्तनमुपाकरिष्यमाण उपाचिकीर्षुः सन् 'हे मैत्रेयीति' ज्येष्ठां भार्या-मामंत्र्य ' ह ' किल तां उवाच इत्युत्तरवाक्येन संबंधः ॥ १ ॥

' प्रव्रजिष्यन् ' प्रकर्षेण व्रजिष्यन् संन्यसिष्यन्नित्यर्थः ॥ २ ॥

" यन्नु मे " इति पाठांतरम् " स्यान्न्वहं तेनामृताऽऽहो ३ नेति " इति च पाठांतरम् । स्यां भवेयम् । आहो ३ इति पक्षांतरद्योतको निपातः ॥ ३ ॥

---

* " स्त्रीप्रज्ञेव " इति काण्वः पाठः । १–अत्र सर्वत्र " पाठान्तरम् " इत्युक्तिः ( बृ. आ. उ. अ. २ ब्रा. ४ ) पूर्वोक्तपाठा-द्विसदृशः पाठ इत्यभिप्रायिका ।

स्यात्स्युान्न्वहन्तेनामृताऽऽहोऽनेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवताञ्जीवितन्तथैव ते जीवितᳬ स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ ३ ॥

सा होवाच मैत्रेयी । येनाहन्नामृता स्याङ्किमहन्तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ४ ॥

स होवाच याज्ञवल्क्यः । प्रिया खलु नो भवती सती प्रियमवृतद्धन्त खलु भवति तेऽहन्तद्वक्ष्यामि व्याख्यास्यामि ते वाचन्तु मे व्याचक्षाणस्य निदिध्यासस्वेति ब्रवीतु भगवानिति ॥ ५ ॥

स होवाच याज्ञवल्क्यः । न वाऽअरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वाऽअरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वाऽअरे पुत्राणाङ्कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया

---

मृता, आहो ३ नेति । नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवतां जीवितं, तथैव ते जीवितं स्यात् । अमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ ३ ॥

सा होवाच मैत्रेयी । येनाहं नामृता स्याम , किमहं तेन कुर्याम् । यदेव भगवान्वेद । तदेव मे ब्रूहि इति ॥ ४ ॥

स होवाच याज्ञवल्क्यः । प्रिया खलु नो भवती सती । प्रियमवृतत् । हंत खलु भवति ! ते अहं तत् वक्ष्यामि व्याख्यास्यामि ते । वाचं तु मे व्याचक्षाणस्य निदिध्यासस्वेति । ब्रवीतु भगवानिति ॥ ५ ॥

स होवाच याज्ञवल्क्यः । न वा अरे पत्युः कामाय पतिः प्रियो भवति । आत्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवति । आत्मनस्तु कामाय जाया

---

'सा होवाच मैत्रेयीति' पूर्ववत् ॥ ४ ॥

"प्रिया खलु नो भवती सती प्रियमवृतद्धंत खलु भवति तेऽहं तद्वक्ष्यामि" इति पाठांतरम् । "वाचम्" इत्यधिकम् । भवती त्वमित्यर्थे । 'अवृतत्' अवर्तयत् । वर्तितवत्यसि । णिचो लोपश्छांदसो बोध्यः । हे भवति 'ते' तुभ्यं तुष्टोऽहं 'हंत खलु' 'तत्' अमृतत्वसाधनं 'वक्ष्यामि' व्याख्यास्यामि । इत्यादि समानम् ॥ ५ ॥

"न वा अरे वेदानां कामाय, यज्ञानां कामाय" च इति पर्यायद्वयमधिकं सुगमार्थम् । "आत्मा न्वरे"- इति "मैत्रेय्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञाते" इति च पाठांतरं समानार्थम् ॥ ६ ॥

भवन्ति न वाऽअरे वित्तस्य कामाय वित्तम्प्रियम्भवत्यात्मनस्तु
कामाय वित्तम्प्रियम्भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियम्भव-
त्यात्मनस्तु कामाय ब्रह्म प्रियम्भवति न वाऽअरे क्षत्त्रस्य कामाय
क्षत्त्रम्प्रियम्भवत्यात्मनस्तु कामाय क्षत्त्रम्प्रियम्भवति न वाऽअरे लोका-
नाङ्कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया
भवन्ति न वाऽअरे देवानाङ्कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय
देवाः प्रिया भवन्ति न वाऽअरे वेदानाङ्कामाय वेदाः प्रिया भवन्त्या-
त्मनस्तु कामाय वेदाः प्रिया भवन्ति न वाऽअरे यज्ञानाङ्कामाय यज्ञाः
प्रिया भवन्त्यात्मनस्तु कामाय यज्ञाः प्रिया भवन्ति न वाऽअरे भूता-
नाङ्कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि
भवन्ति न वाऽअरे सर्वस्य कामाय सर्वम्प्रियम्भवत्यात्मनस्तु कामाय
सर्वम्प्रियम्भवत्यात्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो
मैत्रेय्यात्मनि वाऽअरे दृष्टे श्रुते मते विज्ञातऽइदꣳ सर्वं विदितम् ॥ ६ ॥

(ब्र) ब्रह्म तम्परादात्। (यो) योऽन्यत्रात्मनो ब्रह्म वेद क्षत्त्रन्त-
म्परादाद्योऽन्यत्रात्मनः क्षत्त्रम्वेद लोकास्तम्परादुर्योऽन्यत्रात्मनो लोका

---

प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति । आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति । आत्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति । आत्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्त्रस्य कामाय क्षत्त्रं प्रियं भवति । आत्मनस्तु कामाय क्षत्त्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवंति । आत्मनस्तु कामाय लोकाः प्रिया भवंति । न वा अरे देवानां कामाय देवाः प्रिया भवंति । आत्मनस्तु कामाय देवा भवंति । न वा अरे वेदानां कामाय वेदाः प्रिया भवंति । आत्मनस्तु कामाय वेदाः प्रिया भवन्ति । न वा अरे यज्ञानां कामाय यज्ञाः प्रिया भवंति । आत्मनस्तु कामाय यज्ञाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवंति । आत्मनस्तु कामाय भूतानि प्रियाणि भवंति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा नु अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यो मैत्रेयि । आत्मनि वा अरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् ॥ ६ ॥

ब्रह्म तं परादात् । यः अन्यत्रात्मनो ब्रह्म वेद । क्षत्त्रं तं परादात् । यः अन्यत्रात्मनः क्षत्त्रं वेद । लोकास्तं परादुः । यः अन्यत्रात्मनो लोकान्वेद । देवास्तं परादुः । यः अन्यत्रात्मनो

---

" वेदास्तं परादुः " " यज्ञास्तं परादुः " इत्यधिकं सुगमम् ॥ ७ ॥

न्वेद देवास्तम्परादुर्य्योऽन्यत्रात्मनो देवान्वेद वेदास्तम्परादुर्य्योऽन्यत्रात्मनो वेदान्वेद यज्ञास्तम्परादुर्य्योऽन्यत्रात्मनो यज्ञान्वेद भूतानि तम्परादुर्य्योऽन्यत्रात्मनो भूतानि वेद सर्वन्तम्परादाद्योऽन्यत्रात्मनः सर्वम्वेदेदम्ब्रह्मेदङ्क्षत्त्रमिमे लोकाऽइमे देवाऽइमे वेदाऽइमे यज्ञाऽइमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ७ ॥

स यथा दुन्दुभेर्हन्यमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा वीणायै वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

स यथा शङ्खस्य ध्मायमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ १० ॥

स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य । पृथग्धूमा विनिश्चरन्त्येवम्वाऽअरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वा-

---

देवान् वेद । वेदास्तं परादुः । यः अन्यत्रात्मनो वेदान् वेद । यज्ञास्तं परादुः । यः अन्यत्रात्मनो यज्ञान् वेद । भूतानि तं परादुः । यः अन्यत्रात्मनो भूतानि वेद । सर्वं तं परादात् । यः अन्यत्रात्मनः सर्वं वेद । इदं ब्रह्म । इदं क्षत्त्रम् । इमे लोकाः । इमे देवाः । इमे वेदाः । इमे यज्ञाः । इमानि भूतानि । इदं सर्वम् । यत् अयमात्मा ॥ ७ ॥

स यथा दुंदुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय । दुंदुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय । वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

स यथा शंखस्य ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय । शंखस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ १० ॥

स यथा आर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्ति । एवं वा अरे अस्य महतो भूतस्य

---

"स यथा दुन्दुभेर्हन्यमानस्य" ॥ ८ ॥

"स यथा वीणायै वाद्यमानायै" ॥ ९ ॥

"स यथा शंखस्य ध्मायमानस्य" ॥ १० ॥

दत्तं दाननिमित्तं धर्मजातम् । हुतं होमनिमित्तम् । आशितमन्नदाननिमित्तम् । पायितं पेयदाननिमित्तं

ङ्गिरसऽइतिहासः पुराणम्विद्याऽउपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि दत्तꣳ हुतमाशितम्पायितमयञ्च लोकः परश्च लोकः सर्व्वाणि च भूतान्यस्यैवैतानि सर्व्वाणि निश्वसितानि ॥ ११ ॥

स यथा सर्व्वासामपाꣳ समुद्रऽएकायनम् । ( मे ) एवꣳ सर्व्वेषाꣳ स्पर्शानान्त्वगेकायनमेवꣳ सर्व्वेषाङ्गन्धानान्नासिकेऽएकायनमेवꣳ सर्व्वेषाꣳ रसानाञ्जिह्वैकायनमेवꣳ सर्व्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्व्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्व्वेषाꣳ सङ्कल्पानाम्मनऽएकायनमेवꣳ सर्व्वेषाम्वेदानाꣳ हृदयमेकायनमेवꣳ सर्व्वेषाङ्कर्म्मणाꣳ हस्तावेकायनमेवꣳ सर्व्वेषामध्वनाम्पादावेकायनमेवꣳ सर्व्वेषामानन्दानामुपस्थऽएकायनमेवꣳ सर्व्वेषाम्विसर्ग्गाणाम्पायुरेकायनमेवꣳ सर्व्वासाम्विद्यानाम्वागेकायनम् ॥ १२ ॥

( ꣳ ) स यथा सैन्धवघनः । ( नोऽ ) अनन्तरो बाह्यः कृत्स्नो रसघनऽएव स्यादेवम्वाऽअरऽइदम्महद्भूतमनन्तमपारङ्कृत्स्नः प्रज्ञानघनऽएवै-

---

निश्वसितमेतत् । यत्, ऋग्वेदो यजुर्वेदः सामवेदः अथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि । दत्तं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि । अस्यैवैतानि सर्वाणि निश्वसितानि ॥ ११ ॥

स यथा सर्वासामपां समुद्र एकायनम् । एवं सर्वेषां स्पर्शानां त्वगेकायनम् । एवं सर्वेषां गन्धानां नासिके एकायनम् । एवं सर्वेषां रसानां जिह्वैकायनम् । एवं सर्वेषां रूपाणां चक्षुरेकायनम् । एवं सर्वेषां शब्दानां श्रोत्रमेकायनम् । एवं सर्वेषां संकल्पानां मन एकायनम् । एवं सर्वेषां वेदानां हृदयमेकायनम् । एवं सर्वेषां कर्मणां हस्तावेकायनम् । एवं सर्वेषामध्वनां पादावेकायनम् । एवं सर्वेषामानन्दानामुपस्थ एकायनम् । एवं सर्वेषां विसर्गाणां पायुरेकायनम् । एवं सर्वासां विद्यानां वागेकायनम् ॥ १२ ॥

स यथा सैंधवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एव स्यात् । एवं वा अरे इदं महद्भूत-

---

धर्मजातम् । अयं च लोकः इदं च जन्म । परश्च लोकः प्रतिपत्तव्यं च जन्म । सर्वाणि भूतानि ब्रह्मादिस्थावरांतानि ॥ ११ ॥

" स यथा सर्वासामपां समुद्रः एकायनमिति " समानम् ॥ १२ ॥

" स यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एव स्यात् " इति पाठान्तरम् प्रलयावस्थात्मरूपबोधकम् । सुगमार्थम् ॥ १३ ॥

तेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य सञ्ज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥

सा होवाच मैत्रेयी । ( अत्र ) अत्रैव मा भगवान्मोहान्तमापीपदन्न वाऽअहमिमं विजानामि न प्रेत्य सञ्ज्ञाऽस्तीति ॥ १४ ॥

स होवाच याज्ञवल्क्यः । ( ल्क्यो ) न वाऽअरेऽहम्मोहम्ब्रवीम्यविनाशी वाऽअरेऽयमात्माऽनुच्छित्तिधर्म्मा मात्रासꣳसर्गस्त्वस्य भवति ॥ १५ ॥

यद्वै तन्न पश्यति । पश्यन्वै तद्द्रष्टव्यन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥ १६ ॥

---

अनन्तमपारं कृत्स्नः प्रज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति । न प्रेत्य संज्ञाऽस्ति इत्यरे ब्रवीमि । इति होवाच याज्ञवल्क्यः ॥ १३ ॥

सा होवाच मैत्रेयी । अत्रैव मा भगवान्मोहान्तमापीपदत् । न वा अहमिदं विजानामि । न प्रेत्य संज्ञाऽस्तीति ॥ १४ ॥

स होवाच याज्ञवल्क्यः । न वा अरे अहं मोहं ब्रवीमि । अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा । मात्रासंसर्गस्त्वस्य भवति ॥ १५ ॥

यत् वै तत् न पश्यति । पश्यन् वै तद्द्रष्टव्यं न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततोऽन्यत् विभक्तं यत्पश्येत् ॥ १६ ॥

---

" मोहांतमापीपदन्न वा अहमिदं विजानामीति " पाठान्तरम् । ' अत्रैव ' प्रज्ञानघने " न प्रेत्य संज्ञाऽस्ति " इति वदन् ' भगवान् ' ' मा ' मां ' मोहान्तं ' मोहमध्ये ' आपीपदत् ' आपादितवान् संमोहितवानित्यर्थः । अतः अहं इदमात्मतत्त्वं उक्तलक्षणं ' न वै ' नैव जानामीत्यर्थः ॥ १४ ॥

" अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवतीति " पाठांतरम् । ' अरे मैत्रेयि ! ' ' अहं मोहं न ब्रवीमि ' । यतः ' अयं ' प्रकृतः ' आत्मा ' ' अविनाशी ' विनष्टुं शीलं यस्य स विनाशी, न विनाशी अविनाशी । तत्र हेतुः—यतः 'अनुच्छित्तिधर्मा' उच्छित्तिरुच्छेदो विकारो धर्मो यस्य सः उच्छित्तिधर्मा । न उच्छित्तिधर्मा अनुच्छित्तिधर्मा । अविक्रिय इत्यर्थः । तर्हि आत्मनः कथं संसारादिविक्रियासंबंध इत्यत आह—' तु ' पुनः ' अस्य ' प्रकृतस्यात्मनः ' मात्रासंसर्गः ' चक्षुरादिकरणसम्बन्धो भवति । मीयन्ते विषया याभिस्ता मात्रा इति विषयप्रकाशहेतुभूतानि चक्षुरादिकरणानि मात्राः । ताभिः संसर्गः सम्बन्धः ॥ १५ ॥

" यद्वै तन्न पश्यति " इदं कंडिकाष्टकं ज्योतिर्ब्राह्मणे ( श. प. बृ. १४ । ४ । १ ) व्याख्यातम् ॥ १६ ॥

(य) यद्वै तन्न जिघ्रति। जिघ्रन्वै तद्घ्रातव्यन्न जिघ्रति न हि घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ १७ ॥

(य) यद्वै तन्न रसयति। विजानन्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ १८ ॥

(य) यद्वै तन्न वदति। वदन्वै तद्वक्तव्यन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ १९ ॥

(य) यद्वै तन्न शृणोति। शृण्वन्वै तच्छ्रोतव्यन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २० ॥

---

यत् वै तत् न जिघ्रति। जिघ्रन् वै तत् घ्रातव्यं न जिघ्रति। न हि घ्रातुर्घ्राणाद्विपरिलोपो विद्यते, अविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यत् विभक्तं यत् जिघ्रेत् ॥ १७ ॥

यद्वै तत् न रसयति। विजानन् वै तत् रसं न रसयति। न हि रसयितु रसाद्विपरिलोपो विद्यते, अविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यत् विभक्तं यत् रसयेत् ॥ १८ ॥

यत् वै तत् न वदति। वदन्वै तत् वक्तव्यं न वदति। न हि वक्तुर्वक्तेर्विपरिलोपो विद्यते, अविनाशित्वात् न तु तत् द्वितीयमस्ति ततोऽन्यत् विभक्तं यत् वदेत् ॥ १९ ॥

यत् वै तत् न शृणोति। शृण्वन् वै तत् श्रोतव्यं न शृणोति। न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यते, अविनाशित्वात्। न तु तत् द्वितीयमस्ति ततोऽन्यत् विभक्तं यत् शृणुयात् ॥ २० ॥

---

"यद्वै तन्न जिघ्रति" ॥ १७ ॥

"यद्वै तन्न रसयति" ॥ १८ ॥

"यद्वै तन्न वदति" ॥ १९ ॥

"यद्वै तन्न शृणोति" ॥ २० ॥

( घ ) यद्वै तन्न मनुते । मन्वानो वै तन्मन्तव्यन्न मनुते न हि मन्तुर्म्मतेर्व्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २१ ॥

यद्वै तन्न स्पृशति । स्पृशन्वै तत्स्प्रष्टव्यन्न स्पृशति न हि स्प्रष्टु स्पृष्टेर्व्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २२ ॥

( घ ) यद्वै तन्न व्विजानाति । व्विजानन्वै तद्विज्ञेयन्न व्विजानाति न हि व्विज्ञातुर्व्विज्ञानाद्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ २३ ॥

( घ ) यत्र वाऽअन्यदिव स्यात् । ( च ) तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यदभिवदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ २४ ॥

---

यत् वै तत् न मनुते । मन्वानो वै तत् मन्तव्यं न मनुते । न हि मन्तुर्मतेर्विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततोऽन्यत् विभक्तं यन्मन्वीत ॥ २१ ॥

यत् वै तत् न स्पृशति । स्पृशन् वै तत् स्प्रष्टव्यं न स्पृशति । न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति तोऽन्यत् विभक्तं यत् स्पृशेत् ॥ २२ ॥

यत् वै तत् न विजानाति । विजानन्वै तत् विज्ञेयं न विजानाति । न हि विज्ञातुर्विज्ञानात् विपरिलोपो विद्यते, अविनाशित्वात् । न तु तत् द्वितीयमस्ति ततोऽन्यत् विभक्तं यत् विजानीयात् ॥ २३ ॥

यत्र वा अन्यदिव स्यात् । तत्रान्यः अन्यत्पश्येत् । अन्यः अन्यज्जिघ्रेत् । अन्यः अन्यद्रसयेत् । अन्यः अन्यदभिवदेत् । अन्यः अन्यत् शृणुयात् । अन्यः अन्यत् मन्वीत । अन्यः अन्यत् स्पृशेत् । अन्यः अन्यद्विजानीयात् ॥ २४ ॥

---

" यद्वै तन्न मनुते " ॥ २१ ॥

" यद्वै तन्न स्पृशति " ॥ २२ ॥

" यद्वै तन्न विजानाति " ॥ २३ ॥

एवं अविद्योत्थद्वैते सत्येव विशेषविज्ञानमात्मनः तदभावे तु तदभावः, इत्यन्वयव्यतिरेकाभ्यां औपाधिकमात्मनो विशेषविज्ञानमिति दर्शयितुं " न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं " इति ( कं. १६–२३ )

( य ) यत्र त्वस्य सर्व्वमात्मैवाभूत् । ( त ) तत्केन कम्पश्येत्तत्केन कञ्जिघ्रेत्तत्केन कꣳ रसयेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कम्मन्वीत तत्केन कꣳ स्पृशेत्तत्केन कम्विजानीयाद्येनेदꣳ सर्व्वम्विजानाति तङ्केन विजानीयाद्विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्प्रवव्राज ॥ २९ ॥

( ज ) अथ वꣳशः । ( स्तु ) तदिदम्वयꣳ शौर्प्पणाय्याच्छौर्प्पणाय्यो

---

यत्र तु अस्य सर्वमात्मैवाभूत् । तत् केन कं पश्येत् । तत् केन कं जिघ्रेत् । तत्केन कं रसयेत् । तत्केन कमभिवदेत् । तत्केन कं शृणुयात् । तत् केन कं मन्वीत । तत् केन कं स्पृशेत् । तत् केन कं विजानीयात् । येनेदं सर्वं विजानाति । तं केन विजानीयात् । विज्ञातारमरे केन विजानीयात् । इति उक्तानुशासनाऽसि मैत्रेयि । एतावदरे खलु अमृतत्वम्, इति होक्त्वा याज्ञवल्क्यः प्रवव्राज ॥ २९ ॥

अथ वंशः । १ तदिदं वयं शौर्पणाय्यात् । २ शौर्पणाय्यो गौतमात् । ३ गौतमो वात्स्यात् ।

---

व्यतिरेको दर्शितः । इदानीमन्वयमाह—यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यं पश्येदित्यादिना । ' यत्र वै ' यस्मिन्नेव जागरिते स्वप्ने वा ' अन्यदिव ' आत्मनो वस्त्वन्तरमिव अविद्याप्रत्युपस्थापितं स्याद्भवेत् । ' तत्र ' तस्मिन्नवस्थाविशेषे ' अन्यः ' अविद्याकल्पितात् वस्त्वन्तरात् भिन्नमिव आत्मानं मन्यमानः ' अन्यत् ' स्वस्मात् विभक्तं स्वाविद्योत्थं वस्त्वन्तरं ' पश्येत् ' उपलभेत । जिघ्रेदित्यादि समानम् ॥ २४ ॥

एतावता " एतेभ्यो भूतेभ्यः " ( कं. १२ ) इत्यत्र सूचितो भूताविद्योपाधिकः संसार इति व्याख्यातम् । इदानीं " महद्भूतमनन्तमपारं " ( कं. १२ ) इत्यादि सूचितं ब्रह्मदर्शनं व्याख्यास्यन् भूतोपाध्यभावेन विशेषविज्ञानलक्षणसंसाराभाव इति पुनर्व्यतिरेकमाह—यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिना । " उक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज " इत्यधिकम् । हे ' मैत्रेयि ! ' इत्येवं त्वं ' उक्तानुशासना ' उक्तमनुशासनं ससंन्यासमात्मज्ञानलक्षणं यस्याः सा त्वं उक्तानुशासना ' असि ' भवसि । ननु—तथाऽपि किं वक्तव्यान्तरं किंचिन्न भविष्यति न हि इत्याशयेनाह ' अरे मैत्रेयि ! ' यत् त्वं मां पृष्टवत्यसि—" यदेव भगवान् वेद तदेव मे ब्रूहीति " तदमृतत्वं अमृतत्वसाधनम् ' एतावदेव ' ' खलु ' निश्चितम् । यदेतत् ससंन्यासमात्मपरिज्ञानम् । न त्वधिकं किंचिदस्ति । तस्मादेतावदेव त्वया अमृतत्वसाधनं विज्ञेयम् इत्येवं ' ह ' किल प्रियायै भार्यायै यथोक्तमात्मज्ञानमुक्त्वा यथेच्छया ' याज्ञवल्क्यः ' ' प्रवव्राज ' प्रव्रजितवान् । यत्पूर्वं प्रतिज्ञातं " प्रव्रजिष्यन्नस्मीति " तच्चकारेत्यर्थः । एतावता परिसमाप्तो ब्रह्मविद्याख्यः सकलोऽपि शास्त्रार्थः ॥ २९ ॥

इदानीं याज्ञवल्कीयकांडप्रवर्तकगुरुशिष्यपरंपराकथनाय वंशप्रतिपादकं कंडिकात्रितयमारभ्यते—अथ वंश

भ्यो गौतमाद्गौतमो व्वात्स्याद्वात्स्यो व्वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाजऽ औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापाच्च गौतमाच्च गौतमो बैजवापायनाच्च व्वैष्टपुरेयाच्च व्वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्याभ्याङ्कौण्डिन्याऽ और्ण्णवाभेभ्यऽ और्ण्णवाभाः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ २६ ॥

( च्चा ) आग्निवेश्यः सैतवात् । ( त्सै ) सैतवः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बलाकाकौशिकाद्बलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽ आत्रेयात् ॥ २७ ॥

---

४ वात्स्यो वात्स्याच्च पाराशर्य्याच्च । ५ पाराशर्य्यः सांकृत्याच्च भारद्वाजाच्च । ६ भारद्वाज औदवाहेश्च शांडिल्याच्च । ७ शांडिल्यो बैजवापाच्च गौतमाच्च । ८ गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च । ९ वैष्टपुरेयः शांडिल्याच्च रौहिणायनाच्च । १० रौहिणायनः शौनकाच्च जैवन्तायनाच्च रैभ्याच्च । ११ रैभ्यः पौतिमाष्यायणाच्च कौंडिन्यायनाच्च । १२ कौंडिन्यायनः कौंडिन्याभ्याम् । १३ कौंडिन्यौ और्णवाभेभ्यः । १४ और्णवाभाः कौंडिन्यात् । १५ कौंडिन्यः कौंडिन्यात् । १६ कौंडिन्यः कौंडिन्याच्चाग्निवेश्याच्च ॥ २६ ॥

१७ आग्निवेश्यः सैतवात् । १८ सैतवः पाराशर्य्यात् । १९ पाराशर्य्यो जातूकर्ण्यात् । २० जातूकर्ण्यो भारद्वाजात् । २१ भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च । २२ गौतमो भारद्वाजात् ।

---

इत्यारभ्य—ब्रह्मणे नमः इत्यंतम् । अथ सांगोपांगस्य फलस्यात्मविज्ञानस्य प्रवचनानंतरं याज्ञवल्कीयकांडस्य वंशः कथ्यते इति शेषः । प्रथमांतः शिष्यः । पंचम्यंतो गुरुः । इति मधुकांडवत् व्याख्येयम् ॥ २६ ॥

" आग्निवेश्यः सैतवात् " ॥ २७ ॥

( दा ) आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ २८ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ १४ (६) ४ । ३ । (७) ४-३ ॥

इति बृहदारण्यकोपनिषदि चतुर्थोऽध्यायः ॥ १४-४ ॥

इति द्वितीयं सुहृदुपदेशनिभोपपत्तिप्रधानं मुनिकांडं याज्ञवल्क्यकांडं वा परिसमाप्तम् ॥ २ ॥

अस्मिन् अध्याये च कण्डिकासंख्या ॥ १०३ ॥

---

२३ भारद्वाजो बलाकाकौशिकात् । २४ बलाकाकौशिकः काषायणात् । २५ काषायणः सौकरायणात् । २६ सौकरायणस्त्रैवणेः । २७ त्रैवणिरौपजंधनेः । २८ औपजंधनिः सायकायनात् । २९ सायकायनः कौशिकायनेः । ३० कौशिकायनिर्घृतकौशिकात् । ३१ घृतकौशिकः पाराशर्यायणात् । ३२ पाराशर्यायणः पाराशर्यात् । ३३ पाराशर्यो जातूकर्ण्यात् । ३४ जातूकर्ण्यो भारद्वाजात् । ३५ भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्च । ३६ आसुरायणस्त्रैवणेः । ३७ त्रैवणिरौपजंधनेरासुरेः । ३८ आसुरिर्भारद्वाजात् । ३९ भारद्वाज आत्रेयात् ॥ २७ ॥

४० आत्रेयो मांटेः । ४१ मांटिर्गौतमात् । ४२ । गौतमो गौतमात् । ४३ । गौतमो वात्स्यात् ।

---

" आत्रेयो मांटेः " ॥ २८ ॥

४४ वात्स्यः शांडिल्यात् । ४५ शांडिल्यः कैशोर्यात्काप्यात् । ४६ कैशोर्यः काप्यः कुमारहारितात् । ४७ कुमारहारितो गालवात् । ४८ गालवो विदर्भीकौंडिन्यात् । ४९ विदर्भीकौंडिन्यो वत्सनपातो बाभ्रवात् । ५० वत्सनपाद्बाभ्रवः पथः सौभरात् । ५१ पंथाः सौभरोऽयास्यादांगिरसात् । ५२ अयास्य आंगिरस आभूतेस्त्वाष्ट्रात् । ५३ आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रात् । ५४ विश्वरूपस्त्वाष्ट्रः अश्विभ्याम् । ५५ अश्विनौ दधीच आथर्वणात् । ५६ दध्यङ् आथर्वणः अथर्वणो दैवात् । ५७ अथर्वा दैवो मृत्योः प्राध्वंसनात् । ५८ मृत्युः प्राध्वंसनः प्रध्वंसनात् । ५९ प्रध्वंसन एकर्षेः । ६० एकर्षिर्विप्रजित्तेः । ६१ विप्रजित्तिर्व्यष्टेः । ६२ व्यष्टिः सनारोः । ६३ सनारुः सनातनात् । ६४ सनातनः सनगात् । ६५ सनगः परमेष्ठिनः । ६६ परमेष्ठी ब्रह्मणः । ६७ ब्रह्म स्वयंभु । ब्रह्मणे नमः ॥ २८ ॥

---

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां चतुर्थेऽध्याये तृतीयं याज्ञवल्क्यमैत्रेयीसंवादब्राह्मणं परिसमाप्तम् ॥ १४ । ( ७ ) ४ । ३ ॥

चतुर्थोऽध्यायश्च समाप्तः ॥ ( बृ. उप. ) १४–४ ॥

इति बृहदारण्यकोपनिषदि मध्यमं याज्ञवल्क्यकाण्डं मुनिकाण्डं वा परिसमाप्तम् ॥

## अथ चतुर्दश काण्डे बृहदारण्यकोपनिषद्यन्तिमं द्व्यध्यायं खिलकाण्डम् ।

## आदितोऽष्टमेऽध्याये बृहदारण्यकोपनिषदि तु पञ्चमेऽध्याये प्रथमं ब्राह्मणम् ।

### आदितः षष्ठे बृहदारण्यकोपनिषदि चतुर्थे च प्रपाठके चतुर्थं ब्राह्मणम् ।

ॐ ३पूर्ण्णमदः पूर्ण्णमिदम्पूर्ण्णात्पूर्ण्णमुदच्यते । पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यत ॐ ३ खम्ब्रह्म खम्पुराणम्वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो व्वेदोऽयम्ब्राह्मणा व्विदुर्व्वेदैनेन यद्वेदितव्यम् ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठके च चतुर्थं ब्राह्मणम् ॥१४ । (६) ४।४॥ (८) ५–१॥

---

शांतिब्राह्मणम् ।

" ॐ ३ पूर्णमदः, पूर्णमिदं, पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय, पूर्णमेवावशिष्यते " ॥ " ॐ ३ खं ब्रह्म "–( वा. सं. ई. उ. ४० । १७ ) खं पुराणम् । वायुरं खमिति ह स्माह कौरव्यायणीपुत्रः । वेदोऽयं ब्राह्मणा विदुः । वेदैनेन यद्वेदितव्यम् ॥ १ ॥

---

तदेवं यत् विज्ञानं केवलममृतत्वसाधनं स आत्मा निरुपाधिकः अशनायाद्यतीतो यदेव साक्षादपरोऽक्षाद्ब्रह्म य आत्मा सर्वांतरो नेति नेत्यादिलक्षणः काण्डद्वयेन निर्द्धारितः । अधुना तस्यैवोपाधिवैशिष्ट्यमापन्नस्य प्रमाणप्रमेयादिव्यवहारविषयतामुपगतस्याभ्युदयफलानि क्रममुक्तिफलानि कर्म्मसमृद्ध्यर्थानि चेति त्रिविधोपासनानि पूर्वत्रानुक्तानि वक्तव्यानि–इत्येतदर्थं खिलकाण्डं प्रवर्तते । पूर्वत्रानुक्तं वक्तव्यत्वेन परिशिष्टं खिलमिति हि खिललक्षणम् । तत्र सर्वोपास्त्यंगभूतान् ॐकारो, दमो, दानं, दया, इति पदार्थान् विधित्सन्ती श्रुतिः पूर्वमात्मयाथात्म्यविज्ञानसिद्धये मिथ्याभूतकार्यकारणसंबंधमाश्रित्य तात्पर्येण व्याख्यातस्य ब्रह्मणः शुद्धं स्वरूपं पूर्वोपात्तकार्यकारणसम्बन्धस्य हेयत्वं द्योतयितुमनुवदति–पूर्णमद इति मन्त्रेण । 'अदः' इति परोऽक्षाभिधायि सर्वनाम। पूर्णमिति–" वा दांतशांतपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः "–( पा. सू. ७ । २ । २७ ) इति कर्तरि निष्ठांत निपातितम् । तथा च–' अदः ' परोऽक्षं ब्रह्म पूर्णमाकाशवत् व्यापि निरंतरं निरुपाधिकं चेत्यर्थः । अनेन लक्ष्यं तत्पदार्थं दर्शयित्वा लक्ष्यं त्वंपदार्थं दर्शयति–पूर्णमिदमिति । यदिदं नामरूपोपाधिविशिष्टव्यवहारापन्नं तदपि केवलेन

---

१–अस्य काण्डस्य खिलमिति नामधेयं, खिलशब्दस्य परिशेषवाचकत्वादस्य काण्डस्य मधुयाज्ञवल्क्यकाण्डयोरुक्तात्पारिशिष्टवक्तव्याभिधायकत्वाच्चेति मन्तव्यम् ॥

स्वेन निरुपाध्यात्मनो परमात्मस्वरूपेण 'पूर्णं' व्यापि । न तु उपहितेन विशिष्टेन रूपेण पूर्णमित्यर्थः । एवं लक्ष्यौ तत्त्वंपदार्थावुक्त्वा तावेव वाच्यभूतौ कथयन् त्वंपदार्थस्य पूर्णत्वे हेतुं दर्शयति—**पूर्णात्पूर्णमुदच्यत** इति । 'पूर्णात्' कारणात्मनोऽविद्यासहायात् 'पूर्णमेवोदच्यते' उद्रिच्यते उद्गच्छतीत्यर्थः । सम्प्रत्यैक्यज्ञानफलमाह—**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत** इति । पूर्णस्य कार्यात्मनो ब्रह्मणः 'पूर्णं' पूर्णत्वमादाय गृहीत्वा आत्मस्वरूपैकरसत्वमापाद्य अविद्याकृतं भूतमात्रोपाधिसंसर्गजं जन्यत्वावभासं विद्यया तिरस्कृत्य 'पूर्णमेव' अनन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्मावशिष्यत इत्यर्थः । "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्सर्वमभवत्"—( श. प. बृ. उ. १ । २ । २१ ) इत्युपक्रमस्थश्रुत्यर्थ एवानेनमन्त्रेणोपसंहृतः । तत्र "पूर्णमदः पूर्णमिदम्" इत्यनेन ब्रह्म वा इति पदस्यार्थ उक्तः । "पूर्णात्पूर्णम्"—इत्यादिमन्त्रशेषेण "इदमग्र आसीत्" इत्यादेरर्थ उक्तः । अतः एकवाक्यत्वेनोपक्रमोपसंहारयोरैकरूप्यश्रुतितात्पर्यलिङ्गात् शास्त्रप्रतिपाद्यं ब्रह्मात्मैक्यमेवेति तात्पर्यार्थः । अधुना ध्यानविधानार्थं तस्मिन् विनियुक्तं मन्त्रं तावदाह—**ॐ ३ खम्ब्रह्मेति** । इह ध्यानसाधनत्वेनैव ॐ कारस्योपदेशः । अत्र ब्रह्मपदं ॐकारालम्बनस्य विशेष्यस्याभिधानम् । तस्य ब्रह्मशब्दस्य बृहद्वस्तुसामान्यवाचिनः सर्वत्र प्रसक्तौ खमिति विशेषणम् । नीलमुत्पलमितिवत् खब्रह्मणोः सामानाधिकरण्यात् तयोरैकत्वसिद्धिः । तथा च—यथा विष्ण्वङ्गाङ्कितायां शिलादिप्रतिमायां विष्णुबुद्धिः क्रियते, तथा ॐकारे खं ब्रह्मेत्युपासनं कर्तव्यमिति वाक्यार्थः । अस्मिन्मंत्रे खशब्दात् भौतिकखप्रतीतिर्माऽभूदित्यभिप्रायेण मंत्रविनियोजकं ब्राह्मणं प्रवर्तते—**खम्पुराणमि**त्यादि । 'पुराणं' चिरंतनं 'खं' परमात्माऽऽकाशमिति यावत् । तथा च—खमिति विशेषणेन बृहदर्थसामान्यवाचिनो ब्रह्मशब्दस्य अनादिकारणचैतन्यविषयत्वं निश्चितमित्यर्थः । ननु—अस्य कारणब्रह्मणः अतीन्द्रियत्वात् कथमोङ्कारे तदुपास्यमित्यतः कल्पांतरमाह—**वायुरं खमिति ह स्माह कौरव्यायणीपुत्र** इति । वायुर्विद्यते यस्मिन् तत् 'वायुरं' 'खं' भौतिकाकाशं तदवच्छिन्नं ब्रह्म ॐकारालम्बनं, भौतिकाकाशे खशब्दप्रयोगस्य बहुलमुपलंभात् 'इति' 'कौरव्यायणीपुत्रः' 'ह' किल आह-स्मोक्तवान् । एवं सति कारणब्रह्माकाशब्रह्मपदयोरुभयोरपि श्रौतत्वाविशेषात् ॐकारे दृष्टिद्वयमैच्छिकमिति भावः । एवमोंकारप्रतीकं कार्यकारणोभयविधं ब्रह्म ध्येयमित्युक्तम् ।

इदानीं प्रणवस्य यथोक्तब्रह्मवाचकत्वं साधयति—**वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यमिति** । यस्मात् 'यत् वेदितव्यं' प्रकाश्यमानमभिधीयमानं ब्रह्म तत् एनेनोंकारेण 'वेद' साधकः पुमान् विजानाति उपलभते । तस्माद्वेदोऽयमोङ्कार इति ब्राह्मणा विदुरित्यन्वयः । यद्यपि ॐ ब्रह्मात्मशब्दा ब्रह्मणो वाचकाः संति, तथाऽपि श्रुतिप्रामाण्यात् ओंकारो ब्रह्मणो नेदिष्ठमभिधानमतिप्रियतमं नामेत्यवगम्यते । इतरस्यापि वेदत्वं तु वेदितव्यवेदनहेतुत्वादेव । तस्मात् विशिष्टोऽयमोङ्कारो ब्रह्मोपास्तिसाधनत्वेन प्रतिपत्तव्य इत्यर्थः ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पंचमेऽध्याये प्रथमं शांतिब्राह्मणं परिसमाप्तम् । १४ । ( ८ ) ९–१ ॥

---

१–अत एव च श्रीमद्भगवद्गीतायां–"ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति भगवदुक्तिः, तथा योगसूत्रे "तस्य वाचकः प्रणवः" इति पतञ्जल्युक्तिः संराजते ।

त्रयाः प्राजापत्याः । प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्याऽ असुराः ॥ १ ॥

(ऽ) उषित्वा ब्रह्मचर्यन्देवाऽऊचुः । ( ब्रू ) ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच दऽइति व्यज्ञासिष्टा३ऽइति व्यज्ञासिष्मेति होचुर्दाम्यतेति नऽआत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥ शतम् ७६०० ॥

( त्यु ) अथ हैनम्मनुष्या ऽऊचुः । ( ब्रू ) ब्रवीतु नो भवानिति तेभ्यो

---

दमदानदयेति त्रिकोपदेशब्राह्मणम् ।

त्रयाः प्रजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः—देवा मनुष्या असुराः ॥ १ ॥

उषित्वा ब्रह्मचर्यं देवा ऊचुः । ब्रवीतु नो भवानिति । तेभ्यो हैतदक्षरमुवाच द इति । व्यज्ञासिष्टा ३ इति । व्यज्ञासिष्मेति होचुः । दाम्यतेति न आत्थेति । ॐ इति होवाच व्यज्ञासिष्टेति ॥ २ ॥

अथ हैनं मनुष्या ऊचुः । ब्रवीतु नो भवानिति । तेभ्यो हैतदेवाक्षरमुवाच द इति । व्यज्ञासिष्टा ३ इति । व्यज्ञासिष्मेति होचुः । दत्तेति न आत्थेति । ॐ इति होवाच व्यज्ञासिष्टेति ॥ ३ ॥

---

एवमाभ्यन्तरं सर्वोपास्तिसाधनं ॐकार इत्युक्तम् । इदानीं बाह्यं दमादिसाधनत्रयं विधातव्यम् । तेनापि विशिष्ट एव बाह्याभ्यंतरशुचिः सन् सर्वोपास्तिषु अधिक्रियते । अतस्तद्विधानायार्थवादमाह—**त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुरिति** । त्रयास्त्रिप्रकाराः ' प्राजापत्याः ' प्रजापतेरपत्यभूताः ' प्रजापतौ ' विराडात्मनि ' पितरि ' समीपे शिष्याः संतः ' ब्रह्मचर्यं ' ऊषुरुषितवंतः । के ते प्राजापत्या इत्यपेक्षायामाह—**देवा मनुष्या असुरा** इति । सुबोधम् ॥ १ ॥

ततस्ते किं कृतवंत इत्यपेक्षायामाह—**उषित्वा ब्रह्मचर्यं देवा ऊचुरिति** । ते देवा मनुष्या असुराश्च ' ब्रह्मचर्यमुषित्वा ' क्रमेण प्रश्नं कुर्वाणाः प्रथमं ' देवाः ' ऊचुरुक्तवंत इत्यर्थः । किमित्यपेक्षायामाह—**ब्रवीतु नो भवानिति** । भवान्नोऽस्मभ्यं अनुशासनं ' ब्रवीतु ' कथयत्वित्यर्थः । एवं देवैरनुशासने प्रार्थिते प्रजापतिः किमाहेत्यपेक्षायामाह—**तेभ्यो हैतदक्षरमुवाच द इतीति** । तेभ्योऽर्थिभ्यः ' ह ' किल ' द ' ' इत्येतदक्षरं ' वर्णमात्रं उवाचोक्तवान् । देवानेवं शिक्षयित्वा तेषां स्वोपदिष्टविद्याप्रतिपत्तिपरीक्षार्थं पिता पृष्टवान् इति दर्शयति—**व्यज्ञासिष्टा ३ इतीति** । प्लुतिर्विचारार्था । मयोपदिष्टस्याक्षरस्यार्थं यूयं विज्ञातवंतो न वा इति प्रश्नार्थः । एवं पृष्टे देवोक्तं प्रति वचनं कथयति—**व्यज्ञासिष्मेति होचुरिति** । विज्ञातवन्तो वयमित्यूचुरित्यर्थः । यद्येवं तर्ह्युच्यतां किं मयोक्तमिति प्रजापतेराकांक्षायां स्वाभिप्रायानुसारेण देवैरवगतमर्थं दर्शयति—**दाम्यतेति न आत्थेतीति** । स्वभावतः अदांता यूयं मनः ' दाम्यत ' दांता भवतेति त्वं नोऽस्मान् ' आत्थ ' कथयसि इत्युक्तवन्त इत्यर्थः । देवोक्तं प्रजापतिरङ्गीकृतवान् इत्याह—**ॐ इति होवाचेति** । ॐशब्दार्थमेव विशदयति—**व्यज्ञासिष्टेतीति** । सम्यक् ज्ञातं भवद्भिरिति अङ्गीकृतवानित्यर्थः । समानमुत्तरपर्यायद्वयेऽपि व्याख्यानम् ॥ २ ॥

स्वभावतो लुब्धा यूयं अतः ' दत्त ' यथाशक्त्या अन्नादिकं विभजत इति नोऽस्मानात्थ । किमन्यत् ब्रूयान्नो हितमिति स्वाभिप्रायानुसारेण मनुष्या दकारार्थं ज्ञातवंत इति मनुष्यपर्यायतात्पर्यार्थः ॥ ३ ॥

हैतुदेवाक्षुरमुवाच द ऽइति व्व्यज्ञासिष्टा३ऽइति व्व्यज्ञासिष्मेति होचुर्द-त्तेति नऽआत्थेत्योमिति होवाच व्व्यज्ञासिष्टेति ॥ ३ ॥

( त्यु ) ऽथ हैनमुसुराऽऊचुः । ( व्व्रं ) ब्रवीतु नो भुवानिति तेभ्यो है-तुदेवाक्षरमुवाच दऽइति व्व्यज्ञासिष्टा३ऽइति व्व्यज्ञासिष्मेति होचुर्दयध्व-मिति नऽआत्थेत्योमिति होवाच व्व्यज्ञासिष्टेति तुदेतुदेवैषा दैवी व्वागु-नुवदति स्तनयित्नुर्द्ददऽइति दाम्यत दत्त दुयध्वमिति तुदेतुत्त्रयुꣳ शिक्षेद्दमन्दानन्दयामिति ॥ ४ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थ-प्रपाठके पञ्चमं ब्राह्मणम् ॥ १४ । ( ६ ) ४ । ५ ॥ ( ८ ) ५–२ ॥

---

अथ हैनमसुरा ऊचुः । ब्रवीतु नो भवानिति । तेभ्यो हैतदेवाक्षरमुवाच द इति । व्यज्ञासिष्टा ३ इति । व्यज्ञासिष्मेति होचुः । दयध्वमिति न आत्थेति । ॐ इति होवाच व्यज्ञासिष्टेति । तदेत-देवैषा दैवी वागनुवदति । स्तनयित्नुर्द द द इति । दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेत् । दमं दानं दयामिति ॥ ४ ॥

---

एवं क्रूरा यूयं हिंसादिपराः । अतः ' दयध्वं ' प्राणिषु दयां कुरुत इत्युक्तमस्मान्प्रति, इत्यसुरा दका-रार्थं गृहीतवन्तः इत्यसुरपर्यायतात्पर्यार्थः । प्रजापतेरनुशासनं प्रागासीदित्यत्र लिङ्गमाह-**तदेतदेवैषा दैवी वागनुवदतीति** । तदेतत्प्रजापतेरनुशासनं ' एषा दैवी वागनुवदति ' । तेन रूपेण प्रवर्तत इत्यर्थः । का एषा दैवी वाक्, कथं वा सा श्रूयते, इत्यपेक्षायामाह–**स्तनयित्नुर्द द द इतीति** । अत्र विसन्धिकरणं तु सर्वत्र वर्णान्तरभ्रमापोहार्थम् । यः ' स्तनयित्नुः ' सैषा दैवी वाक् । दकारत्रयोच्चारणेन तु स्तनयित्नुशब्दानुकरण-मात्रं विवक्षितम् । न तु त्रित्वं, प्रमाणाभावात् इत्यर्थः । ननु–तर्हि त्रिर्दकारोच्चारणं किमर्थं, तेषां च को वा अर्थः । इत्यत आह–**दाम्यत दत्त दयध्वमितीति** । दमो दानं दयेत्यर्थत्रयमुपलक्षयितुं त्रिर्दकारोच्चारणमित्यर्थः । यमर्थं विधातुमयमाख्यायिकारूपः अर्थवादो विधेयस्तावकत्वेन प्रवृत्तः । तमर्थमिदानीं विदधाति–**तदेत-त्त्रयं शिक्षेद्दमं दानं दयामिति** । यस्मात्प्रजापतिः दाम्यत दत्त दयध्वं इति स्तनयित्नुरूपेणानुशास्त्येव । तत्तस्मात्कारणात् ' दमं दानं दयां ' ' इत्येतत्त्रयं शिक्षेत् ' उपादद्यात् । प्रजापतेरनुशासनमस्माभिः कर्तव्य-मिति मतिं कुर्यादधुनातनो मनुष्य इत्यर्थः ॥ ४ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-ब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पंचमेऽध्याये द्वितीयं दमदानदयेतित्रिकोपदेशकं ब्राह्मणं परिसमाप्तम् ॥ १४ ( ८ ) ५–२ ॥

व्वायुरनिलममृतम् । ( म्भ ) भस्मान्तꣳ शरीरम् । ॐ ३ क्रतो स्मर । क्लिबे स्मराग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव व्वयुनानि व्विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिम्विधेमेति ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठप्रपाठके बृहदारण्यकोपानिषदि चतुर्थ-प्रपाठके च षष्ठं ब्राह्मणम् ॥ १४ ( ६ ) ४।६ ॥ ( ८ ) ५–३ ॥

---

## सूर्याग्न्योरुपस्थानब्राह्मणम् ।

" वायुरनिलममृतम्, भस्मांतं शरीरम् । ॐ ३ क्रतो स्मर । क्लिबे स्मर ।

---

नन्वेवं दमादियुक्तस्यापि शरीरपाते तु नामृतत्वं आध्यात्मिकवाय्वादिप्रतिबन्धात् इत्यत आह–**वायुरनिलममृतमिति** । ममामृतस्य सत्यस्य शरीरपाते सति तत्स्थः आध्यात्मिकप्राणरूपः ' वायुः ' ' अनिलं ' बाह्यं वायुं अमृतमधिदैविकं प्रति गच्छत्विति शेषः । एतद्वायुग्रहणमन्येषामपि देवानामुपलक्षणार्थम् । अन्येऽपि देवाः स्वां स्वां प्रकृतिं गच्छन्त्वित्यर्थः । नन्वेवं देहस्थदेवतानामप्रतिबन्धकत्वेऽपि देहस्यैव सूक्ष्मतां गतस्य प्रतिबन्धकत्वात् नामृतत्वसिद्धिरित्यत आह–**भस्मांतं शरीरमिति** । शरीरमपि ' भस्मान्तं ' सत् पृथिवीं प्रति यातु । भस्मान्तलिंगात् कर्म्मिण एवैतदुपस्थानम् । न संन्यासिनामिति गम्यते । तेषां दाहासम्भवादित्यर्थः । एवमुपस्थानमुक्त्वा अग्नेरुपस्थानमाह–**ॐ ३ क्रतो स्मर क्लिबे स्मरेति** । ' ॐ इति क्रतो इति च ' अग्निदेवतासम्बोधनार्थावेव शब्दौ । अवतीत्योमीश्वरः सर्वरक्षकः । स च जाठरप्रतीकत्वेनोपासितत्वादग्निः । अग्निश्च क्रतुसाध्यत्वेन क्रतुरित्युच्यते । तथा च–हे ॐ ३ ! क्रतो ! अग्ने ! ' स्मर इति ' इष्टां गतिं जिगमिषता मया स्मरणे त्वं नियुज्यसे । अन्तकाले हि त्वया स्मरणे कृते सति इष्टा गतिः प्राप्यते । अतः प्रार्थ्यसे । ' क्लिबे ' क्लृप्ताय लोकाय ' स्मर ' । पुनरपि अग्निविषयप्रार्थनान्तरमाह–**अग्ने नय सुपथेति** । हे ' देव ! ' द्योतनात्मक ' अग्ने ! ' त्वं ' विश्वानि वयुनानि ' सर्वाणि प्रज्ञानानि ' विद्वान् ' । ज्ञानवाचि वयुनपदं कर्मपूर्वप्रज्ञयोरुपलक्षणार्थम् । एतानि ' विद्वान् ' जानन् हि त्वं ' अस्मान् ' त्वदुपासकान् ' सुपथा ' शोभनेनोत्तरेण शुक्लेन मार्गेण पुनरावृत्तिरहितेन ' नय ' प्रापय । किमर्थं ? ' राये ' धनाय कर्म्मफलभोगायेति यावत् । किं च–अस्मदस्मत्तः ' जुहुराणं ' कुटिलं वंचनात्मकं देवगानप्राप्तिप्रतिबन्धकं ' एनः ' पापं ' युयोधि ' वियोजय विनाशयेत्यर्थः । वयं तु देहावसानकाले अन्यत्कर्तुमशक्ताः । इदानीं ' ते ' तुभ्यं ' भूयिष्ठां ' बहुतमां ' नमउक्तिं ' नमस्कारवचनं ' विधेम ' समर्पयेम । नमस्कारमात्रसमर्पणेन परिचरेम । तव त्वया सर्वाधिकत्वेन ग्राह्यमित्यर्थः । इतिशब्दः समाप्तिद्योतकः ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेव-ब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यक-व्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पंचमेऽध्याये तृतीयं सूर्याग्न्योरुपस्थानब्राह्मणं परिसमाप्तम् ॥ १४ ( ८ ) ५–३ ॥

---

१–वा. सं. ईशोपनिषदि " अमृतम्भस्मान्तम् " इत्यनयोः पदयोर्मध्ये " अथेदम् " इति पदद्वयमधिकं विद्यते ॥

२–वा. सं. ईशोपनिषदि " क्लिबे स्मर " इत्यस्माद्वाक्यादग्रे " कृतꣳ स्मर " इतीदं वाक्यमधिकं वर्त्तते ॥

एषु प्प्रजापतिर्य्यंद्धृदयम् । ( मे ) एतद्ब्रह्मैतत्सुर्व्वन्तुदेतुत्त्र्यक्षरꣳ हृदयमिति हृऽइत्येकमक्षुरमभिहरन्त्यस्मै स्वाश्चान्ये च युऽएवम्वेद दऽ इत्येकमक्षुरन्दुदन्त्यस्मै स्वाश्चान्ये च युऽएवम्वेद यमित्येकमक्षुरमेति स्वर्गं लोकं युऽ एवम्वेद ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठप्रपाठके बृहदारण्यकोपानिषदि चतुर्थ-प्रपाठके सप्तमं ब्राह्मणम् ॥ १४ (६) ४।७॥ (८) ५-४ ॥

---

अग्ने नय सुपथा राये अस्मान, विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनः, भूयिष्ठां ते नमउक्तिं विधेम " ( वा. सं. ( ई. उ. ) ४० । १५ । १६ ) इति ॥ १ ॥

हृदयब्रह्मोपासनं ब्राह्मणम् ।

एष प्रजापतिः, यत् हृदयम् । एतत् ब्रह्म । एतत्सर्वम् । तदेतत् त्र्यक्षरं हृदयमिति । हृ इत्येकमक्षरम् । अभिहरन्त्यस्मै स्वाश्चान्ये च । य एवं वेद । द इत्येकमक्षरम् । ददंत्यस्मै स्वाश्चान्ये च । य एवं वेद । यमित्येकमक्षरम् । एति स्वर्गं लोकम् । य एवं वेद ॥ १ ॥

---

इदानीं सोपाधिकस्य ब्रह्मणो निरुपाधिकस्वरूपे अनधिकृतानां ध्यानभेदोक्त्यर्थं उत्तरं ग्रन्थजातं प्रवर्तते । तत्र प्रजापतिर्देवादीनामनुशास्ता इति सामान्यतः श्रवणात् दक्षादिष्वपि प्रजापतित्वशङ्का माऽभूदिति प्रजापतिं विशिनष्टि—एष प्रजापतिर्यद्धृदयमिति । हृदयशब्दस्तत्स्थबुद्धिविषयः । यस्मिन् हृदये शाकल्यब्राह्मणे " किंदेवतोऽस्याम् " ( बृ. उ. ३।९।२१ ) इत्यादिनामरूपकर्म्मणां दिग्विभागेनोपसंहार उक्तः । तत् ' हृदयं ' ' एषः ' एव देवाद्यनुशास्ता ' प्रजापतिः ' न तु दक्षादिरित्यर्थः । उक्तहृदयस्योपास्यत्वार्थं ब्रह्मत्वमाह—एतद्ब्रह्मेति । ' एतत् ' हृदयं ' ब्रह्म ' ज्ञेयजातस्य हृदयेन व्याप्तत्वात् । अतो हृदयं ब्रह्मेत्येवं दीर्घकालादरनैरंतर्येण भावेनोपास्यमित्यर्थः । ननु—कथं हृदयस्य प्रजापतिना सह ऐक्यमुच्यते हृदयस्य सूक्ष्मत्वात् प्रजापतेश्च सर्वात्मकत्वात् इत्यत आह—एतत्सर्वमिति । ' एतत् ' हृदयं ' सर्वं ' सर्वात्मकं शाकल्यब्राह्मणोक्तरीत्यैव । प्रजापतिरपि त्र्यन्नब्राह्मणोक्त ( १।३।१ ) रीत्या सर्वात्मकः । अतः सर्वात्मकत्वात् युक्तं तयोरैक्यवचनमित्यर्थः । एवमुपास्यत्वेन सिद्धस्य हृदयस्य स्तुत्यर्थं तन्नामाक्षरैकदेशोपासनमाह—तदेतत्त्र्यक्षरमित्यादिना । तदेतत्प्रसिद्धं हृदयनाम ' त्र्यक्षरं ' त्रीणि अक्षराणि यस्येति व्युत्पत्तेरित्यर्थः । कानि पुनस्त्रीण्यक्षराणीत्यपेक्षायां सफलं दर्शयन् प्रथमाक्षरं तावदाह—हृ इत्येकमक्षरमभिहरंत्यस्मै स्वाश्चान्ये च य एवं वेदेति । यस्मादस्मै हृदयब्रह्मणे ' स्वाः ' इंद्रियाणि ' अन्ये च ' विषयाः शब्दादयः स्वं स्वं कार्यमभिहरंति । हृदयं च भोक्रर्थं स्वविषयं सुखादिकं अभिहरति । तस्मात् हृदयनामाक्षरत्वेन संबद्धं हरतेराहरतिकर्मणो हृ इत्येतत् रूपम् । ' यो वेद ' अस्मै विदुषे स्वा ज्ञातयः अन्ये च सम्बन्धिनः अभिहरंति । बलिमिति वाक्यशेषः । पूर्ववत् द्वितीयाक्षरमाह—द इत्येकमक्षरं ददंत्यस्मै स्वाश्चान्ये च य एवं वेदेति । यस्मात् पूर्वोक्ताः ' स्वा अन्ये च ' हृदयब्रह्मणे स्वं स्वं वीर्यं ' ददंति ' ददंते प्रयच्छन्तीत्यर्थः । हृदयं च भोक्त्रे तद्ददाति ।

तद्वै तदेतदेव तदास । सत्यमेव स यो हैवमेतन्महद्यक्षम्प्रथमजम्वेद सत्यम्ब्रह्मेति जयतीमांल्लोकाञ्जित ऽइन्न्वसावसद्य ऽएवमेतन्महद्यक्षम्प्रथमजम्वेद सत्यम्ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठकेऽष्टमं ब्राह्मणम् ॥ १४ । ( ६ ) ४।८ ॥ ( ८ ) ५-५ ॥

---

हृदयब्रह्मणः सत्यमित्युपासनाविधिब्राह्मणम् ।

तद्वै तत् एतदेव तदास—सत्यमेव । स यो हैवमेतन्महद्यक्षं प्रथमजं वेद—सत्यं ब्रह्मेति । जयतीमान् लोकान् । जित इन्न्वसावसत् । य एवमेतन्महद्यक्षं प्रथमजं वेद—सत्यं ब्रह्मेति । सत्यं ह्येव ब्रह्म ॥ १ ॥

---

तस्मात् ददतेर्दानकर्मणो द इत्येतद्रूपं हृदयाक्षरत्वेन सम्बद्धं ' यो वेद ' अस्मै विदुषे स्वाश्चान्ये च स्वं स्वं वीर्यं ददति प्रयच्छन्तीत्यर्थः । " दद दाने " ( धा. पा. भ्वा. आ. १७ ) इत्यस्य धातोरात्मनेपदिनोऽपि भौवादिकस्य व्यत्ययेन परस्मैपदं बोद्धव्यम् । तथा तृतीयमक्षरमाह—यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेदेति । यस्मात् ' स्वा अन्ये च ' विषयाः हृदयब्रह्म प्रति ' यन्ति ' । हृदयं च भोज्यं प्रत्येति । तस्मादिणो गत्यर्थस्य यमित्येतत् रूपं हृदयनामाक्षरत्वेन संबद्धं ' यो वेद ' स विद्वान् ' स्वर्गं लोकं ' प्रति ' एति ' गच्छति । एतत्फलमत्र विज्ञानानुरूपमेवेत्यर्थः । तथा च हृदयनामाक्षरैकदेशोपासनादपि विशिष्टं फलं प्राप्नोति, किमु वक्तव्यं हृदयस्वरूपोपासनादिति हृदयस्तुत्यर्थमेव नामाक्षरोपासनोपन्यासः, न तु नामाक्षरोपासनानि त्रीणि हृदयस्वरूपोपासनमपरमिति चत्वार्यत्रोपासनानि विवक्षितानीति बोद्धव्यम् ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये चतुर्थं हृदयब्रह्मोपासनब्राह्मणं परिसमाप्तम् ॥ १४ ( ८ ) ५।४ ॥

एतस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनांतरं विवित्सती श्रुतिराह—तद्वै तदेतदेव तदासेति । अत्र प्रथमस्तच्छब्दो हृदयाख्यब्रह्मपरामर्शी । वैशब्दः स्मरणार्थः । तदुच्यते विधांतरेणेत्येवं हृदयाख्यब्रह्मण एव विधांतरप्रतिज्ञाऽर्थो द्वितीयस्तच्छब्दः । किं तद्विधांतरमित्यपेक्षायां वक्ष्यमाणविधान्तरमेतदेवेत्यनेन शब्देनोक्त्वा तस्य पूर्वोक्तहृदयब्रह्मणा सामानाधिकरण्यप्रदर्शनार्थस्तृतीयस्तच्छब्दः । तथा च ' तद्वै ' हृदयं ब्रह्म ' एतदेव ' वक्ष्यमाणप्रकारं ' तदासेति ' पर्यवसितोऽर्थः । कोऽसौ वक्ष्यमाणः प्रकार इत्यपेक्षायामाह—सत्यमेवेति । यद्ब्रह्म हृदयात्मनोक्तं तत्सत्यमेव । सच्च त्यच्च सत्यम् । पंचभूतात्मकमाधिदैविकं तत्त्वं हिरण्यगर्भात्मकमित्यर्थः । तस्य स्वरूपकथनपूर्वकं तद्विज्ञानफलमाह—स यो हैवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकानिति । ' यः ' साधको महदपरिच्छेद्यं महत्त्वात् ' यक्षं ' पूज्यं ' प्रथमजं ' सर्वस्मात् विराडादेः संसारिणः सकाशात्पूर्वमेवोत्पन्नं एवंविधं ' सत्यं ब्रह्म वेद ' । ' सः ' इमान् लोकान् जयति ' । यथा

आपऽ एवेदमग्रऽ आसुः । ( स्ता ) ताऽ आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिम्प्रजापतिर्द्देवान् ॥ १ ॥

( वाँस्ते ) ते देवाः सत्यमित्युपासते । तदेतत्त्र्यक्षरꣳ सत्यमिति सऽ इत्येकमक्षरन्तीत्येकमक्षरमंमित्येकमक्षरम्प्रथमोत्तमेऽअक्षरे सत्यम्मध्यतो-

---

सत्यस्य ब्रह्मणः स्तुतिब्राह्मणम् ।

आप एवेदमग्र आसुः । ता आपः सत्यमसृजंत । सत्यं ब्रह्म ब्रह्म प्रजापतिम् । प्रजापतिर्देवान् ॥ १ ॥
ते देवाः सत्यमित्युपासते । तदेतत् त्र्यक्षरं सत्यमिति । स इत्येकमक्षरम् । तीत्येकमक्षरम् ।

---

सत्येन ब्रह्मणा इमे लोका आत्मसात्कृताः, तद्वदित्यर्थः । कैमुतिकन्यायेन फलांतरमाह–**जित इन्न्वसावसदिति** । ' इन्नु ' इत्थं सत्येन ब्रह्मणा अनृतात्मा शत्रुर्जितः । तथा अनेनाप्युपासकेनासौ शत्रुर्जितः असदस्तु भवतु । तथा च लोका येन जिताः तस्य शत्रुजये किं वक्तव्यमित्यर्थः । कथमीदृग्विधज्ञानात् उपासकस्येदं फलमित्यपेक्षायां उक्तोपासकस्यानुवादपूर्वकं हेतुमाह–**य एवमेतन्महद्यक्षमित्यादि सत्यं ह्येव ब्रह्मे**त्यंतम् । ' हि ' यस्मात्सत्यमेव ' ब्रह्म ' उक्तरीत्या लोकजित् शत्रुजिच्च । तस्मात् तदुपासकस्यापि उपासनानुरूपमुक्तं फलं युक्तमेवेत्यर्थः ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये पञ्चमं सत्यमित्युपासनाविधिब्राह्मणं परिसमाप्तम् ॥ १४ ( ८ ) ५–५ ॥

इदानीं सत्यस्य ब्रह्मणः स्तुत्यर्थं तस्य प्रथमजत्वं साधयति–**आप एवेदमग्र आसुरि**ति । अग्निहोत्रादिकर्म्मसु हूयमाना आहुतयः पयःसोमादिकाः अत्राप्शब्देनोच्यन्ते । तथा च यथोक्ताः ' आपः ' जगतो बीजभूता अव्याकृतात्मना अवस्थिताः ' एव ' ' इदं ' सर्वं नामरूपात्मकं विकारजातं जगत् ' अग्रे ' सृष्टेः पूर्वं ' आसुः ' । नान्यत् किंचित् विकारजातमासीदिति वाक्यार्थः । इदानीमप्शब्दोपलक्षितात् मूलकारणात् सूत्रोत्पत्तिमाह–**ता आपः सत्यमसृजन्ते**ति । उक्तलक्षणाः पुनरापो भूतान्तरसहिताः ' सत्यं ' सूत्रात्मकं हिरण्यगर्भमसृजन्त सृष्टवत्यः । एतेन सत्यस्य ब्रह्मणः प्रथमजत्वं सिद्धमित्यर्थः । एतस्य पूर्वोपक्रांतात् हृदयसत्यब्रह्मणः सकाशात् भिन्नत्वशंकां वारयति–**सत्यं ब्रह्मे**ति । एवं सत्यस्य ब्रह्मणः प्रथमजत्वं निरूप्य तस्यैव महत्त्वं साधयति–**ब्रह्म प्रजापतिमि**ति । तत्सत्यं ' ब्रह्म ' हिरण्यगर्भाख्यं कर्तृ 'प्रजापतिं' प्रजानां पतिं विराजमसृजतेत्यनुषङ्गः । तथा च सर्वजगदात्मकविराडात्मस्रष्टृत्वात् सूत्रात्मकं सत्यं ब्रह्म महदित्यर्थः । इदानीं तस्य यक्षत्वं निरूपयितुं उत्पन्नाद्विराडात्मनः सकाशादिन्द्रादिदेवतासृष्टिमाह–**प्रजापतिर्देवानि**ति । असृजतेत्यत्राप्यनुषङ्गः । देवतासृष्टिश्रुतिरपि महत्त्वसाधनायेति वा व्याख्या बोध्या ॥ १ ॥

अथ यक्षत्वमाह–**ते देवाः सत्यमित्युपासत** इति । यस्मादेवं सृष्टास्ते ' देवाः ' पितरमपि विराजमतीत्य ' सत्यं ' सत्यं ब्रह्मोपासते । इत्यतो यक्षं तदित्यर्थः । तथा चैवं सिद्धं प्रथमजं महद्यक्षं सत्यं ब्रह्म सर्वात्मनोपास्यमिति भावः । हृदयब्रह्मवदस्यापि सत्यस्य ब्रह्मणः स्तुत्यर्थं वर्णत्रयात्मकतामाह–**तदेतत्त्र्यक्षरं**

---

१–" यमित्येकमक्षरम् " इति काण्वः पाठः ।

ऽनृतन्तदेतदनृतꣳ सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैवंविद्वाꣳसमनृतꣳ हिनस्ति ॥ २ ॥

तद्यत्तत्सत्यम् । ( म ) असौ सऽआदित्यो यऽएषऽएतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषस्तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ रश्मिभिर्वाऽएषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्त्स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलम्पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥ ३ ॥

---

अमित्येकमक्षरम् । प्रथमोत्तमे अक्षरे सत्यम् । मध्यतोऽनृतम् । तदेतदनृतं सत्येन परिगृहीतं सत्यभूयमेव भवति । नैवं विद्वांसमनृतं हिनस्ति ॥ २ ॥

तद्यत् तत्सत्यम् । असौ स आदित्यः । य एष एतस्मिन्मण्डले पुरुषः । यश्चायं दक्षिणेऽक्षन्पुरुषः । तावेतावन्योऽन्यस्मिन्प्रतिष्ठितौ । रश्मिभिर्वा एषोऽस्मिन्प्रतिष्ठितः । प्राणैरयममुष्मिन् । स यदोत्क्रमिष्यन् भवति । शुद्धमेवैतन्मण्डलं पश्यति । नैनमेते रश्मयः प्रत्यायन्ति ॥ ३ ॥

---

**सत्यमिती**ति । तदेतत्सत्यमिति नाम त्र्यक्षरमित्यर्थः । कानि तान्यक्षराणीत्यपेक्षायामाह—**स इत्येकमक्षरं तीत्येकमक्षरमामित्येकमक्षरामि**ति । भवत्वेवमक्षरत्रयम् । ततः किमित्यपेक्षायामक्षरस्वरूपदर्शनानुरूपं फलं कथयितुं तेषां स्वरूपं तावदाह—**प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतं सत्येन परिगृहीतं सत्यभूयमेव भवती**ति । तत्र तेषां ' प्रथमोत्तमे अक्षरे ' सकारांकारौ सत्यममृतं मृत्युरूपाभावात् । ' मध्यतः ' मध्ये वर्तमानं तीत्यक्षरमनृतं मृत्युरूपं मृत्य्वनृतयोः तकारसामान्यात् । तदेतदनृतं तीकाराख्यं मृत्युरूपं ' सत्येन ' सकारांकारलक्षणेन ' परिगृहीतं ' व्याप्तं अंतर्भावितम् । अतस्तस्याकिंचित्करत्वात् ' सत्यभूयमेव ' भवतीत्यर्थः । एवं सत्यबाहुल्यं अनृतस्य मृत्योरकिंचित्करत्वं च विजानतः फलमाह—**नैवं विद्वांसमनृतं हिनस्ती**ति । एवमित्थं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्याकिंचित्करत्वं च ' विद्वांसं ' जानन्तं ' अनृतं ' कदाचित् प्रमादोक्तं ' न हिनस्ति ' फलदानेन न व्याप्नोति । बुद्धिपूर्वकस्यानृतस्य विदुषोऽपि बाधकत्वादित्यर्थः ॥ २ ॥

एवं विशिष्टसत्योपासितमुक्त्वा इदानीं तस्यैवाध्यात्मिकाधिदैविकसंस्थानभेदवैशिष्ट्यं कल्पयित्वा तदुपास्त्यर्थमाह—**तद्यत्तत्सत्यमसौ स आदित्य** इति । यत्सत्यं ब्रह्म पूर्वोक्तं ' तत् ' ' असौ सः ' प्रसिद्धः । कोऽसौ ? ' आदित्यः ' । कः पुनरादित्यः ? ' य एषः ' ' एतस्मिन् ' प्रसिद्धे ' मण्डले ' ' पुरुषः ' मण्डलाभिमानी । ' यश्च दक्षिणेऽक्षन् ' दक्षिणे अक्षणि ' पुरुषः ' सः असौ सत्यं ब्रह्मेत्यर्थः । ननु—प्रदेशभेदवर्तिनोः स्थानभेदेन भेदात् उपासनाभेदः स्यात् इत्याशंकायामाह—**तावेतावन्योऽन्यस्मिन् प्रतिष्ठिताविति** । तावेतावादित्याक्षिस्थौ पुरुषौ एकस्यैव सत्यब्रह्मणः स्थानविशेषौ यस्मात् तस्मादन्योऽन्यस्मिन् आदित्यश्चक्षुषि चाक्षुषश्चादित्ये ' प्रतिष्ठितौ ' । अतस्तयोर्भिन्नत्वेनेव प्रतिभासमानत्वेऽपि वस्तुतो भेदाभावान्नोपासनाभेद इत्यर्थः । कथं तावन्योऽन्यस्मिन् प्रतिष्ठितावित्यपेक्षायां परस्परोपकार्योपकारकभावेनेत्याह—**रश्मिभिर्वा एषोऽस्मिन्प्र-**

युऽ एषु ऽएतुस्मिन्मुण्डले पुरुषः । ( स्तु ) तुस्य भूरिति शिर ऽएकᳪ शिरऽएकमेतुदक्षुरम्भुवऽइति बाहू द्वौ बाहू द्वेऽएतेऽअक्षुरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वेऽ एते ऽअक्षरे तुस्योपनिषदुहरिति हुन्ति पाप्मानञ्जहाति च युऽ एवम्वेद ॥ ४ ॥

---

य एष एतस्मिन्मण्डले पुरुषः । तस्य भूरिति शिरः । एकं शिरः । एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू । द्वे एते अक्षरे । स्वरिति प्रतिष्ठा । द्वे प्रतिष्ठे । द्वे एते अक्षरे । तस्योपनिषत् अहरिति । हंति पाप्मानं जहाति च । य एवं वेद ॥ ४ ॥

---

तिष्ठितः प्राणैरयममुष्मिन्निति । आदित्योऽस्मिश्चक्षुषि अध्यात्मेः ' रश्मिभिः ' प्रकाशेनोपकुर्वन् ' प्रतिष्ठितः ' ' अयं ' च चाक्षुषः प्राणैश्चक्षुरादिभिरिन्द्रियैर्मंडलं प्रकाशयन् अमुष्मिन्नादित्ये अधिदैवते प्रतिष्ठितः । अनयोरुपकार्योपकारकभावस्य प्रसिद्धत्वादित्यर्थः । इदानीं ज्ञातारिष्टः पुमान् कथं नाम हितमाचरेदित्यभिप्रायवती श्रुतिश्चक्षुरादित्यपुरुषप्रसङ्गागतमरिष्टदर्शनमाह—**स यदोत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यतीति** । सोऽस्मिन् शरीरे भोक्ता विज्ञानमयः ' यदा ' यस्मिन् काले ' उत्क्रमिष्यन् ' प्राणांस्त्यक्ष्यन् ' भवति ' तदा स विज्ञानमयश्चाक्षुष एतद्रविमण्डलं ' शुद्धमेव ' विरश्मि एव केवलं चन्द्रमण्डलमिव पश्यति । उत्क्रमणकाले चाक्षुषादित्ययोरदृष्टनिबन्धनोपकार्योपकारकभावनिवृत्तेः, औदासीन्येनावतिष्ठमानत्वादित्यर्थः । संसारिणः परलोकहिताय यत्नकर्तव्यत्वे सावधानार्थं प्रासङ्गिकमरिष्टदर्शनं प्रदर्श्य, इदानीं प्रकृतयोः परस्परोपकार्योपकारकत्वमुक्तं निगमयति—**नैनमेते रश्मयः प्रत्यायंतीति** । ' एते रश्मयः ' ' एनं ' चाक्षुषं पुरुषं ' न प्रत्यायन्ति ' स्वामिकर्म्मानुरोधेन पूर्वमागच्छन्तोऽपि तत्कर्म्मक्षये पुनः नावर्तंते इत्यर्थः ॥ ३ ॥

एवं स्थानद्वयसम्बन्धि सत्यब्रह्मणो ध्यानमुक्त्वा तस्यैव व्याहृत्यवयवकत्वेन ध्यानमाह—कण्डिकाद्वयेन—**य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर** इत्यादिना । ' य एषः ' ' एतस्मिन् मण्डले पुरुषः ' सत्यनामा ' तस्य ' ' भूरिति ' प्रथमा व्याहृतिः ' शिरः ' । उभयोः प्राथम्यसाम्यादित्यर्थः । एवं प्रथमव्याहृतौ शिरोदृष्ट्यध्यारोपे सामान्यांतरमाह—**एकं शिर एकमेतदक्षरमिति** । यथा ' शिर एकं ' तथा भूरित्यक्षरमपि 'एकम्' ततो युक्तं तत्र तदध्यारोपणमित्यर्थः । द्वितीयव्याहृतौ आदित्यपुरुषबाहुदृष्टिमाह—**भुव इति बाहू इति** । तत्र द्वित्वसामान्यनियामकमाह—**द्वौ बाहू द्वे एते अक्षरे** इति । तृतीयायां व्याहृतौ पाददृष्टिमाह—**स्वरिति प्रतिष्ठेति** । प्रतितिष्ठति अनयेति—' प्रतिष्ठा ' पादौ । तत्र सामान्यमाह—**द्वे प्रतिष्ठे द्वे एते अक्षरे इति** । सुवरिति वर्णविश्लेषेण एते अक्षरे द्वे इत्यर्थः । एवमुपास्यब्रह्मणः अभिमुखीकरणार्थं रहस्यं नामाह—**तस्योपनिषदहरितीति** । ' तस्य ' व्याहृत्यवयवस्य सत्यब्रह्मणः ' अहः ' ' इत्युपनिषत् ' रहस्यं नाम । येनाभिधानेनाभिधीयमानं ब्रह्म लोकवदभिमुखीभवति । तदिदं नामेत्यर्थः । उपास्तिफलमाह—**हन्ति पाप्मानं जहाति च य एवं वेदेति** । आङ्पूर्वस्य हन्तेर्जहातेर्वा असुप्रत्यये कृते ह्रस्वत्वे च उपसर्गस्य टिलोपे च सति सिद्धमहरित्येतद्रूपं हन्तेर्जहातेश्चेति ' यो वेद ' । सः ' पाप्मानं हंति जहाति च ' त्यजति चेत्यर्थः ॥ ४ ॥

(द्रा) अथ योऽयन्दक्षिणेऽक्षन्पुरुषः । ( स्तु ) तस्य भूरिति शिरऽएकꣳ शिरऽएकमेतदक्षरम्भुवऽइति बाहू द्वौ बाहू द्वेऽएतेऽअक्षरे स्वरिति प्प्रतिष्ठा द्वे प्प्रतिष्ठे द्वेऽएतेऽअक्षरे तस्योपनिषदहमिति हन्ति पाप्मानञ्जहाति च यऽएवम्वेद ॥ ५ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थ-प्रपाठके नवमं ब्राह्मणम् ॥ १४।( ६ )४।९ ॥ ( ८ ) ५–६ ॥

विद्युद्ब्रह्मेत्याहुः । ( विं ) विदानाद्विद्युद्विद्यत्येनꣳ सर्वस्मात्पाप्मनो यऽएवम्वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थ-प्रपाठके दशमं ब्राह्मणम् ॥ १४(६) ४ । १० ॥ ( ८ ) ५–७ ॥

---

अथ योऽयं दक्षिणेऽक्षन्पुरुषः । तस्य भूरिति शिरः । एकं शिरः । एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू । द्वे एते अक्षरे । स्वरिति प्रतिष्ठा । द्वे प्रतिष्ठे । द्वे एते अक्षरे । तस्योपनिषत् अहमिति । हन्ति पाप्मानं जहाति च । य एवं वेद ॥ ५ ॥

विद्युद्ब्रह्मोपासनाब्राह्मणम् ।

विद्युत् ब्रह्मेत्याहुः । विदानात् विद्युत् । विद्यत्येनं सर्वस्मात्पाप्मनः । य एवं वेद–विद्युत ब्रह्मेति । विद्युत् हि एव ब्रह्म ॥ १ ॥

---

एवमधिदैविकं व्याहृत्यवयवं ब्रह्मोक्त्वा आध्यात्मिकमाह–अथ योऽयं दक्षिणेऽक्षन् पुरुष इत्यादि पूर्ववत् । अत्यापि रहस्यं नामाह–अहमितीति । पूर्वोक्तप्रक्रिययैवास्य प्रत्यगात्मभूतत्वात् हन्तेर्जहातेश्च-तद्रूपमहमिति यो वेद–स हन्ति पाप्मानमित्येतत्सर्वं पूर्ववत् ॥ ५ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनशाखोपनिषद्बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये षष्ठं सत्यस्य ब्रह्मणः स्तुतिब्राह्मणं परिसमाप्तम् ॥ १४ ( ८ ) ५–६ ॥

एतस्यैव सत्यब्रह्मणः अशेषपापध्वंसकमुपासनान्तरमाह–विद्युद्ब्रह्मेत्याहुरिति । 'आहुः' ब्राह्मणा इति शेषः । तस्य निर्वचनमाह–विदानाद्विद्युदिति । मेघान्धकारस्य विदानादवखंडनात् विदारणात् 'विद्युत्' । पापहेत्वज्ञानान्धकारस्य विदारणात् ब्रह्म विद्युदित्यर्थः । एवमुपासितुः फलमाह–विद्यत्येनं सर्वस्मात्पाप्मनो य एवं वेद विद्युद्ब्रह्मेतीति । 'यो विद्युत् ब्रह्मेति एवं वेद' एनमुपासकं 'सर्वस्मात्' समस्तात् 'पाप्मनः'

मनोमयोऽयम्पुरुषः । (षो) भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वैवमयमन्तरात्मन्पुरुषः स ऽएष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदम्प्रशास्ति यदिदङ्किञ्च य ऽएवम्वेद ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठके एकादशं ब्राह्मणम् ॥ १४ (६) ४ । ११॥ (८) ५-८ ॥

---

अथ शाण्डिल्यविद्याग्रंथः ।

मनोमयपुरुषोपासनाब्राह्मणम् ।

मनोमयोऽयं पुरुषः भाःसत्यः । तस्मिन्नंतर्हृदये यथा व्रीहिर्वा यवो वा, एवमयमन्तरात्मन्पुरुषः । स एष सर्वस्य वशी । सर्वस्येशानः । सर्वस्याधिपतिः । सर्वमिदं प्रशास्ति । यदिदं किंच । य एवं वेद ॥ १ ॥

---

पापात् विद्यत्यवखण्डयति पृथक्करोतीत्यर्थः । ब्रह्मेति शेषः । फलस्योपास्यानुगुणत्वमाह—**विद्युद्ध्येव ब्रह्मेति** । 'हि' यस्मात् 'ब्रह्म विद्युत्' तमोमूलकपापविदारकमेव । तस्माद्युक्तं तदेव फलमित्यर्थः ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्-बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये सप्तमं विद्युद्ब्रह्मोपासनाब्राह्मणं परिसमाप्तम् ॥ १४।(८)५-७ ॥

उपाधीनामनेकत्वात् प्रत्येकमनेकविशेषणत्वाच्च तथैव प्रकृतस्य ब्रह्मणः मनउपाधिकस्योपासनं विधित्सन्ती श्रुतिराह—**मनोमयोऽयं पुरुषो भाःसत्य** इति । 'अयं पुरुषो मनोमयः' मनःप्रायः मनसि उपलभ्यमानत्वात् मनसा चोपलभ्यमानत्वात् मनसि अहमित्यभिमानज्ञानवत्त्वाद्वा 'भाःसत्यः' भा एव सत्यं स्वरूपं यस्य सोऽयं भाःसत्यो भास्वरः सर्वार्थावभासकमनोमयत्वादित्यर्थः । तस्य ध्यानार्थमौपाधिकं स्वरूपं कथयन्ती श्रुतिः स्थानविशेषमाह—**तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वेति** । 'यथा व्रीहिर्वा यवो वा' परिमाणतः । एवंपरिमाणो विज्ञानमयः 'तस्मिन्' प्रसिद्धे 'अन्तर्हृदये' हृदयमध्ये । योगिभिर्दृश्यत इति शेषः । इदं त्वौपाधिकं परिमाणम् । स्वाभाविकं तु आनंत्यमेवेत्यभिप्रेत्य दार्ष्टांतिकमाह—**एवमयमन्तरात्मन् पुरुषः स एष सर्वस्य वशीत्यादि** । यथा दृष्टांतः । 'एवमन्तरात्मन्' अन्तरात्मनि हृदयाकाशे 'अयं पुरुषः' योगिभिर्दृश्यत इति शेषः । **सर्वस्य वशीत्यादि** यदिदं किंचेत्यन्तं शारीरकब्राह्मणे ( बृ. उ. ४।२।२४ ) व्याख्यातार्थम् । उपासितुः फलमाह—**य एवं वेदेति** । एवंविधमनोमयब्रह्मोपासनतः तादृग्रूपापत्तिरेव फलम् । "तं यथा यथोपासते"—( श. प. १० । ५ । २ । २० ) इति श्रुतेः । न त्वफलमित्यनादरणीयमित्यर्थो बोध्यः ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्-बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्यायेऽष्टमं मनोमयपुरुषोपासनाब्राह्मणं परिसमाप्तम् ॥ १४ । (८) ५-८ ॥

व्वाचन्धेनुमुपासीत । तुस्याश्चत्वार स्तुनाः स्वाहाकारो व्वषट्कारो हन्तकारः स्वधाकारस्तुस्यै द्वौ स्तुनौ देवाऽउपजीवन्ति स्वाहाकारञ्च व्वषट्कारञ्च हन्तकारम्मनुष्याः स्वधाकारम्पितरस्तुस्याः प्प्राणऽऋषभो मुनो व्वत्सः ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठके द्वादशम्ब्राह्मणम् ॥ १४ (६) ४ । १२॥ (८) ९–९ ॥

---

वेदत्रयीवाग्धेनूपासनाब्राह्मणम् ।

वाचं धेनुमुपासीत । तस्याश्चत्वारः स्तनाः–स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः । तस्यै द्वौ स्तनौ देवा उपजीवन्ति । स्वाहाकारं च वषट्कारं च । हन्तकारं मनुष्याः । स्वधाकारं पितरः । तस्याः प्राण ऋषभः । मनो वत्सः ॥ १ ॥

---

अथ पुनस्तस्यैव ब्रह्मणो वाङ्मयधेनुसम्बन्धेनोपासनं महाफलार्थमाह–वाचं धेनुमुपासीतेति । वाक्शब्देनात्र वेदत्रयी ग्राह्या । न तु करणं तत्स्थानं वा तद्देवता वा तदन्यतमेषु स्वाहाकारादीनामसंभवात् । अतः ‘ वाचं ’ वेदत्रयीलक्षणां धेनुरिव धेनुः तामुपासीत सदा अनुवर्तेतेत्यर्थः । एवमुपासने निमित्तं धेनुसामान्यमाह–तस्याश्चत्वारः स्तना इति । हंतशब्दः अपेक्षितार्थवाचकः । शेषः प्रसिद्धार्थः । स्वामिभ्यो धेनुः पय इव वाग्धेनुः एतैश्चतुर्भिः स्तनैर्देवादिभ्योऽन्नं क्षरतीत्यर्थः । कः कं स्तनमुपजीवतीत्यपेक्षायां विनियोगभेदमाह–तस्यै द्वौ स्तनौ देवा उपजीवंतीत्यादिना स्वधाकारं पितर इत्यंतेन । ‘ तस्यै ’ तस्या धेन्वाः । स्वाहावषड्भ्यां हि देवेभ्यो हविर्दीयते । अतः ‘ देवाः स्वाहाकारं च वषट्कारं चोपजीवंति ’ । हन्तेति मनुष्येभ्योऽन्नं प्रयच्छन्ति । अतः ‘ हन्तकारं मनुष्याः ’ उपजीवन्तीत्यनुषङ्गः । स्वधेति हि पितृभ्यः कव्यं ददति । अतः ‘स्वधाकारं पितरः’ उपजीवन्तीति प्रसिद्धमित्यर्थः । कः पुनरस्याः प्रसूतिहेतुः सेक्ता को वा पुनः स्तन्यप्रस्रवहेतुर्वत्स इत्यपेक्षायां तावाह- तस्याः प्राण ऋषभो मनो वत्स इति । प्राणेन हि बललक्षणेन वाक् प्रसूयते । अप्राणस्य वागुच्चारणादर्शनात् । अतस्तस्या धेन्वाः ‘ प्राणः ’ ऋषभ इव ‘ ऋषभः ’ तथा मनसा ह्यालोच्य वाक् स्वाहाकाराद्यर्थं क्षरति । “ यद्धि मनसा ध्यायति तद्वाचा वदति ”–( तै. सं. ६।१।७ ) इति श्रुतेः । अतः ‘ मनो वत्सः ’ इत्यर्थः । एतदुपासकस्य यथोक्तवागुपाधिकब्रह्मप्रतिपत्तिरेव फलम् । “ तं यथा यथोपासते तदेव भवति ”–( श. प. १० । ५ । २ । २० ) इति श्रुतेरिति भावः ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पंचमेऽध्याये नवमं वेदत्रयीवाग्धेनूपासनब्राह्मणं परिसमाप्तम् ॥ १४ । ( ८ ) ९–९ ॥

अयमग्निर्वैश्वानरः । ( ग्रो ) योऽयमन्तः पुरुषे येनेदमन्नम्पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतङ्घोषꣳ शृणोति ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थप्रपाठके त्रयोदशं ब्राह्मणम् ॥ १४ (६)४।१३॥ (८) ९--१०॥

एतद्वै परमन्तपः । ( पो ) यद्व्याहितस्तप्यते परमꣳ हैव लोकञ्जयति यऽएवम्वेदैतद्वै परमन्तपो यम्प्रेतमरण्यꣳ हरन्ति परमꣳ हैव लोकञ्जयति

---

जठरस्थवैश्वानरोपासनाब्राह्मणम् ।

अयमग्निर्वैश्वानरः । योऽयमन्तः पुरुषे । येनेदमन्नं पच्यते । यदिदमद्यते । तस्यैष घोषो भवति । यमेतत्कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन् भवति । नैतं घोषं शृणोति ॥ १ ॥

ज्वरादिव्याध्यादेस्तपस्त्वोपासनाब्राह्मणम् ।

एतद्वै परमं तपः । यद्व्याहितस्तप्यते । परमं हैव लोकं जयति । य एवं वेद । एतद्वै परमं

---

प्रकृतस्यैव ब्रह्मणः कौक्षेयाग्नित्वमापन्नस्यापरोक्षत्वं दर्शयितुं पुनरुपासनांतरमाह—अयमग्निर्वैश्वानर इति । कोऽसावग्निरित्यत आह—योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यत इति । 'यत्' यस्मात् 'येनेदमद्यतेऽन्नं' तदेन 'पच्यते' स विराडात्मा प्रजापतिर्जाठरोऽग्निरित्यर्थः । तत्सद्भावे किं मानमित्यपेक्षायामाह—तस्यैष घोषो भवतीति । तस्याग्नेरन्नं पचमानस्यैषः 'घोषः' शब्दो भवतीत्यर्थः । कोऽसौ घोष इत्यपेक्षायां प्रत्यक्ष एवेत्याह—यमेतत्कर्णावपिधाय शृणोतीति । एतदिति क्रियाविशेषणम् । अंगुलिभ्यां 'कर्णावपिधाय' अपिधानं कृत्वा यं घोषं एतच्छ्रवणं यथा स्यात् तथा 'शृणोति' । स घोषो यथोक्तवैश्वानरसद्भावे प्रमाणमित्यर्थः । एवं वैश्वानरमग्निं प्रजापतिरूपमुपासितुः फलं तु तद्भावापत्तिरेवेति द्रष्टव्यम् । प्रासङ्गिकमरिष्टदर्शनमाह—स यदोत्क्रमिष्यन् भवति नैतं घोषं शृणोतीति । सोऽत्र शरीरे भोक्ता 'यदोत्क्रमिष्यन्' इत्यादि स्पष्टार्थम् ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये दशमं वैश्वानरोपासनाब्राह्मणं परिसमाप्तम् ॥ १४ । (८) ९ । १० ॥

एवं ब्रह्मोपासनानि कानिचित्सफलान्युक्तानि । इदानीमब्रह्मोपासनानि कानिचित् फलवन्ति दर्शयति—एतद्वै परमं तपो यद्व्याहितस्तप्यत इति । 'व्याहितः' व्याधियुक्तो ज्वरादिपरिगृहीतः सन् 'यत्तप्यते'।

सुऽएवम्वेदैतद्वै परमन्तपो युम्प्रेतमग्नावभ्यादुधति परमुᳫँ हैवु लोकु-
ञ्जयति युऽएवम्वेद ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थ-
प्रपाठके चतुर्दशं ब्राह्मणम् ॥ १४ (६)४।१४॥ (८) ९–११ ॥

यदा वै पुरुषः। (षोऽस्मा) अस्माल्लोकात्प्रैति स वायुमागच्छति
तस्मै स तत्र विजिहीते यथा रथचक्रस्य खन्तेन सऽऊर्ध्वऽआक्रमते सऽ
आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा डुम्बरस्य खन्तेन सऽ

---

तपः। यं प्रेतमरण्यं हरन्ति। परमं हैव लोकं जयति। य एवं वेद। एतद्वै परमं तपः। यं प्रेतम-
ग्नावभ्यादधति। परमं हैव लोकं जयति। य एवं वेद ॥ १ ॥

सर्वासामुपासनानां गतेः फलस्य च विधायकं ब्राह्मणम्।

यदा वै पुरुषः अस्माल्लोकात्प्रैति। स वायुमागच्छति। तस्मै स तत्र विजिहीते।
यथा रथचक्रस्य खम्। तेन स ऊर्ध्वं आक्रमते। स आदित्यमागच्छति। तस्मै स तत्र

---

'तदेतत्' 'वै' निश्चितं 'परमं तपः' दुःखसामान्यात्। व्याधिना अभिभूयमानः तमनिन्दन् अविषीदंश्च सन् तपस्तप्यते मयेति बुद्धिं कुर्यादित्यर्थः। एवं चिंतयतः किं फलं भवतीत्यपेक्षायामाह–**परमं हैव लोकं जयति य एवं वेदेति**। 'य एवं' ज्वरादिपीडनं तप इति 'वेद' सः 'परमं' तपसोऽनुकूलं 'लोकं जयति' प्राप्नोतीत्यर्थः। तथोपासनान्तरमाह–**एतद्वै परमं तपो यं प्रेतमरण्यं हरन्तीति**। 'यं प्रेतं' मां ऋत्विजो ज्ञातयो वा 'अरण्यं' प्रति अभि 'हरंति'। 'एतद्वै परमं तपः' इति मुमूर्षावस्थायां चिंतयेत्। वानप्रस्थवत् ग्रामादरण्यगमनसामान्यात्। स तपोऽनुरूपं लोकं जयतीत्यर्थः। तथा पुनरुपासनान्तरमाह–**एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधतीति**। 'यं प्रेतं' मां ज्ञातयोऽग्नावभ्यादधति प्रक्षिपन्ति। 'एतद्वै परमं तपः' इति मरणात्प्रागेव चिंतयेत्। अग्निप्रवेशसामान्यात्। सः अग्निप्रवेशानुरूपं लोकं जयतीत्यर्थः। अत्र परमलोक-शब्देन तत्तदुपासनयोग्यफलभेदस्य विवक्षितत्वात् नोपासनैक्यशङ्केति भावः ॥ १॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासु-
देवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यक-
व्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये एकादशं ज्वरादि-
व्याध्यादेस्तपोरूपोपासनाब्राह्मणं परिसमाप्तम् ॥ १४। (८) ९। ११ ॥

इदानीमस्मिन् प्रकरणे उक्तानां सर्वोपासनानां गतिं अनुक्तं फलं च दर्शयितुमिदं ब्राह्मणमारभ्यते–**यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीत इति**। 'यदा' यस्मिन् काले

ऊर्ध्वऽआक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खन्तेन सऽऊर्ध्वऽआक्रमते स लोकमागच्छत्यशोकमहिमन्तस्मिन्वसति शाश्वतीः समाः ॥ १ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषादे चतुर्थप्रपाठके पञ्चदशं ब्राह्मणम् ॥ १४ (६) ४।१५॥ (८) ५-१२ ॥

अन्नम्ब्रह्मेत्येकऽआहुः । ( स्त ) तन्न तथा पूयति वाऽअन्नमृते प्प्राणा-

---

विजिहीते । यथा डंबरस्य खम् । तेन स ऊर्ध्व आक्रमते । स चंद्रमसमागच्छति । तस्मै स तत्र विजिहीते । यथा दुंदुभेः खम् । तेन स ऊर्ध्व आक्रमते । स लोकमागच्छति अशोकमहिमम् । तस्मिन् वसति शाश्वतीः समाः ॥ १ ॥

अन्नप्राणयोरेकब्रह्मोसनाविधायकं ब्राह्मणम् ।

अन्नं ब्रह्मेत्येक आहुः । तन्न तथा । पूयति वा अन्नमृते प्राणात् । प्राणो ब्रह्मेत्येक आहुः ।

---

आयुषः क्षयात् ‘ पुरुषः ’ विद्वान् ‘ अस्माल्लोकात्प्रैति ’ शरीरं परित्यजति । ‘ सः ’ उपासकस्तदा ‘ वायुमागच्छति ’ । ‘ सः ’ च वायुः स्तिमितरूपस्तिर्यग्भूतः अभेद्योऽन्तरिक्षे तिष्ठन् ‘ तस्मै ’ सम्प्राप्ताय विदुषे तदर्थं ‘ तत्र ’ स्वात्मनि ‘ विजिहीते ’ स्वात्मावयवान् विगमयति छिद्रीकरोत्यात्मानमित्यर्थः । कियत्परिमाणं तच्छिद्रं क्रियते, इत्यपेक्षायामाह—यथा रथचक्रस्य खं तेन स ऊर्ध्वऽ आक्रमत इति । ‘ यथा ’ यावत्परिमाणं ‘ रथचक्रस्य ’ ‘ खं ’ छिद्रं तावत्परिमाणेन छिद्रेण ‘ सः ’ विद्वान् ‘ ऊर्ध्वः ’ ऊर्ध्वं ‘ आक्रमते ’ उपरि गच्छतीत्यर्थः । स ऊर्ध्वं गच्छन् क गच्छतीत्यपेक्षायामाह—स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा डंबरस्य खं तेनेत्यादिना यथा दुंदुभेः खं तेन सऽ ऊर्ध्वऽ आक्रमते इत्यन्तेन । ‘ डंबरः ’ वादित्रविशेषः । शेषः स्पष्टार्थः । एवमुपर्युपरि गच्छतः कुत्र विश्राम इत्यपेक्षायां विराडात्मनीत्याह—स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समा इति । ‘ सः ’ उपासकः ‘ लोकं ’ प्रजापतिमागच्छति । किंविशिष्टं ? ‘ अशोकं ’ मानसेन दुःखेन विवर्जितं ‘ अहिमं ’ हिमवर्जितं शारीरदुःखवर्जितम् । यद्वा आभ्यां पदाभ्यां क्रमेण दुःखतत्साधनराहित्यमुच्यते । तं लोकं आगत्य ‘ तस्मिन् ’ शाश्वतीर्नित्याः ‘समाः’ सम्वत्सरान् बहूनवान्तरकल्पान् ‘ वसति ’ वासं करोति । एतदनुक्तफलोपासनफलमुक्तमित्यर्थः ॥ १ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य
श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्-
बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये
द्वादशं सर्वासामुपासनानां फलस्य गतेश्च विधायकं ब्राह्मणं
परिसमाप्तम् ॥ १४ । ( ८ ) ५ । १२ ॥

इदानीं पुनः प्रकृतब्रह्मोपासनमेवानुवर्तयन्ती श्रुतिः वि—रमिति गुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनं विशिष्टफलकं विधातुं आदौ एतस्यैवोपास्यत्वनिर्णयार्थां युक्तीराह—अन्नं ब्रह्मेत्येक आहुस्तन्न तथेत्यादिना

त्प्राणो ब्रह्मेत्येकऽआहुस्तन्न तथा शुष्यति वै प्प्राणऽऋतेऽन्नादेते ह त्वेव देवतेऽएकधाभूयम्भूत्वा परमताङ्गच्छतः ॥ १ ॥

( स्तु ) तद्ध स्माह प्प्रातृदः पितरम् । (क्किं) किंस्विदेवैवम्विदुषे साधु *कुर्य्यात्किमेवास्माऽअसाधु कुर्य्यादिति स ह स्माह पाणिना मा प्प्रातृद कस्त्वेनयोरेकधाभूयम्भूत्वा परमताङ्गच्छतीति ॥ २ ॥

तस्माऽउ हैतदुवाच । व्वीत्यन्नम्वै व्यन्ने हीमानि सर्व्वाणि भूतानि

---

तन्न तथा । शुष्यति वै प्राण ऋतेऽन्नात् । एते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतः । ॥ १ ॥

तद्ध स्माह प्रातृदः पितरम् । किं स्विदेव एवं विदुषे साधु कुर्यात् । किमेवास्मा असाधु कुर्यादिति । स ह स्माह पाणिना । मा प्रातृद । कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति॥२॥

तस्मा उ हैतदुवाच । वीति । अन्नं वै वि । अन्ने हीमानि सर्वाणि भूतानि विष्टानि ।

---

परमताङ्गच्छत इत्यन्तेन । ‘अन्नं ब्रह्मेत्येके ’ आचार्या ‘ आहुः ’ । ‘ तत्तथा न ’ ग्रहीतव्यम् । यतः प्राणाद्रक्षकात् ‘ ऋते ’ विना ‘ अन्नं पूयति ’ क्लियते पूतिभावमापद्यते इति ‘ वै ’ प्रसिद्धम् । तथा ‘ प्राणो ब्रह्मेत्येक आहुः’ । तदपि ‘ न तथा ’ तथा न ब्रह्म । यतः ‘ अन्नात् ’ अदनीयात् ‘ ऋते ’ ‘ प्राणः शुष्यति ’ शोषमुपैति ‘वै’ प्रसिद्धम् । ब्रह्म तु न क्लियते न शुष्यति च । “अक्लेद्योऽशोष्य एव च” ( भ.गी.२।२४ ) इति स्मृतेः । यस्मात् एवं एकैकस्य ब्रह्मत्वं नोपपद्यते । तस्मात् ‘ ह ’ किल ‘ एते एव तु देवते ’ अन्नप्राणलक्षणे ‘ एकधाभूयं ’ एकधाभावं ‘ भूत्वा ’ गत्वा ‘ परमतां ’ परमत्वं ‘ गच्छतः ’ ब्रह्मत्वं प्राप्नुत इत्यर्थः ॥ १ ॥

अन्नप्राणयोरेकत्वेन ब्रह्मदृष्टिः कार्या इत्येतमर्थं इतिहासोक्त्या द्रढयति–तद्ध स्माह प्रातृदः पितरं किं स्विदेवैवं विदुषे साधु कुर्यात्किमेवास्माऽ असाधु कुर्यादितीति । तदेतदन्नप्राणैकत्वब्रह्मदर्शनं विद्वान् ‘ ह ’ किल प्रातृदनामा ऋषीश्वरो हृष्टः सन् स्वं ‘ पितरं ’ प्रति ‘ आह स्म ’ । किंस्विदिति वितर्के । यथा मया ब्रह्म परिकल्पितम् । ‘ एवं ’ ब्रह्म ‘ विदुषे ’ ‘ साधु ’ शोभनं पूजां ‘ किंस्वित् ’ कुर्यात् । न किंचिदस्य कर्तव्यमिष्यते । अनेन सर्वस्यापि प्राप्तव्यस्य प्राप्तत्वात् । तथा ‘अस्मै ’ विदुषे ‘असाधु ’ अशोभनं वा ‘ किमेव ’ कुर्यात् । न किञ्चिदपि कुर्यात् । लोक इति शेषः । अस्य निरस्ताशेषासाधुत्वात् । इतिशब्दः प्रातृदवचनसमाप्तिद्योतक इत्यर्थः । एवमन्नप्राणयोरेकत्वविज्ञानवतो न साधुकरणेन महत्त्वं नाप्यसाधुकरणेन खण्डितत्वं, किं तु-तस्य कृतकृत्यत्वमेवेति पुत्रेणोक्ते सति नैतावन्मात्रविज्ञानात् कृतकृत्यता पुरुषस्य, किंतु–अस्ति ज्ञातव्यान्तरमित्यभिप्रेत्य पिता पुत्रं वारयतीत्याह–स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति । ‘ सः ’ पिता ‘ ह ’ किल हे ‘प्रातृद’ ! इति पुत्रं सम्बोध्य ‘पाणिना’ हस्तेन वारयन् ‘मा’ मैवं वोचः इति ‘ आह स्म ’ प्रत्यषेधयदित्यर्थः । एतयोरन्नप्राणयोरेकधाभूयं ‘ भूत्वा ’ ‘ कस्तु ’ को वा विद्वान् ‘ परमतां गच्छति ’ न कश्चिदपि । तस्मान्नैवं वक्तुमर्हसि । अकृतकृत्योऽसावितीत्यर्थः ॥ २ ॥

कथं तर्हि ज्ञानात् कृतकृत्यः स्यात् इत्यपेक्षायामन्नप्राणयोः सशक्तिकयोः एकत्वविज्ञानात् तथा स्यात् । न

---

* “ कुर्याम् ” इत्युभयत्र काण्वः पाठः ।

विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रतानि सर्वाणि ह वाऽअस्मिन्भूतानि विशन्ते सर्वाणि भूतानि रमन्ते यऽ एवम्वेद ॥ ३ ॥

इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थ-प्रपाठके षोडशं ब्राह्मणम् ॥ १४ ( ६ ) ४।१६॥ (८) ९-१३ ॥

उक्थम्प्राणो वाऽउक्थम् । ( म्प्रा ) प्राणो हीदꣳ सर्वमुत्थापयत्यु द्धास्माऽउक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकताञ्जयति यऽ एवम्वेद ॥ १ ॥

---

रमिति । प्राणो वै रम् । प्राणे हीमानि सर्वाणि भूतानि रतानि । सर्वाणि ह वा अस्मिन् भूतानि विशन्ते । सर्वाणि भूतानि रमंते । य एवं वेद ॥ ३ ॥

प्राणोपासनाब्राह्मणम् ।

उक्थम् । प्राणो वा उक्थम् । प्राणो हीदं सर्वमुत्थापयति । उद्धास्मा उक्थविद्वीरस्तिष्ठति । उक्थस्य सायुज्यं सलोकतां जयति । य एवं वेद ॥ १ ॥

---

न केवलयोरेकत्वविज्ञानात् इत्याशयवान् पिता तयोः शक्तिभूतं गुणद्वयं क्रमेणोपदिष्टवानिति कथयति-तस्मा उ हैतदुवाच वीत्यन्नं वै वीत्यादिना-सर्वाणि भूतानि रतानीत्यन्तेन । ' तस्मै ' प्रातृदाय 'उ ह' किल पिता ' वि ' रं ' ' इत्येतदन्नप्राणयोः क्रमेण गुणद्वयमुवाचोपदिष्टवान् इति योजना । किं तत् वीत्यपेक्षायामाह--अन्नं वै वीति । कुतोऽन्नं वि ' हि ' यस्मात् ' इमानि ' प्रसिद्धानि ' सर्वाणि भूतानि ' ' अन्ने विष्टानि ' अन्नमाश्रित्य स्थितानि । अतोऽन्नं वीत्युच्यत इति यावत् । किं तत् रमित्यत आह-प्राणो वै रमिति । कुतश्च प्राणो रम् ? ' वै ' प्रसिद्धम् । ' हि ' यस्मात् बलात्मके ' प्राणे ' ' सर्वाणि भूतानि रतानि ' सक्तानि यथेष्टं विहृतानि वर्तंते इति शेषः । तस्मात्प्राणो रमित्युच्यत इत्यर्थः । तथा च सर्वभूताश्रयत्वलक्षणविशब्दवाच्यगुणकमन्नं सर्वभूतरतिलक्षणरंशब्दवाच्यगुणकश्च प्राणः । तथाविधयोरेव तयोरेकत्वमापन्नयोः परमत्वमिति तथाविधमेव ब्रह्मोपासितव्यमिति समुदायार्थः । इदानीमेवंविदः फलमाह-सर्वाणि ह वा अस्मिन् भूतानि विशंते इत्यादि-य एवं वेदेत्यंतम् । स्पष्टार्थम् ॥ ३ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनशाखोपनिषद्बृहदारण्यकव्याख्यायां वासुदेव-प्रकाशिकायां तृतीये खिलकाण्डे पञ्चमेऽध्याये त्रयोदशमन्नप्राणयोरैक्योपासना-विधायकं ब्राह्मणं परिसमाप्तम् ॥ १४ । ( ८ ) ९ । १३ ॥

पुनस्तस्यैव ब्रह्मणः उक्थादिगुणपूगविशिष्टत्वेनोपासनमाह--उक्थमित्यादिना । महाव्रताख्ये क्रतौ प्रधान-भूतं शस्त्रमुक्थशब्दार्थः । किमात्मकं तदुक्थमित्यत आह-प्राणो वा उक्थमिति । प्राणो ह्यध्यात्मेषु मुख्यः ।

यजुः प्प्राणो वै यजुः । प्प्राणे हीमानि सर्व्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्व्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यꣳ सलोकताञ्जयति यऽ एवम्वेद ॥ २ ॥

साम प्प्राणो वै साम । प्प्राणे हीमानि सर्व्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मिन्त्सर्व्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यꣳ सलोकताञ्जयति यऽएवम्वेद ॥ ३ ॥

---

यजुः । प्राणो वै यजुः । प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते । युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय । यजुषः सायुज्यं सलोकतां जयति । य एवं वेद ॥ २ ॥

साम । प्राणो वै साम । प्राणे हीमानि सर्वाणि भूतानि सम्यंचि । सम्यंचि हास्मिन् सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते । साम्नः सायुज्यं सलोकतां जयति । य एवं वेद ॥ ३ ॥

---

उक्थं च सर्वशस्त्राणां प्रधानम् । अतः प्राण उक्थगुण उपास्य इत्यर्थः । ननु–प्राणे कथमुक्थशब्दप्रवृत्तिरित्यपेक्षायां योगवशादित्याह–**प्राणो हीदं सर्वमुत्थापयतीति** । 'हि' यस्मादिदं सर्वं चराचरात्मकं 'प्राण उत्थापयति' । अप्राणस्योत्थानाशक्तेः । अतः प्राण उत्थापनादुक्थमित्यर्थः । एवमुपासनस्य क्रमेण दृष्टमदृष्टं च फलमाह–**उद्धास्माऽउत्थविद्वीर** इत्यादिना । 'उत् ह अस्मै' इति च्छेदः । पंचम्यर्थे चतुर्थी छांदसी । 'यः' एवमुक्थस्वरूपं प्राणं 'वेद' । अस्मादुपासकात् उक्थवित्प्राणवित् 'वीरः' पुत्रः 'उत्तिष्ठति' उत्पद्यते । इत्येतत् दृष्टफलम् । 'उक्थस्य' प्राणस्य 'सायुज्यं सलोकतां' च उपासनातारतम्यात् 'जयति' प्राप्नोति । एतददृष्टं फलमित्यर्थः ॥ १ ॥

इदानीं प्राणस्य योक्तृतागुणवत्त्वेनोपासनमाह–**यजुः प्राणो वै यजुरिति** । यतः 'प्राणो वै यजुः' । अतः प्राणो यजुरित्युपासीतेत्यर्थः । प्राणे यजुःशब्दप्रवृत्तिं दर्शयति–**प्राणे हीमानि सर्वाणि भूतानि युज्यंत** इति । 'हि' यस्मात्प्राणे सति 'सर्वाणि भूतानि' परस्परं 'युज्यंते' । न हि असति प्राणे कस्यचित्केनचित् योगसामर्थ्यं दृष्टम् । अतो युनक्तीति यजुरिति योगवशात् प्राणो यजुरित्यर्थः । एवमुपासितुः पूर्ववत्फलमाह–**युज्यंते हास्मै सर्वाणि भूतानि श्रैष्ठ्यायेति** । 'श्रैष्ठ्याय' श्रेष्ठभावाय "अयं नः श्रेष्ठो भवतु" इत्यभिप्रायेण 'युज्यंते' उद्यमं कुर्वंति इत्यर्थः । शेषं समानम् ॥ २ ॥

इदानीं प्राणस्य सर्वप्राणिसम्यग्गमनहेतुत्वगुणेनोपासनमाह–**साम प्राणो वै सामेति** । यतः 'प्राणो वै साम' । अतस्तं सामेत्युपासीतेत्यर्थः । पूर्ववत्प्राणस्य सामत्वं साधयति–**प्राणे हीमानि सर्वाणि भूतानि सम्यंचीति** । सम्यगञ्चन्ति सङ्गच्छन्ते इति सम्यञ्चीत्यर्थः । शेषं पूर्ववत् । पूर्ववदुपासनाफलमाह–**सम्यञ्चि हास्मिन्त्सर्वाणि भूतानि श्रैष्ठ्याय कल्पंत** इति । न केवलं 'सम्यंचि' संगच्छमानान्येव । अपि तु तानि अस्मिन्नुपासके 'श्रैष्ठ्याय' श्रेष्ठभावाय 'कल्पंते' क्लृप्तानि भवंतीत्यर्थः । शेषं स्पष्टार्थम् ॥ ३ ॥

क्षत्त्रं प्प्राणो वै क्षत्त्रम् । ( म्प्रा ) प्प्राणो हि वै क्षत्त्रं त्त्रायते हैनम्प्राणः क्षणितोः प्प्र क्षत्त्रमात्त्रमाप्नोति क्षत्त्रस्य सायुज्यꣳ सलोकताञ्जयति यऽ एवम्वेद ॥ ४ ॥

**इति चतुर्दशे काण्डे षष्ठे प्रपाठके बृहदारण्यकोपनिषदि चतुर्थ-प्रपाठके सप्तदशं ब्राह्मणम् ॥ १४ (६) ४ । १७ । (८) ९-१४ ॥**

**इति चतुर्दशे काण्डे षष्ठः प्रपाठको बृहदारण्यकोपनिषदि चतुर्थः प्रपाठकश्च समाप्तः ॥१४ (६) ४ ॥ कण्डिकासंख्या ॥१२९॥**

---

क्षत्त्रम् । प्राणो वै क्षत्त्रम् । प्राणो हि वै क्षत्त्रम् । त्रायते हैनं प्राणः क्षणितोः । प्र क्षत्त्रमात्र-माप्नोति । क्षत्त्रस्य सायुज्यं सलोकतां जयति । य एवं वेद ॥ ४ ॥

---

इदानीं प्राणस्य पालकगुणवत्त्वेनोपासनमाह-**क्षत्रं प्राणो वै क्षत्रमिति** । यस्मात्प्राणः ' क्षत्रमिति ' ' वै ' प्रसिद्धम् । तस्मात्तं क्षत्त्रमित्युपासीतेत्यर्थः । पूर्ववत्प्राणस्य क्षत्त्रशब्दवाच्यत्वं साधयति-**प्राणो हि वै क्षत्त्रं त्रायते हैनं प्राणः क्षणितोरिति** । ' एनं ' देहपिंड ' प्राणो ह ' ' क्षणितोः ' शस्त्रादिहिंसितात् पुनर्मांसपूरणं कुर्वन् यस्मात् ' त्रायते ' पालयति । तस्मात् क्षतत्राणात् ' प्राणः ' ' वै ' प्रसिद्धं क्षत्त्र-मित्यर्थः । एतद्वेदनफलमाह-**प्र क्षत्त्रमात्रमाप्नोती**ति । प्रशब्दः आप्नोतीत्यनेन संबध्यते । क्षत्त्रमात्रं ' प्राप्नोति ' । प्राण एव भवतीत्यर्थः । " मात्रं कार्त्स्न्येऽवधारणे " ( ३।३।१७८ ) इत्यमरः । यद्वा ' क्षत्त्रं ' प्राणं 'प्राप्नोति' । किंविशिष्टं ' आ ' सामस्त्येन ' त्रायते ' पालयतीत्यात्रस्तम् । शेषं पूर्ववत् ॥ ४ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य
श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्-
बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकांडे पंचमेऽध्याये
चतुर्दशं प्राणोपासनाब्राह्मणं परिसमाप्तम् ॥ १४ । ( ८ ) ९-१४ ॥

# अथ चतुर्दशे काण्डे सप्तमे प्रपाठके बृहदारण्यकोपनिषदि पञ्चमे प्रपाठके प्रथमं ब्राह्मणम् ।

## आदितोऽष्टमेऽध्याये बृ० आ० पञ्चमेऽध्याये पञ्चदशं ब्राह्मणम् ।

भूमिरन्तरिक्षन्द्यौरित्यष्टावक्षराणि । (ण्य) अष्टाक्षरर्ठ्ँ ह वाऽएकङ्गायत्र्यै पदमेतदु हास्याऽएतत्स यावदेषु लोकेषु तावद्ध जयति योऽस्याऽएतदेवम्पदम्वेद ॥ १ ॥

(ऽ) ऋचो यजूर्ठ्ँषि सामानीत्यष्टावक्षराणि । (ण्य) अष्टाक्षरर्ठ्ँ ह वाऽएकङ्गायत्र्यै पदमेतदु हैवास्याऽएतत्स यावतीयन्त्रयी विद्या तावद्ध जयति योऽस्याऽएतदेवम्पदम्वेद ॥ २ ॥

---

### गायत्रब्रह्मोपासनाब्राह्मणम् ।

भूमिरन्तरिक्षं द्यौरिति अष्टावक्षराणि । अष्टाक्षरं ह वा एकं गायत्र्यै पदम् । एतदु हास्याः एतत् । सः यावदेषु लोकेषु, तावद्ध जयति । योऽस्या एतदेवं पदं वेद ॥ १ ॥

ऋचो यजूंषि सामानीति अष्टावक्षराणि । अष्टाक्षरं ह वा एकं गायत्र्यै पदम् । एतदु हैवास्याः एतत् सः । यावतीयं त्रयी विद्या, तावद्ध जयति । योऽस्या एतदेवं पदं वेद ॥ २ ॥

---

ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्योपासनमभिहितम् । अथ साम्प्रतं गायत्र्युपाधिविशिष्टस्योपासनं कथनीयमित्यारभ्यते । सकलच्छन्दसां हि गायत्रीछन्दः प्रधानभूतम् । तत्प्रयोक्तृगयत्राणात् गायत्रीति कथयिष्यति । न चान्येषां छन्दसां प्रायः प्राणत्राणसामर्थ्यम् । प्राणात्मभूता च सा, सर्वेच्छन्दसां चात्मा प्राणः । प्राणश्च क्षत्तत्राणात् क्षत्त्रमिति कथितम् । प्राणश्च गायत्री । तस्मात्तदुपासनमेव विधास्यते द्विजोत्तमजन्मगायत्रीनिमित्तम् । तस्मात्प्रधाना गायत्री । " ब्राह्मणा व्युत्थायाभिवदन्ति स ब्राह्मणो विरजो विचिकित्सो ब्राह्मणो भवति " इत्युत्तमपुरुषार्थसम्बन्धं ब्राह्मणस्य दर्शयति तच्च ब्राह्मणत्वं गायत्रीजन्ममूलम् । अतो वक्तव्यं गायत्र्याः सत्तत्त्वम् । गायत्र्या हि सृष्टो द्विजोत्तमो निरंकुश एव उत्तमपुरुषार्थसाधने अधिक्रियते । अतस्तन्मूलः परमपुरुषार्थसम्बन्धः । तस्मात्तदुपासनविधानाय ब्रूते-भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरमित्यादि । भूमिरन्तरिक्षं द्यौरित्येतानि अष्टावक्षराणि यस्य तदिदमष्टाक्षरम् । ' ह वै ' प्रसिद्धवद्योतकौ । ' एकं ' प्रथमं ' गायत्र्यै ' गायत्र्याः ' पदं ' यकारेणैवाष्टत्वपूरणम् ' एतदुह ' एव । एतदेवास्याः ' पदं ' पादः प्रथमो भूम्यादिलक्षणः त्रैलोक्यात्मा अष्टाक्षरत्वसामान्यात् । एवमेतत् त्रैलोक्यात्मकं गायत्र्याः प्रथमं पादं ' यो वेद ' तस्यैतत्फलम् । ' सः ' विद्वान् ' यावत् ' यत्किंचित् ' एषु लोकेषु ' जेतव्यं तावत्सर्वं ' जयति ' । ' योऽस्या एतदेवं पदं वेद ' ॥ १ ॥

तथा ' ऋचो यजूंषि सामानीति ' त्रयीविद्यानामाक्षराणि । एतान्याष्टौ । एवं तथैवाष्टाक्षरं ' ह वा एकं

प्प्राणोऽपानो व्व्यानऽइत्त्यष्टावक्षुराणि । ( ण्य ) अष्टाक्षरᳬंँ ह वाऽएुक-
ङ्गायत्त्र्यै पुदमेतुदु हैवास्याऽएतत्स युावदिदम्प्राणि तुावद्ध जयति यो-
ऽस्याऽएतुदेवुम्पदम्वेदु ॥ ३ ॥

( द्रा ) अुथास्याऽएतुदेवु । तुरीयन्दर्शतुम्पदुम्परोरजा युऽएष तुपति यद्वै
चुतुर्थन्तत्तुरीयन्दर्शतुम्पदमिति दद्दृशऽइवु ह्येषु परोरजाऽइति सुर्वमु
ह्येषु रजुऽउपर्य्युपरि तुपत्येवुᳬंँ हैवु श्रिया युशसा तपति योऽस्याऽएतु-
देवुम्पदम्वेदु ॥ ४ ॥

सैषा गायुत्री । ( त्र्ये ) एतुस्मिँस्तुरीये दर्शते पदे परोरजसि प्प्रतिष्ठिता

---

प्राणोऽपानो व्यान इति अष्टावक्षराणि । अष्टाक्षरं ह वा एकं गायत्र्यै पदम् । एतदु हैवास्याः एतत् । सः यावदिदं प्राणि, तावद्ध जयति । योऽस्या एतदेवं पदं वेद ॥ ३ ॥

अथास्या एतदेव तुरीयं दर्शतं पदम् । परोरजाः य एष तपति । यद्वै चतुर्थं, तत्तुरीयम् । दर्शतं पद-मिति । ददृश इव ह्येषः । परोरजा इति । सर्वमु ह्येष रज उपर्युपरि तपति । एवं हैव श्रिया यशसा तपति । योऽस्या एतदेवं पदं वेद ॥ ४ ॥

सैषा गायत्री एतस्मिन् तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता । तद्वै तत्सत्ये प्रतिष्ठिता ।

---

गायत्र्यै पदं ' द्वितीयम् । ' एतदु हैवास्याः एतत् ' ऋग्यजुःसामलक्षणम् । अष्टाक्षरत्वसामान्यादेव । ' स यावती इयं त्रयी विद्या ' त्रय्या विद्यया यावत् फलमाप्यते ' तावद्ध जयति ' । ' योऽस्या एतत् ' गायत्र्या-स्त्रयीलक्षणं ' पदं वेद ' ॥ २ ॥

तथा ' प्राणः अपानः व्यानः ' एतान्यपि प्राणाद्यभिधानाक्षराण्यष्टौ । तच्च गायत्र्यास्तृतीयं पदम् । ' यावदिदं प्राणि ' जातं ' तावद्ध जयति ' । ' योऽस्या एतदेवं ' गायत्र्यास्तृतीयं ' पदं वेद ' ॥ ३ ॥

अथानन्तरं गायत्र्यास्त्रिपदायाः शब्दलक्षणायास्तुरीयं पदं कथ्यते । अभिधेयभूतं 'अस्याः' प्रकृताया गायत्र्या 'एतदेव' वक्ष्यमाणं ' तुरीयं पदम् ' तुरीयं दर्शतं पदम् । परोरजा य एष तपति इति । तुरीयमित्यादिवाक्य-पदार्थं व्याचष्टे स्वयमेव श्रुतिः । ' यद्वै चतुर्थं ' प्रसिद्धं लोके तदिह तुरीयशब्देनोच्यते । ' दर्शतं पदं ' इत्यस्य कोऽर्थः इत्यभिधीयते । 'ददृश इव हि एषः' हि मण्डलान्तर्गतः पुरुषः । अतो दर्शतं पदं गद्यते । ' परोरजाः ' इत्यस्य पदस्य कोऽर्थ इति कथ्यते । ' सर्वं ' कृत्स्नं ' उ हि एषः ' मण्डलस्थः पुरुषः ' रजः ' जातं समस्तं लोकमिति यावत् । उपर्युपर्याधिपत्यभावेन सर्वं लोकं रजोजातं ' तपति ' । उपर्युपरीति वीप्सा समस्तलोका-धिपत्यख्यापनार्था हि । सर्वशब्देनैव सिद्धत्वात् वीप्सा अपार्थिका । नायं दोषः । येषामुपरिष्टात् सूर्यो दृश्यते तद्विषय एव सर्वशब्दो भवेत् इत्याशंकानिरासार्था वीप्सा । " ये चामुष्मात् परांचो लोकाः तेषां चेष्टे देव-कामानां च " इति श्रुत्यन्तरात् । तस्मात् सकलनिरोधार्था वीप्सा । यथा असावादित्यः सर्वाधिपत्यलक्षणया ' श्रिया ' ' यशसा ' च ख्यात्या ' तपति ' । ' योऽस्या एतदेवं ' तुरीयं दर्शतं ' पदं वेद ' ॥ ४ ॥

'सैषा' त्रिपदोक्ता या त्रैलोक्यत्रैविद्यप्राणादित्रयलक्षणा 'गायत्री' एतस्मिंश्चतुर्थे ' तुरीये दर्शते पदे परोरजसि

---

१–अत्राक्षरविश्लेषेणाष्टत्वपूरणम् ।

तद्वै तत्सत्ये प्प्रतिष्ठिता चक्षुर्व्वै सत्यञ्चक्षुर्हि वै सत्यन्तस्माद्यदिदानीन्द्वौ व्विवदमानावेयातामहमद्राक्षमहमश्रौषमिति यऽएव ब्रूयादहमद्राक्षमिति तस्माऽएव श्रद्दध्याम ॥ ५ ॥

तद्वै तत्सत्यम्बले प्रतिष्ठितम् । ( म्प्रा ) प्प्राणो वै बलन्तत्प्राणे प्प्रतिष्ठितन्तस्मादाहुर्ब्बलꣳ सत्यादोजीयऽइत्येवम्वेषा गायत्र्यध्यात्मं प्प्रतिष्ठिता ॥ ६ ॥

सा हैषा गयाँस्तत्रे । प्प्राणा वै गयास्तत्प्राणाँस्तत्रे तद्यद्गयाँस्तत्रे तस्माद्गायत्री नाम स यामेवामूमन्वाहैषैव सा स यस्माऽअन्वाह तस्य प्प्राणाँस्त्रायते ॥ ७ ॥

---

चक्षुर्वै सत्यम् । चक्षुर्हि वै सत्यम् । तस्माद्यदिदानीं द्वौ विवदमानवेयातामहमद्राक्षमहमश्रौषमिति । य एव ब्रूयादहमद्राक्षमिति । तस्मा एव श्रद्दध्याम ॥ ५ ॥

तद्वै तत्सत्यं बले प्रतिष्ठितम् । प्राणो वै बलम् । तत्प्राणे प्रतिष्ठितम् । तस्मादाहुः—बलं सत्यादोजीय इति । एवं उ एषा गायत्री अध्यात्मं प्रतिष्ठिता ॥ ६ ॥

सा हैषा गयांस्तत्रे । प्राणा वै गयाः । तत्प्राणान् तत्रे । तद्यत् गयान् तत्रे । तस्मात् गायत्री नाम । स यामेवामूमन्वाह । एषैव सा । स यस्मा अन्वाह । तस्य प्राणान् त्रायते ॥ ७ ॥

---

प्रतिष्ठिता ' मूर्तामूर्तरसत्वात्सूर्यस्य रसापाये हि वस्तु नीरसमप्रतिष्ठितं भवति, यथा काष्ठादिदग्धसारम् । तद्वत्तथा मूर्तामूर्तात्मकं जगत् गायत्री सूर्ये प्रतिष्ठिता तद्रसत्वात् स ह त्रिभिः पादैः । ' तद्वै ' तुरीयं पदं ' सत्ये प्रतिष्ठितम् ' । किं पुनस्तत्सत्यमित्याख्यायते । ' चक्षुर्वै सत्यं ' । कथं ? चक्षुः सत्यमित्याह—' चक्षुर्हि वै सत्यं ' कथं ? प्रसिध्यते । तस्माद्यदिदानीमेव ' द्वौ विवदमानौ ' विरुद्धं वदमानौ एयातामागच्छेताम् । ' अहमद्राक्षं ' दृष्टवानस्मि इति । अन्य आह, ' अहमश्रौषं ' इति । यत् त्वया दृष्टं न तथा तद्वत् अस्तीति । तयोः ' य एव ब्रूयात् अहमद्राक्षमिति '—' तस्मै एव श्रद्दध्याम ' न पुनर्यो ब्रूयादहमश्रौषमिति । श्रोतुर्मृषा श्रवणमपि संभवति । न चक्षुषो मृषा दर्शनम् । तस्मान्नाश्रौषमिति कथितवते श्रद्दध्याम । तस्मात्सत्यप्रतिपत्तिहेतुत्वात् सत्यं चक्षुः । तस्मिन् सत्ये चक्षुषि सह त्रिभिरितरैः पादैः तुरीयं पदं प्रतिष्ठितमिति यावदुक्तं च स आदित्यः कस्मिन् प्रतिष्ठित इति । चक्षुषीति ॥ ५ ॥

' तद्वै ' तुरीयपदाश्रयं ' तत्सत्यं बले प्रतिष्ठितम् ' । किं पुनस्तद्बलमिति ब्रूते । ' प्राणो वै बलं ' । तस्मिन् ' प्राणे ' बले ' प्रतिष्ठितं ' तत्सत्यम् । तथा चोक्तं सूत्रे—" तदोतञ्च प्रोतञ्च " (        ) इति । यस्माद्बले सत्यं प्रतिष्ठितम्, ' तस्मादाहुर्बलं सत्यादोजीयः ' ओजस्तरमित्याहुः । यस्मिन् हि यदाश्रितं भवति । तस्मादाश्रितात् आश्रयस्य बलवत्तरत्वं प्रसिद्धम् । न हि दुर्बलं बलवतस्तदाश्रयभूतम् । ' एवम्वेषा ' एवमुक्तन्यायेन उ एषा ' गायत्री ' अध्यात्ममध्यस्ते प्राणे ' प्रतिष्ठिता ' । ' सा एषा गायत्री प्राणे ' । अतो गायत्र्यां जगत् प्रतिष्ठितम् ॥ ६ ॥

यस्मिन् प्राणे सर्वे देवाः एकं भवन्ति सर्वे वेदाः कर्माणि फलं च, ' सा ' वै गायत्री प्राणरूपा

ताᳫँ हैके सावित्रीमनुष्टुभमन्वाहुः । ( र्व्वा ) व्वागनुष्टुबेतद्वाचमनुब्ब्रूमऽइति न तथा कुर्य्याद्गायत्रीमेवानुब्ब्रूयाद्यदि ह वाऽअपि बह्विव प्प्रतिगृह्णाति न हैव तद्गायत्र्याऽएकञ्चन पदम्प्रति ॥ ८ ॥

स यऽइमाँस्त्रीँल्लोकान्पूर्णान्प्रतिगृह्णीयात् । ( त्सो ) सोऽस्याऽएतत्प्रथमम्पदमाप्नुयादथ यावतीयन्त्रयी व्विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्याऽएतद्द्वितीयम्पदमाप्नुयादथ यावदिदम्प्राणि यस्तावत्प्रतिगृह्णीया-

---

तां हैके सावित्रीमनुष्टुभमन्वाहुः । वागनुष्टुप् । एतद्वाचमनुब्रूम इति । न तथा कुर्यात् । गायत्रीमेवानुब्रूयात् । यदि ह वा अपि बह्विव प्रतिगृह्णाति । न हैव तद्गायत्र्या एकंचन पदं प्रति ॥ ८ ॥

स य इमान् त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात् । सोऽस्या एतत्प्रथमं पदमाप्नुयात् । अथ यावतीयं त्रयी विद्या । यस्तावत्प्रतिगृह्णीयात् । सोऽस्या एतत् द्वितीयं पदमाप्नुयात् । अथ याव-

---

सती जगत आत्मा सा चैषा 'गयांस्तत्रे' त्रातवती । के पुनर्गयाः । 'प्राणाः' वागादयः 'वै' । गयशब्दकरणात् तांस्तत्रे । सैषा 'गायत्री नाम' । यद्यस्मात् 'गयांस्तत्रे' । 'तस्माद्गायत्रीनाम' गयत्राणाद्गायत्रीति प्रथिता । 'सः' आचार्य उपनीय ब्राह्मणमष्टवर्षं 'यामेवामूं' सावित्रीं सवितृदेवताकामन्वाह पच्छोऽर्द्धर्चशः समस्तांश्च 'एषैव' साक्षाज्जगत्प्राणात्मिका जगत आत्मा गायत्र्येव प्राणो माणवकाय समर्पितो नान्य इत्याह । इदानीं व्याख्याता नान्या 'सः' आचार्यः 'यस्मै' माणवकायान्वाहानुवक्ति । 'तस्य' 'गयान्' प्राणान् 'त्रायते' नरकादिपतनात् ॥ ७ ॥

मतान्तरं दृष्ट्वा बटवे उपदेश्या गायत्री इयमेव भविष्यति इति विभ्रमो माऽभूदित्यभिप्रेत्य मतान्तरं दूषयितुमुपन्यस्यति–**तां हैके सावित्रीमनुष्टुभमन्वाहुरिति** । 'एके' शाखिनः "तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ॥ श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि"–इत्यनुष्टुब्छन्दस्कां 'तां' प्रसिद्धां 'सावित्रीं' ( तै. आ. १।११।) सवितृदेवताकां उपनीताय अन्वाहुरनुवदन्ति 'ह' । तदभिप्रायमाह–**वागनुष्टुप् इति** । "वागनुष्टुबिति तद्य एव वाचो महिमा" ( श.प.१०।३।१।४) इत्यग्निरहस्ये प्रतिपादितत्वात् 'अनुष्टुप्' 'वाक्' च शरीरे सरस्वतीरूपा । तस्याश्च वाचः साक्षात्सरस्वतीरूपत्वात् वागात्मिकाऽनुष्टुब्रेव बटवे वक्तव्या । तत्समर्पणे हि सरस्वती समर्पिता स्यात् । अतो वयमेतामनुष्टुब्लक्षणां 'वाचं' सरस्वतीमेवापेक्ष्यमाणां माणवकायानुब्रूमः इति वदन्तस्तामेवोपदिशन्ति । 'न तथा कुर्यात्' । यत्ते आहुः मृषैव तत् । 'गायत्रीमेवानुब्रूयात्' । तदुपदेशे हि सर्वमपि पुमर्थसाधनजातं बटव उपदिष्टं स्यात् । तस्याः त्रैलोक्यत्रैविद्यसर्वप्राणात्मकत्वकथनेन सर्वात्मकत्वस्योक्तत्वात् । अनुष्टुबुपदेशे तु सरस्वतीमात्रमेवोपदिष्टं स्यात् । किं चेदं प्रासंगिकमुक्त्वा इदानीं गायत्रीज्ञानफलकथनाभिप्रायेण गायत्रीविदं स्तौति–**यदि ह वा अपि बह्विवेत्यादिना** । 'यदि ह वै अपि' एकंचित् 'बह्विव' न हि तस्य सर्वात्मनो नामास्ति किञ्चिद्विश्वात्मकादिकः । 'प्रतिगृह्णाति' 'न हैव' प्रतिग्रहजातं 'गायत्र्या एकंचन' एकमपि 'पदं प्रति' पर्याप्तम् । दूरतस्तु दोषाधायकत्वं तस्येत्यर्थः ॥ ८ ॥

**स य इति** । 'स यः' गायत्रीवित् 'इमान्' भूरादीन् 'त्रीन्' गोऽश्वादिधनपूर्णान् 'लोकान्' 'प्रतिगृह्णीयात्' । 'सः' प्रतिग्रहः 'अस्याः' गायत्र्याः 'एतत्प्रथमं पदं' यत् व्याख्यातं 'आप्नुयात्।'

त्सोऽस्याऽएतत्तृतीयम्पदमाप्नुयादथास्याऽएतदेव तुरीयन्दर्शतम्पदम्परो-रजा यऽएष तपति नैव केनचनाप्यङ्कुतऽउऽएतावत्प्रतिगृह्णीयात् ॥ ९ ॥

(त्तु) तस्याऽउपस्थानम् । (ङ्गा) गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यन्द्विष्यादसावस्मै कामो मा समर्द्धीति वा न हैवास्मै स कामः समृद्ध्यते यस्माऽएवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ १० ॥

---

दिदं प्राणि । यस्तावत्प्रतिगृह्णीयात् । सोऽस्या एतत् तृतीयं पदमाप्नुयात् । अथास्या एतदेव तुरीयं दर्शतं पदम् । परोरजा य एष तपति । नैव केनचनाप्यम् । कुत उ एतावत् प्रतिगृह्णीयात् ॥ ९ ॥

तस्या उपस्थानम्—" गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापत "—इति । यं द्विष्यात्—" असावस्मै कामो मा समर्द्धि "—इति वा । न हैवास्मै स कामः समृध्यते—यस्मा एवमुपतिष्ठते । " अहमदः प्रापम् "—इति वा ॥ १० ॥

---

प्रथमपदविज्ञानफलं तेन भुक्तं भवेत्, न तु अधिकदोषोत्पादकः स प्रतिग्रहः । ' अथ ' पुनः ' यावती इयं त्रयी विद्या ' ' यस्तावत्प्रतिगृह्णीयात् ' । ' सः ' ' अस्याः ' ' एतत् द्वितीयं पदमाप्नुयात् ' द्वितीयपदविज्ञानफलं तेन भुक्तं भवेत् । तथा ' अथ ' पुनः ' यावदिदं प्राणि ' ' यस्तावत् प्रतिगृह्णीयात् ' । ' सः ' ' अस्याः ' ' एतत् तृतीयं पदमाप्नुयात् ' । तेन तृतीयपदविज्ञानफलं भुक्तं स्यात् । तथा च—त्रैलोक्यावच्छिन्नस्य त्रैविद्यावच्छिन्नस्य सर्वप्राण्यवच्छिन्नस्य च प्रतिग्रहे पादत्रयविज्ञानफलमेवानेन भुक्तं भवेत् नाधिकदोषभाक्त्वं तस्य इति गायत्रीविज्ञानस्तुत्यर्थमेव श्रुत्या एवं कल्पयित्वा इदमुच्यते । पादत्रयसममपि यः कश्चित्प्रतिगृह्णीयात् तत् पादत्रयविज्ञानफलस्यैव क्षयकारणम् । न त्वस्य दोषकर्तृत्वे क्षमम् । न चैवं वस्तुतो दाता प्रतिग्रहीता वा गायत्रीविद्विज्ञानस्तुतये कल्प्यते । दाता प्रतिग्रहीता च यद्यप्येवं सम्भाव्यते । तथाऽपि नासावस्य प्रतिग्रहोऽपराधक्षमः । कस्मात् ? यतोऽप्यधिकमपि पुरुषार्थविज्ञानं अवशिष्टमेव चतुर्थपादविषयं गायत्र्याः, तद्दर्शयति—**अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपती**ति । तच्चैतत् ' नैव ' केनचिदपि प्रतिग्रहेणाप्यं नैव प्राप्यमिति यावत् । यथा पूर्वोक्तानि त्रीणि पदानि कुतश्चन नैवाप्यानि । कथंचित् कल्पयित्वा एवमभिहितम् । तत्त्वतः ' कुत उ एतावत्प्रतिगृह्णीयात् ' त्रैलोक्यादिसमम् । इत्येवं श्रुतिसिद्धे च सति न शूद्राद्यपादानकप्रतिग्रहनिषेधकशास्त्रविरोधः । तस्मात् गायत्री एवंप्रकारा उपास्येति यावत् ॥ ९ ॥

एवमुक्तगायत्र्युपासनासंग्रहविषयमेव मंत्रं ऐहिकफलविशेषोपायकथनार्थमवतारयति—**तस्या उपस्थानमिति** । अस्यार्थः—' तस्याः ' गायत्र्याः ' उपस्थानं ' एत्य नमस्करणं अनेन मंत्रेण । कोऽसौ मंत्र इति कथयति—**गायत्र्यस्येकपदी द्विपदीत्यादि—प्रापादित्यंतम्** । हे ' गायत्रि ' ! त्वं त्रैलोक्यात्मकपादेन ' एकपदी ' भवसि । त्रयीविद्यारूपेण द्वितीयेन 'द्विपदी' असि । प्राणादिना तृतीयेन ' त्रिपद्यसि' मण्डलान्तर्गतपुरुषलक्षणेन चतुर्थेन तुरीयेण ' चतुष्पद्यसि ' एवं चतुर्भिः पादैरुपासकैः ' पद्यसे ' ज्ञायसे । अतः परं परेण निरुपाधिकेन स्वेनात्मना

( वै ) एतुद्ध वै तुज्जनको व्वैदेहः । ( हो ) बुडिलमाश्वतराश्विमुवाच यन्नु हो तुद्गायत्रीविदुब्ब्रूथाऽअथ कथुᳬ हस्तीभूतो व्वहसीति मुखᳬ ह्यस्याः सम्म्राण्णु विदाञ्चकरेति होवाच ॥ ११ ॥

---

एतद्ध वै तत् जनको वैदेहो बुडिलमाश्वतराश्विमुवाच । यन्नु हो तत् गायत्रीविदब्रूथाः । अथ कथं हस्तीभूतो वहसीति । मुखं ह्यस्याः सम्राट् न विदांचकर इति होवाच ॥ ११ ॥

---

' अपदसि ' । अविद्यमानं पदं यस्याः तव येन पद्यसे सा त्वमपदसि । यस्मान्न हि पद्यसे । नेति नेत्यात्मत्वात् । अतोऽव्यवहार्यविषया । अतस्त्वमपदसीति । अथ पादत्रयापेक्षया चतुर्थपादस्य प्राधान्यमभिप्रेत्य तस्य नमस्करणमुच्यते–**नमस्ते तुरीयाय दर्शताय पदाय परोरजसे** इति । एवं नमस्करणमुक्त्वा शेषेण यथोक्तनमस्कारप्रयोजनमुच्यते । ' असौ ' शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः । ' अदः ' पाप्मरूपशत्रोः यत् त्वत्प्राप्तिविघ्नकर्तृत्वं मम तच्च ' मा प्रापत् ' नैव प्राप्नोतु । इतिशब्दः पापक्षयफलोपस्थानमंत्रपरिसमात्प्यर्थः ।

इदानीं प्रवृद्धद्वेषवंतं प्रति उक्तोपस्थानमंत्रे ऊहप्रदर्शनेनाभिचारिकं उपस्थानांतरमाह–**यं द्विष्यादिति** । ' यं द्विष्यात् ' यं प्रति द्वेषं कुर्यात् स्वयं विद्वान् । तं प्रति अनेनोपस्थानम् । ' असौ ' शत्रुरमुकनामा इति तन्नाम गृह्णीयात् । ' अस्मै ' देवदत्ताय शत्रवे अभिप्रेतः ' कामः ' अभिलिषितोऽर्थः ' मा समर्द्धि ' समृद्धिं मा प्राप्नोतु । तथा च-" असावदो मा प्रापत् " इत्यस्य स्थाने " असावस्मै कामो मा समर्द्धि " इत्यूहं कृत्वा **गायत्र्यस्येकपदी**त्यादिना पूर्वोक्तेन मंत्रेणाभिचरन्नुपतिष्ठेतेति वाक्यार्थः । ' न हैवास्मै ' देवदत्ताय शत्रवे ' स कामः समृध्यते ' । कस्मै ! 'यस्मा एवमुपतिष्ठते' । कामिनं प्रति आभिचारिकमुपस्थानांतरमाह–**अहमदः प्रापमिति वेति** । अहं ' अदः ' देवदत्ताभिप्रेतं मदभिलषितं ' वा '' प्राप ' प्राप्नुयां इति वा उपतिष्ठते । " असावदो मा प्रापत् " इत्यादित्रयाणां मंत्रपदानां यथाकामं विकल्पः ॥ १० ॥

गायत्रीमुखविज्ञानमंतरेण तद्विज्ञानं पूर्णं न भवति । अतस्तद्विज्ञानार्थं अर्थवादोऽभिधीयते–**एतद्ध वा** इत्यादिना । ' एतत् ' ' ह ' किल ' वै ' स्मर्यते । तत् तत्र गायत्रीविज्ञानविषये ' जनको वैदेहः ' ' बुडिलम् ' नामतः अश्वतराश्वस्यापत्यमाश्वतराश्विः तं किल उक्तवान् । **यन्नु** इति वितर्के । ' हो ' अहो आश्चर्यमेतत् । तदिति यदर्थे । यत् त्वं ' गायत्रीवित् ' ' अब्रूथाः ' गायत्रीविदहमस्मीति यदब्रूथाः । किमिदं तत् तस्य वचसः अननुरूपं अकथः । 'कथं' यदि गायत्रीवित् गायत्र्याः प्रतिग्रहदोषेण ' हस्तीभूतः ' हस्ती भूत्वा वृथाऽभिमानं 'वहसीति' । स प्रत्याह राज्ञा स्मारितः- **मुखं ह्यस्या** इति 'हि' यस्मात् 'अस्याः' गायत्र्याः 'मुखं' हे 'सम्राट्' ' न विदाञ्चकर ' " णलुत्तमो वा " इति ( पा० सू० ७ । १ । ९१ ) इति स्मरणात् । णित्त्वाभावात् न वृद्धिः न विज्ञातवानस्मीति ' ह ' ' उवाच ' । एवमंगविकलत्वात् गायत्रीविज्ञानं मम अफलं जातम् ॥ ११ ॥

---

१–अदृष्टोपायेन परपीडनमभिचारः ।

२–अत एवाह कात्यायनः–" रिपुनिग्रहकामश्चेत्कुर्यात्काम्यमशङ्कितः " ॥ ३९ ॥ इति मंत्रभ्रांतिहरापरपर्यायसूत्रमंत्रप्रकाशिकायाम् ॥

तस्याऽअग्निरेव मुखम् । यदि ह वाऽअपि बह्विवाग्नावभ्यादधति सर्व्वमेव तत्सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापङ्करोति सर्व्वमेव तत्सम्प्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥ १२ ॥

इति चतुर्दशे काण्डे सप्तमे प्रपाठके बृहदारण्यकोपनिषदि पञ्चमे प्रपाठके प्रथमं ब्राह्मणम् ॥१४।(७)५।१॥ (८) ५–१५ ॥

इति चतुर्दशे काण्डेऽष्टमोऽध्यायः (१४–८) बृहदारण्यकोपनिषदि पञ्चमोऽध्यायः समाप्तः ॥१४–५॥ कण्डिकासंख्या ॥ ३८ ॥

---

तस्या अग्निरेव मुखम् । यदि ह वा अपि बह्विव अग्नावभ्यादधति । सर्वमेव तत्संदहति । एवं हैव एवंविद्यद्यपि बह्विव पापं करोति । सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥ १२ ॥

---

एवं वदंतं प्रति राजा मुखमुपदिशति–**तस्याऽ अग्निरेव मुखमिति** । शृणु तर्हि 'तस्याः' गायत्र्याः 'अग्निरेव मुखम्' । 'यदि ह वै अपि बह्विव' इंधनं 'अग्नावभ्यादधति' लौकिकाः । 'सर्वमेव' तत्संदहत्येवेन्धनमग्निः । 'एवं ह' एव 'एवंवित्' गायत्र्या अग्निर्मुखं इत्येवं वेत्तीत्येवंवित् स्यात् स्वयं गायत्र्यात्मा स्वयमग्निमुखगायत्र्यात्मा सन् 'यद्यपि बह्विव' बह्वेव 'पापं' प्रतिग्रहादिदोषं 'करोति' । तत्सर्वं पापजातं 'सम्प्साय' सम्यक् भक्षयित्वा 'शुद्धः' अग्निवत्पापस्पर्शरहितः 'पूतश्च' प्रतिग्रहजनितपापफलसंबंधरहितः अग्निमुखगायत्र्यात्मा 'अजरः अमृतश्च संभवति' ॥ १२ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे पंचमेऽध्याये पंचदशं गायत्रब्रह्मोपासनाब्राह्मणं परिसमाप्तम् ॥ १४ । ( ८ ) ५ । १५ ॥

( बृ. उप. )–पंचमोऽध्यायश्च परिसमाप्तः ॥ १४ । ( ८ ) । ५ ॥

# अथ चतुर्दशे काण्डे नवमेऽध्याये बृहदारण्यकोपनिषदि षष्ठेऽध्याये प्रथमं ब्राह्मणम् ।

## आदितः सप्तमे प्रपाठके बृ० आ० पञ्चमे प्रपाठके द्वितीयं ब्राह्मणम् ।

श्वेतुकेतुर्ह वाऽआरुणेयः । पञ्चालानाम्परिषदमाजगाम सऽआजगाम [1]जैवलम्प्रवाहणम्परिचारयमाणन्तमुदीक्ष्याभ्युवाद कुमारा३ऽइति स भो३ऽइति प्रतिशुश्रावानुशिष्टो न्वसि पित्रेत्योमिति होवाच ॥ १ ॥

---

### पञ्चाग्निविद्याब्राह्मणं वा श्वेतकेतुब्राह्मणम् ।

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम । स आजगाम जैवलं प्रवाहणं परिचारयमाणम् । तमुदीक्ष्याभ्युवाद कुमारा ३ इति । स भो ३ इति प्रतिशुश्राव । अनुशिष्टो न्वसि पित्रेति । ओँ इति होवाच ॥ १ ॥

---

ओंकारो दमादित्रयं वाय्वादिदेवतार्चनपूर्वकमग्न्युपासनं ब्रह्माब्रह्मोपासनानि तत्फलं तदर्थावगतिरित्येते अर्था अस्मिन् खिलकाण्डे निर्वृत्ताः । संप्रति प्राधान्येन ब्रह्मोपासनानि सफलानि श्रीमन्थादिकर्म च वक्तव्यमित्येतदर्थं षष्ठोऽध्यायः प्रवर्तते । तत्र कर्मकाण्डे ज्ञानकाण्डे वा यद्वस्तु प्राधान्येन नोक्तं तदस्मिन् काण्डे वक्तव्यं अस्य खिलाधिकारत्वात् । तथा च तद्वक्तुं "श्वेतकेतुर्ह वाऽआरुणेयः" इति ब्राह्मणम् इत्यस्य सम्बन्धः, खिलाधिकारोऽयं तत्र यदनुक्तं तदभिधीयते इति सामान्यसंगतिः । पूर्वं "द्वया ह प्राजापत्याः"—( श. प. बृ. १।१।१ ) इत्युद्गीथब्राह्मणे स्वाभाविकज्ञानकर्मलक्षणः पाप्मा सूचितः । परं तु तस्येदं कार्यमिति विपाकस्तु नोक्तः । शास्त्रीयस्यैव तु प्रदर्शितस्त्र्यन्नात्मप्रतिपत्त्यंतेन ग्रन्थेन । ब्रह्मविद्यारंभे तद्वैराग्यस्य विवक्षितत्वात् तत्रापि केवलेन कर्मणा पितृलोको विद्यया संयुक्तेन च कर्मणा देवलोक ( श.प.बृ. १।३।२४ ) इत्यभिहितम् । तत्र केन पितृलोकं प्राप्नोति केन वा देवलोकं इति न गदितम् । तच्चेह खिलप्रकरणे अशेषतो वक्तव्यमित्यत आरभ्यते । अन्ते च सर्वोपसंहारः शास्त्रस्य इष्टः । तथा पञ्चमाध्याये च ज्ञानकर्मसमुच्चयकारिणा मुमूर्षुणा "अग्ने नय सुपथा"—( श. प. बृ. ८ । ३ । १ ) इति मार्गयाचनं कृतम् । तत्र सुपथेति विशेषणात् अनेकेषां पथां सद्भावो मन्त्रेण सामर्थ्यात्प्रदर्शितः । सुपथेति विशेषणात्पंथानश्च कृतविपाकप्रतिपत्तिमार्गाः । वक्ष्यति च "यत्कृत्वा" ( कं० ३ ) इत्यादि । ते च कति कर्मणो विपाकप्रतिपत्तिमार्गाः इति सकलभवगत्युपसंहारार्थोऽयमारंभः । एतावती हि भवगतिः । एतावान् कर्मणो विपाकः । स्वाभाविकस्य शास्त्रीयस्य च सविज्ञानस्येति एका विशेषसंगतिः । "एतावदरे खल्वमृतत्वं, अमृतत्वस्य तु नाशाऽस्ति वित्तेन" ( श. प. बृ. ९ । ४ । २ ) इत्यत्र कर्मव्युदासेन ज्ञानमेवामृतत्वसाधनमित्युक्तम् । तत्र हेतुर्नोक्तः । तत्कथनायेदं ब्राह्मणम् । इत्यपरा विशेषसंगतिः । यस्मात् इयं कर्मणो गतिः । न नित्ये त्वमृतत्वे व्यापारोऽस्ति । तस्मात् एतावदेवामृतत्वसाधनमिति सामर्थ्याद्धेतुत्वं सम्पद्यते । अपि चोक्तमग्नि-

---

१—"जैवलिम्" इति काण्वः पाठः ।

व्वेत्थ यथेमाः प्प्रजाः । प्प्रयत्यो व्विप्रतिपद्यान्ता३ऽइति नेति होवाच व्वेत्थ यथेमँल्लोकम्पुनरापद्यान्ता३ऽइति नेति हैवोवाच व्वेत्थ यथाऽसौ लोकऽएवम्बहुभिः पुनःपुनः प्प्रयद्भिर्न्न सम्पूर्य्यता३ऽइति नेति हैवोवाच ॥ २ ॥

---

वेत्थ, यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यांता ३ इति । नेति होवाच । वेत्थ, यथेमं लोकं पुनरापद्यांता ३ इति । नेति हैवोवाच । यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता ३ इति । नेति हैवोवाच ॥ २ ॥

---

होत्रे—" न त्वेवैनयोस्त्वमुत्क्रांतिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थ"— ( श. प. ११ । ६ । २ । ४ ) इति । तत्र प्रतिवचने—" ते वाऽएतेऽआहुती हुते उत्क्रामतः " ( श. प. ११।६।२।६ ) इत्यादिना आहुतेः कार्यमुक्तम् । तच्चैतत्कर्तुराहुतिलक्षणस्य कर्मणः फलम् । न हि कर्तारमनाश्रित्याहुतिलक्षणस्य कर्मणः स्वातंत्र्येणोत्क्रांत्यादिकार्यारंभ उपपद्यते । कर्त्रर्थत्वात्कर्मणः कार्यारंभस्य साधनाश्रयत्वाच्च कर्मणः । तत्राग्निहोत्रस्तुत्यर्थत्वात् अग्निहोत्रस्यैव कार्यमिति गदितं षट्प्रकारमपि, इह तु तदेव कर्तुः फलमित्युपदिश्यते षट्प्रकारमपि । कर्मणः फलविज्ञानस्य विवक्षितत्वात् तद्द्वारेण च पंचाग्निदर्शनं इहोत्तरमार्गप्रतिपत्तिसाधनं विधित्सितम् । एवमशेषभवगत्युपसंहारः । कर्मकाण्डस्यैषा निष्ठा । इत्येतत् द्वयं दिदर्शयिषुराख्यायिकां प्रणयति—**श्वेतकेतुर्ह वाऽआरुणेय** इति । श्वेतकेतुर्नाम अरुणस्यापत्यमारुणिः, तस्यापत्यमारुणेयः । ऐतिह्यार्थो हशब्दः । वैशब्दो निश्चयार्थः । पित्राऽनुशिष्टः सन् आत्मनो यशःप्रथनाय ' पञ्चालानां परिषदमाजगाम । पञ्चालाः प्रसिद्धाः विद्वज्जनविशिष्टत्वेन । तेषां परिषदमागत्य जित्वा राज्ञोऽपि परिषदं जेष्यामीति गर्वेण ' स आजगाम ' । जीवलस्यापत्यं ' जैवलं ' पञ्चालराजं प्रवाहणाभिधानं स्वभृत्यैः ' परिचारयमाणं ' आत्मनः परिचारणं कारयंतमित्यर्थः । स राजा पूर्वमेव तस्य विद्याऽभिमानगर्वं श्रुत्वा विनेतव्योऽयमिति मत्वा तमुदीक्ष्योत्प्रेक्ष्य आगतमेव अभ्युवादाभ्युक्तवान् ' कुमारा ३ इति ' सम्बोध्य । प्लुतिर्भर्त्सनार्था । ' सः ' एवमुक्तः ' प्रतिशुश्राव ' । भो ३ इत्यप्रतिरूपमपि क्षत्रियं प्रति उक्तवान् । क्रुद्धः सन् ' अनुशिष्टो नु ' शासितो नु ' असि ' भवसि ' पित्रा ' इत्युवाच राजा । प्रत्याह चेतरः । ' ॐ इति ' बाढमनुशिष्टोऽस्मि । पृच्छ यदि संशयस्ते ॥ १ ॥

यद्येवं ' वेत्थ ' विजानासि किं ? ' यथा ' येन प्रकारेण ' इमाः प्रजाः ' प्रसिद्धाः ' प्रयत्यः ' म्रियमाणाः ' विप्रतिपद्यांता ३ इति ' विप्रतिपद्यन्ते । विचारणार्था प्लुतिः । विप्रतिपद्यान्त ३ इति दीर्घत्वं छान्दसम् । समानेन मार्गेण गच्छन्तीनां मार्गद्वैविध्यं यत्र भवति । तत्र काश्चित्प्रजा अनेन मार्गेण गच्छंति काश्चिदन्येनेति विप्रतिपत्तिः । यथा ताः प्रजाः विप्रतिपद्यन्ते, तत्किं वेत्थेत्यर्थः । ' नेति होवाच ' इतरः । तर्हि ' वेत्थ ' ? ' यथेमं लोकं पुनरापद्यान्ता ३ इति' पुनरापद्यन्ते । यथा पुनरागच्छन्ति इमं लोकम् । ' नेति होवाच ' श्वेतकेतुः । ' वेत्थ ' ? ' यथा ' ' असौ ' एवं प्रसिद्धेन न्यायेन पुनः पुनरसकृत् प्रयद्भिर्म्रियमाणैः ' यथा ' येन प्रकारेण ' न सम्पूर्यता ३ इति ' न सम्पूर्यतेऽसौ लोकः । तत्किं वेत्थ ? ' नेति हैवोवाच ' ॥२॥

वेत्थ यतिथ्यामाहुत्याᳫँ हुतायाम् ।(मा)आपः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ऽइति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदम्पितृयाणस्य वा यत्कृत्वा देवयानम्वा पन्थानम्प्रतिपद्यते पितृयाणम्वा ॥ ३ ॥

( वाऽपि ) अपि हि नऽऋषेर्वचः श्रुतम् । (न्द्वे) द्वे सृतीऽअशृणवम्पितॄणामहन्देवानामुत मर्त्यानाम् । ताभ्यामिदम्विश्वमेजत्समेति यदन्तरा पितरम्मातरञ्चेति नाहमतऽएकञ्चन वेदेति होवाच ॥ ४ ॥

---

वेत्थ, यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदंती ३ इति । नेति हैवोवाच । वेत्थ उ, देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा । यद् कृत्वा देवयानं वा पन्थानं प्रतिपद्यते पितृयाणं वा ॥ ३ ॥

अपि हि नः ऋषेर्वचः श्रुतम्–" द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदंतरा पितरं मातरं च "–( वा. सं. १९ । ४७ ) इति । नाहमत एकंचन वेद इति होवाच ॥ ४ ॥

---

'वेत्थ'? 'यतिथ्यां' यत्संख्याकायां आहुत्यामाहुतौ 'हुतायां' 'आपः 'पुरुषवाचः' पुरुषस्य या वाक् सैव यासां वाक् ताः पुरुषवाचः 'भूत्वा' पुरुषशब्दवाच्या वा भूत्वा यदा पुरुषाकारपरिणताः तदा पुरुषवाचो भवन्ति । 'समुत्थाय' सम्यगुत्थाय उद्भूताः सत्यः 'वदन्ती ३ इति'। 'नेति हैवोवाच'। यद्येवं 'वेत्थ उ'? 'देवयानस्य पथः' मार्गस्य 'प्रतिपदं' प्रतिपद्यते येन सा प्रतिपत् तां प्रतिपदं 'पितृयाणस्य वा' प्रतिपदम् । प्रतिपच्छब्दवाच्यमर्थमाह–यत्कर्म 'कृत्वा' यथा विशिष्टं कर्म कृत्वेति यावत् । 'देवयानं वा पन्थानं' मार्गं 'प्रतिपद्यते' ।'पितृयाणं वा' यत्कर्म कृत्वा प्रतिपद्यते । तत् कर्म प्रतिपदभिधीयते । तां प्रतिपदं किं वेत्थ? देवलोकपितृलोकप्रतिपत्तिसाधनं किं वेत्थेति यावत् ॥ ३ ॥

ननु–मार्गद्वयमेव नास्ति । तत्सद्भावे प्रमाणभावात् । त्वं तूत्प्रेक्षामात्रेण मद्व्यामोहार्थं पृच्छसि इत्याशङ्कायामाह–अपि हीति । 'अपि' अत्रापि अस्य प्रकाशकं 'ऋषेः' मन्त्रस्य 'वचः' वाक्यं 'नः' श्रुतमस्ति । मन्त्रोऽप्यस्यार्थस्य प्रकाशको विद्यत इत्येतत् । कोऽसौ मन्त्र इत्यभिधीयते–द्वे सृतीऽअशृणवमिति । 'द्वे सृती' द्वौ मार्गौ 'अशृणवं' श्रुतवानस्मि । तयोरेका पितॄणां प्रापिका पितृलोकसंबद्धा तया सृत्या पितृलोकं प्राप्नोतीत्यर्थः । अहमशृणवमिति व्यवहितेन सम्बन्धः । 'देवानामुत' अपि देवानां सम्बन्धिनी अन्या । देवान् प्रापयति सा । के पुनः उभाभ्यां सृतिभ्यां पितॄन्देवांश्च गच्छन्तीति गद्यते–उत मर्त्यानामिति । 'उत मर्त्यानाम्' अपि मनुष्याणां सम्बन्धिन्यौ । मनुष्या एव हि सृतिभ्यां गच्छन्तीति यावत् । 'ताभ्यां' सृतिभ्यां 'इदं विश्वं' समस्तं एजद्गच्छत् 'समेति' सम्यगागच्छति । ते च द्वे सृती 'यदंतरा' ययोरन्तरा यदन्तरा 'पितरं मातरं च' मातापित्रोरन्तरा मध्ये इत्येतत् । कौ तौ मातापितरौ द्यावापृथिव्यावण्डकपाले इयं वै माताऽसौ पितेति हि व्याख्यातं द्यावापृथिव्योः पितृमातृत्वं मध्यमकाण्डे तृतीयप्रपाठकांत्यब्राह्मणेन ( श. प. १२।८।१।२१ )। अण्डकपालयोर्मध्ये संसारविषय एव एते सृती, नात्यंतिकामृतत्वगमनाय । इतर आह–नाहमिति । अतोऽस्मात् प्रश्नसमुदायात् 'एकंचन' एकमपि प्रश्नं 'न वेद' इति होवाच श्वेतकेतुः ॥ ४ ॥

( ब्रा ) अथ हैनम्वसत्योपमन्त्रयाञ्चक्रे । ( क्रेऽना ) अनादृत्य व्वसतिङ्कुमारः प्प्रदुद्द्राव सऽआजगाम पितरन्तᳪं होवाचेति वाव किल नो भवान्पुराऽनुशिष्टानवोचऽइति कथᳪं सुमेधऽइति पञ्च मा प्प्रश्नान्राजन्यबन्धुरप्प्राक्षीत्ततो नैकञ्चन व्वेदेति होवाच कतमे तऽइतीमऽइति ह प्प्रतीकान्युदाजहार ॥ ५ ॥

स होवाच । तथा नस्त्वन्तात जानीथा यथा यदहङ्किञ्च व्वेद सर्व्वमहन्तत्तुभ्यमवोचम्प्रेहि तु तत्र प्प्रतीत्य ब्रह्मचर्य्यम्वत्स्यावऽइति भवानेव गच्छत्विति ॥ ६ ॥

---

अथ हैनं वसत्योपमन्त्रयांचक्रे । अनादृत्य वसतिं कुमारः प्रदुद्राव । स आजगाम पितरम् । तं होवाच । इति वाव किल नो भवान्पुराऽनुशिष्टानवोच इति । कथं सुमेध इति । पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत् । ततो नैकञ्चन वेद । इति होवाच । कतमे त इति । इम इति ह प्रतीकान्युदाजहार ॥ ५ ॥

स होवाच । तथा नस्त्वं तात जानीथाः । यथा यदहं किञ्च वेद सर्वमहं तत्तुभ्यमवोचम् । प्रेहि तु तत्र । प्रतीत्य ब्रह्मचर्यं वत्स्याव इति । भवानेव गच्छत्विति ॥ ६ ॥

---

अथानन्तरं अपनीय विद्याभिमानगर्वं 'एनं' प्रकृतं श्वेतकेतुं 'वसत्या' वसतिप्रयोजनेन 'उपमन्त्रयाञ्चक्रे' इह वसन्तु भवन्तः पाद्यमर्घ्यं चानीयतामित्युपमन्त्रणं कृतवान् राजा । 'अनादृत्य वसतिं कुमारः' श्वेतकेतुः 'प्रदुद्राव' प्रतिगतवान् । 'पितरं' प्रति 'सः' चाजगाम । पितरमागत्य चोवाच 'तं' । कथम् ? 'इति वाव किल' एवं किल । नोऽस्मान् 'भवान्' 'पुरा' समावर्तनकाले 'अनुशिष्टान्' सर्वाभिर्विद्याभिर्वचः 'अवोचः' । 'इति' सोपालंभं पुत्रस्य वचः श्रुत्वा आह पिता । 'कथं' केन प्रकारेण च दुःखमुपजातम् । हे 'सुमेधः !' शोभना मेवा यस्येति सुमेधः ! शृणु मम यथावृत्तं—'पञ्च' संख्याकान् 'प्रश्नान्' 'मा' मां 'राजन्यबन्धुः' राजन्या बन्धवो यस्येति । परिभववचनमेतत् राजन्यबन्धुरिति । अप्राक्षीत्पृष्टवान् । ततस्तस्मात् 'एकंचन' एकमपि 'न वेद' न विज्ञातवानस्मि । 'कतमे ते' राज्ञा पृष्टाः प्रश्ना इति । 'इमे' ते 'इति' 'ह' 'प्रतीकानि' मुखानि प्रश्नानां उदाजहारोदाहृतवान् ॥ ५ ॥

'स होवाच' पिता पुत्रं क्रुद्धमुपशमयन् 'तथा' तेन प्रकारेण 'नः' अस्मान् 'त्वं' हे 'तात !' वत्स ! 'जानीथाः' गृह्णीथाः । 'यथा' 'यदहं किञ्च' विज्ञानजातं 'वेद' । 'सर्वमहं' 'तत् तुभ्यमवोचम्' इत्येव जानीथाः गृह्णीथाः । कोऽन्यो मम प्रियतरोऽस्ति त्वत्तः । यदर्थं रक्षिष्ये । अहमपि एतन्न जानामि यद्राज्ञा पृष्टम् । तस्मात्प्रेहि आगच्छ । 'तत्र' गत्वा राज्ञि 'ब्रह्मचर्यं वत्स्यावः' विद्यार्थं इति । स आह—भवानेव गच्छत्विति । नाहं तस्य मुखं निरीक्षितुमुत्सहे ॥ ६ ॥

स ऽआजगाम गौतमः । (मो) यत्र प्रवाहणस्य जैवलेरास तस्माऽआसनमाहार्योदकमाहारयाञ्चकाराथ हास्माऽअर्घञ्चकार ॥ ७ ॥

स होवाच । वरम्भवते गौतमाय दद्मऽइति स होवाच प्रतिज्ञातो मऽएष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्ताम्मे ब्रूहीति ॥ ८ ॥

स होवाच । दैवेषु वै गौतम तद्वरेषु मानुषाणाम्ब्रूहीति ॥ ९ ॥

स होवाच । विज्ञायते हास्ति हिरण्यस्यापात्तङ्गोऽअश्वानान्दासीनाम्प्रवाराणाम्परिधानानाम्मा नो भुवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति स वै गौतम तीर्थेनेच्छासाऽइत्युपैम्यहम्भवन्तमिति वाचा ह स्मैव पूर्वऽउपयन्ति ॥ १० ॥

---

स आजगाम गौतमः । यत्र प्रवाहणस्य जैवलेरास । तस्मा आसनमाहार्य, उदकमाहारयांचकार । अथ हास्मा अर्घं चकार ॥ ७ ॥

स होवाच । वरं भवते गौतमाय दद्म इति । स होवाच । प्रतिज्ञातो म एष वरः । यां तु कुमारस्यांते वाचमभाषथाः । तां मे ब्रूहीति ॥ ८ ॥

स होवाच । दैवेषु वै गौतम तत् वरेषु । मानुषाणां ब्रूहीति ॥ ९ ॥

स होवाच । विज्ञायते ह । अस्ति हिरण्यस्यापात्तम् । गोऽअश्वानां दासीनां प्रवाराणां परिधानानाम् । मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति । स वै गौतम तीर्थेनेच्छासै इति । उपैम्यहं भवन्तमिति । वाचा ह स्मैव पूर्वं उपयन्ति ॥ १० ॥

---

'स आजगाम गौतमः' । गोत्रतो गौतमः । कुत्र ? 'यत्र प्रवाहणस्य जैवलेरास' प्रवाहणस्य जैवलेरिति षष्ठीद्वयं प्रथमार्थे । जीवलस्यापत्यं जैवलिः प्रवाहणनामा राजा 'आस' आसने आस्थायिकां कृतवान् । ततो राजा 'तस्मै' गौतमायागताय आसनमनुरूपमाहार्य आहृत्य अर्घ्यपाद्यादिसिद्धये 'उदकं' भृत्यैराहारयाञ्चकार । 'अथ ह' 'अस्मै' 'अर्घं' पुरोधसा सार्द्धं कृतवान् मन्त्रवन्मधुपर्कं च ॥ ७ ॥

कृत्वा चैवं पूजां 'स होवाच' 'वरं भवते गौतमाय' तुभ्यं 'दद्म इति' गोऽश्वादिलक्षणम् । 'स होवाच' गौतमः । 'प्रतिज्ञातो मे' मम 'एष वरः' । त्वया कृतायां प्रतिज्ञायां दृढीकुर्वात्मानम् । 'यां तु वाचं कुमारस्य' मम पुत्रस्य 'अन्ते' समीपे अभाषथाः प्रश्नरूपाम् । तामेव 'मे ब्रूहि' । स एव नो वर इति ॥८॥

'स होवाच' राजा । 'दैवेषु' वरेषु 'तद्वै गौतम' यत् त्वं प्रार्थयसे । मानुषाणामन्यतमं प्रार्थय वरम् ॥९॥

'स होवाच' गौतमः । भवता 'विज्ञायते ह' । ममास्ति सः । न तेन प्रार्थितेन कृत्यम् । मह्यं दित्ससि मानुषं वरम् । यस्मान्ममाप्यस्ति हिरण्यस्य प्रभूतस्यापात्तं प्राप्तम् । 'गोअश्वानां' अपात्तमस्तीति सर्वत्रानुषङ्गः । 'दासीनां प्रवाराणां' परिवाराणां 'परिधानानां' च । न च यन्मम विद्यमानं, तत् त्वत्तः प्रार्थनीयं, त्वया वा देयम् । प्रतिज्ञातश्च वरस्त्वया । त्वमेव जानीषे, यदत्र युक्तम् । प्रतिज्ञा रक्षणीया तवेति । मम पुनरयमाशयः मा भूत् । नोऽस्मानभि अस्मानेव केवलान् प्रति 'भवान्' सर्वत्र वदान्यो भूत्वा 'अवदान्यो मा भूत्' कदर्यो

स होपायनकीर्त्याऽउवाच । तथा नस्त्वङ्गौतम माऽपराधास्तव च पितामहा यथेयम्विद्येतः पूर्व्वन्न कस्मिँश्चन ब्राह्मणऽउवास तान्त्वहन्तुभ्यम्वक्ष्यामि को हि त्वैवम्ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ११ ॥

( त्य ) असौ वै लोकोऽग्निर्गौतम । तस्यादित्यऽएव समिद्रश्मयो धूमोऽहरर्च्चिश्चन्द्रमाऽअङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्याऽआहुतेः सोमो राजा संभवति ॥ १२ ॥

---

स होपायनकीर्त्यौ उवाच । तथा नस्त्वं गौतम माऽपराधाः । तव च पितामहा यथा । इयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास । तां त्वहं तुभ्यं वक्ष्यामि । को हि त्वैवं ब्रुवंतमर्हति प्रत्याख्यातुमिति ॥ ११ ॥

असौ वै लोकोऽग्निर्गौतम । तस्यादित्य एव समित् । रश्मयो धूमः । अहरर्चिः । चंद्रमा अंगाराः । नक्षत्राणि विष्फुलिंगाः । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति । तस्या आहुतेः सोमो राजा सम्भवति ॥ १२ ॥

---

मा भूदित्यर्थः । 'बहोः' प्रभूतस्य 'अनन्तस्य' अनन्तफलस्य 'अपर्यंतस्य' अपरिसमाप्तिकस्य पुत्रपौत्रादिकस्य इत्येतदीदृशस्य वित्तस्य मां प्रत्येव तु अदाता मा भूत् भवान् । न चात्यन्तादेयमस्ति भवतः । एवं कथिते आह—'सः' त्वं ' वै ' हे ' गौतम ! ' ' तीर्थेन ' न्यायेन शास्त्रविहितेन ' इच्छासे ' इच्छस्वाप्तुम् । इत्युक्तो गौतम आह—' उपैमि ' उपगच्छामि शिष्यत्वेनाहं भवन्तमिति । ' वाचा ह स्म एव ' किल ' पूर्वे ' ब्राह्मणाः क्ष त्रेय [ विद्यार्थिनः सन्तः वैश्यान् वा, क्षत्रिया वा वैश्यान् आपदि 'उपयन्ति' शिष्यवृत्त्या हि उपगच्छन्ति नोपनयनेन न शुश्रूषादिभिः ॥ १० ॥

अतः ' सः ' गौतमः ' ह ' ' उपायनकीर्त्यौ ' उपायनकीर्तनमात्रेणैव ' उवाच ' उक्तवान् । नोपायनमकार्यदित्येतावत् द्रष्टव्यम् । उपायनमुपगमनं पादोपस्पर्शनम् । एवं गौतमेन आपदन्तरे अभिहिते स होवाच राजा पीडितं मत्वा क्षमापयन् । 'तथा' नोऽस्मान्प्रति 'मा अपराधाः' अपराधं माऽकार्षीः । अस्मदीयोऽपराधो न ग्रहीतव्य इति यावत् । 'यथा तव पितामहाः' । 'इयं विद्या' त्वया प्रार्थिता इतस्त्वत्सम्प्रदानात्पूर्वं प्राक् ' न ' कस्मिंश्चिदपि ' ब्राह्मणे ' उवासोषितवती । तथा त्वमपि जानीषे । सर्वदा क्षत्रियपरंपरयेयं विद्या आगता । सा स्थितिर्मयाऽपि रक्षणीया यदि शक्यते इति कथितं " दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति " । न पुनस्त्वमादेयो वर इति । अतः परं न शक्यते रक्षितुम् । तामपि विद्यां ' अहं तुभ्यं ' कथयिष्यामि । कोऽप्यन्योऽपि 'हि' यस्मात् 'एवं ब्रुवंतं त्वां अर्हति प्रत्याख्यातुं' न कथयिष्यामीति । अहं पुनः कथं न वक्ष्ये तुभ्यमिति ॥ ११ ॥

" असौ वै लोकोऽग्निर्गौतम" इत्यादिः चतुर्थः प्रश्नः प्राथम्येन निर्णीयते । क्रमभंगस्तु एतन्निर्णयायत्तत्वात् इतरप्रश्ननिर्णयस्य । ' असौ ' द्यौलोकोऽग्निः हे ' गौतम ! ' द्युलोके अग्निदृष्टिः अनग्नौ विधीयते । यथा योषित्पुरुषयोः । तस्य द्युलोकाग्नेः ' आदित्य एव समित् ' समिंधनात् । आदित्येन हि समिध्यतेऽसौ लोकः ।

---

१—" कीर्त्योवास " इति काण्वः पाठः ।

'रश्मयो धूमः'। समिधः उत्थानसामान्यात् । सूर्याद्धि रश्मयो निर्गताः । समिधश्च धूमो लोके उत्तिष्ठति । 'अहरर्चिः' प्रकाशसामान्यात् । 'चन्द्रमा अंगाराः' तज्ज्योतिष्ट्वसादृश्यात् । 'नक्षत्राणि विस्फुलिंगाः' अल्पप्रकाशकत्वसामान्यात् । 'तस्मिन्' एवंगुणविशिष्टे 'एतस्मिन्नग्नौ' द्युलोकाग्नौ 'देवाः' इन्द्रादयः 'श्रद्धां जुह्वति' आहुतिद्रव्यस्थानीयां प्रक्षिपन्ति । तस्या आहुतेः' 'सोमो राजा' पितॄणां ब्राह्मणानां च 'सम्भवति'। तत्र के देवाः, कथं जुह्वति, किं वा श्रद्धाख्यं हविरिति । अतः कथितमस्माभिः सम्बन्धेन त्वेवैनयोस्त्वमुत्क्रान्तिमित्यादिपदार्थषट्कनिर्णयार्थमग्निहोत्र उक्तम् । "ते वाऽएते ( अग्निहोत्रसम्बन्धिन्यौ ) आहुती हुते ( सत्यौ ) उत्क्रामतः । ते अन्तरिक्षमाविशतः । ते अन्तरिक्षमेवाहवनीयं कुर्वाते । वायुं समिधम् । मरीचीरेव शुक्रामाहुतिम् । ते अन्तरिक्षं तर्पयतः । ते तत उत्क्रामतः । ते दिवमाविशतः । ते दिवमाहवनीयं कुर्वाते । आदित्यं समिधम्" । ( श. प. ११।६।२।६-७ ) इत्येवमाद्यभिहितम् । तत्राग्निहोत्राहुती ससाधने एवोत्क्रामतः । यथा इह यैः साधनैर्विशिष्टे एते आहवनीयाग्निसमिद्धूमांगारविस्फुलिङ्गाहुतिद्रव्यैः । ते तथैवोत्क्रामतः अस्माल्लोकादमुं लोकम् । तत्राग्निरग्नित्वेन समित् समित्वेन धूमो धूमत्वेन अङ्गारा अङ्गारत्वेन विस्फुलिङ्गा विस्फुलिङ्गत्वेन आहुतिद्रव्यमपि पयआज्याहुतिद्रव्यत्वेनैव सर्गादौ अव्याकृतावस्थायामपि परेण सूक्ष्मात्मना व्यवतिष्ठते । तत् विद्यमानमेव ससाधनं अग्निहोत्रलक्षणं कर्म्म अपूर्वेणात्मना व्यवस्थितं सत् तत् पुनः व्याकरणकाले तथैव अन्तरिक्षादिना आहवनीयाग्न्यादिभावं कुर्वत् विपरिणमते । तथैव इदानीमपि अग्निहोत्राख्यं कर्म्म । एवमग्निहोत्राहुत्यपूर्वपरिणामात्मकं जगत् समग्रं इति आहुत्योरेव स्तुत्यर्थत्वेन उत्क्रांत्यादि आलोकप्रत्युत्थाय्यंताः षट् पदार्थाः कर्मप्रकरणे अधस्तात् ( श. प. ११।६।२ इत्यत्र ) निर्णीताः । इह तु कर्तुः कर्मविपाकविवक्षायां द्युलोकाग्न्यादि आरभ्य पञ्चाग्निदर्शनं उत्तरमार्गप्रतिपत्तिसाधनं विशिष्टकर्मफलभोगाय विवित्सितमिति द्युलोकादेर्दर्शनं प्रस्तूयते । तत्र ये आध्यात्मिकाः प्राणा इहाग्निहोत्रस्य होतारः त एवाधिदैविकत्वेन परिणताः सन्तः इन्द्रादयो भवन्ति । त एव तत्र होतारो द्युलोकाग्नौ । ते च इह अग्निहोत्रस्य फलभोगीयाग्निहोत्रं हुतवन्तः । त एव फलपरिणामकालेऽपि तत्फलभोक्तृत्वात् तत्र तत्र होतृत्वं प्राप्नुवन्ति तथा तया विपरिणममाना देवशब्दवाच्याः सन्तः, अत्र च यत्पयोद्रव्यं अग्निहोत्रकर्माश्रयभूतं इह आहवनीये प्रक्षिप्तं अग्निना भक्षितं अदृष्टेन सूक्ष्मेण रूपेण विपरिणतं सह कर्त्रा यजमानेन अमुं लोकं धूमादिक्रमेणांतरिक्षं अंतरिक्षात् द्युलोकं आविशन्ति । ताः सूक्ष्माः आहुतिकार्यभूताः अग्निहोत्रसमवायिन्यः कर्तृसहिताः श्रद्धाशब्दवाच्याः सोमलोके कर्तुः कार्यारंभाय द्युलोकं प्रविशन्त्यो हूयन्ते इत्यभिधीयन्ते । तास्तत्र हुताः द्युलोकं प्रविश्य सोममण्डले कर्तुः देहमारभन्ते तदेतत्कथ्यते । 'देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' "श्रद्धा वा आपः" इति श्रुतेः । "वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति"-( कं. ३ ) प्रश्नः । तस्य च निर्णयविषये "असौ लोकोऽग्निः" इति प्रस्तुतम् । तस्मादापः कर्मसमवायिन्यः कर्तुः शरीरारंभिकाः श्रद्धाशब्दवाच्याः इति अध्यवसीयते । भूयस्त्वात् आपः पुरुषवाच इति व्यपदेशः । न तु इतराणि भूतानि सन्तीति । कर्मप्रयुक्तश्च कार्यारम्भः । कर्म चासमवायितम् । ततश्चापां प्राधान्यं कार्यकर्तृत्वे तु न त्वापः पुरुषवाच इति व्यपदेशः । कर्मकृतो हि जन्मारंभः सर्वत्र । तत्र यद्यपि अग्नि-

---

१-सोमो नाम चंद्रमंडलवर्ती प्रकाशात्मा पुरुषः । चंद्रसोमयोर्विवेकस्तु-अप्रकाशस्वरूपं मंडलमुच्यते । चंद्रशब्दवाच्याश्रकेण तुल्यरूपत्वात् । प्रकाशस्वभावो वृद्धिक्षयधर्मा श्वेतः तदंतर्गतो देवः सोमः इत्यभिधीयते । सोमशब्दवाच्या लतातद्गतवृद्धिक्षयवत्तासामान्यात् । अतो मंडलात्मत्वेन तदंतर्गतत्वेन च चंद्रसोमयोर्विवेकः इत्यनवद्यम् । कृष्णपक्षे क्षीयमाणः सोमः अमावास्यायामादित्यांतर्गतः सन् तद्गततोयेन शुक्लपक्षे क्रमेणाप्यायते । तदेतदाप्यायनं सोमलोके कर्तृशरीरात्मकस्य सोमस्य संभवः इति द्रष्टव्यम् । इति द्विवेदगङ्गः ॥

पर्ज्जन्यो व्वाऽअग्निर्ग्गौतम । तस्य सम्वत्सरऽएव समिदभ्भ्राणि धूमो व्विद्युदर्च्चिरशनिरङ्गारा ह्रादुनयो व्विष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमञ्जुह्वति तस्याऽआहुतेर्व्वृष्टिः सम्भवति ॥ १३ ॥

( त्य ) अयम्वै लोकोऽग्निर्ग्गौतम । तस्य पृथिव्येव समिद्वायुर्द्धूमो रात्रिरर्च्चिर्द्दिशोऽङ्गाराऽअवान्तरदिशो व्विष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ देवा व्वृष्टिं जुह्वति तस्याऽ आहुतेरन्नꣳ सम्भवति ॥ १४ ॥

---

पर्जन्यो वा अग्निर्गौतम । तस्य संवत्सर एव समित् । अभ्राणि धूमः । विद्युदर्चिः । अशनिरंगाराः । ह्रादुनयो विष्फुलिंगाः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं जुह्वति । तस्या आहुतेर्वृष्टिः सम्भवति ॥ १३ ॥

अयं वै लोकोऽग्निर्गौतम । तस्य पृथिव्येव समित् । वायुर्धूमः । रात्रिरार्चिः । दिशोऽङ्गाराः । अवांतरदिशो विष्फुलिंगाः । तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति । तस्या आहुतेरन्नं सम्भवति ॥ १४ ॥

---

होत्राहुतिस्तुतिद्वारेण उत्क्रांत्यादयः प्रस्तुताः षट् पदार्था ऽभिहिते । तथाऽपि वैदिकानि समग्राण्येव कर्माणि अग्निहोत्रप्रभृतीनि लक्ष्यन्ते । दाराऽग्निसम्बद्धं हि पाङ्क्तं कर्म प्रस्तुत्याभिहितम् "कर्म्मणा पितृलोकः" ( श. प. बृ. १४ । १ । ३ । २४ ) इति । वक्ष्यति च "अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति"— ( कं. १९ ) इति ॥ १२ ॥

'पर्जन्यो वा अग्निर्गौतम' । द्वितीय आहुत्याधारः आहुत्योरावृत्तिक्रमेण । 'पर्जन्यो' नाम वृष्ट्युपकरणाभिमानी देवतात्मा । 'तस्य संवत्सर एव समित्' । संवत्सरेण हि शरदादिभिर्ग्रीष्मांतैः स्वावयवैर्विपरिवर्तनेन पर्जन्योऽग्निर्दीप्यते । 'अभ्राणि धूमः' धूमप्रभवत्वात् धूमवदुपलक्ष्यत्वाद्वा । 'विद्युदर्चिः' प्रकाशसामान्यात् । 'अशनिरंगाराः' उपशांतिकाठिन्याभ्याम् । 'ह्रादुनयः' स्तनयित्नुशब्दाः 'विष्फुलिङ्गाः' विक्षेपानेकत्वसामान्यात् । "तस्मिन्नेतस्मिन्" इति आहुत्यधिकरणनिर्देशः । 'देवाः' इति त एव होतारः । 'सोमं' राजानं 'जुह्वति' योऽसौ द्युलोकाग्नौ श्रद्धायां हुतायां अभिनिष्पन्नः । सोमात् द्वितीये पर्जन्याग्नौ हूयते तस्याश्च सोमाहुतेर्वृष्टिः 'सम्भवति' ॥ १३ ॥

'अयं वै लोकोऽग्निर्गौतम' । 'अयं लोकः' अनेकप्राण्युपभोगसंपन्नया पृथिव्या समिधा समिध्यतेऽग्निः । अत एवोक्तं—तस्य पृथिव्येव समिदिति । 'वायुर्धूमः' पृथिव्याश्रयोत्थानसामान्यात् । पार्थिवं हि इंधनद्रव्यम् । व्यजनमाश्रित्य वायुरुत्तिष्ठति । यथा समिदाश्रयेण धूमः । 'रात्रिरर्चिः' समित्सम्बन्धप्रभवत्वसामान्यात् । अग्नेः समित्सम्बन्धेन हि अर्चिः संभवति । तथा पृथिवी समित्सम्बन्धेन शर्वरी पृथिवीछायां हि शार्वरं तमः कथयन्ति । 'दिशोऽङ्गाराः' । उभयोरुपशांतत्वसामान्यात् । 'अवान्तरदिशो विष्फुलिंगाः' उभयोर्विक्षेपात्मत्वसम्भवात् । तस्मिन्नेतस्मिन्नित्यादि पूर्ववत् । 'वृष्टिं जुह्वति' । 'तस्या आहुतेरन्नं सम्भवति' । वृष्टिभवत्वस्य प्रसिद्धत्वात् व्रीहियवान्नादेः ॥ १४ ॥

पुरुषो वा॒ऽ अ॒ग्निर्गौ॑तम । तस्य॒ व्या॑त्तमे॒व स॒मित्प्रा॒णो धू॒मो वा॒गर्चि॒श्चक्षु॑रङ्गा॒राः श्रोत्रं॑ विष्फुलि॒ङ्गास्त॒स्मिन्ने॒तस्मि॑न्न॒ग्नौ दे॒वाऽ अन्नं॑ जुह्वति॒ तस्या॒ऽ आहु॑ते॒ रेतः॒ सम्भ॑वति ॥ १९ ॥

योषा॒ वा॒ऽ अ॒ग्निर्गौ॑तम । तस्या॒ऽ उ॒पस्थ॒ऽ ए॒व स॒मिल्लोमा॑नि धू॒मो योनि॑र॒र्चिर्यद॒न्तः करो॑ति तेऽङ्गा॒राऽ अ॑भिन॒न्दा वि॑ष्फुलि॒ङ्गास्त॒स्मिन्ने॒तस्मि॑न्न॒ग्नौ दे॒वा रेतो॑ जुह्वति॒ तस्या॒ऽ आहु॑तेः॒ पुरु॑षः॒ सम्भ॑वति॒ स जा॑यते॒ स जी॑वति॒ याव॑ज्जी॒वत्यथ॒ यदा॒ म्रि॒यते॒ऽथै॑नम॒ग्नये॑ हरन्ति ॥ १६ ॥

---

पुरुषो वा अग्निर्गौतम । तस्य व्यात्तमेव समित् । प्राणो धूमः । वागर्चिः । चक्षुरङ्गाराः । श्रोत्रं विष्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुते रेतः सम्भवति ॥ १९ ॥

योषा वा अग्निर्गौतम । तस्या उपस्थ एव समित् । लोमानि धूमः । योनिरर्चिः । यदन्तः करोति तेऽङ्गाराः । अभिनंदा विष्फुलिंगाः । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेः पुरुषः सम्भवति । स जायते । स जीवति । यावज्जीवति । अथ यदा म्रियते । अथैनमग्नये हरंति ॥ १६ ॥

---

'पुरुषो वा अग्निर्गौतम'। प्रसिद्धः शिरोहस्तादिमान् 'पुरुषः' चतुर्थोऽग्निः । 'तस्य व्यात्तं' विवृतं मुखमेव 'समित्' । विवृतेन हि मुखेन दीप्यते पुरुषो वाचनस्वाध्यायादौ । यथा समिद्धोऽग्निः । 'प्राणो धूमः' तदुत्थानसामान्यात् । मुखात् हि प्राण उत्तिष्ठति । 'वाक्' शब्दः 'अर्चिः' व्यंजकत्वसामान्यात् । अर्चिर्व्यंजकम् । तथा वाक् शब्दः अभिधेयव्यंजकः । 'चक्षुरंगाराः' उपशमसादृश्यात् प्रकाशाश्रयत्वसामान्याद्वा । 'श्रोत्रं विष्फुलिङ्गाः' विक्षेपसामान्यात् । 'तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति' । अहो नैव देवा अन्नमिह जुह्वतो दृश्यन्ते । नायं दोषः । प्राणानां देवत्वोपपत्तेः । अधिदैवमिन्द्रादयो देवाः । त एवाध्यात्मं प्राणाः । ते चान्नस्य पुरुषे प्रक्षेप्तारः । 'तस्या आहुते रेतः संभवति' । अन्नपरिणामो हि रेतः ॥ १९ ॥

'योषा वा अग्निर्गौतम' । योषेति स्त्री पंचमो होमाधिकरणोऽग्निः । 'तस्या उपस्थ एव समित्' । तेन हि सा समिध्यते । 'लोमानि धूमः' तदुत्थानसामान्यात् । योनिरर्चिः' वर्णसामान्यात् । 'यदंतः करोति तेऽङ्गाराः' अन्तष्करणं मैथुनव्यापाराः तेऽङ्गाराः वीर्योपशमहेतुत्वसामान्यात् । यथा हि उपशमकारणं मैथुनं तथा अङ्गारभावः अग्नेरुपशमकारणम् । 'अभिनन्दा विष्फुलिङ्गाः' । 'अभिनन्दाः' सुखलवाः क्षुद्रत्वसामान्यात् 'विष्फुलिंगाः' । 'तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति' । 'तस्या आहुतेः पुरुषः संभवति' । एवं द्युपर्जन्येदंलोकपुरुषयोषाऽग्निषु क्रमेण हूयमानाः सोमवृष्ट्यन्नरेतोभावेन स्थूलतारतम्यक्रममापद्यमानाः श्रद्धाशब्दवाच्याः आपः पुरुषशब्दमारभन्ते । यः प्रश्नश्चतुर्थः "वेत्थ यतिथ्यामाहुत्यां हुतायां आपः पुरुषवाचो भूत्वा समुत्थाय वदंती ३ इति" स एष निर्णीतः । पंचम्यामाहुतौ योषाऽग्नौ हुतायां "रेतो भूत्वा आपः पुरुषवाचो भवंति" इति 'सः' पुरुषः एवं क्रमेण जातो जीवति । कियन्तं कालमिति कथ्यते—यावज्जीवतीति । 'यावत्' अस्मिन् देहे स्थितिनिमित्तं कर्म विद्यते तावदिति यावत् । 'अथ' तत्क्षये 'यदा' यस्मिन् काले 'म्रियते' । तदा 'एनं' मृतं 'अग्नये' अग्न्यर्थमेव अन्त्याहुत्यै 'हरन्ति' ऋत्विजः ॥ १६ ॥

तस्याग्निरेवाग्निर्भवति । समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गाराऽअङ्गारा विष्फुलिङ्गा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्याऽआहुतेः पुरुषो भास्वरवर्ण्णः सम्भवति ॥ १७ ॥

ते यऽएवमेतद्विदुः । (य्यो) ये चामीऽअरण्ये श्रद्धाꣳ सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्नऽआपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्यऽएति मासेभ्यो देवलोकन्देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतात्पुरुषो मानसऽएत्य ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरस्ति ॥ १८ ॥

---

तस्याग्निरेवाग्निर्भवति । समित्समित् । धूमो धूमः । अर्चिरर्चिः । अङ्गारा अङ्गाराः । विष्फुलिङ्गा विष्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति । तस्या आहुतेः पुरुषो भास्वरवर्णः सम्भवति ॥ १७ ॥

ते य एवमेतद्विदुः । ये चामी अरण्ये श्रद्धां सत्यमुपासते । तेऽर्चिरभिसम्भवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षम् । आपूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति । मासेभ्यो देवलोकम् । देवलोकादादित्यम् । आदित्याद्वैद्युतम् । तान् वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति । तं तेषु ब्रह्मलोकेषु पराः परावतो वसंति । तेषामिह न पुनरावृत्तिरस्ति ॥ १८ ॥

---

तस्याहुतिभूतस्य प्रसिद्धोऽग्निरेव होमाधिकरणम् । न परिकल्प्योऽग्निः । प्रसिद्धैव 'समित् समित्' 'धूमो धूमः' । 'अर्चिरर्चिः' । 'अङ्गारा अङ्गाराः' । 'विष्फुलिङ्गा विष्फुलिङ्गाः' यथाप्रसिद्धमेव समस्तमित्यर्थः । 'तस्मिन्नेतस्मिन्नग्नौ देवाः' पुरुषमंत्याहुतिं 'जुह्वति' । 'तस्या आहुतेः पुरुषो भास्वरवर्णः' अतिशयदीप्तिमान् निषेकादिभिः अन्त्याहुत्यन्तैः कर्म्मभिः संस्कृतत्वात् 'संभवति' निष्पद्यते ॥ १७ ॥

सांप्रतं प्रथमप्रश्ननिराकरणार्थं ब्रूते–ते इति । 'ते' के 'ये' 'एवं' यथोक्तं पंचाग्निदर्शनं 'एतत् विदुः' एवंशब्दात् अग्निसमिद्धूमार्च्यङ्गारविष्फुलिङ्गाश्रद्धादिविशिष्टाः पञ्चाग्नयो निर्दिष्टाः । तानेवैतान् पञ्चाग्नीन् विदुरिति यावत् । न तु अग्निहोत्राहुतिदर्शनविषयमेवैतद्दर्शनम् । तत्र हि उक्तं उत्क्रांत्यादिपदार्थषट्कं निर्णीय दिवमेवाहवनीयं कुर्वत इत्यादि । इहापि अमुष्य लोकस्याग्नित्वं आदित्यस्य च समित्त्वं इत्यादिबहुसाम्यम् । तस्मात् तच्छेषमेवैतद्दर्शनमिति न यतिथ्यामिति प्रश्नप्रतिवचनपरिग्रहाद्यतिथ्यामित्यस्य प्रश्नस्य प्रतिवचनस्य वा यावदेव परिग्रहः तावदेव एवंशब्देन परामृष्टुं युक्तम् । अन्यथा प्रश्नानर्थक्याविज्ञातत्वाच्च संख्यायाः अग्नय एव वक्तव्याः । अथ विज्ञातमपि अनूद्यते । यथा प्राप्तस्यैवानुवादनं युक्तम् । न तु असौ लोकोऽग्निरित्यर्थोपलक्षणार्थः । तथाऽप्यत्र नान्येन चोपलक्षणं युक्तम् । श्रुत्यंतराच्च समाने हि प्रकरणे छांदोग्यश्रुतौ–" पंचाग्नीन् वेद "–

( छां. उ. ५ । १० । १० ) इति पंचसंख्याया एवोपादानात् अनग्निहोत्रशेषमेतत्पंचाग्निदर्शनम् । यत्तु, अग्नि-समिदादिसामान्यम् । तदग्निहोत्रस्तुत्यर्थमवोचाम । तस्मात् न उत्क्रांत्यादिपदार्थषट्कपरिज्ञानात् अर्चिरादिप्रतिपत्तिः एवमिति प्रकृतोपादानेन अर्चिरादिप्रतिपत्तिविधानात् । के पुनस्ते ? ' ये एवं विदुः ' गृहस्था एव ।

ननु—तेषां यज्ञादिसाधनेन धूमादिप्रतिपत्तिर्विधित्सिता । न, अनेवंविदामपि गृहस्थानां यज्ञादिसाधनोपपत्तेः । भिक्षुवानप्रस्थयोश्च अन्तः अरण्यसम्बन्धेन ग्रहणात् । गृहस्थकर्मसम्बन्धत्वाच्च पंचाग्निदर्शनस्यांतः । न चापि ब्रह्मचारिणः एवं विदुरिति गृह्यन्ते । तेषां तु उत्तरे पथि प्रवेशः स्मृतिप्रामाण्यात्—" अष्टाशीतिसहस्राणामृषीणा-मूर्ध्वरेतसाम् । उत्तरेणार्यम्णः पंथास्तेऽमृतत्वं हि भेजिरे "—( ) इति । तस्मात् ये गृहस्था एवं अग्निजोऽहं—अग्नेरपत्यं इत्येवं क्रमेणाग्निभ्यो जातः अग्निरूपः इत्येवं ये विदुस्ते च । ' ये चामी अरण्ये ' वानप्रस्थाः परिव्राजकाश्चारण्यनिष्ठाः श्रद्धाऽश्रद्धायुक्ताः सन्तः ' सत्यं ' ब्रह्म हिरण्यगर्भात्मानमुपासते । न पुनः ' श्रद्धां ' चोपासते ' ते अर्चिरभिसम्भवन्ति ' ।

ये च गृहस्थाः पंचाग्निविद्यां सत्यं वा ब्रह्म न विदुः । तावत् श्रद्धाद्याहुतिक्रमेण पंचम्यामाहुतौ हुतायां ततो योषाऽग्नेर्जाताः पुनर्लोकं प्रत्युत्थायिनोऽग्निहोत्रादि कर्मानुष्ठातारो भवंति । तेन कर्मणा धूमादिक्रमेण पुनः पितृलोकं पुनः पर्जन्यादिक्रमेण इमं आवर्तंते । ततः पुनर्योषाग्नेर्जाताः पुनः कर्म कृत्वेत्येवमेव घटीयन्त्रवत् गत्यागतिभ्यां पुनःपुनरावर्तंते । यदा त्वेवं विदुः । ततो घटीयन्त्रभ्रमणात् विनिर्मुक्ताः सन्तः ' अर्चिरभिसंभ-वन्ति ' । अर्चिरिति नाग्निज्वालामात्रम् । किं तर्हि अर्चिरभिमानिनी अर्चिःशब्दवाच्या देवता उत्तरमार्गलक्षणा व्यवस्थितैव, तामभिसंभवन्ति । न हि परिव्राजकानां अर्चिषा एवं साक्षात्सम्बन्धोऽस्ति । तेन देवतैवोपादीयते अर्चिःशब्दवाच्या । ततः अहर्देवताम् । मरणकालनियमानुपपत्तेरहःशब्दोऽपि देवतैव । आयुषः क्षये हि मरणम् । न एवंविदा अहन्येव मर्तव्यं इत्यहर्मरणकालो नियन्तुं शक्यते । न च रात्रौ प्रेताः सन्तः अहः प्रतीक्षंते " स यावत्क्षिप्यते मनस्तावदादित्यं गच्छन्ति " इति श्रुत्यन्तरात् । अह्नः आपूर्यमाणपक्षमहर्देवतया अतिवाहिता आपूर्यमाणपक्षदेवतां प्रतिपद्यन्ते । शुक्लपक्षदेवतामित्यर्थः । ' आपूर्यमाणपक्षाद्यान् षण्मासान् उदङ् ' उत्तरां दिशं ' आदित्यः ' सवितैव ' एति ' प्राप्नोति तन्मासान् प्रतिपद्यंते ।

शुक्लपक्षदेवतया अतिवाहिताः सन्तो मासानिति बहुवचनात् संघचारिण्यः षडुत्तरायणदेवताः । तेभ्यः ' मासेभ्यः ' षण्मासदेवताभिरतिवाहिताः देवलोकाभिमानिनीं देवतां प्राप्नुवन्ति । ' देवलोकादादित्यं ' । ' आदित्याद्वैद्युतं ' विद्युदभिमानिनीं देवतां प्राप्नुवंति । विद्युद्देवतां प्राप्तान् ब्रह्मलोकवासी ' पुरुषः ' ब्रह्मणा मनसा सृष्टः ' मानसः ' कश्चिदेत्यागत्य ' ब्रह्मलोकान् गमयति ' । ब्रह्मलोकानिति अधरोत्तरभूमिभेदेन भिन्ना इति गम्यंते । बहुवचनप्रयोगात् उपासनतारतम्योपपत्तेश्च । ते तेन पुरुषेण गमिताः सन्तः ' तेषु ब्रह्मलोकेषु ' ' पराः ' प्रकृष्टाः सन्तः स्वयं ' परावतः ' प्रकृष्टाः समाः संवत्सराननेकान् ' वसन्ति ' । ब्रह्मणोऽनेकान् कल्पान् वसन्तीति यावत् । तावत्तेषां ब्रह्मलोकं गतानां ' नास्ति ' ' पुनरावृत्तिः ' । अस्मिन् संसारे न पुनरा-गमनम् ।

' इहेति ' अस्मच्छाखायां तेषां इहेत्याकृतिमात्रग्रहणमिति चेत् ; न, श्वोभूते पौर्णमासीं इति यद्वत् ' इहेति ' विशेषणानर्थक्यात् । यदि हि नावर्तंत एव इहग्रहणमनर्थकमेव भवेत् । श्वोभूते पौर्णमास्याः श्वोभूतत्वमनुक्तं न ज्ञायत इति विशेषयितुम् । न हि तत्र श्वआकृतिः शब्दो विद्यत इति श्वश्शब्दो निरर्थक एव प्रयुज्यते । यत्र तु विशेषणशब्दे प्रयुक्ते अन्विष्यमाणे विशेषणफलं चेन्न गम्यते । तत्र युक्तोऽपार्थकत्वेनोत्स्रष्टुं विशेषणशब्दः । न तु सत्यां विशेषणफलावगतौ । तस्मादस्मात् कल्पात् ऊर्ध्वमावृत्तिर्गम्यते ॥ १८ ॥

( स्त्यु ) अथ ये यज्ञेन दानेन तपसा लोकञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिᳬ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणाऽऽदित्यऽएति मासेभ्यः पितृलोकम्पितृलोकाच्चन्द्रन्ते चन्द्रम्प्राप्यान्नम्भवन्ति ताँस्तत्र देवा यथा सोमᳬ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाँस्तत्र भक्षयन्ति तेषां यदा तत्पर्य्यवैत्यथेममेवाकाशमभिनिष्पद्यन्तऽआकाशाद्वायुम्वायोर्व्वृष्टिम्वृष्टेः पृथिवीन्ते पृथिवीम्प्राप्यान्नं भवन्ति तऽएवमेवानुपरिवर्तन्तेऽथ यऽएतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदन्दन्दशूकम् ॥ १९ ॥

इति चतुर्दशे काण्डे सप्तमे प्रपाठके बृहदारण्यकोपनिषदि पञ्चमे प्रपाठके द्वितीयं ब्राह्मणम् ॥ १४ ( ७ ) ५ । २॥ ( ९ ) ६-१ ॥

---

अथ ये यज्ञेन दानेन तपसा लोकं जयंति । ते धूममभिसंभवंति । धूमाद्रात्रिम् । रात्रेरपक्षीयमाणपक्षम् । अपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणाऽऽदित्य एति । मासेभ्यः पितृलोकम् । पितृलोकाच्चंद्रम् । ते चन्द्रं प्राप्यान्नं भवन्ति । तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेति एवमेनांस्तत्र भक्षयंति । तेषां यदा तत्पर्यवैति । अथेममेवाकाशमभिनिष्पद्यंते । आकाशाद्वायुम् । वायोर्वृष्टिम् । ते पृथिवीं प्राप्यान्नं भवंति । त एवमेवानुपरिवर्तंते । अथ य एतौ पंथानौ न विदुः । ते कीटाः पतंगाः । यदिदं दंदशूकम् ॥ १९ ॥

---

'अथ' पुनः 'ये' नैवं विदुः उत्क्रांत्याद्यग्निहोत्रसम्बन्धपदार्थषट्कस्यैव वेदितारः केवलकर्मिणो यज्ञेनाग्निहोत्रादिना दानेन बहिर्वेदिभिक्षमाणेषु द्रव्यसम्बन्धिभागलक्षणेन, तपसा बहिर्वेद्येव दीक्षाव्यतिरिक्तेन कृच्छ्रचान्द्रायणादिना लोकं जयन्ति । शाखांतरे "लोकान् जयन्ति"–( का. श. ब्रा. ) इति लोकानिति बहुवचनात् ॥ तत्रापि फलतारतम्यमभिप्रेतम् । 'ते धूममभिसम्भवन्ति' । उत्तरमार्ग इव इहापि देवता एव । धूमादिशब्दवाच्यां धूमदेवतां प्राप्नुवंतीत्यर्थः । आतिवाहिकत्वं च देवतानां तद्वदेव । 'धूमाद्रात्रिं' रात्रिदेवतां ततः अपक्षीयमाणपक्षदेवताम् । ततः 'यान् षण्मासान्' दक्षिणां दिशमादित्यः 'एति' तान् मासदेवताविशेषान् प्राप्नुवंति । 'मासेभ्यः पितृलोकम्' । 'पितृलोकाच्चंद्रम्' । 'ते चन्द्रं प्राप्यान्नं भवंति' । 'तांस्तत्र' अन्नभूतान् 'यथा सोमं राजानम्' इह यज्ञे ऋत्विजः 'आप्यायस्वापक्षीयस्वेति' न मन्त्रः किं तर्हि । आप्याय्याप्याय्य चमसस्थं भक्षणेनापक्षयं च विधाय पुनःपुनर्भक्षयन्तीति यावत् ॥ एवं देवा अपि सोमलोके लब्धदेहान् कर्मण उपकरणभूतान् पुनःपुनर्विश्रामयन्तः कर्मानुरूपं फलं प्रयच्छन्ति । तद्धि तेषामाप्यायनं सोमस्याप्यायनार्थं वा उपभुञ्जते उपकरणभूतान् देवाः । 'तेषां' कर्मिणां 'यदा' यस्मिन् काले 'तत्' यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म 'पर्यवैति' परिगच्छति परिक्षीयत इति यावत् । 'अथ' तदा 'इममेव' प्रसिद्धं 'आकाशं' 'अभिनिष्पद्यन्ते' । यास्ताः श्रद्धाशब्दवाच्याः द्युलोकाग्नौ हुताश्चापः सोमाकारपरिणताः । याभिः सोमलोके कर्मिणामुपभोगाय देहे

यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद । ज्येष्ठश्च श्रेष्ठश्च स्वानाम्भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानाम्भवत्यपि च येषाम्बुभूषति य एवम्वेद ॥ १ ॥

---

ज्येष्ठश्रेष्ठब्राह्मणं वा प्राणविद्याब्राह्मणम् ।

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति । अपि च येषां बुभूषति । य एवं वेद ॥ १ ॥

---

आरब्धं अब्मयं ताः कर्मक्षयात् हिमपिण्ड इव आतपसंसर्गात् । प्रविलीयन्ते । प्रविलीनाः सूक्ष्मा आकाशभूता इव भवंति । तदिदमभिधीयते । आकाशाद्वायुमिति । 'वायोर्वृष्टिं' प्रति सम्पद्यन्ते, पर्जन्याग्नौ सोमं राजानं जुह्वतीति । ततो वृष्टिभूता इमां पृथिवीं पतन्ति । 'ते पृथिवीं प्राप्य' व्रीहियवाद्यन्नं 'भवन्ति' । तत् गदितं "तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति । तस्या आहुतेरन्नं सम्भवति" इति । ते पुनः पुरुषाग्नौ हूयन्ते अन्नभुजां रेतःसिचि । ततो रेतोभूता योषाऽग्नौ हूयन्ते । ततो जायन्ते । ते लोकं प्रत्युत्थायिनः । प्रत्युपतिष्ठंते अग्निहोत्रादिकमनुतिष्ठंति । ततो धूमादिना पुनः सोमलोकं पुनरिमं लोकमिति । 'ते एवमेव' कर्मिणो 'अनु' 'परिवर्तंते' घटीयंत्रवत् चक्रीभूता बंभ्रमतीति यावत् । उत्तरमार्गाय सद्योमुक्तये वा यावत् ब्रह्म न विदुरिति तु कामयमानः संसरति इति अभिहितम् । 'अथ' पुनर्ये उत्तरं दक्षिणं च 'एतौ पंथानौ न विदुः' । उत्तरस्य दक्षिणस्य वा पथः प्रतिपत्तये ज्ञानं कर्म वा नानुतिष्ठन्तीत्येतत्ते किं भवन्तीत्याख्यायते । 'ते कीटाः पतंगाः' । 'यदिदं' यच्चेदं 'दंदशूकं' दंशमशकमित्येतद्भवन्ति । एवं हि इयं संसारगतिः कष्टा । अस्यां निमग्नस्य पुनरुद्धार एव दुर्लभः । तथा च श्रुत्यन्तरं--"तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति ते जायस्व म्रियस्व" इति । तस्मात्कृत्स्नोत्साहेन यथाशक्ति स्वाभाविककर्मज्ञानपरित्यागेन दक्षिणोत्तरमार्गाप्रतिबद्धप्राप्तिसाधनं कर्म ज्ञानं चानुतिष्ठेतेति वाक्यार्थः । तथा चावोचत् । "अतो वै खलु दुर्निःप्रतरं तस्माज्जुगुप्सेत" (                ) इति श्रुत्यन्तरात् मोक्षाय प्रयतेतेत्यर्थः । एवं प्रश्नाः सर्वे निर्णीताः । "असौ वै लोकः" (कं. १२) इत्यारभ्य "पुरुषः सम्भवति" (कं. १६) इति चतुर्थः प्रश्नः । "यतिथ्यामाहुत्यां" (कं. ३) इत्यादिः प्राथम्येन । पञ्चमस्तु द्वितीयत्वेन "देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा" (कं. ३) इति दक्षिणोत्तरमार्गप्राप्तिसाधनकथनेन । तेनैव च प्रथमः । अग्नेरारभ्य केचिदर्चिः प्रतिपद्यन्ते केचिद्धूमं (कं. १८ । १९) इति । विप्रतिपत्तिः पुनरावृत्तिश्चेति द्वितीयः प्रश्नः । वियदादिक्रमेण इमं लोकमागच्छन्ति (कं. १४) इति । यथाऽसौ लोको न सम्पूर्यते (कं. १९) कीटपतंगादिप्रतिपत्तेश्च केषांचित् (कं. १९) इति तृतीयोऽपि प्रश्नो निर्णीतः ॥ १९ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे षष्ठेऽध्याये प्रथमं पञ्चाग्निविद्याब्राह्मणं वा श्वेतकेतुब्राह्मणं परिसमाप्तम् ॥ १४ । (९) ° १ ॥

प्राणो गायत्रीत्युक्तं पूर्वम् । कस्मात्पुनः कारणात् प्राणभावो गायत्र्याः न पुनर्वागादिभावः इति । यस्मात्

**यो ह वै वसिष्ठाम्वेद । वसिष्ठः स्वानाम्भवति वाग्वै वसिष्ठा वसिष्ठः स्वानाम्भवति यऽ एवम्वेद ॥ २ ॥**

**यो ह वै प्रतिष्ठाम्वेद । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रति-तिष्ठति दुर्गे यऽ एवम्वेद ॥ ३ ॥**

---

यो ह वै वसिष्ठां वेद । वसिष्ठः स्वानां भवति । वाग्वै वसिष्ठा । वसिष्ठः स्वानां भवति । य एवं वेद ॥ २ ॥

यो ह वै प्रतिष्ठां वेद । प्रतितिष्ठति समे । प्रतितिष्ठति दुर्गे । चक्षुर्वै प्रतिष्ठा । चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति । प्रतितिष्ठति समे । प्रतितिष्ठति दुर्गे । य एवं वेद ॥ ३ ॥

---

ज्येष्ठश्च श्रेष्ठश्च प्राणो न वागादयो ज्यैष्ठ्यश्रैष्ठ्यभाजः । कथं ज्येष्ठत्वं श्रेष्ठत्वं च प्राणस्य इत्येतन्निर्दिधारयिषया इदं प्रक्रम्यते । अथवा–उक्थयजुःसामक्षत्त्रादिभावैः प्राणस्यैवोपासनमुक्तं सत्स्वप्यन्येषु चक्षुरादिषु । तत्र हेतुमात्रमिहानन्तर्येण सम्बध्यते । न पुनः पूर्वशेषता । विवक्षितं तु खिलत्वादस्य काण्डस्य पूर्वत्र यत् अनभिहितं विशिष्टफलं प्राणविषयमुपासनं तत् वक्तव्यमिति । 'यः' कश्चित् । 'ह वै' इत्यवधारणार्थौ । यं ज्येष्ठश्रेष्ठगुणं वक्ष्यमाणं 'यो वेद' । असौ भवत्येव 'ज्येष्ठश्च श्रेष्ठश्च' । एवं फलेन प्रलोभितः सन् प्रश्नायाभिमुखीभूतः । तस्मै चाह–'प्राणो वै ज्येष्ठश्च श्रेष्ठश्च' । कथं पुनर्ज्ञायते प्राणो ज्येष्ठश्च श्रेष्ठश्चेति । यस्मान्निषेककाल एव शुक्रशोणितसम्बन्धः प्राणादिकलापस्यावशिष्टः । तथाऽपि नाप्राणं शुक्रं विरोहतीति प्रथमो वृत्तिलाभः प्राणस्य नयनादिभ्यः, अतः ज्येष्ठो वयसा प्राणः । निषेककालादारभ्य गर्भं पुष्यति प्राणः । प्राणे हि लब्धवृत्तौ पश्चाच्चक्षुरादीनां वृत्तिलाभः । अतः प्राणस्य ज्येष्ठत्वं चक्षुरादिषु भवति ।

ननु–कश्चित् कुले ज्येष्ठो गुणहीनत्वात्तु न श्रेष्ठः, मध्यमः कनिष्ठो वा गुणाढ्यत्वात् भवेत् श्रेष्ठः । न तथेत्याह–**प्राणो वै ज्येष्ठश्च श्रेष्ठश्च** इति । कथं पुनः प्राणस्य श्रैष्ठ्यं जायते । तदिह सम्वादेन दर्शयिष्यामः । सर्वथाऽपि तु प्राणं ज्येष्ठगुणं 'यः' वेदोपास्ते । सः 'स्वानां' ज्ञातीनां 'ज्येष्ठश्च श्रेष्ठश्च' 'भवति' । 'अपि च' 'येषां' स्वज्ञातिव्यतिरिक्तानां मध्ये ज्येष्ठश्च श्रेष्ठश्च भविष्यामीति 'बुभूषति' भवितुमिच्छति । तेषामपि ज्येष्ठश्रेष्ठप्राणदर्शी ज्येष्ठश्च श्रेष्ठश्च भवति । ननु–च योनिनिमित्तं ज्येष्ठत्वं तदिच्छातः कथं भवतीति । नैष दोषः । प्राणवत् वृत्तिलाभत्वस्यैव ज्येष्ठत्वस्य विवक्षितत्वात् ॥ १ ॥

'यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति' । तद्दर्शनानुरूपेण फलम् । येषां च ज्ञातिव्यतिरेकेण वसिष्ठो भवितुमिच्छति तेषां च वसिष्ठो भवतीत्युच्यतां तर्हि का सा वसिष्ठा भवति । 'वाग्वै वसिष्ठा' । वासयति अतिशयेन वसति वा इति वसिष्ठा । वाग्मिनो हि धनवन्तो वसन्ति अतिशयेन । आच्छादनार्थस्य वसे रूपम् । वासयन्ति च अभिभवन्ति हि वाचा वाग्मिनोऽन्यान् । तेन वसिष्ठगुणवत्परिज्ञानात् वसिष्ठगुणो भवतीति दर्शनानुरूपं फलम् ॥ २ ॥

'यो ह वै प्रतिष्ठां वेद' अतिशयेन प्रतिष्ठानां प्रतिष्ठां प्रतिष्ठागुणवत् तत् चक्षुर्यो वेद । तस्यैतत्फलं

यो ह वै सम्पदम्वेद । सुᳪ हास्मै पद्यते यङ्कामङ्कामयते श्रोत्रम्वै सम्पच्छ्रोत्रे हीमे सर्व्वे व्वेदाऽ अभिसम्पन्नाः सुᳪ हास्मै पद्यते यङ्कामङ्कामयते युऽ एवम्वेद ॥ ४ ॥

यो ह वाऽ आयतनम्वेद । (दा) आयतनᳪ स्वानाम्भवत्यायतनञ्जनानाम्मनो वाऽ आयतनमायतनᳪ स्वानाम्भवत्यायतनञ्जनानां युऽ एवम्वेद ॥ ५ ॥

यो ह वै प्प्रजातिम्वेद । प्प्रजायते प्प्रजया पशुभी रेतो वै प्प्रजातिः प्प्रजायते प्प्रजया पशुभिर्य्युऽएवम्वेद ॥ ६ ॥

---

यो ह वै सम्पदं वेद । सं हास्मै पद्यते । यं कामं कामयते । श्रोत्रं वै सम्पत् । श्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः । सं हास्मै पद्यते । यं कामं कामयते । य एवं वेद ॥ ४ ॥

यो ह वा आयतनं वेद । आयतनं हि स्वानां भवति । आयतनं जनानाम् । मनो वा आयतनम् । आयतनं स्वानां भवति । आयतनं जनानाम् । य एवं वेद ॥ ५ ॥

यो ह वै प्रजातिं वेद । प्रजायते प्रजया पशुभिः । रेतो वै प्रजातिः । प्रजायते प्रजया पशुभिः । य एवं वेद ॥ ६ ॥

---

' प्रतितिष्ठति समे ' देशे काले च । तथा ' दुर्गे ' विषमे च दुर्गमने च देशे दुर्भिक्षादौ वा काले विषमे । यद्येवं कथ्यतां का असौ प्रतिष्ठा ? ' चक्षुर्वै प्रतिष्ठा ' । कथं चक्षुषः प्रतिष्ठात्वं, इति ब्रवीति— ' चक्षुषा ' ' समे च दुर्गे च ' दृष्ट्वा ' प्रतितिष्ठति ' । अतः अनुरूपं फलं ' प्रतितिष्ठति समे ' । ' प्रतितिष्ठति दुर्गे ' । ' य एवं वेद ' ॥ ३ ॥

' यो ह वै संपदं वेद ' संपद्गुणयुक्तं ' यो वेद ' । तस्यैतत्फलं ' अस्मै ' विदुषे ' संपद्यते ह ' । ' यं कामं कामयते ' स कामः । किं पुनः संपद्गुणकं ? ' श्रोत्रं वै संपत् ' । कथं पुनः श्रोत्रस्य संपद्गुणत्वं इत्यभिधीयते— ' श्रोत्रे ' सति ' हि ' यस्मादिमे ' सर्वे वेदा अभिसम्पन्नाः ' । श्रोत्रेन्द्रियवतः अध्येयत्वात् वेदविहितकर्मायत्ताश्च कामाः । तस्मात् ' श्रोत्रं वै संपत् ' । अतो विज्ञानानुरूपं फलं ' संहास्मै पद्यते ' । सः ' यं कामं कामयते ' । ' य एवं वेद ' ॥ ४ ॥

' यो ह वा आयतनं वेद ' । आयतनमाश्रयः । तद्यो वेद ' आयतनम् स्वानां भवत्यायतनं जनानां ' अन्येषामपि । किं पुनस्तदायतनमित्यभिधीयते । ' मनो वा ' आयतनमाश्रय इंद्रियाणां विषयाणां च । मनआश्रिता हि विषया आत्मनो भोग्यत्वं प्रतिपद्यन्ते । मनःसंकल्पवशानि चेंद्रियाणि प्रवर्तंते । अतः ' मनः ' आयतनमिन्द्रियाणाम् । अतो दर्शनानुरूप्येण फलम् । ' आयतनं स्वानां भवति ' ' आयतनं जनानां ' ' य एवं वेद ' ॥ ५ ॥

' यो ह वै प्रजातिं वेद ' । ' प्रजायते प्रजया ' पशुभिश्च संपन्नः । ' रेतो वै प्रजातिः ' । रेतसा प्रजननेन्द्रियमुपलक्ष्यते । तद्विज्ञानानुरूपं फलम् । ' प्रजायते प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

ते हेमे प्राणाः। (५) अहᳫँश्रेयसे विवदमाना ब्रह्म जग्मुः* को नो वसिष्ठऽइति तद्धोवाच यस्मिन्वऽउत्क्रान्तऽइदᳫँ शरीरम्पापीयो मन्यते स वो वसिष्ठऽइति ॥ ७॥

वागघोच्चक्राम। सा सम्वत्सरम्प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा कडाऽअवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाᳫँसो मनसा प्रजायमाना रेतसैव-मजीविष्मेति प्रविवेश ह वाक् ॥ ८॥

(क्व चु) चक्षुर्होच्चक्राम। तत्सम्वत्सरम्प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथाऽन्धाऽअपश्यन्तश्चक्षुषा प्राणन्तः

---

ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः। को नो वसिष्ठ इति। तद्धोवाच। यस्मिन् व उत्क्रांते इदं शरीरं पापीयो मन्यते। स वो वसिष्ठ इति ॥ ७॥

वाग् होच्चक्राम। सा संवत्सरं प्रोष्यागत्योवाच। कथमशकत मदृते जीवितुमिति। ते होचुः। यथा कडा अवदन्तो वाचा। प्राणंतः प्राणेन। पश्यन्तश्चक्षुषा। शृण्वंतः श्रोत्रेण। विद्वांसो मनसा। प्रजायमाना रेतसा। एवमजीविष्मेति। प्रविवेश ह वाक् ॥ ८॥

चक्षुर्होच्चक्राम। तत्संवत्सरं प्रोष्यागत्योवाच। कथमशकत मदृते जीवितुमिति। ते होचुः।

---

'ते ह इमे प्राणाः' वागादयः 'अहंश्रेयसे' अहं श्रेयान् इत्येतस्मै प्रयोजनाय 'विवदमानाः' विरुद्धं वदमानाः 'ब्रह्म जग्मुः' ब्रह्म गतवन्तः ब्रह्मशब्दवाच्यं प्रजापतिं गत्वा च तत् ब्रह्म ऊचुरुक्तवन्तः। 'कः' नोऽस्माकं मध्ये 'वसिष्ठः' को नोऽस्माकं मध्ये वसति च वासयति च। 'तत्' ब्रह्म तैः पृष्टं सत् 'ह उवाच' उक्तवत्। 'यस्मिन् वः' युष्माकं मध्ये 'उत्क्रांते' निर्गते देहात् 'इदं शरीरं' पूर्वस्मात् अतिशयेन 'पापीयः' पापतरं 'मन्यते' लोकः। शरीरं हि नाम अनेकाशुचिसंघातत्वात् जीवतोऽपि पापमेव। ततोऽपि कष्टतरं यस्मिन्नुत्क्रांते भवति। वैराग्यार्थमिदमुच्यते पापीय इति। 'स वः' युष्माकं मध्ये 'वसिष्ठः' भविष्यति। जानन्नपि वसिष्ठं प्रजापतिर्नोवाच अयं वसिष्ठः इतीतरेषामप्रियपरिहाराय। ते एवमुक्ता ब्रह्मणा प्राणादय आत्मनो वीर्यपरीक्षणाय क्रमेण उच्चक्रमुः ॥ ७॥

तत्र 'वागेव' प्रथमं 'ह' अस्माच्छरीरात् उच्चक्रामोत्क्रांतवती। 'सा' चोत्क्रम्य 'संवत्सरं' 'प्रोष्य' प्रोषिता भूत्वा पुनरागत्योवाच। 'कथमशकत' शक्नुवन्तो यूयं 'मदृते' मां विना 'जीवितुमिति'। एव-मुक्ताः 'ऊचुः'। 'यथा लोके 'कडाः' मूकाः 'अवदंतो वाचा,' 'प्राणंतः' प्राणनव्यापारं कुर्वंतः प्राणेन, 'पश्यंतः' दर्शनव्यापारं 'चक्षुषा' कुर्वंतः, 'शृण्वन्तः' श्रवणव्यापारं कुर्वन्तः 'श्रोत्रेण,' 'विद्वांसः' 'मनसा' कार्याकार्यादिविषयं, 'प्रजायमाना रेतसा' पुत्रानुत्पादयंतः 'एवमजीविष्म' वयम्। इत्येवं प्राणै-र्दत्तोत्तरा वाक् आत्मनो न वसिष्ठत्वं बुद्ध्वा 'प्रविवेश' ॥ ८॥

तथा—चक्षुर्होच्चक्रामेत्यादि पूर्ववत्। 'श्रोत्रं मनः प्राजातिः' इत्येतत्पर्यायत्रयं व्याख्येयम् ॥ ९-१२॥

---

* अत्र "तद्धोचुः" इत्यधिकं काण्वाः पठन्ति।

प्प्राणेन व्वुदन्तो व्वाचा शृण्वुन्तः श्श्रोत्रेण व्विद्वाꣳसो मुनसा प्प्रजुाय-
माना रेुतसैवुमजीविष्मेुति प्प्रुविवेश ह चुक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम । तुत्सम्वत्सरम्प्प्रोष्यागुत्योवाच कथुमशकत मुद्दते
जीवितुमिुति तेु होचुर्य्युथा बधिराुऽअशृण्वुन्तः श्रोत्रेण प्प्राणुन्तः प्प्राणेन
व्वुदन्तो व्वाचा पुश्यन्तश्चुक्षुषा व्विद्वाꣳसो मुनसा प्प्रजुायमाना रेुतसै-
वुमजीविष्मेुति प्प्रुविवेश ह श्रोत्रम् ॥ १० ॥

(म्मु) मुनो होच्चक्राम । तुत्सम्वत्सरम्प्प्रोष्यागुत्योवाच कथुमशकत मुद्दते
जीवितुमिुति तेु होचुर्य्युथा मुग्धाुऽअविद्वाꣳसो मुनसा प्प्राणुन्तः प्प्राणेन
व्वुदन्तो व्वाचा पुश्यन्तश्चुक्षुषा शृण्वुन्तः श्रोत्रेण प्प्रजुायमाना रेुतसैवु-
मजीविष्मेुति प्प्रुविवेश हु मनः ॥ ११ ॥

(नो) रेुतो होच्चक्राम । तुत्सम्वत्सरम्प्प्रोष्यागुत्योवाच कथुमशकत मुद्दते
जीवितुमिुति तेु होचुर्य्युथा क्लीबाुऽअप्प्रजुायमाना रेुतसा प्प्राणुन्तः प्प्राणेन
व्वुदन्तो व्वाचा पुश्यन्तश्चुक्षुषा शृण्वुन्तः श्रोत्रेण व्विद्वाꣳसो मुनसैवु-
मजीविष्मेुति प्प्रुविवेश ह रेुतः ॥ १२ ॥

(तोऽथ) अुथ ह प्प्राणुऽउत्क्रमिष्युन् । (न्य) युथा महासुहयुः

---

यथाऽन्धा अपश्यंतश्चक्षुषा । प्राणंतः प्राणेन । वदन्तो वाचा । शृण्वन्तः श्रोत्रेण । विद्वांसो मनसा । प्रजायमाना रेतसा । एवमजीविष्मेति । प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रं होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच । कथमशकत मद्दते जीवितुमिति । ते होचुः । यथा बधिरा अशृण्वंतः श्रोत्रेण । प्राणंतः प्राणेन । वदन्तो वाचा । पश्यंतश्चक्षुषा । विद्वांसो मनसा । प्रजायमाना रेतसा । एवमजीविष्मेति । प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच । कथमशकत मद्दते जीवितुमिति । ते होचुः । यथा मुग्धा अविद्वांसो मनसा । प्राणंतः प्राणेन । वदंतो वाचा । पश्यंतश्चक्षुषा । शृण्वंतः श्रोत्रेण । प्रजायमाना रेतसा । एवमजीविष्मेति । प्रविवेश ह मनः ॥ ११ ॥

रेतो होच्चक्राम । तत्संवत्सरं प्रोष्यागत्योवाच । कथमशकत मद्दते जीवितुमिति । ते होचुः । यथा क्लीबा अप्रजायमाना रेतसा । प्राणंतः प्राणेन । वदंतो वाचा । पश्यंतश्चक्षुषा । शृण्वंतः श्रोत्रेण । विद्वांसो मनसा । एवमजीविष्मेति । प्रविवेश ह रेतः ॥ १२ ॥

अथ ह प्राण उत्क्रमिष्यन्, यथा महासुहयः सैन्धवः पड्वीशशंकून् संवृहेत्, एवं हैवेमान्

---

'अथ ह प्राण उत्क्रमिष्यन्' उत्क्रमणं करिष्यन्—तदानीमेव स्वस्वस्थानात्प्रचलिताः वागादयः किमिवेत्य-

सैन्धवः पड्वीशशङ्कून्त्सम्वृहेदेवꣳ हैवेमान्प्राणान्त्सम्ववर्ह ते होचुर्मा भगवऽउत्क्रमीर्न्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्य वै मे बलिङ्कुरुतेति तथेति ॥ १३ ॥

सा ह व्वागुवाच । यद्वाऽअहम्वसिष्ठाऽस्मि त्वन्तद्वसिष्ठोऽसीति चक्षुर्यद्वाऽअहम्प्रतिष्ठाऽस्मि त्वन्तत्प्रतिष्ठोऽसीति श्रोत्रं यद्वाऽअहꣳ सम्पदस्मि त्वन्तत्सम्पदसीति मनो यद्वाऽअहमायतनमस्मि त्वन्तदायतनमसीति रेतो यद्वाऽअहम्प्रजातिरस्मि त्वन्तत्प्रजातिरसीति तस्यो मे किमन्नं किम्वासऽ इति यदिदं किञ्चाश्वभ्यऽआक्रिमिभ्यऽआकीटपतङ्गेभ्यस्तत्तेऽन्नमापो व्वासऽइति न ह वाऽअस्यानन्नञ्जग्धम्भवति नानन्नम्प्रतिगृहीतं यऽएवमेतदनस्यान्नम्वेद ॥ १४ ॥

---

प्राणान् संववर्ह । ते होचुः । मा भगव उत्क्रमीः । न वै शक्ष्यामः त्वदृते जीवितुमिति । तस्य वै मे बलिं कुरुतेति तथेति ॥ १३ ॥

सा ह वागुवाच । यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति । चक्षुः—यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति । श्रोत्रम् यद्वा अहं संपदस्मि त्वं तत्संपदसीति । मनः—यद्वा अहमायतनमास्मि त्वं तदायतनमसीति । रेतः यद्वा अहं प्रजातिरास्मि त्वं तत्प्रजातिरसीति । तस्य उ मे किमन्नं किं वास इति । यदिदं किञ्च । आश्वभ्यः । आक्रिमिभ्यः । आकीटपतंगेभ्यः। तत्तेऽन्नम् । आपो वासः इति । न ह वा अस्यानन्नं जग्धं भवति । नानन्नं प्रतिगृहीतम् । य एवमेतदनस्यान्नं वेद ॥ १४ ॥

---

व्रुवत । ' यथा ' लोके महांश्चासौ सुहयश्च ' महासुहयः ' । महान् परिमाणतः सुहयः शोभनो हयो लक्षणोपेतः । सिंधुदेशे भवः ' सैन्धवः ' अभिजनतः । ' पड्वीशशंकून् ' पादबंधनान् शंकून् पड्वीशाश्च ते शंकवश्च तान् ' संवृहेत् ' उद्यच्छेत् युगपदुत्खनेत् अश्वारोहे आरूढे परीक्षणाय । ' एवं ह ' एव ' इमान् ' वागादीन् ' प्राणान् ' ' संववर्ह ' उद्यतवान् स्वस्थानात् भ्रंशितवान् । ' ते ' वागादयः ' ऊचुः ' । हे ' भगवः ' ! भगवन् ! ' मा उत्क्रमीः ' यस्मात् ' न वै शक्ष्यामः ' ' त्वदृते ' त्वां विना ' जीवीतुं ' । यद्येवं मम श्रेष्ठता विज्ञाता भवद्भिः अहमत्र श्रेष्ठ इति । ' तस्य वै मे ' मम ' बलिं कुरुत ' करं कुरुत करं प्रयच्छतेति । अयं च प्राणसंवादः कलितो विदुषः श्रेष्ठपरीक्षणप्रकारोपदेशः । अनेन हि प्रकारेण विद्वान् को नु खलु अत्र श्रेष्ठ इति परीक्षणं करोति । स एष परीक्षणप्रकारः संवादभूतः कथ्यते । न हि अन्यथा संहत्यकारिणां सतां एषां अंजसैव संवत्सरमात्रमेव एकैकस्य निर्गमनादि उपपद्यते । तस्मात् विद्वानेवानेन प्रकारेण विचारयति वागादीनां प्रधानं बुभुत्सुः उपासनाय ॥ १३ ॥

प्रथमं बलिदानाय प्रवृत्ता ' वाक् सा ह ' किल ' उवाच ' उक्तवती । ' यद्वै अहं वसिष्ठा अस्मि ' यन्मम वसिष्ठत्वं ' तत् त्वं वै ' तत्तेन वसिष्ठगुणेन ' त्वं तद्वसिष्ठोऽसीति ' । यद्वा ' अहं प्रतिष्ठा अस्मि ' ' त्वं तत्प्र-

तद्विद्वाᳬसः श्रोत्रियाः । (ऽ) अशिष्यन्तऽआचामन्त्यशित्वाऽऽचा-

तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति । अशित्वा आचामन्ति । एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते । तस्मादेवम्विदशिष्यन्नाचामेत् । अशित्वा आचामेत् । एतमेव तदनमनग्नं कुरुते ॥ १९ ॥

---

तिष्ठोऽसि ' । या मम प्रतिष्ठा सा त्वमसीति ' चक्षुः ' । समानमन्यत् । संपदायतनप्रजातित्वगुणान् क्रमेण समर्पितवंतः । यद्येवं साधु बलिं दत्तवन्तः, ब्रूत ' तस्य मे ' एवंगुणविशिष्टस्य ' किमन्नं किं वास इति ' आहुरितरे । यदिदं ' लोके ' किंच ' किंचिदल्पमपि ' आश्वभ्यः आक्रिमिभ्यः ' श्वात्रेण सह क्रिम्यन्तं कीटपतंगान्तं च तेन सह सर्वमेव यत प्राणिभिरद्यमानं अन्नं तत्सर्वं तवान्नम् । सर्वं प्राणस्यान्नमिति दृष्टिरत्र विधीयते । केचित्तु सर्वभक्षणे दोषाभावं वदंति प्राणान्नविदः । तदसंगतम् । शास्त्रांतरेण प्रतिषिद्धत्वात् । तेनास्य विकल्प इति चेन्न, अविधायकत्वात् । ' न ह वा अस्यानन्नं जग्धं भवति ' इति " सर्वं प्राणस्यैतत् " इत्येतस्य विज्ञानस्य विहितस्य स्तुत्यर्थमेतत् । तेनैकवाक्यतापत्तेः । न तु शास्त्रांतरविहितस्य बाधने सामर्थ्यं अन्यपरत्वादस्य । प्राणमात्रस्य सर्वमित्येतद्दर्शनार्थं दर्शनमिह विधित्सितम् । न तु सर्वं भक्षयेदिति । यत्तु सर्वभक्षणे दोषाभावज्ञानं तन्मिथ्यैव प्रमाणाभावात् । विदुषः प्राणत्वात्सर्वान्नोपपत्तेः सामर्थ्याददोष इति चेन्न शेषान्नत्वानुपपत्तेः । सत्यं, यद्यपि विद्वान् प्राणो येन कार्यकारणसंघातेन सहितस्य विद्वत्ता तेन कार्यकारणसंघातेन क्रिमिकीटदेवाद्यशेषान्नभक्षणं नोपपद्यते । तेन तत्र अशेषान्नभक्षणे दोषाभावज्ञापनमपार्थकम्, अप्राप्तत्वात् अशेषान्नभक्षणदोषस्य ।

ननु—प्राणः सन् भक्षयत्येव क्रिमिकीटाद्यन्नमपि । बाढं । किं तु, न तद्विषयः प्रतिषेधोऽस्ति । तस्मादेव रक्तं किंशुकं तत्र दोषाभावः (?) । अतः तद्रूपेण दोषाभावज्ञानमनर्थकम्, अप्राप्तत्वात् अशेषान्नभक्षणदोषस्य । किं तु— येन कार्यकारणसंघातसंसर्गेण निषेधः क्रियते तत्सम्बन्धेन तु इह नैव प्रतिप्रसवोऽस्ति । तस्मात्प्रतिषेधातिक्रमे दोष एव भवेत् । अन्यविषयत्वात् ' न ह वा ' इत्यादेः । न च—ब्राह्मणादिदेहस्य सर्वान्नत्वदर्शनमिह विधीयते । किं तु, प्राणमात्रस्यैव । यथा च सामान्येन समग्रान्नस्य प्राणस्य किञ्चिदन्नजातं कस्यचित् जीवनहेतुः । यथा विषं विषजस्य क्रिमेः तदेवान्यस्य प्राणान्नमपि सद्दृष्टमेव दोषमुत्पादयति मरणादिलक्षणम् । तथा सर्वान्नस्यापि प्राणस्य प्रतिषिद्धान्नभक्षणे ब्राह्मणत्वादिशरीरसम्बन्धात् दोष एव भवेत् । तस्मान्मृषा ज्ञानमेव अभक्ष्यभक्षणे दोषाभावज्ञानम् । ' आपो वास इति ' आपो भक्ष्यमाणा वासःस्थानीयास्तव । अत्र च प्राणस्यापो वासः इत्येतद्दर्शनं तु वासःकार्ये आपो विनियोक्तुं शक्याः । तस्माद्यथा प्राप्ते भक्षणे दर्शनमात्रं कर्तव्यम् । ' न ह वै ' अस्य सर्वं प्राणस्यान्नं इत्येवंविदः अनन्नमनदनीयं ' जग्धं ' भुक्तं ' भवति ' । यद्यप्यनेन अनदनीयं भुक्तं अदनीयमेव भुक्तं भवेत् । न तु तत्कृतदोषेण लिप्यते इत्येतद्विद्यास्तुतिः इत्यवादि । तथा ' नानन्नं प्रतिगृहीतम् ' यद्यपि अप्रतिग्राह्यं हस्त्यादि प्रतिगृहीतं भवेत् । तदप्यन्नमेव प्रतिग्राह्यं प्रतिगृहीतं भवेत् । तत्रापि अप्रतिग्राह्यप्रतिग्रहदोषेण न लिप्यते इति स्तुत्यर्थमेव । ' य एवमेतदनस्य ' प्राणस्यान्नं ' वेद ' । फलं तु प्राणात्मभाव एव । न तु एतत्फलाभिप्रायेण । किं तर्हि स्तुत्यभिप्रायेणेति । ननु—एतदेव फलं कस्मान्न भवति । न प्राणात्मदर्शिनः प्राणात्मभाव एव फलम् । तत्र च प्राणात्मभूतस्य सर्वात्मनाऽनदनीयमपि अद्यमेव । तथाऽप्रतिग्राह्यमपि प्रतिग्राह्यमेवेति यथाप्राप्तमेवोपादाय विद्या स्तूयते । अतो नैव फलविधिसरूपता वाक्यस्य ॥ १४ ॥

यस्मादापो वासः प्राणस्य तस्मात् ' विद्वांसः ' ब्राह्मणाः ' श्रोत्रियाः ' अधीतवेदाः ' अशिष्यन्तः '

मन्त्येतमेव तुदनमनग्नं कुर्व्वन्तो मन्यन्ते तस्मादेवम्विद्शिष्यन्नाचामे दशित्वाऽऽचामेदेतमेव तदनमनग्नङ्कुरुते ॥ १९ ॥

इति चतुर्दशे काण्डे सप्तमप्रपाठके बृहदारण्यकोपनिषदि पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ १४ (७) ५ । ३ ॥ (९) ६-२ ॥

स यः कामयेत महत्प्राप्नुयामिति । ( स्यु ) उदगयनऽआपूर्य्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कꣳसे चमसे वा सर्व्वौषधम्फलानीति सम्भृत्य परिसमुह्य परिलिख्याग्निमुपसमाधायावृताऽऽज्यꣳ सꣳस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳ सन्नीय जुहोति ॥ १ ॥

---

### श्रीमन्थकर्मब्राह्मणम् ।

स यः कामयेत । महत्प्राप्नुयामिति । उदगयन आपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वा, औदुम्बरे कंसे चमसे वा सर्वौषधं फलानीति संभृत्य, परिसमुह्य, परिलिख्य, अग्निमुपसमाधाय, आवृताऽऽज्यं संस्कृत्य, पुंसा नक्षत्रेण मंथं सन्नीय जुहोति ॥ १ ॥

---

भोक्ष्यमाणाः आचामन्त्यपः । 'अशित्वाऽऽचामन्ति' भुक्त्वा चोत्तरकालमपो भक्षयन्ति । तत्र तेषामाचामतां कोऽभिप्राय इति ब्रूते । 'एतमेव' 'अनं' प्राणं 'अनग्नं कुर्वन्तो मन्यन्ते' । अस्ति चैतत् । यो यस्मै वासो ददाति तमनग्नं करोमीति हि मन्यते । प्राणस्य च आपो वास इत्यभिहितम् । यदपः पिबामि तत्प्राणस्य वासो ददामीति विज्ञानं कर्तव्यं इत्येवमर्थमेतत् । ननु—भोक्ष्यमाणो भुक्तवांश्च प्रयतो भविष्यामि इत्याचामति । तत्र च प्राणस्यानग्नताकरणार्थत्वे न द्विःकार्यताऽऽचमनस्य भवेत् । तत्र च कार्यद्वयं आचमनस्यैकस्य युक्तम् । यदि प्रायत्यार्थं नानग्नताऽर्थम् । अथानग्नताऽर्थं न प्रायत्यर्थम् । यस्मादेवं तस्मात् द्वितीयं आचमनान्तरं प्राणस्यानग्नताकरणाय भवतु । न, क्रियाद्वित्वोपपत्तेः । द्वे ह्येते क्रिये भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं स्मृतिविहितं तत्प्रायत्यार्थं भवति क्रियामात्रमेव । न तु तत्र प्रायत्यदर्शनादि अपेक्षते । तत्राचमनांगभूतासु अप्सु वासोज्ञानं प्राणस्य इतिकर्तव्यतया चोद्यते । ननु—तस्मिन् क्रियमाणे आचमनस्य प्रायत्यार्थता बाध्येत क्रियान्तरत्वात् आचमनस्य । तस्मात् भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं तत्रापो वासः प्राणस्येति दर्शनमात्रं विधीयते, अप्राप्तत्वादन्यतः ॥ १९ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे षष्ठेऽध्याये द्वितीयं ज्येष्ठश्रेष्ठब्राह्मणं वा प्राणविद्याब्राह्मणं परिसमाप्तम् ॥ १४ (९) ६ । २ ॥

ज्ञानकर्मणोर्गतिरुक्ता । तत्र ज्ञानं स्वतंत्रम् । कर्म तु दैवमानुषवित्तद्वयायत्तम् । तेन कर्मार्थं वित्तमुपार्जनीयम् । तच्च अप्रत्यवायकारिणोपायेनेति । तदर्थं श्रीमन्थाख्यं कर्म आरभ्यते महत्त्वप्राप्तये । महत्त्वे च सति अर्थ-

यावन्तो देवाः । ( स्त्वु ) त्वयि जातवेदस्तिर्य्यञ्चो घ्नन्ति पुरुषस्य कामान् । तेभ्योऽहम्भागधेयञ्जुहोमि ते मा तृप्ताः कामैस्तर्प्पयन्तु स्वाहा ॥ २ ॥

या तिरश्ची निपद्यसेऽहम्विधरणीऽइति । तान्त्वा घृतस्य धारया यजे

---

( १ ) " यावन्तो देवास्त्वयि जातवेदस्तिर्यंचो घ्नन्ति पुरुषस्य कामान् । तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः कामैस्तर्पयन्तु स्वाहा ॥ २ ॥

( २ ) या तिरश्ची निपद्यसेऽहं विधरणीऽ इति । तां त्वा घृतस्य धारया यजे

---

सिद्धं वित्तम् । तदेतदभिधीयते—स यः कामयेतेति । 'सः' वित्तार्थी कर्मण्यधिकृतः 'यः' कामयेत' । किं ? 'महत्' महत्त्वं 'प्राप्नुयां' महान् स्यामिति इति यावत् । तत्र श्रीमन्थकर्मणो विधित्सितस्य काल उच्यते । 'उदगयने' आदित्यस्य । तत्र सर्वत्र प्राप्तौ 'आपूर्यमाणपक्षे' शुक्लपक्षे । तत्रापि सर्वत्र प्राप्तौ 'पुण्याहे' अनुकूलेऽह्नि आत्मनः कर्मसिद्धिकरे इति । एतत् 'द्वादशाहं' यस्मिन् पुण्येऽहनि अनुकूलेऽहनि कर्म चिकीर्षति । ततः प्राक् पुण्याहमेवारभ्य 'द्वादशाहमुपसद्व्रती' उपसदो व्रतमुपसद्व्रतम् । उपसदः प्रसिद्धा ज्योतिष्टोमे । तत्र च स्तनोपचयापचयद्वारेण पयोभक्षणं तद्व्रतम् । अत्र च तत्कर्मानुपसंहारात् केवलं इतिकर्तव्यताशून्यं पयोभक्षणमात्रं गृह्यते । ननूपसद एव व्रतमिति यदा विग्रहः, तदा सर्वमितिकर्तव्यतारूपं ग्राह्यं भवति । तत्कस्मान्नोपादीयते इति । कथ्यते, स्मार्तत्वात् कर्मणः । स्मार्तं हीदं श्रीमन्थकर्म । ननु श्रुतिविहितं सत् कथं स्मार्तं भवितुमर्हति । स्मृत्यनुवादिनी हि श्रुतिरियम् । श्रौतत्वे हि प्रकृतिविकारभावः । ततश्च प्राकृतधर्मग्राहित्वं विकारकर्मणः । न त्विह श्रौतत्वम् । अत एव च आवसथ्याग्नौ एतत्कर्म विधीयते । सर्वा चावृत् स्मार्तैवेति । 'उपसद्व्रती भूत्वा' पयोव्रती सन्नित्यर्थः । 'औदुंबरे' उदुंबरवृक्षमये 'कंसे चमसे' वा तस्यैव विशेषणम् । कंसाकारे चमसाकारे वा औदुंबर एव । आकारे विकल्पः । नौदुंबरत्वे । 'सर्वौषधं' सर्वासामोषधीनां समूहम् । यथासंभवं यथाशक्ति च सर्वा ओषधीः समाहृत्य । तत्र ग्राम्याणां तु दश नियमेन ग्राह्याः । व्रीहियवाद्या वक्ष्यमाणाः । अधिकग्रहणे तु न दोषो ग्राम्याणाम् । 'फलानीति' । फलानि च यथासंभवं यथाशक्ति च । इतिशब्दः समस्तसंभारोपचयप्रदर्शनार्थः । अन्यदपि यत्संभरणीयं तत्सकलं संभृत्येत्यर्थः । क्रमस्तत्र गृह्योक्तो द्रष्टव्यः । परिसमूहनपरिलेखने भूमिसंस्कारः 'अग्निमुपसमाधाय' इति वचनात् आवसथ्येऽग्नाविति गम्यते । एकवचनात् उपसमाधानश्रवणाच्च विद्यमानस्यैवोपसमाधानम् । परिस्तीर्य दर्भान् 'आवृता' स्मार्तत्वात्कर्मणः स्थालीपाकावृता गृह्यते । तया 'आज्यं संस्कृत्य' । 'पुंसा नक्षत्रेण' पुंनामसंयुक्तेन 'मन्थं' सर्वौषधफलपिष्टम् । तत्रौदुंबरे कंसे वा चमसे वा । 'दध्ना मधुना घृतेनोपसिच्य' । एकया उपमंथन्या उपसंमथ्य 'सन्नीय' अग्नेः स्वस्य च मध्ये संस्थाप्य औदुम्बरेण स्रुवेण च उपस्थाने 'आज्यस्य' जुहोति' एतैर्मंत्रैः ॥ १ ॥

" यावन्तो देवाः " इत्याद्यैः ॥ २ ॥

" ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहा " इत्यारभ्य द्वे द्वे आहुती हुत्वा ' मन्थे संस्रवमवनयति ' स्रुचाऽवलेपमाज्यं

सꣳराधनीमहꣳ स्वाहा ॥ प्रजापते न त्वदेतान्यन्यऽइति तृतीयाञ्जुहोति ॥ ३ ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेति । ( त्य ) अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ४ ॥

भूताय स्वाहेति । ( त्य ) अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ५ ॥

पृथिव्यै स्वाहेति । ( त्य ) अग्नौ हुत्वा मन्थे सꣳस्रवमवनयत्यन्तरिक्षाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति दिवे स्वाहेत्यग्नौ हुत्वा

---

संराधनीमहं स्वाहा ॥ ( ३ ) प्रजापते न त्वदेतान्यन्यः " ( वा. सं. २३ । ६५ ) इति तृतीयां जुहोति ॥ ३ ॥

१ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । २ प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । ३ वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । ४ चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । ५ श्रोत्राय स्वाहा आयतनाय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । ६ मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । ७ रेतसे स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति ॥ ४ ॥

८ भूताय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । ९ भविष्यते स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । १० विश्वाय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । ११ सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे संस्रवमवनयति ॥ ५ ॥

१२ पृथिव्यै स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । १३ अंतरिक्षाय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । १४ दिवे स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । १५ दिग्भ्यः स्वाहेत्यग्नौ

---

मन्थे संस्रावयति । एतस्मादेव " ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहा " इत्यादिप्राणलिंगात् ज्येष्ठश्रेष्ठादिप्राणविद

मुन्थे सᳫँस्रवमुवनयति दिग्भ्यः स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति ॥ ६ ॥

भूः स्वाहेति । ( त्य ) अग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति भुवः स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति स्वः स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति ॥ ७ ॥

( त्य ) अग्नये स्वाहेति । ( त्य ) अग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति तेजसे स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति श्रियै स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति लक्ष्म्यै स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति सवित्रे स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति सरस्वत्यै स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति विश्वेभ्यो देवेभ्यः स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मुन्थे सᳫँस्रवमुवनयति ॥ ८ ॥

---

हुत्वा मंथे संस्रवमवनयति । १६ ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । १७ क्षत्राय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति ॥ ६ ॥

१८ भूः स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । १९ भुवः स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । २० स्वः स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । २१ भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति ॥ ७ ॥

२२ अग्नये स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । २३ सोमाय स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति । २४ तेजसे स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । २५ श्रियै स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । २६ लक्ष्म्यै स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । २७ सवित्रे स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । २८ सरस्वत्यै स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । २९ विश्वेभ्यो देवेभ्यः स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयाति । ३० प्रजापतये स्वाहेत्यग्नौ हुत्वा मंथे संस्रवमवनयति ॥ ८ ॥

---

एवास्मिन् कर्मण्यधिकारः । " रेतसे स्वाहा " इत्यारभ्य एकैकामाहुतिं हुत्वा ' मन्थे संस्रवमवनयति ' । अपरया उपमन्थन्या पुनर्मथ्नाति ॥ ३–८ ॥

( त्यु ) अथैनमभिमृशति । भ्रुमसि ज्वलदसि पूर्णमसि प्प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि व्विभूरसि प्प्रभूरसि ज्योतिरस्यन्नमसि निधनमसि सम्वर्गोऽसीति ॥ ९ ॥

( त्यु ) अथैनमुद्यच्छति । ( त्या ) आमोऽस्यामᳪं हि ते मयि । स हि राजेशानोऽधिपतिः स मा राजेशानोऽधिपतिङ्करोत्विति ॥ १० ॥

( त्यु ) अथैनमाचामति । तत्सवितुर्व्वरेण्यम् । मधु व्वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्न्नः सन्त्वोषधीः ॥ भूः स्वाहा ॥ ११ ॥

भर्ग्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत्पार्थिवᳪं रजः । मधु द्यौरस्तु नः पिता ॥ भुवः स्वाहा ॥ १२ ॥

धियो यो नः प्प्रचोदयात् । मधुमान्नो व्वनस्पतिर्म्मधुमाँ२ऽअस्तु सूर्य्यः । माध्वीर्ग्गावो भवन्तु नः ॥ स्वः स्वाहेति सर्व्वाञ्च सावित्रीमन्वाह सर्व्वाश्च

---

अथैनमभिमृशति–" भ्रमसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूरसि ज्योतिरस्यन्नमसि निधनमसि संवर्गोऽसि " इति ॥ ९ ॥

अथैनमुद्यच्छति–" आमोऽस्यामं हि ते मयि । स हि राजेशानोऽधिपतिः स मा राजेशानोऽधिपतिं करोतु "–इति ॥ १० ॥

अथैनमाचामति–" तत्सवितुर्वरेण्यम् " । " मधु वाता ऋतायते मधु क्षरंति सिंधवः । माध्वीर्नः संत्वोषधीः "–( वा. सं. १३।२७ ) " भूः स्वाहा " ॥ ११ ॥

" भर्गो देवस्य धीमहि " । " मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता " ( वा. सं. १३ । २८ ) " भुवः स्वाहा " ॥ १२ ॥

" धियो यो नः प्रचोदयात् "–( वा. सं. ३ । ३५ ) " मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः "–( वा. सं. १३।२९ ) "स्वः स्वाहा"–इति । सर्वां च

---

' अथैनमभिमृशति ' " भ्रमसि " इत्यनेन मन्त्रेण ॥ ९ ॥

' अथैनमुद्यच्छति ' । सह पात्रेण हस्ते गृह्णाति । " आमोऽस्यामं हि ते मयि " इत्यनेन ॥ १० ॥

' अथैनमाचामति ' भक्षयति । गायत्र्याः प्रथमपादेन मधुमत्यैकया व्याहृत्या च प्रथमया प्रथमं ग्रासं आचामति ॥ ११ ॥

तथा गायत्रीद्वितीयपादेन मधुमत्या द्वितीयया द्वितीयया च व्याहृत्या द्वितीयं ग्रासम् ॥ १२ ॥

तथा तृतीयेन गायत्रीपादेन तृतीयया मधुमत्या तृतीयया च व्याहृत्या तृतीयं ग्रासम् । ' सर्वां सावित्रीं '

मधुमतीः सर्वांश्च व्याहृतीरहमेवेदꣳ सर्वम्भूयासम्भूर्भुवः स्वः स्वाहेत्यन्ततऽआचम्य प्रक्षाल्य पाणी जघनेनाग्निम्प्राक्शिराः संविशति ॥१३॥

प्रातरादित्यमुपतिष्ठते । दिशामेकपुण्डरीकमस्यहम्मनुष्याणामेकपुण्डरीकम्भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशञ्जपति ॥१४॥

तꣳ हैतमुद्दालकऽआरुणिः । ( र्वा ) वाजसनेयाय याज्ञवल्क्यायान्तेवासिनऽउक्त्वोवाचाऽपि यऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १५ ॥

( त्ये ) एतमु हैव वाजसनेयो याज्ञवल्क्यः । ( ल्क्यो ) मधुकाय पैङ्ग्यायान्तेवासिनऽउक्त्वोवाचाऽपि यऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १६ ॥

( त्ये ) एतमु हैव मधुकः पैङ्ग्यः । ( श्चू ) चूडाय भागवित्तयेऽन्तेवासिनऽउक्त्वोवाचाऽपि यऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १७ ॥

---

सावित्रीमन्वाह । सर्वाश्च मधुमतीः । सर्वाश्च व्याहृतीः । "अहमेवेदं सर्वं भूयासम्" । "भूर्भुवः स्वः स्वाहा" इति । अन्ततः आचम्य । प्रक्षाल्य पाणी । जघनेनाग्निं प्राक्शिराः संविशति॥ १३॥

प्रातरादित्यमुपतिष्ठते–" दिशामेकपुंडरीकमस्यहं मनुष्याणामेकपुंडरीकं भूयासम्"– इति । यथेतमेत्य । जघनेनाग्निमासीनो वंशं जपति ॥ १४ ॥

तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायांतेवासिन उक्त्वोवाच । अपि य एनं शुष्के स्थाणौ निषिंचेत् । जायेरन् शाखाः । प्ररोहेयुः पलाशानि इति ॥ १५ ॥

एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैंग्यायांतेवासिन उक्त्वोवाच । अपि य एनं शुष्के स्थाणौ निषिंचेत् । जायेरन् शाखाः । प्ररोहेयुः पलाशानि इति ॥ १६ ॥

एतमु हैव मधुकः पैंग्यश्चूडाय भागवित्तयेऽन्तेवासिन उक्त्वोवाच । अपि य एनं शुष्के स्थाणौ निषिंचेत् । जायेरन् शाखाः । प्ररोहेयुः पलाशानि इति ॥ १७ ॥

---

' सर्वाश्च मधुमतीः सर्वाश्च व्याहृतीरुक्त्वा "अहमेवेदं सर्वं भूयासं" इति च अन्ते भूर्भुवः स्वः स्वाहेति समस्तं भक्षयति । यथा चतुर्भिर्ग्रासैः तत् द्रव्यं सर्वं परिसमाप्यते । तथा पूर्वमेव निरूपयेत् । यत्पात्रावलिप्तं तत्पात्रं सर्वं निर्णिज्य तूष्णीं पिबेत् । ' पाणी प्रक्षाल्य ' ' आचम्य ' । 'जघनेनाग्निं' पश्चादग्नेः ' प्राक्शिराः ' 'संविशति' शेते॥ १३॥

' प्रातः ' सन्ध्यामुपास्य ' आदित्यमुपतिष्ठते ' " दिशामेकपुण्डरीकं " इत्यनेन मन्त्रेण । ' यथेतं ' यथागतमेत्यागत्य । जघनेनाग्निमुपासीनः ' वंशं जपति ' ॥ १४ ॥

"तं हैतमुद्दालक आरुणिः" इत्यादि "सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचाऽपि य एनं शुष्के स्थाणौ

( त्ये ) एतमु हैव चूडो भागवित्तिः । ( र्ज्ञा ) जानकय ऽआयस्थूणायान्तेवासिनऽउक्त्वोवाचाऽपि यऽएनᳪं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १८ ॥

( त्ये ) एतमु हैव जानकिरायस्थूणः । सत्यकामाय जाबालायान्तेवासिनऽउक्त्वोवाचाऽपि यऽएनᳪं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १९ ॥

( त्ये ) एतमु हैव सत्यकामो जाबालः । ( लोऽन्ते ) अन्तेवासिभ्यऽउक्त्वोवाचाऽपि यऽएनᳪं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतन्नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ २० ॥

( च ) चतुरौदुम्बरो भवति । ( त्यौ ) औदुम्बरश्चमसऽऔदुम्बरः स्रुवऽऔदुम्बरऽइध्मऽऔदुम्बर्य्याऽउपमन्थन्यौ ॥ २१ ॥

दश ग्राम्याणि धान्यानि भवन्ति । व्रीहियवास्तिलमाषाऽअणुप्रियङ्गवो

---

एतमु हैव चूडो भागवित्तिर्जानकय आयस्थूणायांतेवासिन उक्त्वोवाच । अपि य एनं शुष्के स्थाणौ निषिंचेत् । जायेरन् शाखाः । प्ररोहेयुः पलाशानि इति ॥ १८ ॥

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायांतेवासिन उक्त्वोवाच । अपि य एनं शुष्के स्थाणौ निषिंचेत् । जायेरन् शाखाः । प्ररोहेयुः पलाशानि इति ॥ १९ ॥

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाच । अपि य एनं शुष्के स्थाणौ निषिंचेत् । जायेरन् शाखाः । प्ररोहेयुः पलाशानि इति । तमेतं नापुत्राय वा अनन्तेवासिने वा ब्रूयात् ॥ २० ॥

चतुरौदुम्बरो भवति । ( १ ) औदुंबरश्चमसः । ( २ ) औदुंबरः स्रुवः । ( ३ ) औदुम्बर इध्मः । ( ४ ) औदुम्बर्यौ उपमन्थन्यौ ॥ २१ ॥

दश ग्राम्याणि धान्यानि भवन्ति–१ व्रीहि २ यवाः ३ तिल ४ माषाः ५ अणु ६ प्रियंगवः

---

निषिंचेत् जायेरञ्छाखाः प्ररोहेयुः पलाशानि " इत्येवमन्तम् । 'एनं' मन्थं उद्दालकात्प्रभृति एकैकाचार्यक्रमागतं सत्यकाम आचार्यो बहुभ्यः 'अन्तेवासिभ्य उक्त्वा उवाच'। किमन्यदुवाचेत्यभिधीयते । 'अपि य एनं शुष्के स्थाणौ' गतप्राणेऽपि 'एनं' मन्थं भक्षणाय संस्कृतं निषिंचेत्प्रक्षिपेत् । 'जायेरन्' उत्पद्येरन् एवास्मिन् स्थाणौ किमुत अनेन कर्मणा कामः सिध्येदिति ध्रुवफलमिदं कर्मेति कर्मस्तुत्यर्थमेतत् । विद्याधिगमे षट् तीर्थानि । तेषामिह प्राणदर्शनस्य मन्थविज्ञानस्याधिगमे द्वे एव तीर्थे अनुज्ञायेते । पुत्रश्चांतेवासी च ॥ १९–२० ॥

'चतुरौदुम्बरो भवतीति' व्याख्यातम् ॥ २१ ॥

'दश ग्राम्याणि धान्यानि भवन्ति' । ग्राम्याणां तु धान्यानां दश नियमेन ग्राह्याणि इत्यवादि । तान्येतानि

---

१–समानप्रकरणे छांदोग्ये "स यदि स्त्रियं ( स्वप्ने ) पश्येत्समृद्धं कर्मेति विद्यात्" इति ( छां. उ. ५ । २ । ८ ) इति कर्मसिद्धिज्ञानोपायो ज्ञापितः ॥

गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान्त्सार्द्धम्पिष्ट्वा दध्ना मधुना घृतेनोपसिञ्चत्याज्यस्य जुहोति ॥ २२ ॥

इति चतुर्दशे काण्डे सप्तमे प्रपाठके बृहदारण्यकोपनिषादि पञ्चमे प्रपाठके चतुर्थं ब्राह्मणम् ॥ १४ ( ७ ) ५ । ४॥ ( ९ ) ६–३ ॥

एषाम्वै भूतानाम्पृथिवी रसः । पृथिव्याऽआपोऽपामोषधयऽओषधीनाम्पुष्पाणि पुष्पाणाम्फलानि फलानाम्पुरुषः पुरुषस्य रेतः ॥ १ ॥

स ह प्रजापतिरीक्षाञ्चक्रे । हन्तास्मै प्रतिष्ठाङ्कल्पयानीति स स्त्रियꣳ

---

७ गोधूमाश्च ८ मसूराश्च ९ खल्वाश्च १० खलकुलाश्च । तान् सार्द्धं पिष्ट्वा दध्ना मधुना घृतेनोपसिंचति । आज्यस्य जुहोति ॥ २२ ॥

पुत्रमन्थकर्मब्राह्मणम् ।

एषां वै भूतानां पृथिवी रसः । पृथिव्या आपः । अपामोषधयः । ओषधीनां पुष्पाणि । पुष्पाणां फलानि । फलानां पुरुषः । पुरुषस्य रेतः ॥ १ ॥

स ह प्रजापतिरीक्षांचक्रे । हन्त अस्मै प्रतिष्ठां कल्पयानीति । स स्त्रियं ससृजे । तां सृष्ट्वा

---

निर्दिश्यन्ते ' व्रीहियवास्तिलमाषा अणुप्रियंगवः ' अणवश्च अणुशब्दवाच्याः क्वचिद्देशे । प्रियंगवः प्रसिद्धाः कंगुशब्देन । ' खल्वाः ' निष्पावाः वल्लशब्दवाच्या लोके । 'खलकुलाः' कुलत्थाः । एतद्व्यतिरेकेण यथाशक्ति सर्वौषधयो ग्राह्याः फलानि चेत्यवोचाम । अयज्ञिकानि वर्जयित्वा ॥ २२ ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यन्दिनीयशतपथब्राह्मणान्तर्गतमाध्यंदिनशाखोपनिषद्-बृहदारण्यकव्याख्यायां वासुदेवप्रकाशिकायां तृतीये खिलकांडे षष्ठेऽध्याये तृतीयं श्रीमन्थकर्मब्राह्मणं परिसमाप्तम् ॥ १४ । (९) ६ –३ ॥

यादृग्जन्मा यथोत्पादितैर्वा गुणैर्विशिष्टः पुत्रः आत्मनः पितुश्च लोक्यो भवतीति तत्सम्पादनाय ब्राह्मणमारभ्यते । प्राणदर्शिनः श्रीमन्थकर्म कृतवतः पुत्रमन्थे अधिकारः । यदा पुत्रमन्थं चिकीर्षति तदा श्रीमन्थं कृत्वा ऋतुकालं पत्न्याः प्रतीक्षेत इत्येतत् रेतस ओषध्यादिसारतमत्वं तत्स्तुत्या अवगम्यते । ' एषां वै ' । ' एषां ' चराणां ' भूतानां ' ' पृथिवी रसः ' सारभूता । " सर्वभूतानां मधु " ( श. प. बृ. २ । ५ । १ ) इति ह्यभिहितम् । ' पृथिव्या आपः ' रसः । अप्सु हि पृथिवी ओता च प्रोता च । " यदिदं सर्वमप्स्वोतं च प्रोतं च " ( श. प. बृ. ३ । ६ । १ । ) इत्यभिहितम् । ' अपामोषधयः ' रसः । कार्यत्वाद्रसत्वमोषध्याः ' ओषधीनां पुष्पाणि ' । ' पुष्पाणां फलानि ' । ' फलानां पुरुषः ' । ' पुरुषस्य रेतः ' । " सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतम् " ( ) इति श्रुत्यन्तरात् । यत एवं सर्वभूतानां सारतममेतत् ' रेतः ' । अतः का नु खलु अस्य योग्या प्रतिष्ठेति ॥ १ ॥

' स ह ' स्रष्टा ' प्रजापतिः ईक्षांचक्रे ' । ईक्षां कृत्वा ' स्त्रियं ससृजे ' । ' तां ' च ' सृष्ट्वा ' ' अध

---

१–शतरूपाख्याम्, इति द्विवेदगङ्गः ॥

ससृजे ताᳪं सृष्ट्वाऽधऽउपास्त तस्मात्स्त्रियमधऽउपासीत श्रीर्ह्येषा सऽ एतम्प्राञ्चं ग्रावाणमात्मनऽएव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥

( त्तु ) तस्या व्वेदिरुपस्थः । (स्थो) लोमानि बर्हिश्चर्म्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान्ह वै व्वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति यऽएवम्विद्वानधोपहासञ्चरत्या स स्त्रीणाᳪं सुकृतम्वृङ्क्तेऽथ यऽइदमविद्वानधोपहासञ्चरत्याऽस्य स्त्रियः सुकृतव्वृञ्जते ॥ ३ ॥

( तऽए ) एतद्ध स्म वै तद्विद्वानुद्दालकऽआरुणिराह । ( है ) एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्यऽआहैतद्ध स्म वै तद्विद्वान्कुमारहारितऽआह बहवो मर्य्या ब्राह्मणायना निरिन्द्रिया व्विसुकृतोऽस्माल्लोकात्प्रयन्ति यऽइदमविद्वाᳪंसोऽधोपहासञ्चरन्तीति ॥ ४ ॥

---

अध उपास्त । तस्मात् स्त्रियमध उपासीत । श्रीर्हि एषा । स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत् । तेनैनामभ्यसृजत् ॥ २ ॥

तस्या वेदिरुपस्थः । लोमानि बर्हिः । चर्माधिषवणे । समिद्धो मध्यतस्तौ मुष्कौ । स यावान्ह वै वाजपेयेन लोको भवति । तावानस्य लोको भवति । य एवं विद्वानधोपहासं चरति । आ स स्त्रीणां सुकृतं वृङ्क्ते । अथ य इदमविद्वानधोपहासं चरति । आ अस्य स्त्रियः सुकृतं वृंजते ॥ ३ ॥

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आह । एतद्ध स्म वै तद्विद्वान् कुमारहारित आह । बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयान्ति । य इदमविद्वांसोऽधोपहासं चरन्ति । इति ॥ ४ ॥

---

उपास्त ' मैथुनाख्यं कर्म अधउपासनं नाम कृतवान् । ' तस्मात् ' ' स्त्रियमेवाध उपासीत ' । ' श्रीर्हि एषा ' । श्रेष्ठ उपासकः । श्रेष्ठानुश्रयणा हि प्रजा । अत्र वाजपेयसामान्यं श्रुतिराह—' स एतमात्मनो ग्रावाणं ' सोमाभिषवोपलस्थानीयं कठिनसामान्यात् । प्रजननेन्द्रियं ' उदपारयत् ' उत्पूरितवान् स्त्रीव्यंजनं प्रति । ' तेन एनां ' स्त्रियं ' अभ्यसृजत् ' अभिसंसर्गं कृतवान् ॥ २ ॥

तस्या वेदिरित्यादि समस्तं सामान्यं प्रसिद्धम् । समिद्धोऽग्निर्मध्यतो मध्यप्रदेशः स्त्रीव्यञ्जनस्य । ' तौ मुष्कौ ' वृषणौ अधिषवणफलके इति व्यवहितेन सम्बध्यते । वाजपेययाजिनः ' यावान् लोकः ' प्रसिद्धः । ' तावान् ' विदुषो मैथुनकर्मणः फलं इति स्तूयते । तस्मात् बीभत्सा न कार्येति । ' य एवं विद्वानत्रोपहासं चरति ' । ' आ स स्त्रीणां सुकृतं वृंक्ते ' वर्जयति । ' अथ ' पुनर्यो वाजपेयसम्पत्तिं न जानाति । ' अविद्वान् ' रेतसो रसतमत्वं च ' अधोपहासं चरति ' । ' अस्य ' अविदुषः स्त्रियः सुकृतं ' ' आवृंजते ' ॥ ३ ॥

' एतद्धस्म वै तद्विद्वानुद्दालक आरुणिराह । अधोपहासाख्यं मैथुनं कर्म वाजपेयसम्पन्नं विद्वानिति यावत् ।

बहु वाऽइदᳫँ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहन्तद्रेतऽआददे ॥ पुनर्म्मा मैत्विन्द्रियम्पुनस्तेजः पुनर्ब्भगः । पुनरग्नयो धिष्ण्या यथास्थानङ्कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥

( द )अथ यद्युदकऽआत्मानम्पश्येत् । ( त्त ) तदभिमन्त्रयेत मयि तेजऽ इन्द्रियं यशो द्रविणᳫँ सुकृतमिति ॥ ६ ॥

श्रीर्ह वाऽएषा स्त्रीणां यन्मलोद्वासाः । ( स्तु ) तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत सा चेदस्मै न दद्यात्काममेनामुपक्रीणीयात्सा

---

बहु वा इदं सुप्तस्य वा जाग्रतो वा रेत स्कन्दति । तदभिमृशेदनु वा मंत्रयेत-" यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे ॥ पुनर्मा मैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्नयो धिष्ण्या यथास्थानं कल्पन्ताम् " । इति-अनामिकांगुष्ठाभ्यामादाय । अन्तरेण स्तनौ वा भ्रुवौ वा निमृञ्ज्यात् ॥ ५ ॥

अथ यदि उदक आत्मानं पश्येत् । तदभिमन्त्रयेत-" मयि तेज इन्द्रियं यशो द्रविणं सुकृतम् "-इति ॥ ६ ॥

श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासाः । तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ।

---

तथा ' नाको मौद्गल्यः कुमारहारितश्च आह ' । किञ्च-एत आहुरित्यभिधीयते । ' बहवो मर्याः ' मरणधर्मिणो मनुष्याः ब्राह्मणा अयनं येषां ते ' ब्राह्मणायनाः ' ब्रह्मबन्धवो जातिमात्रोपजीविन इत्यर्थः । ' निरिन्द्रियाः ' विश्लिष्टेन्द्रियाः । ' विसुकृतः ' विगतसुकृतकर्माणः । अविद्वांसो मैथुनकर्मासक्ताः इति यावत् । किं ' अस्माल्लोकात्प्रयन्ति ' परलोकात्परिभ्रष्टाः । इति मैथुनकर्मणः अत्यन्तपापहेतुत्वं दर्शयति-य इदमविद्वांसोऽधोपहासं चरन्तीति ॥ ४ ॥

श्रीमन्थं कृत्वा पत्न्या ऋतुकालं ब्रह्मचर्येण प्रतीक्षतो यदिदं ' रेतः स्कन्दति ' ' बहु वा ' अल्पं वा ' सुप्तस्य वा जाग्रतो वा ' रजःप्राबल्यात् ' तदभिमृशेत् ' ' अनुमन्त्रयेत वा ' अनुजपेदित्यर्थः । यदा अभिमृशति तदा ' अनामिकांऽगुष्ठाभ्यां ' तद्रेतः आदत्ते । " यन्मेऽद्य रेतः " इत्यादिना " आददे " इत्येवमन्तेन मन्त्रेण । " पुनर्माम् " इत्यनेन मन्त्रेण ' निमृञ्ज्यात् ' ' अन्तरेण ' मध्ये ' भ्रुवौ ' भ्रुवोर्वा ' स्तनौ ' स्तनयोर्वा ॥ ५ ॥

' अथ यदि ' कदाचित् ' उदके आत्मानं ' आत्मच्छायां ' पश्येत् ' । तत्रापि ' अभिमन्त्रयेत ' अनेन ' मन्त्रेण " मयि तेजः " इति ॥ ६ ॥

' श्रीर्ह वै ' ' एषा ' पत्नी ' स्त्रीणां ' मध्ये ' यत् ' यस्मात् ' मलोद्वासाः ' उद्गतमलवद्वासाः । ' तस्मा त्

चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यशऽआददऽइत्ययशाऽएव भवति ॥ ७ ॥

स यामिच्छेत् । ( त्का ) कामयेत मेति तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धायोपस्थमस्याऽअभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयाऽधि जायसे । स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेति ॥ ८ ॥

( त्य ) अथ यामिच्छेन्न गर्भन्दधीतेति । तस्यामर्थं निष्ठाप्य मुखेन मुखꣳ सन्धायाभिप्प्राण्यापान्यादिन्द्रियेण ते रेतसा रेतऽआददऽइत्यरेताऽएव भवति ॥ ९ ॥ शतम् ७६०० ॥

---

सा चेदस्मै न दद्यात् । काममेनामपक्रीणीयात् । सा चेदस्मै नैव दद्यात् । कामं एनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेत्–" इन्द्रियेण ते यशसा यश आददे "–इति । अयशा एव भवति ॥ ७ ॥

स यामिच्छेत् । कामयेत मेति । तस्यामर्थं निष्ठाप्य । मुखेन मुखं संधाय । उपस्थमस्या अभिमृश्य जपेत्–" अङ्गादङ्गात्सम्भवसि हृदयादधि जायसे । स त्वमंगकषायोऽसि दिग्धविद्धामिव मादय "–इति ॥ ८ ॥

अथ यामिच्छेत् । न गर्भं दधीतेति । तस्यामर्थं निष्ठाप्य । मुखेन मुखं सन्धाय–अभिप्राण्यापाण्यात् "इन्द्रियेण ते रेतसा रेत आददे "–इति । अरेता एव भवति ॥ ९ ॥

---

तां 'मलोद्वाससं यशस्विनीं' श्रीमतीं अभिक्रम्याभिगम्य 'उपमन्त्रयेत' । इदं अद्य आवाभ्यां कार्यं यत् पुत्रोत्पादनमिति । त्रिरात्रान्ते आप्लुती 'सा चेत्' 'अस्मै' न दद्यान्मैथुनं कर्तुं 'काममेनां' अवक्रीणीयात् आभरणादिना ज्ञापयेत् । तथाऽपि 'सा नैव दद्यात्' चेत् । 'काममेनां' 'यष्ट्या वा पाणिना वा' उपहन्यात् । अभिक्रामेन्मैथुनाय । शप्स्यामि त्वां दुर्भगां करिष्यामीति प्रत्याख्याप्य । तां अनेन मन्त्रेण उपगच्छेत् । " इन्द्रियेण ते यशसा यश ऽआददे " इति । सा तस्मात् तदभिशापोद्भवात् दुर्भगा इति ख्याता 'अयशा एव भवति' । शाखांतरानुसारेणेदमुच्यते । सा चेत् अस्मै दद्यात् । अनुगुणा एव स्यात् भर्तुः । तदा अनेन मन्त्रेणोपगच्छेत् । " इंद्रियेण ते यशसा यश आदधामि " इति । तदा यशस्विनावेव उभावपि भवतः ॥ ७ ॥

स यामिति । 'सः यां' भार्यामिच्छेत् इयं 'मा' मां 'कामयेतेति' । 'तस्यां' 'योनौ' 'अर्थं' प्रजननेन्द्रियं 'निष्ठाप्य' निक्षिप्य । 'मुखेन मुखं सन्धाय' । 'उपस्थं अस्याः अभिमृश्य जपेत' इमं मन्त्रं " अंगादंगात्" इति ॥ ८ ॥

'अथ यामिच्छेत् न गर्भं दधीत' न धारयेत् गर्भिणी मा भूदिति । तस्यामर्थमिति । पूर्ववत् । 'अभिप्राण्य' प्राणनं प्रथमं कृत्वा, पश्चादपान्यात् । " इंद्रियेण ते रेतसा रेत आददे " इत्यनेन मन्त्रेण । 'अरेता एव भवति' न गर्भधारिणी भवतीत्यर्थः ॥ ९ ॥

(त्य) अथ यामिच्छेद्गर्भन्दधीतेति । तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेतऽआदधामीति गर्भिण्येव भवति ॥ १० ॥

(त्य) अथ यस्य जायायै जारः स्यात् । (त्त) तञ्चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रातिलोमꣳ शरबर्हिः स्तीर्त्वा तस्मिन्नेतास्तिस्रः शरभृष्टीः प्रातिलोमाः सर्पिषाऽक्त्वा जुहुयान्मम समिद्धेऽहौषीराशापराकाशौ तऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः पुत्रपशूꣳस्तऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः प्राणापानौ तऽआददेऽसाविति नाम गृह्णाति स वाऽएष निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य जायायाऽउपहासन्नेच्छेदुत ह्येवंवित्परो भवति ॥ ११ ॥

---

अथ यामिच्छेत् । गर्भं दधीतेति । तस्यामर्थं निष्ठाप्य । मुखेन मुखं संधाय अपान्याभिप्राण्यत्—"इन्द्रियेण रेतसा ते रेत आदधामि"—इति । गर्भिण्येव भवति ॥ १० ॥

अथ यस्य जायायै जारः स्यात् । तं चेद्द्विष्यात् । आमपात्रे अग्निमुपसमाधाय । प्रतिलोमं शरबर्हिः स्तीर्त्वा । तस्मिन्नेतास्तिस्रः शरभृष्टीः प्रतिलोमाः सर्पिषा अक्त्वा जुहुयात्—"मम समिद्धेऽहौषीराशांपराकाशौ त आददे असौ"—इति नाम गृह्णाति । "मम समिद्धेऽहौषीः पुत्रपशूꣳस्त आददे असौ"—इति नाम गृह्णाति । "मम समिद्धेऽहौषीः प्राणापानौ त आददे असौ"—इति नाम गृह्णाति । स वा एष निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति । यमेवंवित् ब्राह्मणः शपति । तस्मादेवंवित् श्रोत्रियस्य जायाया उपहासं नेच्छेत् । उत हि एवंवित्परो भवति ॥ ११ ॥

---

अथ यामिच्छेद्गर्भं दधीत इति । तस्या अर्थमित्यादि पूर्ववत् । पूर्वविपर्ययेण 'अपान्य अभिप्राण्यात्' "इंद्रियेण ते रेतसा रेत आदधामि" इति । 'गर्भिण्येव भवति' ॥ १० ॥

'अथ' पुनः 'यस्य जायायै जारः' उपपतिः 'स्यात्' । 'तं चेत् द्विष्यात्' अभिचरिष्यामि एनं इति मन्येत । तस्येदं कर्म । 'आमपात्रे' 'अग्निमुपसमाधाय' । सर्वं 'प्रतिलोमं' कुर्यात् । तत् तस्मिन्नग्नौ 'एताः तिस्रः शरभृष्टीः' शरेषीकाः 'सर्पिषा अक्त्वा' घृतेनाभ्यज्य 'प्रतिलोमाः' विपरीताग्राः 'जुहुयात्' । "मम समिद्धेऽहौषीः" इत्याद्या आहुतीः । 'असाविति' नामग्रहणं प्रत्येकम् । स एषः 'एवंवित्' ब्राह्मणः' 'यं' शपति । 'स विसुकृत्' विकृतपुण्यकर्मा 'प्रैति' । 'तस्मात् एवंवित् श्रोत्रियस्य जायायाः'

---

१—आशा प्रार्थना वाचा यत्प्रतिज्ञातं कर्मणा च नोपपादितं तस्य परीक्षा पराकाशः । इति द्विवेदगंगः ।

( त्यु ) अथ यस्य जायामार्त्तवम्विन्देत् । ( त्र्य ) त्र्यहङ्कᳬंसे न पिबेद॒हतवासा नैनाम्वृषलो न व्वृषल्युपहन्यात्त्रिरात्रान्तऽ आप्लूय व्व्रीहीनवघातयेत् ॥ १२ ॥

( त्स ) स यऽ इच्छेत् । ( त्पु ) पुत्त्रो मे गौरो जायेत व्वेदमनुब्ब्रुवीत सर्व्वमायुरियादिति क्षीरौदनम्पाचयित्वा सर्प्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १३ ॥

( वाऽत्रु ) अथ यऽ इच्छेत् । (त्पु) पुत्त्रो मे कपिलः पिङ्गलो जायेत द्वौ व्वेदावनुब्ब्रुवीत सर्व्वमायुरियादिति दध्योदनम्पाचयित्वा सर्प्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥

---

अथ यस्य जायामार्तवं विन्देत् । त्र्यहं कंसे न पिबेत् । अहतवासाः । नैनां वृषलो न वृषल्युपहन्यात् । त्रिरात्रांत आप्लूय । व्रीहीनवघातयेत् ॥ १२ ॥

स य इच्छेत् । पुत्रो मे गौरो जायेत । वेदमनुब्रुवीत । सर्वमायुरियात् इति । क्षीरौदनं पाचयित्वा । सर्पिष्मंतमश्नीयाताम् । ईश्वरौ जनयितवै ॥ १३ ॥

अथ य इच्छेत् । पुत्रो मे कपिलः पिंगलो जायेत । द्वौ वेदावनुब्रुवीत । सर्वमायुरियात् इति । दध्योदनं पाचयित्वा । सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥ १४ ॥

---

दारेण ' नोपहासं ' नर्मापि न कुर्यात् । किमुत अधोपहासम् । ' हि ' यस्मात् एवंविदपि तावत् ' परो भवति ' । शत्रुर्भवतीत्यर्थः ॥ ११ ॥

' अथ यस्य जायामार्तवं विन्देत् ' ऋतुभावः प्राप्नुयात् इत्येवमादिग्रन्थः " श्रीर्ह वा एषा स्त्रीणां "— ( कं. ७ ) इत्यतः पूर्वं द्रष्टव्यः । सामर्थ्यात् । ' त्र्यहं कंसे न पिबेत् ' । अहतवासाश्च भवेत् । ' न एनां ' स्नातां अस्नातां च ' वृषलो वृषली वा ' नोपहन्यान्नोपस्पृशेत् । ' त्रिरात्रांते ' त्रिरात्रऋतुसमाप्तौ ' आप्लूय ' स्नात्वा ' अहतवासाः ' स्यात् । इति व्यवहितेन संबंधः । तामाप्लुतां 'व्रीहीनवघातयेत् ' व्रीह्यवघाताय तामेव विनियुंज्यात् ॥ १२ ॥

' स य इच्छेत् पुत्रो मे गौरः ' वर्णतः ' जायेत ' । ' वेदमेकमनुब्रुवीत । ' ' सर्वमायुरियात् ' वर्षशतम् । ' क्षीरौदनं पाचयित्वा ' । ' सर्पिष्मन्तमश्नीयातां ' । ' ईश्वरौ जनयितवै ' ॥ १३ ॥

' दध्योदनं ' दध्ना चरुं ' पाचयित्वा ' ' पुत्रो मे कपिलः पिंगलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति ' पुत्रं चेदिच्छति ॥ १४ ॥

( ।।ऽ३ ) अथ य इच्छेत् । ( त्पु ) पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनम्पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १९ ॥

( वाऽ३ ) अथ य इच्छेत् । ( दु ) दुहिता मे पण्डिता जायेत सर्व्वमायुरियादिति तिलौदनम्पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥

( वाऽअ ) अथ य इच्छेत् । ( त्पु ) पुत्रो मे पण्डितो विजिगीथः समितिङ्गमः शुश्रूषिताम्वाचम्भाषिता जायेत सर्व्वान्वेदाननुब्रुवीत सर्व्वमायुरियादिति माᳫँसौदनम्पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवाऽ औक्ष्णेन वाऽऽर्षभेण वा ॥ १७ ॥

( वाऽथा ) अथाभिप्रातरेव । स्थालीपाकावृताऽऽज्यञ्चेष्टित्वा स्थाली-

---

अथ य इच्छेत् । पुत्रो मे श्यामो लोहिताक्षो जायेत । त्रीन् वेदाननुब्रुवीत । सर्वमायुरियात् इति । उदौदनं पाचयित्वा । सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥ १९ ॥

अथ य इच्छेत् । दुहिता मे पंडिता जायेत । सर्वमायुरियात् इति । तिलौदनं पाचयित्वा । सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥ १६ ॥

अथ य इच्छेत् । पुत्रो मे पंडितो विजिगीथः समितिङ्गमः शुश्रूषितां वाचं भाषिता जायेत । सर्वान् वेदाननुब्रुवीत । सर्वमायुरियात् इति । मांसौदनं पाचयित्वा । सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै । औक्ष्णेन वा । आर्षभेण वा ॥ १७ ॥

अथाभिप्रातरेव । स्थालीपाकावृता आज्यं चेष्टित्वा । स्थालीपाकस्योपघातं जुहोति—" अग्नये

---

" अथ य इच्छेत् पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत " इत्यादि । इच्छति पुत्रम् । तदा एवमत्र न नियमः । केवलमेव स्वाभाविकं ओदनम् । उदकग्रहणमन्य[1]प्रसंगनिरासार्थम् ॥ १९ ॥

' दुहिता मे पंडिता जायेत ' । दुहितुः पांडित्यं गृहतंत्रविषयमेव । वेदे अनधिकारात् । ' तिलौदनं ' कृसरम् ॥ १६ ॥

विविधं जिगीथः ' विजिगीथः ' प्रख्यात इति यावत् । ' समितिंगमः ' सभां गच्छतीति प्रगल्भः इत्येतत्पांडित्यस्य पृथक् ग्रहणात् । ' शुश्रूषितां ' श्रोतुमिष्टां रमणीयां ' वाचं ' ' भाषिता ' संस्कृताया अर्थवत्या वाचो भाषितेत्यर्थः । मांसमिश्रमोदनं ' मांसौदनं ' तन्मांसनियमार्थं ब्रवीति ' औक्ष्णेन वा ' मांसेन । उक्षा सेचनसमर्थः पुंगवः । तदीयं मांसम् । ' आर्षभेण वा ' । ऋषभस्ततोऽप्यधिकवयाः । तदीयमार्षभं मांसम् ॥ १७ ॥

' अथाभिप्रातरेव ' काले अवघातनिर्वृत्तान् तण्डुलानादाय ' स्थालीपाकावृता ' ' आज्यं चेष्टित्वा ' आज्य-

---

१—अन्यस्य क्षीरादेर्निवृत्त्यर्थमित्यर्थः ।

पाकस्योपघातञ्जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्र-सवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणीऽउदपात्रम्पूरयित्वा तेनैनान्त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्या-मिच्छ प्रफुर्व्यम् । सञ्जायाम्पत्या सहेति ॥ १८ ॥

( त्यु ) अथैनामभिपद्यते । ( तेऽमो ) अमोऽहमस्मि सा त्वꣳ सा त्वम-स्यमोऽअहम् । सामाहमस्मि ऽ ऋक्त्वन्द्यौरहम्पृथिवी त्वम् ॥ तावेहि सꣳरभावहै सह रेतो दधावहै । पुꣳसे पुत्राय वित्तयऽइति ॥ १९ ॥

( त्यु ) अथास्याऽऊरू विहापयति । विजिहीथान्द्यावापृथिवीऽइति तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णु-र्योनिङ्कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता

---

स्वाहा । अनुमतये स्वाहा । देवाय सवित्रे प्रसवित्रे सत्यप्रसवाय स्वाहा "-इति । हुत्वा, उद्धृत्य, प्राश्नाति । प्राश्य, इतरस्याः प्रयच्छति । प्रक्षाल्य पाणी, उदपात्रं पूरयित्वा, तेनैनां त्रिरभ्युक्षति-" उत्तिष्ठातो विश्वावसो[1]ऽन्यामिच्छ प्रफर्व्यम्[2] । सं जायां पत्या सह "-इति ॥ १८ ॥

अथैनामभिपद्यते-" अमो[3]ऽहमस्मि सा[4] त्वं सा त्वमस्यमोऽअहम् । सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् ॥ तावेहि संरभावहै सह रेतो दधावहै । पुंसे पुत्राय वित्तये[5] " इति ॥ १९ ॥

अथ गर्भाधानम् ।

अथास्या ऊरू विहापयति-" विजिहीथां द्यावापृथिवी "-इति । तस्यामर्थं निष्ठाप्य ।

---

संस्कारं कृत्वा चरुं श्रपयित्वा स्थालीपाकस्याहुतीः ' जुहोति ' उपघातमुपहत्योपहत्य । " अग्नये स्वाहा " इत्याद्याः । गार्ह्यः सर्वो विधिर्द्रष्टव्योऽत्र । ' हुत्वोद्धृत्य ' चरुशेषं ' प्राश्नाति ' स्वयं ' प्राश्य ' ' इतरस्याः ' पत्न्यै ' प्रयच्छति ' उच्छिष्टम् । ' प्रक्षाल्य पाणी ' आचम्य ' उदपात्रं पूरयित्वा ' । तेनोदकेनैनां ' त्रिरभ्युक्षति ' अनेन मन्त्रेण " उत्तिष्ठातो विश्वावसो "-इति । सकृन्मंत्रोच्चारणम् ॥ १८ ॥

' अथैनामभिपद्यते ' । क्षीरौदनादि यथाऽपत्यकामं भुक्त्वेति क्रमोऽत्र द्रष्टव्यः । संनिवेशकाले " अमोऽहमस्मि " इत्यादिमन्त्रेणाभिपद्यते ॥ १९ ॥

' अथास्या ऊरू विहापयति ' विश्लेषयति । " विजिहीथां द्यावापृथिवी " इत्यनेन । तस्यामर्थमित्यादि

---

१-एतन्नामकगन्धर्व ! इति बोध्यम् । २-' प्रफर्व्यम् ' प्रकर्षेण गम्या तां प्रथमयुवतिं तरुणीमित्यर्थः । ३-अमः प्राणः इति । ४-' सा ' इति तच्छब्देन ' वाक् ' गृह्यते । ५-वित्तिर्लाभ इति ।

गुर्भन्दधातु ते । गुर्भन्धेहि सिनीवालि गुर्भन्धेहि पृथुष्टुके । गुर्भन्तेऽ अश्विनौ देवावाधत्ताम्पुष्करस्रजौ ॥ २० ॥

हिरण्ययीऽअरणी । युाभ्यान्निर्म्मुन्थतामश्विनौ देवौ । तुन्ते गुर्भन्दधामहे दशमे मासि सूतवे ॥ युथाऽग्निगर्भ्भा पृथिवी युथा द्यौरिन्द्रेण गर्भ्भिणी । व्वायुर्दिशां युथा गुर्भऽएवङ्गुर्भन्दधामि तेऽसाविति नाम गृह्णाति ॥ २१ ॥

सोष्यन्तीमद्भिरुभ्युक्षति । युथा व्वातः पुष्करिणीᳬँ समीङ्गयति सर्व्वतः । एवा ते गुर्भऽ एजतु सहावैतु जरायुणा ॥ इन्द्रस्यायुम्वज्रः कृतः सार्ग्गडः सुपरिश्रयः । तुमिन्द्र निर्ज्जहि गुर्भेण सावरᳬँ सहेति ॥२२॥

---

मुखेन मुखं सन्धाय । त्रिरेनामनुलोमामनुमार्ष्टि–" विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २० ॥

हिरण्ययी अरणी याभ्यां निर्मन्थतामश्विनौ देवौ । तं ते गर्भं दधामहे दशमे मासि सूतवे ॥ यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि ते " ॥ ' असौ ' इति नाम गृह्णाति ॥ २१ ॥

अथ सोष्यन्तीकर्म ।

सोष्यन्तीमद्भिरभ्युक्षति–" यथा वातः पुष्करिणीं समींगयति सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा ॥ इन्द्रस्यायं वज्रः कृतः साँर्गडः सपरिश्रयः । तमिन्द्र निर्जहि गर्भेण सावरं सह "–इति ॥ २२ ॥

---

पूर्ववत् । ' त्रिरेनां ' शिरःप्रभृत्यनुलोमामनुमार्ष्टि । " विष्णुर्योनिम् " इत्यादि प्रतिमन्त्रम् । अंते ' नाम गृह्णाति ' ' असाविति ' तस्याः ॥ २० ॥ २१ ॥

' सोष्यंतीमद्भिरभ्युक्षति ' प्रसूतिकाले सुखप्रसवार्थं अनेन मंत्रद्वयेन " यथा व्वातः पुष्करिणीं समींगमयति सर्वतः । एवा ते गर्भ एजतु " इत्यादिना ॥ २२ ॥

---

१–' रूपाणि पिंशतु ' अवयवान् विभागशो दर्शनयोग्यान्करोत्विति भावः । २–'सिनीवालि' अन्नवति इति । ३–' पृथुष्टुके ' पृथुर्विस्तीर्णा स्तुका स्तुतिर्यस्यास्तत्सम्बुद्धौ । तद्रूपेण वर्तमाने इत्यर्थः । ४–'सूतवे' प्रसोतुमिसि । ५–'समीङ्गयति'–संचालयति । ६–' एवा ' एवमेव । ७–' सार्गडः ' सार्गलः, अर्गलेन निरोधेन सहितः । ८–'सपरिश्रयः' परिवेष्टनसहितः । ९–तथाऽस्मिन्मन्त्रे इन्द्रशब्दो वायुवाचकः । वायुश्चात्र प्रसूतिकालीयः । १०–सावरं मांसपेशी तया सह ।

जातेऽग्निमुपसमाधाय । ( या ) अङ्कऽ आधाय कᳬंसे पृषदाज्यमानीय पृषदाज्यस्योपघातञ्जुहोत्यस्मिन्त्सहस्रम्पुष्यासमेधमानः स्वे गृहे । अस्योपसन्द्याम्मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा । मयि प्प्राणांस्त्वयि मनसा जुहोमि स्वाहा ॥ २३ ॥

यत्कर्म्मणाऽत्यरीरिचम् । यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्त्स्विष्टᳬं सुहुतङ्करोतु स्वाहेति ॥ २४ ॥

( त्यु ) अथास्यायुष्यङ्करोति । दक्षिणङ्कर्णमभिनिधाय व्वाग्वागिति त्रिरथास्य नामधेयङ्करोति व्वेदोऽसीति तदस्यैतद्गुह्यमेव नाम स्यादथ दधि मधु घृतᳬं सᳬंसृज्यानन्तर्हितेन जातरूपेण प्प्राशयति भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भ्भुवः स्वः सर्व्वन्त्वयि दधामीति ॥ २५ ॥

---

अथ जातकर्म ।

जाते अग्निमुपसमाधाय । अंके आधाय । कंसे पृषदाज्यमानीय । पृषदाज्यस्योपघातं जुहोति-" अस्मिन् सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसन्द्याम्मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा ॥ मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा " ॥ २३ ॥

" यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृत् विद्वान् स्विष्टं सुहुतं करोतु स्वाहा "-इति ॥ २४ ॥

अथायुष्यकरणम् ।

अथास्यायुष्यं करोति-दक्षिणं कर्णमभिनिधाय, वाग्वागिति त्रिः । अथास्य नामधेयं करोति-" वेदोऽसि " इति । तदस्यैतद् गुह्यमेव नाम स्यात् । अथ दधिमधुघृतं संसृज्य, अनन्तर्हितेन जातरूपेण प्राशयति-" भूस्त्वयि दधामि । भुवस्त्वयि दधामि । स्वस्त्वयि दधामि । भूर्भुवः स्वः सर्वं त्वयि दधामि "-इति ॥ २५ ॥

---

अथ जातकर्म । ' जातेऽग्निमुपसमाधाय ' ' अंक आधाय ' ' कंसे पृषदाज्यमानीय ' सन्नीय संयोज्य ' पृषदाज्यस्योपघातं जुहोति ' । " अस्मिन् सहस्रम् " इति । आवापस्थाने ॥ २३ ॥ २४ ॥

' अथास्यायुष्यं करोति ' । ' अथास्य ' ' दक्षिणं कर्णमभिनिधाय ' स्वमुखम् । ' वाग्वागिति त्रिः ' जपेत् । ' अथास्य नामधेयं करोति ' " वेदोऽसि " इति । ' तदस्यैतत् ' ' गुह्यमेव ' गोप्यमेव नाम भवति

---

१-' सहस्रम्पुष्यासम् ' अनेकपोषकः । २-' उपसन्द्यां ' सन्ततौ । ' मा च्छैत्सीत् ' मा विच्छिन्ना भूत् । इति ।

(त्यु) अथैनमभिमृशति । (त्यु) अश्मा भवपरशुर्भव हिरण्यमस्तुतम्भव आत्मा वै पुत्रनामाऽसि स जीव शरदः शतमिति ॥ २६ ॥

( त्यु ) अथास्य मातरमाभिमन्त्रयते । ( तऽइ ) इडाऽसि मैत्रावरुणी व्वीरे व्वीरमजीजनथाः । सा त्वम्वीरवती भव याऽस्मान्वीरवतोऽकरादिति ॥ २७ ॥

( त्यु ) अथैनम्मात्रे प्प्रदाय स्तनम्प्रयच्छति । यस्ते स्तनः शशयो यो

अथैनमभिमृशति-" अश्मा भव परशुर्भव हिरण्यमस्तुतं भव । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् "-इति ॥ २६ ॥

अथास्य मातरमभिमन्त्रयते-" इडाऽसि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरत् "-इति ॥ २७ ॥

अथ स्तन्यप्रदानम् ।

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति-" यस्ते स्तनः शशयो यो मयो भूर्यो रत्नधा

---

" वेदैः " इति । ' अथ दधि मधु घृतं संसृज्य ' सन्नीय ' अनन्तर्हितेन ' वस्त्वन्तराव्यवहितेन ' जातरूपेण ' हिरण्येन ' प्राशयति ' " भूस्त्वयि दधामि " इत्येतैर्मन्त्रैः प्रत्येकम् ॥ २५ ॥

'अथैनमभिमृशति'-"अश्मा भव" इत्यादिना । हे पुत्र ! 'अश्मा भव' पाषाणवत्स्थिरो भवेत्यर्थः । 'परशुर्भव' यथा अयःस्पृगच्छं यं स्पृशति तस्य सुवर्णत्वं करोति, तथा त्वमपि यं स्पृशसि करेण मस्तके तस्य सुवर्णत्वं सुब्रह्मण्यं कर्तुं समर्थो भवेत्यर्थः । किं च ' हिरण्यमस्तुतं भव ' अक्षयं सुवर्णं परमात्मरूपं वित्तं भवेत्यर्थः । तदेवोक्तं-" नादिर्नान्तो न मध्यं वा यस्य वित्तस्य विद्यते । भोगे न च क्षयं याति तदेव वसु दीयताम् "-( ) इति । तदेव स्फुटयति-"आत्मा वै पुत्रनामासि स जीव शरदः शतम्"-व्यवहारत इति ॥२६॥

' अथास्य मातरमभिमन्त्रयते '-" इडाऽसि " इत्यनेन मन्त्रेण ॥ २७ ॥

' अथैनं मात्रे प्रदाय ' स्वांकस्थम् । ' स्तनम्प्रयच्छति '-" यस्ते स्तनः " इत्यादिमंत्रेण ॥ २८ ॥

---

१-' इडा ' भोग्या, यद्वा पृथिवी, यद्वा इडानाम्नी पात्री इति ।

२-' मैत्रावरुणी ' मैत्रावरुणो वसिष्ठस्तस्य भार्या अरुन्धती, यद्वा मैत्रावरुणर्त्विग्विषयिणी, यद्वा मित्रावरुणयोरुत्पन्ना इति ।

३-' शशयः ' शशयानः तव देहे वर्तमानोऽन्यैरनुपभुक्तः सुप्त इवास्ते इति शेषः । इति द्विवेदगंगः । अथवा ' शशयः ' इत्यत्र प्रथमशकारस्थाने ' स ' इत्यक्षरव्यत्यासं कृत्वा शयः कर्मफलं शेतेऽस्मिन्कर्तोति व्युत्पत्तेस्तेन सह वर्तत इति सशयः । यद्वा शं सुखं तस्य हेतुभूतं शयः स्थितिः स्थानं स्तनोत्थानदेशरूपं यस्य स्तनस्य स शशयः । इति मिताक्षरायां नित्यानन्दाश्रम मुनिः । ' शशयः ' " शीङ् स्वप्ने " । सुप्त इवास्ते अनुपभुक्तोऽन्यैः । इत्युवटः । ' शशयः ' शेते इति 'शशयः । अच्प्रत्यये द्वित्वं पूर्वस्यात्वं च छान्दसम् । सुप्त इवास्तेऽन्यैरनुपभुक्तत्वात् । "यस्ते स्तनो निहितो गुहायां " ( श. प. १४ । २ । १ । १५ ) इति श्रुतेः । इति महीधरः ॥

४-' वेदः ' अनुभवः सर्वस्य निजं स्वरूपं परमात्मलक्षणम् । इति द्विवेदगंगो व्याचख्यौ ॥

५-अस्मिन्पुत्रमन्थकर्माणि प्रायशो मंत्रा उत्तानार्था इति मत्वा भाष्यकारैर्न व्याख्याताः । । अतस्तन्मंत्रार्थसुलभत्वार्थं प्रायो मंत्रगतविषमपदेषु द्विवेदगंगनित्यानन्दाश्रममुनिभ्यां कृतभाष्यतस्तावन्तं तावन्तमंशमुद्धृत्य स्फुटतरमर्थप्रदर्शनं कृतमिति ॥

मयोभूर्य्यो रत्नधा व्वसुविद्यः सुदत्रः । येन व्विश्वा पुष्यसि व्वार्य्याणि सरस्वति तमिह धातवेऽकरिति ॥ २८ ॥

तम्वाऽ एतमाहुः । ( र ) अतिपिता बताभूरतिपितामहो बताभूः । परमाम्बत काष्ठाम्प्राप श्रिया यशसा ब्रह्मवर्च्चसेन यऽ एवम्विदो ब्राह्मणस्य पुत्रो जायते ॥ २९ ॥

( तेऽथ ) अथ व्वꣳशः । ( स्तु ) तदिदम्वयम्भारद्वाजीपुत्राद्भारद्वाजीपुत्रो व्वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्ण्णीपुत्राद्धारिकर्ण्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ॥३०॥

---

वसुवित्[1] यः सुदत्रः[2] । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः"–( वा० सं० ३८ । ५ ) इति ॥ २८ ॥

तं वा एतमाहुः । अतिपिता बताभूरतिपितामहो बताभूः । परमां बत काष्ठां प्राप श्रिया यशसा ब्रह्मवर्चसेन । यः एवंविदो ब्राह्मणस्य पुत्रो जायते ॥ २९ ॥

अथ स्त्रीप्रधानो विद्यावंशः ।

अथ वंशः । तदिदम् १ वयं भारद्वाजीपुत्रात् । २ भारद्वाजीपुत्रो वात्सीमांडवीपुत्रात् । ३ वात्सीमांडवीपुत्रः पाराशरीपुत्रात् । ४ पाराशरीपुत्रो गार्गीपुत्रात् । ५ गार्गीपुत्रः पाराशरी-

---

तं वा एतमाहुरिति । अनेन विधिना[3] मन्त्रवद्गर्भाधानजातकर्मादिना जातः संस्कृतश्च पुत्रः पितरं पितामहं वा अतिशेते । 'बतेति' विस्मये । 'श्रिया यशसा ब्रह्मवर्चसेन' च 'परमां काष्ठां' निष्ठां 'प्राप' इत्येवं स्तुत्यो भवतीत्यर्थः । यस्य च 'एवंविदो ब्राह्मणस्य पुत्रो जायते' । स चैवं स्तुत्यो भवतीत्यध्याहारः । इति ॥ २९ ॥

अथानंतरं समस्तप्रवचनवंशः स्त्रीप्राधान्यात् गुणवान् पुत्रो भवतीति प्रस्तुतम् । अतः स्त्रीविशेषणेनैव[4] पुत्र-

---

१–'वसुवित्' वसु कर्मफलं तद्विन्दन्तीति वसुवित् इति ॥

२–'सुदत्रः' सुष्ठु ददातीति सुदत्रः कल्याणद इति ॥

३–असौ उपनिषदुक्तो जातकर्मनामकर्मणोर्विधिः यथोक्तप्राणविद्याविदः कृतश्रीमन्थस्य पुत्रमन्थमनुतिष्ठत एवेत्यवसीयत प्रकरणप्राबल्यात् । पारस्करगृह्योक्तस्तु–अनैतादृशः सामान्येन सर्वस्य द्विजातेरित्यवसेयः प्रकरणपार्थक्यात् । इत्येवमुभयत्राधिकारिभेदोऽवगम्यतामिति ॥

४–पुत्रमन्थकर्मणः स्त्रीसंस्कारार्थत्वेनोक्तत्वात्तत्सन्निधानादयं वंशः स्त्रीप्राधान्येनोच्यते । इति द्विवेदगंगो व्याचख्यौ ॥

काश्यपीबालाक्यामाठरीपुत्रात् ।(त्कु)काश्यपीबालाक्यामाठरीपुत्रः कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रः शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्रऽआत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्क्कारुणीपुत्राद्वार्क्कारुणीपुत्रऽआर्त्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्रः ॥ ३१ ॥

(ऽ)आलम्बीपुत्रात् । (दा)आलम्बीपुत्रऽआलम्बायनीपुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्याङ्क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥ ३२ ॥

---

कौंडिनीपुत्रात् । ६ पाराशरीकौंडिनीपुत्रो गार्गीपुत्रात् । ७ गार्गीपुत्रो गार्गीपुत्रात् । ८ गार्गीपुत्रो बाडेयीपुत्रात् । ९ बाडेयीपुत्रो मौषिकीपुत्रात् । १० मौषिकीपुत्रो हारिकर्णीपुत्रात् । ११ हारिकर्णीपुत्रो भारद्वाजीपुत्रात् । १२ भारद्वाजीपुत्रः पैंगीपुत्रात् । १३ पैंगीपुत्रः शौनकीपुत्रात् । १४ शौनकीपुत्रः–॥ ३० ॥

काश्यपीबालाक्यामाठरीपुत्रात् । १५ काश्यपीबालाक्यामाठरीपुत्रः कौत्सीपुत्रात् । १६ कौत्सीपुत्रो बौधीपुत्रात् । १७ बौधीपुत्रः शालंकायनीपुत्रात् । १८ शालंकायनीपुत्रो वार्षगणीपुत्रात् । १९ वार्षगणीपुत्रो गौतमीपुत्रात् । २० गौतमीपुत्र आत्रेयीपुत्रात् । २१ आत्रेयीपुत्रो गौतमीपुत्रात् । २२ गौतमीपुत्रो वात्सीपुत्रात् । २३ वात्सीपुत्रो भारद्वाजीपुत्रात् । २४ भारद्वाजीपुत्रः पाराशरीपुत्रात् । २५ पाराशरीपुत्रो वार्कारुणीपुत्रात् । २६ वार्कारुणीपुत्र आर्तभागीपुत्रात् । २७ आर्तभागीपुत्रः शौंगीपुत्रात् । २८ शौंगीपुत्रः सांकृतीपुत्रात् । २९ सांकृतीपुत्रः-॥ ३१ ॥

आलंबीपुत्रात् । ३० आलंबीपुत्र आलंबायनीपुत्रात् । ३१ आलंबायनीपुत्रो जायंतीपुत्रात् । ३२ जायंतीपुत्रो मांडूकायनीपुत्रात् । ३३ मांडूकायनीपुत्रो मांडूकीपुत्रात् ।

---

विशेषणात् आचार्यपरंपरा कीर्त्यते । आदित्यमारभ्य यावद्भारद्वाजीपुत्रः तावदधोमुखो नियताचार्यपर्वक्रमः 'वंशः' समस्तस्यैव प्रवचनस्य न त्वेकस्य खिलकाण्डस्य । तस्य च सर्ववेदशेषत्वावधारणात् । आदित्याल्लब्धा-

प्राश्नीपुत्रादासुरिवासिनः । प्राश्नीपुत्रऽआसुरायणादासुरायणऽ आसुरे-रासुरिर्य्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादुद्दालकोऽरुणादरुणऽ उपवेशे-रुपवेशिः कुश्रेः कुश्रिर्व्वाजश्रवसो व्वाजश्रवा जिह्वावतो बाध्योगा-ज्जिह्वावान्बाध्योगोऽसितार्द्वार्षगणादसितो व्वार्षगणो हरितात्कश्यपाद्ध-रितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्व्वाचो व्वागम्भिण्याऽअम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूᳫँषि व्वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३३ ॥

इति चतुर्दशे काण्डे सप्तमे प्रपाठके बृहदारण्यकोपनिषदि पञ्चमे प्रपाठके पञ्चमं ब्राह्मणम् ॥ १४ ( ७ ) ५ । ५ ॥ ( ९ ) ६-४ ॥

आदितो नवमोऽध्यायः सप्तमप्रपाठकश्च बृहदारण्यकोपनिषदि तु षष्ठोऽध्यायः पञ्चमः प्रपाठकश्च समाप्तः ॥

प्रपाठके कण्डिकासंख्या ॥ १०१ ॥ अध्याये कण्डिकासंख्या ॥ ८९ ॥

इति बृहदारण्यकोपनिषद्यध्यायद्वयात्मकमन्तिमं खिलकाण्डं समाप्तम् ।
इति षडध्यायी बृहदारण्यकोपनिषत्समाप्ता ॥

---

३४ मांडूकीपुत्रः शांडिलीपुत्रात् । ३५ शांडिलीपुत्रो राथीतरीपुत्रात् । ३६ राथीतरीपुत्रः क्रौंचिकीपुत्राभ्याम् । ३७ क्रौंचिकीपुत्रौ बैदभृतीपुत्रात् । ३८ बैदभृतीपुत्रो भालुकीपुत्रात् । ३९ भालुकीपुत्रः प्राचीनयोगीपुत्रात् । ४० प्राचीनयोगीपुत्रः सांजीवीपुत्रात् । ४१ सांजीवी-पुत्रः कार्शकेयीपुत्रात् । ४२ कार्शकेयीपुत्रः ॥ ३२ ॥

प्राश्नीपुत्रादासुरिवासिनः ४३ प्राश्नीपुत्र आसुरायणात् । ४४ आसुरायण आसुरेः । ४५ आसुरिर्याज्ञवल्क्यात् । ४६ याज्ञवल्क्य उद्दालकात् । ४७ उद्दालकोऽरुणात् । ४८ अरुण उपवेशेः । ४९ उपवेशिः कुश्रेः । ५० कुश्रिर्वाजश्रवसः । ५१ वाजश्रवा जिह्वावतो बाध्योगात् । ५२ जिह्वावान् बाध्योगोऽसितार्द्वार्षगणात् । ५३ असितो वार्षगणो हरितात् कश्यपात् ।

---

न्यादित्यानि । तानीमानि 'शुक्लानि' अव्यामिश्राणि ब्राह्मणेन । अथवा यानि 'इमानि यजूंषि' तानीमानि 'शुक्लानि' शुद्धानि 'वाजसनेयेन याज्ञवल्क्येन आख्यायन्ते' प्रवचनविषयीक्रियन्ते इति ॥ ३०-३३ ॥

---

* अस्मिंश्चतुर्दशे काण्डे बृहदारण्यकोपनिषदि यद्यपि श्रीसायणाचार्यकृतं भाष्यं नास्ति तथापि आदित आरभ्य औपनिषदं शतपथब्राह्मणे भूयस्त्वेन श्रीसायणाचार्यकृतं भाष्यमेवास्तेऽतः सर्वेषु विषमपृष्ठेषु एष एव शिरोलेखश्छत्रिन्यायेन स्थापित इति ॥

१-"आख्या प्रवचनसंयोगात्" ( जै. सू. १ । १ । ८ । २८ ) इति जैमिन्याचार्योदितराद्धांतात् । इति गम्यते ॥

५४ हरितः कश्यपः शिल्पात्कश्यपात् । ५५ शिल्पः कश्यपः कश्यपान्नैध्रुवेः । ५६ कश्यपो नैध्रुविर्वाचः । ५७ वागंभिण्याः । ५८ अंभिण्यादित्यात् । आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायंते ॥ ३३ ॥

---

दृष्टिमात्रं भवेद्दृश्यं कैवल्यं तत्परं पदम् । वेदान्तसारसर्वस्वं स्वसंवेद्यं शिवोदितम् ॥ १ ॥
अहं ब्रह्मेत्येतन्मननमपि विप्लाव्य सहसा समाध्यन्तं सर्वं स्वयमपि गिलत्युद्भटतया ।
परानन्दः कोऽपि प्रकटपदभूम्येकविजयी परस्तुर्यातीतो जयति हि विवेकानवसरः ॥ २ ॥ इति ॥

इति श्रीहृषीकेशब्रह्मभगवत्पूज्यपादशिष्यस्य श्रीपाठकानिरुद्धपुत्रस्य परमहंसपरिव्राजकाचार्यस्य श्रीवासुदेवब्रह्मभगवतः कृतौ माध्यंदिनीयशतपथब्राह्मणान्तर्गतमाध्यन्दिनशाखोपनिषद्बृहदारण्यकटीकायां वासुदेवप्रकाशिकायां तृतीये खिलकाण्डे षष्ठेऽध्याये चतुर्थं पुत्रमन्थकर्मब्राह्मणं परिसमाप्तम् ॥ १४ । ( ९ ) ६ । ४ ॥

**इति बृहदारण्यकोपनिषदन्तिमं खिलकाण्डं परिसमाप्तम् ॥ १४ । ३ ॥**

---

**माध्यन्दिनशतपथब्राह्मणे–**

| काण्डानि. | अध्यायाः | प्रपाठकाः | ब्राह्मणानि | कण्डिकाः |
|---|---|---|---|---|
| १ | ९ | ७ | ३७ | ८३७ |
| २ | ६ | ५ | २४ | ५४९ |
| ३ | ९ | ७ | ३७ | ८५९ |
| ४ | ६ | ५ | ३९ | ६४८ |
| ५ | ५ | ४ | २५ | ४७१ |
| ६ | ८ | ५ | २७ | ५३० |
| ७ | ५ | ४ | १२ | ३९८ |
| ८ | ७ | ४ | २७ | ४३७ |
| ९ | ५ | ४ | १५ | ४०२ |
| १० | ६ | ४ | ३१ | ३६९ |
| ११ | ८ | ४ | ४२ | ४३७ |
| १२ | ९ | ४ | २९ | ४५९ |
| १३ | ८ | ४ | ४३ | ४३२ |
| १४ | ९ | ७ | ५० | ७९६ |
| १४ | १०० | ६८ | ४३८ | ७६२४ |
| | श्लोकसंख्या– | २४००० | अक्षरसंख्या– | ७६८००० |

**इति चतुर्दशकाण्डात्मकं माध्यन्दिनीयशतपथब्राह्मणं सभाष्यं समाप्तम् ॥**

## अथास्या बृहदारण्यकोपनिषदः स्वाध्यायप्रवचनादौ पठ्यमाना शान्तिः ।

### आदौ—

ॐ नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥ १ ॥
श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं त्रोटकं वार्तिककारमन्यानस्मद्गुरून्सन्ततमानतोऽस्मि ॥ २ ॥
श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शंकरं लोकशंकरम् ॥ ३ ॥
ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ १ ॥
[ श. प. १४ ( बृ. उ.) ९ । १ । १ ]

ॐ शान्तिः शान्तिः शान्तिः ।

---

### अन्ते—

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ १ ॥
[ श. प. १४ ( बृ. उ. ) ९–१–१ ]

ॐ शान्तिः शान्तिः शान्तिः ।

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम् ॥ १ ॥
श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शंकरं लोकशंकरम् ॥ २ ॥
शंकरं शंकराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥ ३ ॥
गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥ ४ ॥
आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम् ।
योगीन्द्रमीड्यं भवरोगवैद्यमस्मद्गुरुं सन्ततमानतोऽस्मि ॥ ५ ॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो महद्भ्यो नमो गुरुभ्यः ।
ॐ सर्वोपप्लवरहितः प्रज्ञानघनः, प्रत्यगर्थो ब्रह्मैवाहमस्मि ब्रह्मैवाहमस्मि, ॐ ।

इति बृहदारण्यकोपनिषच्छान्तिः ।

# अथ माध्यन्दिनीयशतपथब्राह्मणस्य स्वाध्यायप्रवचनान्ते पठ्यमानं स्वाध्यायानिराकरणम् ।

अथातोऽधीत्याधीत्यानिराकरणम् ।

ॐ प्रतीकं मे विचक्षणं जिह्वा मे मधु यद्वचः ।
कर्णाभ्यां भूरि शुश्रुवे मा त्वा हार्षीः श्रुतम्मयि ॥

ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश वाचा त्वा पिदधामि वाचा त्वा पिदधामि [ तिष्ठ प्रतिष्ठ ] ॥

स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु । आप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुः श्रोत्रं यशो बलम् । यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥ १ ॥

[ पार. गृ. सू. ३ । १६ । १ ॥ ]

इति ।

॥ श्रीशः शरणम् ॥

अथ श्रीमन्महर्षिकात्यायनप्रणीतं

म. म. पं. नित्यानन्दपर्वतीयकृतव्याख्यासहितं

# प्रतिज्ञासूत्रं प्रारभ्यते ।

## प्रथमा कण्डिका ।

अथ संक्षेपेण प्रतिज्ञासूत्रं व्याख्यायते—

### अथ प्रतिज्ञा ॥ १ ॥

अथ—श्रौतस्मार्तसूत्रकथनानन्तरं प्रातिशाख्यसूत्रकथनानन्तरं च प्रतिज्ञा व्यवहारजन्यज्ञानविषयोऽर्थः विधास्यत इतिं सूत्रशेषः ॥ १ ॥

स्वरसंस्कारयोश्छंदसि नियमात्तज्ज्ञानार्थं लक्षणमाह—

### मन्त्रब्राह्मणयोर्वेदनामधेयम् ॥ २ ॥

मन्त्रश्च—**इषे त्वा** ( वा. सं. १।१ ) इत्यादिः । ब्राह्मणं च **व्रतमुपैष्यन्** ( मा. श. प. १।१।१।१ ) इत्यादि । तयोर्वेदसंज्ञा भवतीत्यर्थः ॥ २ ॥

### तस्मिञ्छुक्के याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया ॥ ३ ॥

तस्मिन्नेतावन्मात्रोक्तौ अन्यशाखायामतिप्रसंगः स्यादत आह—**शुक्ल** इत्यादि । कृष्णयजुषो व्यावृत्त्यर्थं शुक्लग्रहणम् । यजुर्वेदोक्तानामृचामपि वक्ष्यमाणस्वरसंस्कारसिद्ध्यर्थं आम्नायपदोपादानम् । अन्यथा यजुर्लक्षणाक्रान्तानामनियतपरिमाणानामेव **इषे त्वा** इत्यादिमन्त्राणामेव ग्रहणंस्यात् । न तु पादसंबद्धानां **अग्निर्मूर्द्धा** ( वा.सं. ३।१२ ) इत्यादीनाम् । कण्वशाखाव्यावृत्त्यर्थमाह—**माध्यन्दिनीयक** इति । कण्वशाखा हि न माध्यन्दिनमुनिप्रोक्तेति न तत्रातिप्रसंगः । " ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ "—( प्रति. सू. १।८ ) इत्यनेन ब्राह्मणे विशेषरूपेण स्वरस्य वक्ष्यमाणत्वान्मन्त्रे इति । स्वरप्रक्रिया स्वराणामुदात्तादीनां प्रकिया प्रयोगः कथ्यते इति सूत्रशेषः ॥ ३ ॥

स्थानस्याभ्यर्हितत्वेनानुदात्ताधिकरणं पूर्वमाह—

### हृद्यनुदात्तः ॥ ४ ॥

" उच्चैरुदात्तः " ( प्राति. सू. ) इत्यादिभिर्लक्षणोक्तौ "हस्तेन ते" ( प्राति. सू. .... ) इत्यनेन प्रदर्शनोक्तावपि हृदयाद्यङ्गविशेषे स्वरप्रदर्शनार्थं पुनरारंभः । हृदीति सामीप्ये सप्तमी । हृदयसमीपे हस्तेनानुदात्तः स्वरः प्रदर्शनीयः । अनुदात्तोच्चारणवेलायां हृदयसमीपे हस्तस्थापनं कर्तव्यमिति यावत् । यद्यपि प्रातिशाख्ये " हस्तेन ते "—( प्रा. सू. .... ) इति सामान्येनोक्तं तथापि स दक्षिण एव ग्राह्यः । " दिशामनुक्तौ प्राची स्यात्तथा हस्तस्तु दक्षिणः;" इति परिभाषणात् ॥ ४ ॥

---

१–इदं च प्रतिज्ञासूत्रं कातीयाष्टादशपरिशिष्टांतर्गततृतीयपरिशिष्टभूतप्रतिज्ञापरिशिष्टसूत्राद् " अथातः प्रतिज्ञा गोत्रचरणप्रच्छायां वक्ष्यते " इत्यस्माद्भिन्नं तथा कातीयाष्टादशपरिशिष्टाद्बहिर्भूतं प्रातिशाख्यसूत्रपरिशेषभूतमिति मंतव्यम् ॥

## मूर्ध्न्युदात्तः ॥ ५ ॥

मूर्ध्नि मुखप्रदेशे उदात्तः प्रदर्शनीयः । मुखस्यापि मस्तकावयवत्वेन प्रसिद्धेः । निष्कृष्टार्थः पूर्ववत् ॥ ५ ॥

## श्रुतिमूले स्वरितः ॥ ६ ॥

दक्षिणकर्णमूले स्वरितः प्रदर्शनीय इत्यर्थः । क्रमेणैषामुदाहरणानि **वायवं स्थ**–( वा. सं. १ । १ ) इत्यत्र पूर्ववकारोत्तरवर्त्याकारोऽनुदात्तः, यकारोत्तराकार उदात्तः, उत्तरवकारोत्तराकारः स्वरितः इति ॥ ६ ॥

## एवं जात्यादयोऽभिहिताः ॥ ७ ॥

यथा प्रचयस्य स्वरितभेदस्य प्रातिशाख्येऽभिधानम् । एवं जात्यादयोऽपि स्वरितभेदास्तत्रैवाभिहिताः उक्ताः । अतोऽत्र नोच्यंते इति भावः ॥ ७ ॥

## ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ ॥ ८ ॥

ब्राह्मणे पूर्वोक्ते **व्रतमुपैष्यन्** इत्यादिभागे तु उदात्तानुदात्तौ भाषिकलक्षणलक्षितौ, स्वरावेव स्वारौ । स्वार्थेऽणू, तेन स्वरितस्य व्यावृत्तिः । हृदि मूर्ध्नि च भवत इत्यनुवृत्त्या लभ्यते ॥ ८ ॥

## तानस्वराणि छन्दोवत्सूत्राणि ॥ ९ ॥

### इति प्रथमा कण्डिका समाप्ता । [ १ ]

सूत्राणि कल्पाः " अथातोऽधिकारः "–( का. श्रौ. सू. १।१ ) इत्यादयः । शृंगग्राहिकान्यायेनान्यान्यपि शिक्षादीनि वेदांगानि छंदोवच्छन्दसा तुल्यानि भवंति स्वरसंस्कारनियमे इति सूत्रशेषः । उदात्तादिस्वराबाधनार्थं तानस्वराणीति । तान एकश्रुतिः स्वरो येषां तानि । तथा च तत्र नोदात्तादिप्रवृत्तिरिति भावः ॥ ९ ॥ [ १ ]

---

### अथ द्वितीया कण्डिका ।

## अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य, संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण चाविशेषणादिमध्यावसानेषूच्चारणे जकारोच्चारणम् ॥ १ ॥

अथ स्वरूपनिरूपणानन्तरं संस्कारप्रक्रिया उच्यत इति–सूत्रशेषः । अन्तस्थानां य–र–ल–वानामाद्यस्य यकारस्य पदादौ विद्यमानस्य जकारोच्चारणमित्युत्तरेणान्वयः कर्तव्यम् इति शेषः । यथा **युञ्जानः प्रथमम्**–( वा. सं. ११ । १ ) इत्यादौ । पदादिस्थस्येत्युक्त्या **धियः** ( वा. सं. ११ । १ ) इत्यादौ नातिप्रसंगः । **तस्माद्यज्ञात्** ( वा. सं. ३१ । ६ । ७ ) इत्यादावतिप्रसंगवारणायाह–अन्येति । अन्येन हला असंयुक्तस्य संयोगमप्राप्तस्येत्यर्थः । **घृताचीर्यन्तु हर्यत** ( वा. सं. ३ । ४ ) इत्यादौ पदादिस्थत्वाभावाज्जकारोच्चारणं न स्यादतस्तत्पुनर्विशिनष्टि–संयुक्तस्यापीति । रेफो रकारः, ऊष्मणामन्त्यो हकारः, ताभ्यां

---

१–मंत्रेऽपि प्रयोगकाले कतिचित्स्थलवर्जं तानस्वरोऽभिलष्यते तत्सिद्धांतीकृत्य प्रत्यपादि कात्यायनेन " तानो वा नित्यत्वात्, एकश्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम्" (का. श्रौ. सू. १।१९३–१९४) इति बोध्यम्॥

२–अस्मिन्सूत्रे सर्वत्र स्वरसंस्कारनियमानां प्रयोगप्रदर्शनाय यानि यानि मन्त्रगतपदजातानि उदाहरणतयोद्धृतानि तानि प्रायः सर्वाणि ब्राह्मणेऽपि विद्यन्ते इति मत्वैव ब्राह्मणोदाहरणानि पृथङ्नोद्धृतानि विस्तरभिया व्याख्याकाद्भिरिति ध्येयम् । तेनैतान्येवोदाहरणानि शतपथब्राह्मणे तत्तत्स्थलमुद्धृत्य विलोकनीयानि ॥

युक्तस्यापि जकारोच्चारणम् । तथा च पूर्वोदाहरणेऽपि तत्सिद्धिः । अत्राप्यविशेषेणादिमध्यावसानेष्विति सम्बध्यते । तेन **घृताचीर्य्यन्तु हर्य्यत** (वा. सं. ३ । ४) **सूर्य्यं बडा** (वा. सं. ३३ । ३९) इत्यादिषु सर्वत्र जकारोच्चारणं भवति । **कृणुह्यध्वरं नः**–(वा. सं. २९ । २६) **गेह्याय चं** (वा. सं. १६ । ४४) **मह्यं वेदो भूयाः** (वा. सं. २ । २१) इत्यादीनि हकारयोगोदाहरणानि ज्ञेयानि । 'अन्यहलसंयुक्तस्य' इति काकाक्षिगोलकन्यायेनात्रापि सम्बध्यते । तेन **अग्निर्ज्योतिः** (वा. सं. ३ । ९) इत्यादौ नातिप्रसंगः । ऋकारेण संयुक्तस्यापि जकारोच्चारणमविशेषेण । अत्रान्यहलसंयुक्तस्य इति न सम्बध्यते । रेफोष्मान्त्याभ्यां पृथक्पाठसामर्थ्यात् । तेन **सद्योऽस्यृतस्य** (वा. सं. ९ । ३३ ।) इत्यत्र सकारयोगेऽपि जकारोच्चारणं सिध्यति ॥ १ ॥

## द्विर्भावेऽप्येवम् ॥ २ ॥

**धाय्या रूपं** (वा. सं. १९ । २४) इत्यादौ जकारोच्चारणसिद्धय इदं सूत्रमिति ॥ २ ॥

## अथापरान्तस्थस्यायुक्तान्यहलः संयुक्तस्योष्मऋकारैरेकारसहितोच्चारणम् ॥ ३ ॥

अथ आद्यान्तस्थादेशकथनानन्तरं अपरान्तस्थस्य रेफस्य अयुक्तो योगमप्राप्तः अन्यहल् यस्मिंस्तादृशस्य ऊष्मभिः ऋकारेण वा युक्तस्य एकारसहितोच्चारणं कर्तव्यमिति शेषः पूर्ववत् । यथा **विश्वदर्शतम्** (वा. सं. १२ । १११) इत्यत्र "दरेशतम्" इति पाठः, न तु रेफमात्रघटितः । एवं **वर्षे वर्षीयसि** (वा. सं. ६ । ११) **बर्हिरसि** (वा. सं. २ । १) इत्यादावपि बोध्यम् । **वर्ष्याय च** (वा. सं. १६ । ३८) **यज्ञपतिर्ह्वार्षीत्** (वा. सं. १ । २) इत्यादावन्यहलो यकारस्य वकारस्य वा संयोगान्न एकारसहितोच्चारणम् ॥ ३ ॥

## एवं तृतीयान्तस्थस्य क्वचित् ॥ ४ ॥

तृतीयान्तस्थस्य लकारस्यापि क्वचिल्लक्ष्यानुरोधेन एकारसहितोच्चारणम् । यथा **शतवल्शा विरोहतात्** (वा. सं. १२ । १००) इत्यादौ "शतवलेशाः" इति एकारसहितः पाठः ॥ ४ ॥

## ऋकारस्य तु संयुक्तासंयुक्तस्याविशेषेण सर्वत्रैवम् ॥ ५ ॥

एकारसहितोच्चारणादेशप्रसंगादिदं संयुक्तासंयुक्तस्य अविशेषेण सर्वत्र आदिमध्यावसानेषु एकारसहितोच्चारणम् । **ऋताषाट्** (वा. सं. १८ । ३८) **सृज प्रशस्तदर्शतम्** (वा. सं. ११ । ३७) **कृणुहि** (वा. सं. ३ । २८) **सामान्यृग्भिः** (वा. सं. २० । १२) इत्यादीन्युदाहरणानि बोध्यानि ॥ ५ ॥

## अथान्त्यस्यान्तस्थानां पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणम् ॥ ६ ॥

अथ तृतीयान्तस्थादेशकथनानन्तरं अन्तस्थानामन्त्यस्य वकारस्य त्रिविधं त्रिप्रकारं गुरुमध्यमलघुवृत्तिभिरुच्चारणं कर्तव्यमित्युच्यते । एतच्च पदादिक्रमेण ज्ञेयम् । तदुक्तमन्यत्र–" वकारस्त्रिविधो ज्ञेयो गुरुर्लघुर्लघूत्तरः ।

आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूत्तरः " ( कैशवीयपरिभाषांकसूत्रीये ) इति । यथा **वायवं स्थ देवो वः सविता** ( वा. सं. १।१ ) इत्यादि ॥ ६ ॥

**अथो मूर्द्धन्योष्मणोऽसंयुक्तस्य टुमृते संयुक्तस्य च खकारोच्चारणम् ॥ ७ ॥**

अथो अन्तस्थादेशकथनानन्तरं मूर्धन्यस्योष्मणः षकारस्यासंयुक्तस्य टुं टवर्गं ऋते विना संयुक्तस्य च खकारोच्चारणं कर्तव्यमित्युपदिश्यते । यथा **सहस्रशीर्षा पुरुषः**-( वा. सं. ३१ । १ ) **विमुर्ष्यहस्तं** ( वा. सं. १६।२ ) **शष्प्याय च**- ( वा.सं.१६।४२ ) इत्यादौ । टवर्गयोगे तु **प्रत्युष्टम्**-(वा.सं.१।७) **कृष्णोऽसि**-( वा. सं. २।१ ) **श्रेष्ठतमाय** ( वा. सं. १।१ ) इत्यादौ तु न भवति ॥ ७ ॥

**अध्ययनादिकर्मसु ॥ ८ ॥**

एते पूर्वोक्ताः स्वराः संस्काराश्चाध्ययनादिकर्मस्वेवेति नियम्यते । अध्ययनादीति आदिना यजनयाजनाध्यापनादिपरिग्रहः ॥ ८ ॥

**अर्थवेलायां प्रकृत्या ॥ ९ ॥**

**इति द्वितीया कण्डिका समाप्ता ॥ [ २ ]**

मन्त्रार्थवेलायां तु प्रकृत्या प्रकृतिरूपेणैवोच्चारणम् ॥ ९ ॥ [ २ ]

---

अथ तृतीया कण्डिका ।

**अथानुस्वारस्य ९ँ इत्यादेशः शषसहरेफेषु तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः परसवर्णेषत्प्रकृत्या चान्यत्र ॥ १ ॥**

अथ ऊष्मादेशोपदेशानन्तरं श-ष-स-ह-रेफेषु वर्णेषु परेषु अनुस्वारस्य स्थाने ९ इत्यादेशः । तस्य ९ कारस्य त्रैविध्यं ह्रस्वदीर्घगुरुभेदैः । ह्रस्वादेकमातृकात्परो दीर्घो, दीर्घात् द्विमातृकात्परो ह्रस्वः, गुरौ संयुक्ताक्षरे परे गुरुर्बोध्यः । यद्यपि-दीर्घोऽपि गुरुर्भवति तथापि संयोगे परे ह्रस्वस्यापि गुरुसंज्ञाविधानाद्ध्रस्वात्परस्यापि संयोगे परे गुरुत्वविधानात्ततो विशेषः । यथा **त्रिꣳशद्धाम** ( वा. सं. ३ । ८ ) इत्यादौ ह्रस्वात्परो दीर्घः । **पृथिव्याꣳ शतेन पाशैः** ( वा. सं. १ । २९ ) इत्यादौ दीर्घात्परो ह्रस्वः । **कल्पताꣳ श्रोत्रम्** ( वा. सं. ९ । २१ ) **सोमानꣳ स्वरणम्** ( वा. सं. ३ । २८ ) इत्यादौ संयोगे परे दीर्घाद्ध्रस्वाच्च परो गुरुः । अन्यत्र श ष स-ह-रेफपरत्वाभावे परा अनुस्वारात्परा तत्सवर्णा या ईषत्प्रकृतिस्तयोच्चारणम् । अर्थात्परत्र विद्यमानवर्णवर्गीयपंचमवर्णसदृशमुच्चारणं कर्तव्यमिति फलति ॥ १ ॥

**विसर्गेष्वीषद्विरामः ॥ २ ॥**

विसर्गेषु ' अः ' इत्यादिषु ईषद्विरामः किंचिद्विरम्यते, विसर्गस्य स्पष्टोच्चारणार्थम् । सोऽपीषद्विरामः " दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घः " इत्यनुवृत्त्य तदनुसारेण बोध्यः । यथा **नाकं गृभ्णानाः सुकृतस्य** ( वा. सं. १९ । १० ) **भवतन्नः समनसौ** ( वा. सं. ५ । ३ ) इत्यादौ ॥ २ ॥

**पदाद्यस्यासंयुक्ताकारस्येषद्दीर्घता च भवतीषद्दीर्घता च भवति ॥ ३ ॥**

**इति तृतीया कण्डिका समाप्ता ॥**

पदादौ विद्यमानस्यासंयुक्तस्य व्यञ्जनायुक्तस्य अकारस्येषद्दीर्घता भवति । **अश्मन्नूर्जम्** ( वा.सं. १७।१ ) इत्यत्र शकारात्पूर्वः अकारः ईषद्दीर्घो न भवति, संयुक्तत्वात् । पदादौ विद्यमानस्येत्युक्त्या **गोप॑तौ** ( वा. सं. १ । १ ) इत्यादौ पकारोत्तराकारस्य न दीर्घता । अकारस्येत्युक्त्या च **इरा॑वती धेनु॰** ( वा. सं.५।१६ ) इत्यादौ इकारस्य न दीर्घता । किन्तु **व्वसोः पवित्रम्** ( वा. सं. १ । २ ) इत्यादौ वकारोत्तराकारस्य पकारोत्तराकारस्य च दीर्घता । तथा च तयोः ईषद्दीर्घोच्चारणं यथा भवति तथा पठनीयम् । एवमन्यत्रापि बोध्यम् । अन्ते द्विरभ्यासः परिसमाप्त्यर्थः ॥ ३ ॥

इति श्रीकाशीक्षेत्रवासिमहामहोपाध्यायपण्डितनित्यानन्दपर्वतीयकृतौ कात्यायनीयप्रातिशाख्यपरिशेषभूत-त्रिकण्डिकप्रतिज्ञासूत्रपरिशिष्टस्य संक्षेपार्थसूक्तिरित्याख्या व्याख्या परिसमाप्ता ॥ इति शिवम् ॥

---

१–अस्मिन्सूत्रे प्रदर्शिताः सर्वसाधारणाः स्वरसंस्कारानियमा उभयत्र मंत्रे ब्राह्मणे चोपयोक्तव्याः । उपक्रमे " मंत्रब्राह्मणयोर्वेदनामधेयम् " इति प्रतिज्ञातत्वात्तथा मध्येऽपि तत्र तत्र मंत्रब्राह्मणे अधिकृत्य विधानदर्शनाच्च । विशेषनियमास्तु प्रातिशाख्ये भाषिकसूत्रे स्वरांकुशे याज्ञवल्क्यशिक्षादौ च द्रष्टव्याः ॥

# अथ त्रिकण्डिकभाषिकसूत्रोक्तविषयानां अनुक्रमणिका ।

## प्रथमकण्डिकायां विषयाः ।

सूत्रांकाः

१—ब्राह्मणस्वरसंस्कारनियमप्रतिज्ञाकरणम्

२—ब्राह्मणे स्वरसंख्याप्रदर्शनम्

३—ब्राह्मणस्वरविधायकभाषिकसूत्रस्यावश्यकतानिरूपणम्

४—मन्त्रस्वरलक्षणसिद्धस्वरमनूद्य ब्राह्मणस्वरलक्षणनिरूपणम्

५—भाषिकसंज्ञालक्षणकथनम्

६—तस्यैव निरूपणम्

७—आ, प्र, इत्यन्यतरोपसर्गपूर्वकः आख्यातपरश्च य उदात्तानुदात्तसन्धिः स न भाषिक इति निरूपणम्

८—आ, प्र, उपसर्गपूर्वकः अनाख्यातपरः समासो न भाषिक इति कथनम्

९—यस्य सन्धेः पूर्वं ह्रस्वः अकारः सः अपूर्वः समाससंधिर्न भाषिक इति निरूपणम्

१०—जात्याभिनिहितक्षैप्रप्रश्लिष्टाश्चेति चतुर्णां स्वरितानां भाषिकसंज्ञाविधानम्

११—उतो, यो, मो, नो, सो, एतेषां पंचानां ओकाराणां भाषिकसंज्ञाविधानम्

१२—केवलस्य ओकारस्य शाखांतरव्यवस्थया भाषिकसंज्ञाविधानम्

१३—भाषिकस्योदात्तस्वरो भवतीत्युदात्तस्वरकथनम्

१४—मन्त्रे स्वरितानुदात्तयोः शतपथे उदात्तस्वरो भवतीत्युदात्तस्वरविधानम्

१५—मन्त्रे यदनन्त्यमेकमुदात्तं तच्छतपथे अनुदात्तं भवतीति अनन्त्यस्यैकस्यैवौदात्तस्य अनुदात्तस्वरत्वविधानम्

१६—द्वयोर्बहूनां वा उदात्तानामेकत्र संयुक्तानां पौर्वापर्येणावस्थितानां मध्ये यदन्त्यमुदात्तं मन्त्रे, तच्छतपथे अनुदात्तं भवति । पूर्वेषामुदात्तानां स्वरविशेषानुपदेशान्मंत्रस्वर एव । इत्येवमनुदात्तस्वरनिरूपणम्

१७—प्रागुक्तलक्षणे भाषिकस्वरे परे सति उभयेषामुदात्तानामनुदात्तानां चानुदात्तस्वरत्वकथनम्

१८—प्रागुक्तलक्षणे भाषिकस्वरे परे सति स्वरितस्यानुदात्तस्वरत्वविधानम्

१९—भाषिकस्वरितस्वरस्याभिनिघातः स्यात् । एवमभिनिघातेऽपि सति स्वरितत्वम् । इत्यभिनिहितस्वरितस्य भाषिकसंज्ञाविधानम्

२०—प्रागुक्तानां बहूनां पौर्वापर्येणावस्थितानां उत्तमात्पूर्वेषां अनंतराणां जात्यंतरेण व्यवहितानामनुदात्तानां कंपनत्वविधानम्

२१—उदात्तपूर्वस्यानुदात्तस्य प्रागुक्तलक्षणे भाषिके परे कम्पनत्वप्रकथनम्

२२—उदात्तपूर्वस्य स्वरितस्य प्रागुक्तलक्षणे भाषिके परे कंपनत्वप्रकथनम्

२३—अन्त्यस्योदात्तस्य अनुदात्तो भवतीति एकेषां मतनिरूपणम्

## द्वितीयकण्डिकयां विषयाः ।

१—ब्राह्मणाम्नायनिवृत्त्यर्थकं मन्त्रसमाम्नायांतरज्ञापनार्थकं सूत्रम्

२–१७ "अर्थादिः" इति सूत्रमारभ्य–"अनुबंधः" इत्येतत्सूत्रपर्यन्ता षोडशसूत्री ह्यादिपदेभ्यः परस्याख्यातस्य अनुदात्तस्वरविधायिका, इति निरूपणम्

१८–षोडशसूत्र्यां "हि" एतत्सूत्रोपक्रमा पंचदशसूत्री तत्तत्स्वपदादारभ्य आषोडशादक्षरात्परस्याख्यातस्यानुदात्तस्वरविधायिकेति निरूपणम्

१९–आपञ्चविंशादक्षरात्परस्याख्यातस्यानुदात्तस्वरत्वमिति भारद्वाजमतप्रदर्शनम्

२०–आद्वात्रिंशादक्षरात्परस्याख्यातस्यानुदात्तस्वरत्वमिति, औपशिविमतप्रदर्शनम्

२१–ह्यादिभिर्योगे सति ईषन्मर्यादायां स्थितयोर्द्वयोर्बहूनामाख्यातानां वा पंचविंशत्यक्षरान्तं द्वात्रिंशदक्षरान्तं चानुदात्तस्वरो भवतीति विधानम्

२२–प्रागुक्तमर्यादास्थानि सर्वाण्यपि आख्यातानि ह्यादीनामन्यतमयोगे सति अनुदात्तानि भवन्ति, इत्यौपशिविमतप्रदर्शनम्

## तृतीयकण्डिकायां विषयाः।

१–६–विनियोगादिषु निमित्तेषु सत्सु पूर्वस्याख्यातस्य न विकारो भवतीति प्रतिपादनम्

७–ह्यादीनामन्यतमस्य योगे परिसमाप्त्यर्थत्वे च सति बहुष्वप्याख्यातेषु येनाख्यातेन तद्योगस्तस्याख्यातस्यानुदात्तो भवति, न समीपवर्तिनामन्येषामाख्यातानाम्। इति ह्याद्यन्वयाख्यातस्यानुदात्तत्वविधानं तदितरेषामाख्यातानामनुदात्तत्वनिषेधकरणं च

८–आख्यातसम्बन्धे सति यदजाद्यल्पाच्कं च द्विरुक्तं पदं तत्र यदेवाल्पाच्कं तस्य प्रकृतिस्वरकथनम्

९–अनाख्यातसम्बन्धे सति अजादि अनजादि च समसंख्यमात्रं यत् द्विरुक्तं पदं तत्र पूर्वं पदं प्रकृतिस्वरवदेवेति निरूपणम्

१०–नामाख्यातोपसर्गनिपातात्मकं चतुर्विधं पदं मन्त्रे यथार्थं स्वरतो विद्यमानं तद्ब्राह्मणे मन्त्रस्वराद्विपर्यस्तस्वरं भवति, इत्येतत्प्रतिपादनम्

११–ह्रस्वस्य दीर्घस्य च कण्ठ्यस्याकारस्य सवर्णे परे सति 'अर्' इत्यागमविधिनिरूपणम्

१२–स्वरयोरन्तरा वर्तमानस्य वकारस्य लोपो भवतीतिं प्रतिपादनम्

१३–उक्ताभ्यां स्वरसंस्कारनियमाभ्यामन्योऽनुक्तः स्वरसंस्कारनियमः व्याकरणप्रातिशाख्यादेः सामान्यशास्त्राद्बोध्य इति निरूपणम्

१४–अ, इ, उ, ऋ, ऌ, इत्येतेषां पञ्चानां वर्णानां प्रत्येकं अष्टादश भेदाः। ए, ऐ, ओ, औ, एतेषां चतुर्णां सन्ध्यक्षराणां ह्रस्वाभावात् द्वादशैव भेदा इत्यादिनिरूपणम्

१५–ताण्डिनां भाल्लविनां च ब्राह्मणस्वरः शतपथवत् इति प्रतिपादनम्

१६–२५–"सप्त साम्नाम्" इत्यारभ्य–"निषादः सर्वत इति" इत्यन्तायां दशसूत्र्यां सामगानस्वरविधानम्

२६–चरकाणां ब्राह्मणस्वरे तन्मन्त्रसमाम्नायस्वरातिदेशविधानम्

२७–चरकभेदानां खांडिकेयानां औखीयानां च ब्राह्मणे उदात्तोऽनुदात्तः स्वरितः प्रचितश्चेति चातुःस्वर्यं, क्वचित् त्रैस्वर्यमप्येतन्निरूपणम्

२८–उक्तव्यतिरिक्तानामन्येषामाश्वलायनादीनां ब्राह्मणे तानः स्वर एवेति विधानम्

२९–षडंगानां षडुपांगानां च तानः स्वर एवेति विधानम्

इति त्रिकण्डिकभाषिकसूत्रोक्तानां विषयाणाम् अनुक्रमणिका समाप्ता।

श्रीशः शरणम् ।

# भाषिकसूत्रविषये किञ्चिदावेदनम् ।

अयि विज्ञाः पाठकमहाभागाः ! भवद्भ्यस्ते सभाष्यं सस्वरं समग्रं शतपथब्राह्मणं विन्यस्तम् । तस्य चाध्ययनाध्यापनं सस्वरमेवापेक्ष्यते । अन्यथा "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति । अत्र च मन्त्र इति पदं ब्राह्मणस्याप्युपलक्षणं वेदैकदेशत्वाद्ब्राह्मणस्येति । एवं च पाणिनीयशिक्षया दर्शितया दिशाऽर्थान्तरसंभावनेन महती विपदापद्येत । किं बहुना स्वरसमुदायो वेदस्य वेदत्वावेदकः । तथाच ज्ञापितं पूर्वतन्त्रे कल्पसूत्राधिकरणे श्रीजैमिन्यृषिणा "प्रयोगशास्त्रमिति चेन्नासन्नियमात्" ( जै. सू. १ । ३ । ४ ) "असन्नियमात्स्वरैरन्निबद्धत्वात्" इति हि तद्व्याख्याने श्रीशबरस्वामी व्याख्यत् । एतेनैतदुक्तं भवति—यत्र स्वरनिबद्धत्वं तत्रैव वेदत्वं, यत्र च तदभावस्तत्र वेदत्वाभावः । अनया चान्वयव्यतिरेकव्याप्त्या स्वरसंबद्धत्वं वेदत्वावेदकमिति सिध्यति ।

किञ्च स्वरसमुदायो वेदस्य सम्पद्रूपः । दर्शितं च स्वयं शतपथश्रुत्या "श्रीर्वै स्वरः" (श. प. ११।४।२।१०) अत्र सायणः "( यः ) उदात्तादिलक्षणः 'स्वरः' सः 'श्रीर्वै' वेदवाक्यस्य सम्पद्रूपः" इति व्याचचक्षे । शतपथब्राह्मणस्य स्वरसम्पत्तेर्यथार्थावबोधकं चैतद्भाषिकं सूत्रम् ।

अमुष्य सभाष्यभाषिकसूत्रस्य प्राथमिकं मुद्रणं काशीस्थचौखम्बासंस्कृतसीरिजुयन्त्रालये सम्पन्नम् । परन्तत्र सूत्रभाष्योदाहरणानां मध्ये 'अन्यद्नुक्तमन्यद्वान्तम्' इव परस्परासम्बद्धता मर्मस्पृशा दृशा पश्यद्भिः प्रतिपदं स्पष्टैव प्रतिपद्यत एवेति । ततो नितरामुद्विग्नमानसा वयमजस्रं श्रममधिष्ठाय सूत्रभाष्यानुसारिणीं सरणिमुदाहरणानां यथाबोधं निर्देष्टुमुरीकृतयत्नाः कियतीं सफलतामुपगता इति सानुग्रहं समीक्षणेनैवास्य जानीयुस्तत्त्वविदो जनाः ।

तस्य भाषिकसूत्रस्य चाध्ययनमध्यापनं शतपथब्राह्मणसमकालमेव विधेयम् । अतस्तदन्त इदं भाषिकसूत्रं श्रीमदनन्तदेवभाष्यसंवलितं संगृह्यते । तस्माच्च यथावत्स्वरज्ञानं सम्पाद्य स्वरसहितं शतपथब्राह्मणं पठन्तु पाठयन्तु च विज्ञाः पाठकमहाभागा इति तान्सम्प्रार्थये ।

विद्वद्वशंवदः—

कल्याणनगर्याम्
द्वि. श्रा. शु. १९ भौमे.
शके १८९१

श्रीक्षेत्रनासिकनिवासी वारेइत्युपाह्वः
वैदिकतिलकश्रीमदण्णाशास्त्रिसूनुः
**श्रीधरशर्मा.**

॥ श्रीशः शरणम् ॥

अथ श्रीमन्महर्षिकात्यायनप्रणीतं

## अनंतदेवीयभाष्ययुतं

# भाषिकपरिशिष्टसूत्रं प्रारभ्यते ।

वन्दे विष्णुं सदानन्दं भक्तकल्पमहीरुहम् । यच्छायामाश्रितैर्लभ्यं नरैरर्थचतुष्टयम् ॥ १ ॥
कुपिताहिफणाच्छाया समीकृत्यापरं सुखम् । सेवन्ते तत्पदं धीरास्तमनन्तं भजेऽन्वहम् ॥ २ ॥
याज्ञवल्क्यं मुनिं नत्वा कात्यायनमुनीनपि । व्याख्यास्ये भाषिकं सूत्रं कात्यायनमुनीरितम् ॥ ३ ॥
मन्त्रलक्षणभिन्नत्वाच्छतपथब्राह्मणस्य तु । तल्लक्षणाय मुनिना प्रणीतं भाषिकं खलु ॥ ४ ॥

तस्येदमादिमं सूत्रं–

## अथ ब्राह्मणस्वरसꣳस्कारनियमः ॥ १ ॥

अथशब्दस्यानन्तर्यमर्थः । अथ मन्त्रलक्षणप्रणयनानन्तरं शतपथब्राह्मणस्वरसंस्कारनियमः क्रियत इति सूत्रशेषः । मन्त्रलक्षणानन्तर्यं चैतस्य भाषिकलक्षणस्य सूत्रकारप्रस्थानादेव ज्ञायते । तथा हि वक्ष्यति "जात्याभिनिहितक्षैप्रप्रश्लिष्टाश्च" ( भा. सू. १।१० ) इति सूत्रेण पूर्वसिद्धं जात्यादिकमनूद्य भाषिकसंज्ञाम्, तथा "स्वरितानुदात्तौ च" ( भा. सू. १।१४ ) इति सूत्रेण पूर्वसिद्धौ स्वरितानुदात्तावनूद्य ब्राह्मणे उदात्तं विधास्यति । तेन तदुपजीव्यत्वात्तदानन्तर्यमेतस्य साधूक्तम् ॥ १ ॥

## द्वौ ॥ २ ॥

ब्राह्मणे–उदात्तानुदात्तौ द्वावेव स्वरौ वेदितव्यौ ॥ २ ॥

## उक्तो मन्त्रस्वरः ॥ ३ ॥

ननु–मन्त्रलक्षणे प्रातिशाख्यस्य द्वितीयाध्यायादौ स्वरनियमस्याभिहितत्वान्नेदमारब्धव्यम्, निराकांक्षत्वादित्यत आह–**उक्तो मन्त्रस्वर** इति । न च–पूर्वोक्तेनेदमन्यथासिद्धम्, पूर्वोक्तलक्षणस्य मन्त्रविभागविषयत्वात् । अतो नैराकांक्ष्याभावाद्वक्तव्यमेवेदम् । किंच "कण्ठ्य ऋकारे ह्रस्वम्" ( प्राति. सू. ४।४९ ) इति विद्यमाने **यत्किञ्चर्त्तुषु क्रियते** ( मा. श. प. ब्रा. ११ । २ । ७ । २ ) **तथर्षीणां तथा मनुष्याणाम्** ( मा. श. प. ब्रा. १४ । ४ । २ । २१ ) इति । तथा–"यवयोः पदान्तयोः स्वरमध्ये लोपः" ( प्राति. सू. ४.१२९ ) इति सूत्रे विद्यमाने **इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति** ( मा. श. प. ब्रा. १४ । ६ । ९ । ३ ) इति । तथा–**नियुद्भिर्वायविह ता विमुञ्चेति** ( मा. श. प. ब्रा. ४।४। १ । १९ ) इत्येवमादौ संस्कारवैलक्षण्यदर्शनाच्चारब्धव्यमेवेदम् ॥ ३ ॥

---

१–प्रातिशाख्यस्यादिमे सूत्रे मन्त्रब्राह्मणोभयसाधारणच्छन्दःपदोपादानस्वरसाद्भाषिकस्यादिमे सूत्रे वेदैकदेशवचनब्राह्मणपदोपादानस्वरसाच्चैतद्भाषिकं प्रातिशाख्यस्य परिशेषभूतमिति प्रतीयते । ततश्चास्याध्ययनं प्रातिशाख्यस्याध्ययनानन्तरं कर्तव्यमित्यवबोध्यम् ॥

## तेनात्र सिद्धम् ॥ ४ ॥

ननु—'उक्तो मन्त्रस्वरः' इति न वक्तव्यम् । प्रकृते प्रयोजनाभावादित्यत आह—**तेनात्र सिद्धम्**—इति । तेन मन्त्रस्वरलक्षणेन सिद्धं स्वरमनूद्यात्र शतपथब्राह्मणे स्वरलक्षणं प्रणीयत इति सूत्रशेषः ॥ ४ ॥

### अथ भाषिकसंज्ञाप्रक्रियालक्षणसूत्राणि ।

तत्रादौ संज्ञोच्यते—

## उदात्तानुदात्तौ भाषिकस्तत्संधिः ॥ ५ ॥

उदात्तश्चानुदात्तश्चेत्युदात्तानुदात्तौ पूर्वं कथितौ तयोः संधिस्तत्संधिरेकवर्णरूपः स भाषिकसंज्ञः स्यात् । संज्ञाप्रयोजनमुत्तरत्र ( भाषि. सू. १ । १३ ) भविष्यति । यथा—**अर्य्यमा । आयुः । मा नो मित्रो वरुणोऽ अर्य्यमाऽऽयुः** ( मा. श. प. १३।५।१।१७ ) तथा—**भासा । अन्तरिक्षम् । भासाऽन्तरिक्षमा पृण** ( मा. श. प. ९ । २ । ३ । ३४ ) तथा—**गह्वरेष्ठा । उग्रम् । गह्वरेष्ठोग्रम्** । ( क. श. प. ब्रा. ) इत्यादि स्वबुद्ध्या ज्ञेयम् । उदात्तग्रहणं किं ? **बुद्ध्यस्व । अग्ने । उद्बुद्ध्यस्वाग्ने**—( मा. श. प. ८ । ६ । ३ । २३ ) अत्र द्वयोरनुदात्तयोर्भाषिकसंज्ञा मा भूदिति । अनुदात्तग्रहणं किं ? **न । अप । स्वर्य्यन्तो नापेक्षन्ते** ( मा. श. प. ब्रा. ९।२ । ३ । २७ ) अत्र द्वयोरुदात्तयोर्भाषिकसंज्ञा मा भूदिति । उदात्तानुदात्तौ किं ? **जातवेदः । अवाट् । त्वमग्नऽईळितो जातवेदोऽवाट्** ( कण्व. श. प. ) अत्रानुदात्तोदात्तसंधित्वान्न भाषिकसंज्ञा । संधिरिति किं ? **ध्रुवा । असदन् । ध्रुवाऽअसदन्निति** ( मा. श. प. १ । ३ । ४ । १६ ) **का । ईम् । काऽईमरे पिशङ्गिलेति** ( मा. श. प. १३ । ५ । २ । १८ ) अत्र—असंधित्वान्न भाषिकसंज्ञा ॥ ५ ॥

अथेह कथं भवितव्यम्—**उद्दिवꣳ स्तभानान्तरिक्षम्** । ( मा. श. प. ब्रा. ३ । ६ । १ । १५ ) इत्यादावित्यत आह—

## अनुदात्तावन्तरेणोदात्तः ॥ ६ ॥

अनुदात्तोदात्तयोः पूर्वमेकादेशः तस्मिन्सति—" उदात्तवानुदात्तः " ( प्राति. सू. ४ । १३२ ) इत्युदात्त एव तत्र भवतीति सूत्रकृदेकादेशसंधिर्भाषिकसंज्ञो भवतीत्युक्तवान् ॥ ६ ॥

### अथ भाषिकसंज्ञाया अपवादसूत्राणि ।

एवं भाषिकसंज्ञामुक्त्वा कचिदपवादमाह—

## आप्रपूर्व आख्यातपरो न ॥ ७ ॥

आप्र—उपसर्गौ पूर्वौ यस्य स आप्रपूर्वः । आख्यातं परं यस्य सः आख्यातपरः । आप्रपूर्व आख्यातपर उदात्तानुदात्तसन्धिर्भाषिकसंज्ञो न स्यात् । यथा—**आ । अप्राः । आप्रा द्यावापृथिवी** ( मा. श. प. ब्रा. ४ । ३ । ४ । १० ) **प्र । उक्षामि । अग्नये त्वा जुष्टं प्रोक्षामीति** ( मा. श. प. ब्रा. १ । १ । ३ । ११ ) **प्र । अर्प्पयतु । सविता प्रार्प्पयत्विति** ( मा. श. प. ब्रा. १ ।७। १।४ ) आप्रपूर्व इति किं ? **ध्रुवा । असि । ध्रुवाऽसीति** ( मा. श. प. ब्रा. ७ । ४ । २ । ५ ) **पूषा । असि । पूषाऽसीति** ( मा. श. प. ब्रा. १४ । २ । १ । ९ ) **यन्ता । असि । यन्ताऽसि** ( मा. श. प. ब्रा. ९ ।३।३।११ ) **कृता । असि । स्वधया कृताऽसीति** ( मा. श. प. ब्रा.६।६।२।६ )

आख्यातपर इति किं ? आ । अयम् । आयं गौः पृश्निरक्रमीत् (मा. श. प. ब्रा. २।१।१०।२९) आ । इदम् । आहेदमगन्म (मा. श. प. ब्रा. ३ । १ । १ । ११) प्र । इषे । प्रेषे भगाय (मा. श. प. ब्रा. ३ । ४ । ३ । २१) अत्र न निषेधः ॥ ७ ॥

## समासश्चानाख्यातपरोऽपि न ॥ ८ ॥

चकार आप्रयोरुपसर्गयोरनुकर्षणार्थः । आप्रपूर्वः समासश्च अनाख्यातपरोऽपि न भाषिकसंज्ञः स्यात् । अनाख्यातग्रहणं—आख्याताधिकारनिवृत्त्यर्थम् । अपिशब्द आख्यातपरो यदि समासे दृश्यते सोऽपि न भाषिकसंज्ञः स्यादित्येतदर्थः । आ । इष्टाः । एष्टा रायः (मा. श. प. ब्रा. ३ । ४ । ३ । २१) आ सम्यक् इष्टा एष्टा इति समासः । आ । इष्टयः । एष्टयो नाम (मा. श. प. ब्रा. ९ । ४ । १।१२) । प्र । इद्धः । प्रेद्धोऽअग्ने (मा. श. प. ब्रा. ९ । २ । ३ । ४०) प्र । इत्यै । आ । इत्यै । प्रेत्याऽएत्यै (मा. श. प. ब्रा. ८ । १ । ४ । ८) समास इति किं ? आ । इदम् । एदम्बर्हिर्निषीदत (कण्व. श. प. ब्रा.   ) प्र । इषे । प्रेषे भगाय (मा. श. प. ब्रा. ३। ४ । ३ । २१) इति ॥ ८॥

## अपूर्वश्च समासो नैव ॥ ९ ॥

अ इति—ह्रस्वाकारो गृह्यते । तथा च—अकारः पूर्वो यस्य सन्धेः सोऽयमपूर्वः । तादृशसमाससंधिर्न भाषिकसंज्ञः स्यात् । विश्व—आयुः । सर्व—आयुः । स नो विश्वायुः सप्रथाऽइति स नः सर्वायुः सप्रथाऽ इति (मा. श. प. ब्रा. १४ । ३ । १ । १८) विश्वं—आयुर्यस्येति बहुव्रीहिसमासः । तथा—शत—आयुषम् । शतायुषं कृणुहि चीयमानः (मा. श. प. ब्रा. ७ । ५ । २ । १७) चित्र—ऊतयः । चित्रोतयो वामजाताः (मा. श. प. ब्रा. ७ । ३ ।१।३१) । वृद्ध—आयुम् । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः (मा. श. प. ब्रा. ३ । ६ । १ । २४) अपूर्व इति किं ? दिवि—इव । दिवीव चक्षुराततम् (मा. श. प. ब्रा. ३ । ७ । १ । १८) ह्रस्वपूर्व इति किं ? माता—इव । मातेव पुत्रम्पृथिवी (मा. श. प. ब्रा. ७ । १ । १ । ४३) पिता—इव । स नः पितेव सूनवेऽग्ने (मा. श. प. ब्रा. २ । ३ । ४ । ३०) वस्ना—इव । वस्नेव विक्रीणावहै (मा. श. प. ब्रा. २ । ५ । ३ । १७) समास इत्यनुवर्तमाने पुनः समासग्रहणं—अकारपूर्वसंधिमात्रप्रतिपत्त्यर्थम् । तेन—इह—इह । इहेहैषां कृणुहि भोजनानि (मा. श. प. ब्रा. ९ । ५ । ४ । २४) इत्यादि सर्वमुदाहरणं ज्ञातव्यम् । नशब्द एवशब्दश्चानवधारणार्थौ । नेवै वाऽइदमग्रेऽसदासीन्नेव सदासीत् (मा. श. प. ब्रा. १० । ३ । ५ । १) नेत्यनुवर्तमाने पुनर्नेति वचनमुत्तरत्र प्रतिषेधनिवृत्त्यर्थम् । इति ॥ ९ ॥

## जात्याभिनिहितक्षैप्रप्रश्लिष्टाश्च ॥ १० ॥

चशब्दो भाषिकसंज्ञानुकर्षार्थः । जात्यादयश्चत्वारः स्वरिता भाषिकसंज्ञाः स्युः । तल्लक्षणानि तु पूर्वमेवाभिहितानि । "एकपदे नीचपूर्वः सयवो जात्यः" (प्राति. सू. १।१११) "एदोद्भ्यामकारो लुगभिनिहितः"

---

१—समासश्चात्र आपूर्वः प्रपूर्वः सुबन्तेन कृदन्तेन वा सह मन्तव्यः ॥

२—अस्योदाहरणमन्वेष्टव्यम् ॥

३—नेत्युदात्तम् । इवेत्यनुदात्तम् । तत्सन्धिर्भाषिक इति यावत् ।

( प्राति. सू. १।११४ ) " युवर्णौ यवौ क्षैप्रः " ( प्राति. सू. १।११५ ) " इवर्ण उभयतो ह्रस्वः प्रश्लिष्टः " ( प्राति. सू. १।११६ ) इति । क्रमेणोदाहरणानि तत्र जात्यो यथा—धान्यमसि धिनुहि ( मा. श. प. ब्रा. १।२।१।१८ ) भूर्भुवः स्वारिति तया समृद्ध्याऽऽशिषमाशास्ते सुप्रजाः ( मा. श. प. ब्रा. २।३।५।१ ) अभिनिहितो यथा—प्रसुवेऽश्विनोर्बाहुभ्याम् ( मा. श. प. ब्रा. १।१।२ । १७ ) पूष्णेऽग्नये स्वाहेति ( मा. श. प. ब्रा. ३ । १ । ४ । १४ ) वेदोऽसि येन त्वम् ( मा. श. प. ब्रा. १।९।२।२३ ) कोऽसि कतमोऽसि ( क. श. प. ब्रा. ) क्षैप्रो यथा त्र्यंबकं यजामहे ( मा. श. प. ब्रा. २।६।२।१२ ) द्वन्द्वः सर्पिरासुतिरिति (मा. श. प. ब्रा. ६।६।२।१४) इत्यादि । प्रश्लिष्टो यथा सगुम्थेऽ आङ्गिरस्वदभीन्धनामुखे ( मा. श. प. ६।५।४।५ ) दिवीव चक्षुराततम् ( मा. श. प. ब्रा. ३ । ७ । १ । १८ ) जात्यक्षैप्रयोः " स्वरितानुदात्तौ च " ( भाषि. सू. १।१४ ) इत्यनेनैवोदात्तत्वे सिद्धेऽपि पुनर्ग्रहणं पूर्वस्य निघातसिद्ध्यर्थम्[1] । अभिनिहितप्रश्लिष्टयोस्तूदात्तानुदात्तसंधित्वाद्भाषिकसंज्ञायां प्राप्तायां अन्यत्र भाषिकसंज्ञाया अनित्यत्वज्ञापनार्थं पुनर्ग्रहणम । तेनात्र न संभवति । सविताऽसि सत्यप्रसवऽ इति ( मा. श. प. ब्रा. ५ । ४ । ४ । ९ ) इत्था हि सोमऽइन्मदेऽविताऽसि सुन्वतो वृक्तबर्हिषऽइति ( मा. श. प. ब्रा. १३।५।१।९ ) आहमजानि गर्भधम् ( मा. श. प. ब्रा. १३।२।८।५ ) इति ॥ १० ॥

## उतो यो मो नो सो च ॥ ११ ॥

उतो यो मो नो सो इत्येतेषां पंचानामोकारो भाषिकसंज्ञः स्यात् । यथा—एतन्नमस्करोत्युतो तद्‌ध्रुवे नमः ( मा.श.प.ब्रा.९।१।१।१४ )—यो मम तनूरेषा सा त्वयि ( मा.श.प. ब्रा.३।४।३।९ ) मोऽहं तव वीर्यं विदेय ( मा. श. प. ब्रा. ३ । ३ । १ । १२ ) नोऽएवासाधुना कनीयान् ( क. श. ब्रा. ) सोऽदेशोऽभवत् ( कण्व. श. प. ब्रा. ) इति ॥ ११ ॥

## ओश्चैकेषाम् ॥ १२ ॥

ओँकारश्च केवलो भाषिकसंज्ञः स्यात्, एकेषामाचार्याणां मतेन । एकशब्दोऽत्रैकदेशवचनो, न मुख्यवचनः । तेन कण्वाचार्यमते न भाषिकसंज्ञ इत्यर्थः । यथा—सप्तदशाऽअग्नयोऽ३ श्रावयेति ( कण्व श. प. ब्रा. ) बोधयतातिथिँसोऽअस्मिन् ( कण्व. श. प. ब्रा. ) एकेषां किं ? काण्वानां मा भूदिति । ता वाऽएताः पञ्च व्याहृतय ओ३ श्रावयास्तु श्रौषड् यज येयजामहे वौषट् ( कण्व. श. प. ब्रा. ) इति ॥ १२ ॥

### अथ भाषिकसंज्ञाप्रयोजनप्रकरणम् ।

अथेदानीं भाषिकसंज्ञाप्रयोजनमाह—

## उदात्तमेतत् ॥ १३ ॥

यदेतत् " उदात्तानुदात्तौ " ( भाषि. सू. १ । ४ ) इत्यादिप्रबंधेन भाषिकसंज्ञमुपक्रान्तं तदुदात्तं

---

१—निघातो नाम—अनुदात्त इत्यर्थः ।

स्यात्-ब्राह्मणे । यथाक्रममुदाहरणानि । यथा-मा नो मित्रो वरुणोऽअर्य्यमाऽऽयुः ( मा. श. प. ब्रा. १३ । ५ । १ । १७ ) मासाऽन्तरिक्षमा पृण ( मा. श. प. ब्रा. ९ । २ । ३ । ३४ ) चित्रा माहं वृणे सुमतिम् ( मा. श. प. ब्रा. ९ । २ । ३ । २८ )-सिंहं सेमं पात्वंहसः ( मा. श. प. ब्रा. १२ । ७ । ३ । २१ )-धान्यमसि धिनुहि ( मा. श. प. ब्रा. १ । २ । १ । १८ )-भूर्भुवः स्वरिति तया समृद्ध्याऽऽशिषमाशास्ते सुप्रजाः ( मा. श. प. ब्रा. २ । ३ । ५ । १ )-प्रसवेऽश्विनोर्बाहुभ्याम् ( मा. श. प. ब्रा. १ । १ । २ । १७ )-वेदोऽसि येन त्वम् ( मा. श. प. ब्रा. १ । ९ । २ । २३ )-त्र्यम्बकं यजामहे ( मा. श. प. ब्रा. २ । ६ । २ । १२ )-द्रवन्नः सर्पिरासुतिरिति ( मा. श. प. ब्रा. ६ । ६ । २ । १४ )-अङ्गिरस्वदभीन्धता-मुखे ( मा. श. प. ब्रा. ६ । ५ । ४ । ५ ) इति ॥ १३ ॥

## स्वरितानुदात्तौ च ॥ १४ ॥

मन्त्रविषये यौ स्वरितानुदात्तावुक्तौ तावपि शतपथब्राह्मणे उदात्तौ स्तः । तत्र स्वरितो यथा-अथैनां वाचयत्यक्रन्कर्म्म कर्म्मकृत इति ( मा. श. प. ब्रा. २ । ५ । २ । २९ )-वाजेवाजेऽवत वाजिनो नः ( मा. श. प. ब्रा. ५ । १ । ५ । २४ )-अग्ने नय सुपथा रायेऽअस्मान् ( मा. श. प. ३ । ६ । ३ । ११ )-एष ते रुद्र भागऽआखुः । ( मा. श. प. ब्रा. २ । ६ । २ । १० )-एष ते निर्ऋते भागस्तञ्जुषस्व । ( मा. श. प. ब्रा. ५ । २ । ३ । ३ )-सह वाचा मयोभु-र्वेति । ( मा. श. प. ब्रा. २ । ५ । २ । २९ ) इति ॥ १४ ॥

## उदात्तमनुदात्तमनन्त्यम् ॥ १५ ॥

मन्त्रधर्मेण यदुदात्तमभिहितं तच्छतपथब्राह्मणेऽनुदात्तं स्यात् । अनन्त्यम्-अन्ते स्थितमन्त्यं तद्वर्ज्यमन-न्त्यम् । अनवसितमित्यर्थः । यथा-इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति । ( मा. श. प. ब्रा. ४ । ५ । ८ । १० )-स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त । ( मा. श. प. ब्रा. ३ । ३ । १ । ११ )-चक्षुर्म्मित्रस्य वरुणस्याग्नेः । ( मा. श. प. ब्रा. ४ । ३ । ४ । १० )-विश्वानि देव वयुनानि विद्वान् । ( मा. श. प. ब्रा. ३ । ६ । ३ । ११ )-विश्वजगदभिपिरवे मनीषा । ( कण्व. श. प. ब्रा. ) इति ॥ १५ ॥

## अन्त्यᳪ सᳪहितानाम् ॥ १६ ॥

द्वयोर्बहूनामुदात्तानामेकत्र युक्तानां पौर्वापर्येणावस्थितानां मध्ये यदन्त्यमुदात्तं मन्त्रे[1], तद्ब्राह्मणेऽनुदात्तं स्यात् । पूर्वेषामुदात्तानां स्वरविशेषानुपदेशान्मन्त्रस्वर एव भवति । यथा-आब्रह्मन्ब्राह्मणः । ( मा. श. प. ब्रा. १३ । १ । ९ । १ )-व्रते तवानागसोऽअदितये स्यामेति । ( मा. श. प. ब्रा. ६ । ७ । ३ । ८ )-लाजी३ञ्छाची३न्यव्ये गव्यऽ इति । ( मा. श. प. ब्रा. १३ । २ । ६ । ८ )-आ या द्यामभास्या पृथिवीम् । ( मा. श. प. ब्रा. ८ । ७ । ३ । १३ )-अग्ने युक्ष्वा हि ये तव । ( मा. श. प. ब्रा. ७ । ५ । १ । ३३ ) इत्यादि विवेक्तव्यम् ॥ १६ ॥

---

१-मन्त्रे मन्त्रसमाम्नाये संहितायामित्यर्थः ।

अथेदानीं भाषिकसंज्ञे परे विशेषमाह–

## भाषिके चोभयेषाम् ॥ १७ ॥

" उदात्तानुदात्तौ भाषिकस्तत्सन्धिः "–( भाषि. सू. १ । ४ ) इत्यादिना भाषिक उक्तः । तस्मिन्परे–उभयेषामुदात्तानामनुदात्तानां चानुदात्त एव स्यात् । तत्रोदात्तानां यथा–**चित्राम्माहं व्वृणे सुमतिम्** । ( मा. श. प. ब्रा. ९।२।३।३८ )–**सिꣳहः सेमं पातुꣳहसः** । ( मा. श. प. ब्रा. १२।७।३ । २१ ) **भ्रासान्तरिक्षमापृण** ( मा. श. प. ब्रा.९।२।३।३४ ) **मा नो मित्रो व्वरुणोऽ अर्य्यमाऽऽयुः** ( मा. श. प. ब्रा. १३।१।१।१७ ) **धान्यमसि धिनुहि** ( मा. श. प. ब्रा. १ । २ । १ । १८ ) **पवित्रे स्थो व्वैष्णव्याविति** ( मा. श. प. ब्रा. ११।३।१ ) **अभित्यन्देवꣳ सवितारमोण्योः** ( मा. श. प. ब्रा. ३।३।२।१२ ) **तास्वेनं व्वाचयति निग्ग्राभ्या स्थ** ( मा. श. प. ब्रा.३ । ९ । ४ । ७ ) **पयस्या बृहस्पतये** ( कण्व. श. प. ब्रा. ) **स्तऽउषस्याः** ( कण्व. श. प. ब्रा. ) इत्यादि । मन्त्रलक्षणेनानुदात्तत्वे सिद्धेऽपि पुनरनुदात्तादिविधानं " स्वरितानुदात्तौ च " ( भाषि. सू. १।१४ ) इत्यस्यापवादार्थम् ॥ १७ ॥

## एकस्यापि ॥ १८ ॥

एकशब्दोऽत्र उक्तान्यवचनः । आभ्यामेक इतिवत् । तदन्यश्च स्वरित एव । तथा चोदात्तानुदात्ताभ्यामेकोऽन्यः स्वरितस्तस्यापि भाषिके परेऽनुदात्तादेशः स्यात् । यथा-**नमो भूत्यै येदं चकारेति** ( मा. श. प. ब्रा. ७।२।१।१७ ) **एष्टा रायः प्रेषे भगाय** ( मा. श. प. ब्रा. ३।४।३।२१ ) **भूर्भुवः स्वरिति** ( मा. श. प. ब्रा. २।३।९।१ ) स्वरितस्योदात्तानुदात्तोभयसम्प्रयोगे जाते " भाषिके चोभयेषाम् " ( भाषि. सू. १।१७ ) इत्यनेनैव निघाते सिद्धेऽपि यदारभ्यते पुनस्तद्भाषयति निहन्यमानोऽपि केनचित्प्रकारेण केनचिन्निमित्तेनायं स्वरित एवेति[2] ॥ १८ ॥

किमेतस्य ज्ञापने प्रयोजनमित्युच्यते–

## स्वरितस्य चाभिनिहितत्वम् ॥ १९ ॥

स्वरितस्वरस्य भाषिकस्याभिनिघातः स्यात् । एवं निघातेऽपि सति स्वरितत्वं स्वरितस्य चाभिनिहितत्वम् । अभिनिहितस्य भाषिकसंज्ञा भवतीति भावः । यथा **प्प्रसवेऽश्विनोर्बाहुभ्याम्** ( मा. श. प. ब्रा. १।१।२।१७ ) **प्पृष्ठऽइत्यस्यै ह्येनं प्पृष्ठऽआधत्तेऽग्निमन्नादमन्नाद्यायादधऽइति** ( मा. श. प. ब्रा. २।१।४।२८ ) **सरस्वत्यै पूष्णेऽग्नये स्वाहेति** ( मा. श. प. ब्रा. ३।१।४।९ ) इति ॥ १९ ॥

## तेषां च प्रागुत्तमादनन्तराणां च कम्पनम् ॥ २० ॥

तेषां च प्रागुक्तानां बहूनां पौर्वापर्येणावस्थितानामुत्तमात्पूर्वेषामनन्तराणां जात्यन्तरेणाव्यवहितानामनुदात्तानां कम्पनं स्यात् । कम्पनं नाम–अनुदात्तादपि–अनुदात्तत्वम् । यथा–**प्प्रतिष्ठापयति स्वर्ण्णार्कः स्वाहेति**

---

१–' चित्रामाहम् ' इत्यत्र ' आ–अहम् ' इति संधौ भाषिके परे ' त्रा ' इत्यस्यानुदात्तत्वम् ।

२–अन्यस्यापि निघातेन स्वरितनिघातेन स्वरितनिघातः । ततो भाषिकसंज्ञालाभः । तेन स्वरितेऽपि परे पूर्वस्यानुदात्तताश्रयणमिति भावः । निघातोऽनुदात्त इति नर्थान्तरम् ॥

( मा. श. प. ब्रा. ९ । ४ । २ । १९ । २० )-ग्रुदैवोदेत्यथ ब्रुसन्तः ( मा. श. प. ब्रा. २ । २ । ३ । ९ )-अुद्धा हि तद्यन्मुन्त्रोऽद्धा तद्युदात्मा ( मा. श. प. ब्रा. २।३।१।२९ )-आदित्यो हु त्वेवैषोऽग्निश्चितः ( मा. श. प. ब्रा. १० । ९ । ४ । ४ )-सैषा त्रुय्येव विद्या तपति ( मा. श. प. १० । ३ । ४ । २ )-एवुम्वेकेष्टकः ( मा. श. प. ब्रा. १० । ३ । ४ । २२ )-सोऽनुवीक्ष्यु नान्युदात्मुनोऽपश्यत् ( मा. श. प. ब्रा. । १४ ।४ । २ । १ ) इत्यादि ॥ २० ॥

## उदात्तपूर्वस्यानुदात्तस्य च ॥ २१ ॥

उदात्तः पूर्वो यस्यानुदात्तस्य सोऽयमुदात्तपूर्वः । तादृशानुदात्तस्य भाषिके परे कम्पनं स्यात् । यथा- किञ्चन-आममुत् । मा भेर्म्मा रोङ्मो च नः किञ्चनाममदिति ( मा. श. प. ब्रा. ९ । १ । १ । २४ ) द्याम् । उुत । इुमाम् । स दाधार पृथिवीन्द्यामुतेमामिति ( मा. श. प. ब्रा. ७ । ४ । १ । १९ ) इति ॥ २१ ॥

## उदात्तपूर्वस्य स्वरितस्यापि च ॥ २२ ॥

उदात्तः पूर्वो यस्य स्वरितस्य स उदात्तपूर्वः । तादृशस्य स्वरितस्यापि भाषिके परे कम्पनं स्यात् । अनुदात्ततरत्वं भवतीत्यर्थः । यथा-नमो भूत्यै येदं चकारेति ( मा. श. प. ब्रा. ७ । २ । १ । १७ )- एष्टा रायः प्रेषे भगाय ( मा. श. प. ब्रा. ३ । ४ । ३ । २१ ) इति ॥ २२ ॥

## अत्रान्त्यस्योदात्तस्यानुदात्ततांप्रत्येके विवदन्ते ॥ २३ ॥

इति श्रीभगवतः कात्यायनस्य कृतौ भाषिकपरिशिष्टसूत्रे प्रथमा कण्डिका परिसमाप्ता ॥ [ १ ]

अत्रान्त्यस्योदात्तस्य सतः-अनुदात्ततां प्रत्येके आचार्या विवदन्ते । एकशब्दोऽत्र मुख्यवचनः । तेन काण्वानां मतमिदमिति गम्यते । यथा-" तस्मात्कुर्य्यद्वैतस्य पुरुषस्य बाहू " ( कण्व. श. प. ब्रा. ) रोचुनाऽस्य प्राणादपानुती ( कण्व. श. प. ब्रा. ) इत्यादि ॥ २३ ॥

इति श्रीकण्वशाखिनागदेवसुतश्रीमदनन्तदेवविरचिते भाषिकपरिशिष्टसूत्रभाष्ये प्रथमा कण्डिका परिसमाप्ता ॥ [ १ ]

---

अथ द्वितीया कण्डिका ।

अथ मन्त्रगतानामाख्यातानां स्वरविकारप्रकरणम् ।

## अथाख्यातपदविकरणाः ॥ १ ॥

आख्यातं च तत्पदं चेति विग्रहः । तस्य विकरणा विकाराः आख्यातपदविकरणाः । के पुनस्ते ? " हि " ( भाषि. सू. २ । ४ ) इत्यादयो वक्ष्यमाणाः । अथशब्दोऽत्राधिकारान्तरज्ञापनार्थः । ब्राह्मणाधिकारो निवृत्तः । अथेदानीं मन्त्रलक्षणसमाम्नाये आख्यातपदविकरणा व्याख्यायन्ते । आख्यातपदलक्षणमन्यत्रोक्तं-" क्रिया

---

१-अनया कण्डिकया शतपथब्राह्मणे मन्त्रगतपदेषु स्वरप्रक्रिया प्रदर्शितेति ध्येयम् ॥

वाचकमाख्यातं लिंगतो न विशिष्यते । त्रीनत्र पुरुषान्वक्ति कालतस्तु विशिष्यते " इति । कः पुनराख्यातपदस्य विकारः ?। (मन्त्रे) अनाख्यातात्परस्याख्यातपदस्यानुदात्तत्वमविकारः । शेषो विकारः । ननु—प्रातिशाख्ये एव—" प्रकृत्याऽऽख्यातमाख्यातपूर्वम् " ( प्राति. सू. ६ । ११ ) इति प्रकृत्य—आख्यातपदविकरणमुक्तम् । एवं सति हि पुनर्वचनमनर्थकमिति चेदत्रोच्यते । तत्राभिनिहितेभ्योऽधिका एव वक्तव्याः । ते यदि शुद्धा अभिधीयेरँस्तदाऽभिनिहितानां परिसंख्यानमाशंक्येत । अतस्तद्दोषं परिजिहीर्षुराचार्योऽभिनिहितानभिनिहितसाधारणलक्षणं करोति स्म ॥ १ ॥

## अर्थादिः ॥ २ ॥

अर्थस्यादिरर्थादिः । अर्थादौ वर्तमानमाख्यातमनुदात्तं विकारं प्राप्नोति । यथा—**भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यः** । (मा. श. प. ब्रा. १४ । ४ । १ । ८ )—**सन्त्येव घृतस्तोकाऽइव त्वत्** । (मा. श. प. ब्रा. १ । ६ । ३ । ९ )—**स्याद्वेव प्रायश्चित्तिः** । ( मा. श. प. ब्रा. ) **भवति ह्यस्य सुवर्णम्** । ( मा. श. प. ब्रा. १४ । ४ । १ । २ ) इति ॥ २ ॥

## पादादिः ॥ ३ ॥

पादस्यादिः पादादिः । पादादौ विद्यमानमाख्यातं विक्रियते । यथा—**ददातु । ददातु दैव्यो जनः** ( मा. श. प. ब्रा. २ । ६ । १ । ३९ ) । तथा—**अगन्महि । अगन्महि मनसा सं शिवेन** । ( मा. श. प. ब्रा. १ । ९ । ३ । ६ ) । **योजं । योजा न्विन्द्र ते हरीऽइति** । ( मा. श. प. ब्रा. २ । ६ । १ । ३८ ) इति ॥ ३ ॥

## हि ॥ ४ ॥

'हि' शब्दात्परमाख्यातं विक्रियते । यथा—**आपो हि ष्ठा मयोभुवऽ इति** ( मा. श. प. ब्रा. ६ । ९ । १ । २ ) **वि हीमिद्रोऽअख्यदिति** । ( मा. श. प. ब्रा. ६ । ७ । २ । २ )—**शिरो हि प्रथमं जायमानस्य जायते** । ( मा. श. प. ब्रा. ८ । २ । ४ । १८ ) 'हि' शब्दात्पूर्वमपीति वक्तव्यम् । **इन्दवो वामुशन्ति हि** । ( मा. श. प. ब्रा. ४।१।३।१९ ) इति ॥ ४ ॥

## हन्त ॥ ५ ॥

'हन्त' शब्दात्परमाख्यातं विक्रियते । यथा—**हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति** । ( मा. श. प. ब्रा. १४ । ८ । ३ । २ )—**हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि** । ( मा. श. प. ब्रा. १४ । ६ । ८ । १ )—**हन्तैनमब्रह्मोद्यमाह्वयामहऽइति** । ( मा. श. प. ब्रा. ११ । ६ । २ । ९ )—**हन्तास्येन्द्रियं वीर्यꣳ सोमपीथमनाद्यꣳ हराणीति** । ( मा. श. प. ब्रा. ) अत्र परत्वमर्थतो द्रष्टव्यम् ॥ ५ ॥

---

१-लिंगमिति संख्याया अप्युपलक्षणम् । तिङर्थकर्त्रादिगता हि संख्या क्रियां न विशिनष्टि, किन्तु कालमेव । तदुक्तं हरिणा—" क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका " इति । क्रियाभेदाय- क्रियां भेत्तुं विशेषयितुं स्वेन रूपेण रूपणीयं कर्तुं, कालस्तु—काल एव न संख्यादिः । सर्वस्येति क्रियाभिन्नस्य नामार्थस्येत्यर्थः । कालस्त्विति तुना संख्याकृतक्रियाभेदनस्य व्यावर्तनादिति ॥

## नत् ॥ ६ ॥

'नेत्' इत्यस्मात्परमाख्यातं विक्रियते । यथा–नेत्त्वदपचेतयाताऽइति । ( मा. श. प. ब्रा. १ । ८ । ३ । २२ )–नेदन्योऽन्यᳪं हिनसातऽइति । ( मा. श. प. ब्रा. १ । १ । ४ । २० )–नेदतिरेचयानीति । ( मा. श. प. ब्रा. १०।४।१।१९ ) इति ॥ ६ ॥

## कुवित् ॥ ७ ॥

'कुवित्' इत्यस्मात्परमाख्यातं विक्रियते । यथा–कुविदङ्ग यवमन्तो यवश्चिद्यथा दान्ति । ( मा. श. प. ब्रा. ९ । ५ । ४ । २४ )–कुविन्मे पुत्रमवधीदिति । ( मा. श. प. ब्रा. ९ । ४ । ४ । ७ )–कुविन्मेऽनुपहूतः सोममबभक्षदिति । ( मा. श. प. ब्रा. १।६।३।८ ) इति ॥ ७ ॥

## अह ॥ ८ ॥

'अह' इत्यस्मात्परमाख्यातं विक्रियते । यथा–नक्षत्रमाहास्य भवति ( मा. श. प. ब्रा. ) अन्नमहैतस्य भवति ( मा. श. प. ब्रा. ) इत्यादि ॥ ८ ॥

## समुच्चये ॥ ९ ॥

समुच्चयार्थाच्चकारात्परमाख्यातं विक्रियते । यथा–शर्म्म च स्थो वर्म्म च स्थऽ इति ( मा. श. प. ब्रा. ६ । ४ । १ । १० ) सुक्ष्मा चासि शिवा चासीति ( मा. श. प. ब्रा. १ । २ । ५ । ११ ) इति ॥ ९ ॥

## आमन्त्रितसस्वरम् ॥ १० ॥

स्वरेण सह वर्तत इति सस्वरम् । आमन्त्रितं च तत्सस्वरं च आमन्त्रितसस्वरम् । आद्युदात्तमित्यर्थः । आमन्त्रितसस्वरात्परमाख्यातं विक्रियते । यथा–मघवन्वन्दिषीमहि ( मा. श. प. ब्रा. २ । ६ । १ । ३८ ) अग्ने सख्वा हि ये तव ( मा. श. प. ब्रा. ७ । ९ । १ । ३१ ) अग्ने भरन्तु चित्तिभिरिति ( मा. श. प. ब्रा. ६ । ८ । १ । ७ ) अग्ने नय सुपथा राये ( मा. श. प. ब्रा. ३ । ६ । ३ । ११ ) अग्ने पवस्व स्वपाऽ अस्मे ( मा. श. प. ब्रा. ४ । ५ । ४ । ९ ) इत्यादि ॥ १० ॥

## जिज्ञासितम् ॥ ११ ॥

ज्ञातुमिष्टं जिज्ञासितम् । जिज्ञासितमाख्यातं विक्रियते । यथा–कथमस्यैषा वसोर्द्धारा सम्वत्सरमग्निमाप्नोति ( मा. श. प. ब्रा. ९ । ३ । ३ । १८ ) कथम्महतोक्थेन सम्पद्यते ( मा. श. प. ब्रा. ९ । ३ । ३ । १९ ) इति ॥ ११ ॥

## विचारितम् ॥ १२ ॥

विचारविषयकमाख्यातं विक्रियते । यथा–अधः स्विदासी३दुपरि स्विदासी३त ( कण्व. श. प. ) तदाहुः कथं कुर्य्यादिष्वा यज्ञपथाग्रजेता ३ न यजेता ३ इति ( मा. श. प. ब्रा. ११ । १ । ५ । ४ ) इति ॥ १२ ॥

## अवधारितम् ॥ १३ ॥

अवधारणार्थकमाख्यातं विक्रियते । यथा–**यजेत हैव न ह्यन्यदपक्रमणं भवति** ( मा. श. प. ब्रा. ११ । १ । ९ । ४ ) इति ॥ १३ ॥

## यद्योगः ॥ १४ ॥

यच्छब्दस्य योगो यद्योगः । स च यच्छब्दः सर्वप्रत्ययान्तो गृह्यते । यद्योगे सत्याख्यातं विक्रियते । यथा–**द्विषा यद्जय स्पृधऽइति** ( मा. श. प. ब्रा. १२ । ७ । ३ । ४ )–**योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मऽइति** ( मा. श. प. ब्रा. ३ । ८ । ९ । ११ )–**यत्रा नियुद्भिः सचसे शिवाभिः** ( कण्व. श. प. ब्रा. )–**यतरा नौ दवीयः परापश्यात्** ( मा. श. प. ब्रा. ) **यतरो वै संयत्तयोः पराजयते** ( मा. श. प. ब्रा. १ । ९ । ३ । ६ )–**यतरद्यत्स्वस्ति** ( मा. श. प. ब्रा. )–**यतरथा कामयते** ( मा. श. प. ब्रा. )–**यतमथा कामयेत** ( मा. श. प. ब्रा. )–**यादृशाद्वै जायते** ( मा. श. प. ब्रा. ) इत्यादि ॥ १४ ॥

## विनियोगः ॥ १५ ॥

विनियोगार्थमाख्यातं विक्रियते । विनियोगो नाम-मन्त्रादित्वदेवतादित्वपदार्थादित्वात्मकः । यथा–**स वा इन्द्राग्निभ्यामुपदधाति** ( मा. श. प. ब्रा. ८ । ३ । १ । ४ )–**विश्वकर्म्मणाऽऽसादयति ।** ( मा. श. प. ब्रा. ८ । ३ । १ । ४ )–**तूष्णीं दर्भस्तम्बमुपदधाति** ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–**यजुषाऽभिजुहोति** ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–**तूष्णीमुदचमसान्निनयति** ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–**यजुषा वपति** ( मा. श. प. ब्रा. ७ । २ । ४ । २९ ) इत्यादि ॥ १५ ॥

## वाक्यशेषः ॥ १६ ॥

वाक्यशेषो यस्मिन्नाख्यात उपलभ्यते तदाख्यातं विक्रियते । यथा–**अथ प्रातराग्नेयः पुरोडाशो भवत्यैन्द्रꣳ सान्नाय्यम्** ( मा. श. प. ब्रा. २ । ४ । ४ । १२ )–**द्वावुत्तरस्यां वेद्यां पादौ भवतो द्वौ दक्षिणस्याम्** ( मा. श. प. ब्रा. १२ । ८ । ३ । ६ )–**चितो गार्हपत्यो भवत्यचितऽआहवनीयः** ( मा. श. प. ब्रा. ७ । २ । ९ । १ ) इति ॥ १६ ॥

## अनुबन्धः ॥ १७ ॥

अनुबध्यतेऽनेनेत्यनुबन्धः । आख्यातार्थस्य नित्यतां यः शब्दो ब्रवीति सोऽनुबन्धः । तस्मात्परमाख्यातं विक्रियते । यथा–**श्वः श्वः श्रेयान्भवति** ( मा. श. प. ब्रा. २ । २ । २ । १९ ) इतिकरणमाख्याताधिकारसमाप्त्यर्थम् । एवं यत्र यत्र समाम्नाये आख्यातविकारो दृश्यते तत्र तत्र तथैव द्रष्टव्यं न्यायसाम्यात् । यथा–**इमम्मे वरुण श्रुधी हवम्** ( कण्व. श. प. ब्रा. ) इति ॥ १७ ॥

---

१–इदमुदाहरणं चिंत्यम् ॥

## एत आषोडशाक्षरात्पदं विकुर्वन्ति ॥ १८ ॥

एते 'हि' शब्दादय आषोडशाक्षरादाख्यातपदं विकुर्वन्तीति आषोडशादभिविधिर्मर्यादा वा । तमेवारभ्य—आषोडशाक्षरात् यथालाभमुदाहरणानि दीयन्ते । **हन्तास्येन्द्रियं व्वीर्यं सोमपीथमन्नाद्यं हराणीति** ( मा. श. प. ब्रा. ) **स यो हैवमेतं सम्वत्सरमध्यात्मं प्रतिष्ठितं व्वेद** ( मा. श. प. ब्रा. १२।२।४।१६ ) **नेदतिरेचयानीति** ( मा. श. प. ब्रा. १०।४।१।१९ ) **नेत्त्वदपचेतयाताऽइति** ( मा. श. प. ब्रा. १।८।३।२२ ) इति ॥ १८ ॥

## आपञ्चविंशादिति भारद्वाजः ॥ १९ ॥

ह्यादय आरभ्य—आपञ्चविंशादक्षरादाख्यातपदं विकुर्वन्तीति भारद्वाज आचार्यो मन्यते । यथा **येना नः पूर्वे पितरः पदज्ञाऽ अर्चन्तोऽ अङ्गिरसो गाऽअविन्दन्** ( कण्व. श. प. ब्रा. ) **यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति** ( कण्व. श. प. ब्रा. ) इति ॥ १९ ॥

## आद्वात्रिंशादित्यौपशिविः ॥ २० ॥

ह्यादय आरभ्य आद्वात्रिंशादक्षरादाख्यातपदं विकुर्वन्तीत्यौपशिविराचार्यो मन्यते । यथा—**स यो हैवमेतं सप्तदशं प्रजापतिमधिदैवतं चाध्यात्मं च प्रतिष्ठितं व्वेद** ( मा. श. प. ब्रा. १२।२।३।४ ) इति ॥ २० ॥

## आमर्यादास्थयोः पदयोर्बहूनां च पूर्वपदं विक्रियते ॥ २१ ॥

मर्यादा त्रिविधा—षोडशाक्षरा, पञ्चविंशत्यक्षरा, द्वात्रिंशदक्षरा, इति । तत्र षोडशाक्षरा प्रधानाऽप्रतिहता । पञ्चविंशत्यक्षरायां, द्वात्रिंशदक्षरायां वा पक्षे विक्रियते । पाक्षिकत्वादपरिपूर्णे इतरे मर्यादे । अत्राङ्—ईषदर्थे वर्तते । आमर्यादा ईषन्मर्यादेत्यर्थः । आमर्यादायां तिष्ठत इत्यामर्यादास्थे । तयोरामर्यादास्थयोराख्यातयोः पूर्वमाख्यातपदं पञ्चविंशत्यक्षरान्तं द्वात्रिंशदक्षरान्तं वा विक्रियते । ह्यादिभिर्योगे सतीत्यनुवर्तते । तत्र द्वयोर्यथा—**स यत्सायमस्तमिते जुहोत्यग्नयेवैभ्यऽएतत्प्रविष्टेभ्यो जुहोति** ( मा. श. प. ब्रा. २।३।१।९ )—**अथ यत्प्रातरनुदिते जुहोत्यस्य रसस्य जीवनस्य देवेभ्यो जुहवानि** ( मा. श. प. ब्रा. २।३।१।१२ ) बहूनामाख्यातानां यथा—**स यत्सायमस्तमिते जुहोति गर्भमेवैतत्सन्ततमभिजुहोति गर्भं सन्ततमभिकरोति** । ( मा. श. प. ब्रा. २।३।१।४ )—**अथ यत्प्रातरनुदिते जुहोति प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमानऽउदेतीति** । ( मा. श. प. ब्रा. २।३।१।९ ) इति ॥ २१ ॥

## सर्वाणीत्यौपशिविः ॥ २२ ॥

**इति श्रीभगवतः कात्यायनस्य कृतौ भाषिकपरिशिष्टसूत्रे द्वितीया कण्डिका परिसमाप्ता ॥ ( २ )**

---

१ अनया कण्डिकया शतपथे मन्त्रगतानामाख्यातानां स्वरविकारप्रक्रिया प्रदर्शितेत्यवबोध्यम् ॥

अत्र सर्वाण्यपि—आमर्यादास्थितान्याख्यातपदानि ह्यादियोगे विक्रियन्ते, इत्यौपशिविराचार्यो मन्यते । यथा—यस्मिन्नर्द्धे यजन्ते तेषां वाऽ उन्नेतोत्तमो दीक्षते प्रथमोऽवभृथादुदायतामुदैति । ( मा. श. प. ब्रा. १२ । १ । १ । ९–१० )–ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् । ( मा. श. प. ब्रा. ४ । २ । २ । ९ ) इति ॥ २२ ॥

इति श्रीकण्वशाखिनागदेवसुतश्रीमदनन्तदेवविरचिते भाषिकपरिशिष्टसूत्रभाष्ये द्वितीया कण्डिका परिसमाप्ता ॥ ( २ )

---

अथ तृतीया कण्डिका ।

अथ प्रागुक्ताख्यातविक्रियापवादकसूत्राणि ।

## विनियोगे तु पूर्वपदम् ॥ १ ॥

विनियोगेऽर्थे गम्यमाने पूर्वमाख्यातं विक्रियते नोत्तरम् । तुशब्दोऽवधारणे । यथा—तूष्णीं दर्भस्तम्बमुपदधाति यजुषाऽग्निर्जुहोति । ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–तूष्णीमुदचममुन्निनयति यजुषा वपति । ( मा. श. प. ब्रा. ७ । २ । ४ । २९ )–स वाऽइन्द्राग्निभ्यामुपदधाति विश्वकर्म्मणाऽऽसादयति । ( मा. श. प. ब्रा. ८ । ३ । १ । ४ ) इति ॥ १ ॥

## जिज्ञासितयोश्च ॥ २ ॥

जिज्ञासितयोराख्यातयोः पूर्वमाख्यातं विक्रियते नोत्तरम् । यथा—जुहवानी ३ मा हौषा ३मिति ( मा. श. प. ब्रा )–कथमस्यैतत्कर्म्म सम्वत्सरमग्निमाप्नोति कथꣳ सम्वत्सरेणाग्निना सम्पद्यते ( मा. श. प. ब्रा. ६ । २ । २ । ३१ ) इति ॥ २ ॥

## अनन्तर्हितयोश्च ॥ ३ ॥

अनन्तर्हितं भिन्नजातीयेनाव्यवहितमित्यर्थः । अनन्यजातीययोराख्यातयोः पूर्वमाख्यातं विक्रियते, न द्वितीयम् । यथा पुरुषꣳ ह नारायणं प्रजापतिरुवाच यजस्व यजस्वेति ( मा. श. प. ब्रा. १३ । ३ । ४ । १ ) अथ यज यजेत्येवोत्तरानाह ( मा. श. प. ब्रा. १।९।३।८ ) इति ॥३॥

## विचारितसमुच्चितयोश्च ॥ ४ ॥

विचारिते समुच्चिते चेति द्वन्द्वसमासः । विचारार्थकयोः समुच्चयार्थकयोश्चाख्यातयोः पूर्वं विक्रियते, न द्वितीयम् । तत्र विचारार्थकयोर्यथा—यजेदाज्यभागौ ना ३ इति यजेता ३ नु यजेता ३ इति ( मा. श. प. ब्रा. ) समुच्चयार्थकयोर्यथा—शर्म्म च स्थो वर्म्म च स्थऽइति ( मा. श. प. ब्रा. ६ । ४ । १ । १० )–सुक्ष्मा चासि शिवा चासीति ( मा. श. प. ब्रा. १ । २ । ५ । ११ ) इति ॥ ४ ॥

## निर्वचनेऽनूबन्धो वाक्यशेषोऽवध्यर्थश्चावधारणो न विकुरुत इति भारद्वाजः ॥ ५ ॥

निर्वचनं नाम—अन्वाख्यानम्। तच्च विधिरूपेण वा, अनुवादरूपेण वा पूर्वपदस्यान्वाख्यानमित्यर्थः। अनुबध्यत इत्यनूबन्धः। पुनः पुनरावर्तनमित्यर्थः। अनूबन्ध इत्यत्र—अन्येषामपि दृश्यते (पाणि. सू. ६।३। १३७) इति पाणिनीयसूत्रेण दीर्घता। निर्वचनेऽनूबन्धो वाक्यशेषो यस्मिन्नाख्याते तदाख्यातं न विकुरुत इति भारद्वाजाचार्यो मन्यते। तथा—अवध्यर्थो योऽवधारणो यस्मिन्नाख्याते दृश्यते तदपि न विक्रियत इति भारद्वाजो मन्यते। अवधिरत्र कालविशेष उच्यते। विनियोगो वाक्यशेष इति प्राप्तापवादोऽयम्। क्रमेणोदाहरणानि। देवा दीक्षां निरमिमतादित्यै प्रायणीयम् (मा. श. प. ब्रा. १२।१।२।१)—इत्यग्रे कृषत्यथेति (मा. श. प. ब्रा. ७।२।२।१४) भारद्वाजोक्तेर्न विक्रियते वा। बस्ताजिने पुष्टिकाममभिषिञ्चे-त्कृष्णाजिने ब्रह्मवर्चसकाममुभयोरुभयकाममिति (मा. श. प. ब्रा. ९।३।४।१४) इति प्रथमस्योदाहरणम्। द्वितीयस्योदाहरणं यथा—एवमेव माध्यन्दिने सवनेऽगृहीतऽ एवैतस्मादच्छा-वाकायोत्तमो ग्रहो भवत्यथ तृतीयं वसतीवरीणामवनयति (मा. श. प. ब्रा. ४। २।३।९) इति ॥ ५ ॥

## भूयोवादी वरीयोवादी कनीयोवादी चानवधारणाः ॥ ६ ॥

भूयो बहुतरं वदतीति भूयोवादी। वरीयो गुरुतरं वदतीति वरीयोवादी। कनीयोऽल्पतरं वदतीति कनीयो-वादी। एते भूयोवाद्यादयः अनवधारणाः कार्यकारिणो न स्युः। भूयोवाद्यादयः परभूतमाख्यातं न विकुर्वन्ती-त्यर्थः। क्रमेणोदाहरणानि। तस्य भूयो भूय एव तेजो भवति (मा. श. प. ब्रा. २।२।२। १९)—पुरः परऽएव वरीयस्तपो भवति (मा. श. प. ब्रा. ३।४।४।२७)—कनीयः कनीयस्तेजो भवति (मा. श. प. ब्रा. २।२।२।१९) अनुबन्ध इति प्राप्तस्यापवादकमेतत्। नेत्यनुवर्तमाने पुनरनवधारणार्थ इति नञ्—अत्रानित्यत्वसूचनार्थः। तेन शाखान्तरे पूर्वोक्तोदाहरणे आख्यातपदं विक्रियते, इत्यपि गम्यत इति। अनवधारणा इति किं? अन्यत्रापि यत्र विकारो दृश्यते तत्रानवधारणेऽपि सति विकारो मा भूदिति। यथा—एवꣳ हैनꣳ सऽउद्दीपयति (मा. श. प. ब्रा. २।२।२।१९)—एवꣳ हैव श्रिया यशसा भवति (मा. श. प. ब्रा. )—एवꣳ हैनꣳ स जासयति (मा. श. प. ब्रा. २।२।२।१९)—एवꣳ हैव कीर्त्या यशसा श्रिया श्वः श्वः श्रेयान्भवति (कण्व. श. प. ब्रा. ) इत्यादि ॥ ६ ॥

## परिसमाप्त्यर्थश्चान्यतमो ह्यादीनां न विकरोति ॥ ७ ॥

'हि, हन्त' इत्यादयो विकारकारिण इत्युक्तम्। क्वचित्तस्यायमपवादः। ह्यादीनां मध्येऽन्यतम एकतमः परिसमाप्त्यर्थश्चेदाख्यातं न विकरोति। बहुष्वप्याख्यातेषु येनाख्यातेन सम्बध्यते तदेवाख्यातं विक-रोति। समीपस्थितान्यप्यन्याख्यातानि न विकुर्वन्ति। तस्मिन्नेव स्वसम्बद्धाख्याते परिसमाप्त्यर्थत्वात्। यथा—किꣳ हि हरेद्यदन्तरिक्षꣳ हरामि दिवꣳ हरामीति हरेत। (मा. श. प. ब्रा. १।२।४। १९) हन्तास्यै प्रतिष्ठां कल्पयानीति स श्रियꣳ ससृजे। (मा. श. प. ब्रा. १४। ९।४।२)—नेद्धन्योऽन्यꣳ हिनसानीति। (मा. श. प. ब्रा. )—स त्वष्टा चुक्रोध कुविन्मे पुत्रमवधीदिति। (मा. श. प. ब्रा. ५।५।४।७) इत्यादि ॥ ७ ॥

---

१—तदपि—आख्यातमपीत्यर्थः।

## यमपदयोः स्वराद्योरल्पस्वरतरं प्रकृत्या ॥ ८ ॥

द्विरुक्तं पदं यमपदमित्युच्यते । स्वर आदिर्ययोः पदयोरस्ति ते स्वरादी । अतिशयेनाल्पाः स्वरा यत्र पदे दृश्यन्ते तदल्पस्वरतरमिति विग्रहः । स्वराद्ययोर्यमपदयोर्मध्ये यदल्पस्वरतरं तत्प्रकृत्या स्यात् । अत्र सूत्रे तरग्रहणं तुल्यसंख्येष्वपि मात्राधिक्याद्युत्तरस्य नाल्पस्वरत्वमिति भावः । यथा—**तदेकैकमेवेमाँल्लोकान्सन्तनोति** । ( मा. श. प. ब्रा. १ । ३ । ५ । १५ )—**एकैकयैवेमाँल्लोकान्त्स्पृणुते** । ( मा. श. प. ब्रा. १ । ३ । ५ । १५ )—**तस्मादेकैकमेवानवानन्ननुब्रूयात्** । ( मा. श. प. ब्रा. १ । ३ । ५ । १५ ) । अत्र पूर्वस्यैकशब्दस्योत्तरैकशब्दापेक्षया मात्राल्पत्वात्प्रकृतिस्वरत्वं ज्ञेयम् । अत्रैका चैका चेति समासे सति " **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** "—( पाणि. सू. ६ । ३ । ३४ ) इति व्याकरणसूत्रेण टाब्लोपे पूर्वस्यैकशब्दस्यैकमात्रत्वमुत्तरस्य द्विमात्रत्वमिति विवेकः । यमाख्यातप्रसंगादनाख्यातयमार्थोऽयमारम्भः ॥ ८ ॥

## स्वराद्यस्वराद्योश्च सममात्रयोः पूर्वन्नेष्टमिति भारद्वाजः ॥ ९ ॥

स्वर आदिर्ययोः पदयोस्ते स्वरादी तादृशे ये न भवतस्ते अस्वरादी । चकारः समुच्चयार्थः । समाः मात्रा ययोस्ते सममात्रे । स्वराद्योरस्वराद्योश्च सममात्रयोर्यमपदयोर्मध्ये पूर्वपदं प्रकृतिस्वरं नेष्टमिति भारद्वाजो मन्यते । अस्वरादिसममात्रार्थोऽयमारम्भः । तत्र स्वराद्योः सममात्रयोर्यथा—**उपोपेद्नु मघवन्** । ( मा. श. प. ब्रा. २ । ३ । ४ । ३८ ) अस्वराद्योः सममात्रयोर्यथा-**प्रप्राग्यमग्निर्भरतस्य शृण्वऽ इति** । ( मा. श. प. ब्रा. ६ । ८ । १ । १४ )—**सꣳ समिद्युवसे वृषन्** । ( कण्व. श. प. ब्रा. ) सममात्रयोः किं ? उप—उत । उपोत । प्र—प्रति । प्रप्रति इति ॥ ९

## यथार्थं चतुर्विधं पदं विपर्यस्तम् ॥ १० ॥

नामाख्यातोपसर्गनिपातरूपं चतुर्विधं पदं यथार्थं मन्त्रे स्वरतो यद्व्याख्यातं तद्ब्राह्मणे स्वरतो विपर्यस्तं स्यात् । स च विपर्यासो व्याख्यातः पूर्वत्र भाषिके । " उदात्तमेतत् "—" स्वरितानुदात्तौ च "—" उदात्तमनुदात्तमनन्त्यम् "—" अन्त्यꣳ सꣳ हतानाम् "—" भाषिके चोभयेषाम् "—( भाषि. सू. १ । १३–१७ ) इति ॥ १० ॥

इति ब्राह्मणस्वरनियमप्रकरणम् ॥

---

१—अत्रेदं बोध्यम् । यत्—विच्छिन्नपाठे खण्डशः पदविच्छेदे च ब्राह्मणस्वरेणैव पाठः । न मन्त्रस्वरेण इत्येवमर्थकं वेदं सूत्रम् । यथा—**ईशानो रुद्रऽ ऊर्ध्वा व्युच्छन्ति**—( मा. श. प. ब्रा. ६ । ७ । २ । २ ) इति । मन्त्रदशायामन्त्योदात्ते ब्राह्मणदशायां सर्वोदात्तता । **यज्जुहुयात्क्षिप्रं यजमानमृतम्**—( मा. श. प. ब्रा. ) इत्यत्र जुहुयादिति पदं सर्वोदात्तम् । **यजमानꣳ स्वर्गँल्लोकमभिवहति** । ( मा. श. प. ब्रा. ११ । ४ । १ । १६ ) इत्यत्राभिरुपसर्गोऽविच्छिन्नः न सर्वोदात्तः । **स वै प्रातरप्ऽ एव** । ( मा. श. प. ब्रा. १ । १ । १ । १२ ) इत्यत्र विच्छिन्नः 'वै' इति निपात उदात्तः इति । " मन्त्रस्वरबहिर्भूतपदे स्वरनिरूपणम । पाणिनिप्रातिशाख्याभ्यां भवेच्छाखान्तरात्तथा ॥ १ ॥ " इति । अत्र स्वरपदं संस्कारस्याप्युपलक्षणम् । " कण्ठ्य ऋकारे ह्रस्वम् " ( प्राति. सू. ४ । ४९ ) इत्यस्य प्रातिशाख्यबाहुलकसूत्रस्यापवादकमेतत्सूत्रमिति ध्येयम् ॥

अथाचसन्धिसंस्कारनियमप्रकरणम् ।

## कण्ठयस्वरोऽर्कृत्सवर्णे ॥ ११ ॥

" अथ ब्राह्मणस्वरसंस्कारनियमः " ( भाषि. सू. १ । १ ) इति प्रतिज्ञातयोः स्वरसंस्कारयोर्मध्ये पूर्वं स्वरनियममुक्त्वा–अथेदानीं संस्कारनियममाह–**कण्ठयस्वरोऽर्कृत्सवर्ण** इति । कण्ठे भवः कण्ठयः । कवर्गादिव्युदासार्थं स्वरग्रहणम् । कण्ठयस्वरः अवर्णो ह्रस्वो दीर्घो वा–अर् स्यात्तदुत्तरेण ऋवर्णेन सह । ब्राह्मणे इत्यनुवर्तते । यथा--**यत्किञ्च–ऋतुषु । यत्किञ्चर्त्तुषु क्रियते ।** (मा.श.प.ब्रा.११।२।७।२)**यत्किञ्च–ऋतसत्याभ्याम् । यत्किञ्चर्त्तसत्याभ्यां जुयश्च सर्वं हैव तज्जयति** ( मा. श. प.ब्रा.११।२।७।९)इत्यादि ह्रस्वोदाहरणम् । दीर्घोदाहरणं यथा-**तथा–ऋषीणाम् । तथर्षीणां तथा मनुष्याणाम्** ( मा. श. प. ब्रा. १४ । ४ । २ । २१ ) **यथा–ऋतुम् । यथर्तुम्प्राप्य** ( मा. श. प. ब्रा. ) कण्ठयस्वर इति किं ? **यदि–ऋकः । यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ** ( मा. श. प. ब्रा. ११ । ९ । ८ । ६ ) सवर्णे किं ? **तम्–ऋतवः । सम्वत्सरो यजमानस्तमृतवो याजयन्ति** ( मा. श. प. ब्रा. ११ । २ । ७ । ३२ ) ब्राह्मणे किं ? **यत्रा सप्तऽ ऋषीन्परऽ एकमाहुः** ( मा. सं. १७ । २६ ) **सप्तऽ ऋषयः प्रतिहिताः** ( मा. सं. ३४ । ५५ ) इति च ॥ ११ ॥

## वकारस्य पदान्तस्य स्वरमध्ये लोपः ॥ १२ ॥

स्वरयोर्मध्ये वर्तमानस्य पदान्तस्य वकारस्य ब्राह्मणे लोपः स्यात् । यथा-**द्वौ–इति । द्वा–इति । कत्येव देवा याज्ञवल्क्येति द्वाऽ इत्योमिति होवाच** ( क. श. प. बृ. १७ । ९ । ९ । १ ) **त्रयस्त्रिंशौ–इति । इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाऽ इति** ( क. श. प. बृ.१७।९।९।२) इति । **वायो–इह । नियुद्भिर्वायऽ इह ता विमुञ्चेति** ( क. श. प. ब्रा. ) इत्यादि । ब्राह्मणे किं ? **नियुद्भिर्वायविह ता विमुञ्च** ( मा. सं. २७ । ३३ ) इति ॥ १२ ॥

## शेषं सामान्यशास्त्रात् ॥ १३ ॥

अत्रोक्तविशेषादन्यच्छेषम् । सामान्यशास्त्राद्वेदाङ्गात्पाणिनीयव्याकरणशास्त्रात्सिद्धमवगन्तव्यमिति सूत्रशेषः । तच **दिविषदन्त्वा नृषदम्** ( क. श. प. ब्रा. ) इत्यादि स्वयमूह्यम् ॥ १३ ॥

अथ स्वरभेदप्रकरणम् ।

इदानीं वर्णधर्मानाह—

## अकारेकारोकारर्कारॢकारा अवर्णधारणाः ॥ १४ ॥

अवर्णस्य धारणा अवर्णधारणाः । अकारश्च, इकारश्च, उकारश्च, ऋकारश्च, ॢकारश्चेति तथेति द्वन्द्वसमासः ।

---

१–इदमुदाहरणं चिन्त्यम् । २–इदं सूत्रं कण्वशाखाभिप्रायिकम् ।

अकारादयः पंचै वर्णा अवर्णधारणाः । अष्टादशधा भिद्यन्ते इत्यर्थः । भेदास्तु—ह्रस्वदीर्घप्लुता इति पूर्वं अकारस्य त्रयो भेदाः, ततस्तेषां ह्रस्वदीर्घप्लुतानामुदात्तानुदात्तस्वरिता इति प्रत्येकं च त्रयो भेदाः, एवं नव भेदाः । इति नवभेदभिन्नः—अकारः सानुनासिकनिरनुनासिकभेदेन द्विधा भिद्यते । इत्यकारस्याष्टादश भेदाः । तथा—इकारोकारऋकारऌकाराणामपि भेदा ज्ञातव्या इति सूत्रार्थः । यच्चापिशलिनोक्तं—" ऋवर्णऌवर्णयोर्दीर्घा न सन्ति " इति तदिह न विद्यत इति । अकारादिपञ्चानां ग्रहणात् ए—ऐ—ओ—औ—इति सन्ध्यक्षराणां ह्रस्वाभावात् द्वादशैव भेदा भवन्तीति ज्ञापितम् ॥ १४ ॥

उक्तलक्षणं प्रसंगादन्यत्राप्यतिदिशति—

## शतपथवत्ताण्डिभाल्लविनां ब्राह्मणस्वरः ॥ १५ ॥

शतपथेन स्वरतस्तुल्यं वर्तन इति शतैपथवत् । "तेन तुल्यं क्रिया चेद्वतिः " ( पाणि. सू. ५।१।११५ ) इति पाणिनीयसूत्रस्मरणात् । ताण्डिभाल्लविनः, ताण्डिनश्च भाल्लविनश्चेति विग्रहः । तेषां शतपथब्राह्मणस्वरः स्यात् । अन्यत्राप्युक्तम् । " द्वितीयप्रथमावेतौ ताण्डिभाल्लविनां स्वरौ । तथा शातपथावेतौ स्वरौ वाजसनेयिनाम् । " इति सामगनारदशिक्षायाम् ॥ १५ ॥

प्रसंगात्सामस्वरमाह—

## सप्त साम्नाम् ॥ १६ ॥

यद्वा वचनं—नान्योऽध्वर्य्योर्गायेत् ( मा. श. ५. ब्रा. ९।१।२।४३ ) इति यजुर्वेदेऽपि सामगानं विहितम् । अतस्तल्लक्षणमुच्यत इति नानुपपत्तिः । यत्तु प्रातिशाख्ये " सप्त " ( प्राति. सू. १ । १२७ ) इति सूत्रेणेदं प्रपञ्चितत्वान्न वक्तव्यमिति । तदपि न तत्र सामान्येनोद्दिष्टानामेष प्रपञ्च इति न कोऽपि क्षुद्रोपद्रवः ॥ १६ ॥

साम्नां सप्त स्वरा इत्युक्तं, ते [illegible] ंक्षायामाह—

## षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाः ॥ १७ ॥

षड्जश्च ऋषभश्चेत्यादिद्वन्द्वसमासः ॥ १७ ॥

प्रसंगात्तेषां स्थानान्याह—

## तेषां योनयः ॥ १८ ॥

तेषां षड्जादिसप्तसामस्वराणां योनयः कारणभूतानि स्थानानि उच्यन्त इति सूत्रशेषः ॥ १८ ॥

---

१—अ-इ-उ-ऋ-ऌ-इत्येते पञ्च वर्णा अवर्णधारणाः स्वरकार्यवर्णप्रपञ्चप्रकृतिभूता इत्यर्थः । तद्यथा—एते पञ्चापि प्रत्येकं—ह्रस्वदीर्घप्लुताः । अन्यत्राप्येवमेव ज्ञेयम् । "आहो विद्वानमुं लोकं प्रेत्या कश्चित् समश्नुते ३ इति" प्लुतत्वमेकारादीनामपि । पञ्चापि—उदात्तानुदात्तस्वरिता मन्द्रमध्यतीव्राश्च नवधा भिद्यन्ते । सानुनासिकनिरनुनासिकत्वेनाष्टादशधा भिन्ना आख्याताः । पञ्चानामप्युपादानं चापिशलिनो मतनिराकरणाय, तन्मते ऋ—ऌ—वर्णयोर्दीर्घता नेति । तदिह निराकृतं सूत्रकृता ऋ—ऌ—वर्णोपादानेन, " ऌकारो दीर्घः " ( प्राति. सू. ८ । ३० ) इति प्रातिशाख्येऽष्टमेऽध्याये वर्णसमाम्नायपाठाच्चेति ।

२—" अथ ब्राह्मणस्वरसंस्कारानियमः " ( प्राति. सू. १ । १ ) इत्यत्राविशेषविधानात्सर्वब्राह्मणेषु प्राप्तेः, शतपथ इत्युपसंहारादासु शाखासु शतपथोऽस्ति, तास्वेवैतदुपदिष्टाः स्वराः । शतपथश्च शताध्यायैः । तद्वत्यश्च शाखाः काण्वमाध्यन्दिनाद्यास्ताण्डिनो भाल्लविनश्च । काण्वानां शतपथस्तु—चतुरधिकशताध्यायैः । शतपथव्यपदेशस्त्वनादी रूढश्च । लागः स्वरः कण्वानां नास्ति ।

विशिष्य तान्येवाह—

**कण्ठात्षड्जः ॥ १९ ॥**

कण्ठस्थानात्षड्जः स्वरोऽभिव्यज्यते ॥ १९ ॥

**शिरस ऋषभः ॥ २० ॥**

शिरःस्थानादृषभोऽभिव्यज्यते ॥ २० ॥

**नासिकाया गान्धारः ॥ २१ ॥**

नासिकास्थानाद्गान्धारोऽभिव्यज्यते ॥ २१ ॥

**उरसो मध्यमः ॥ २२ ॥**

उरःस्थानान्मध्यमोऽभिव्यज्यते ॥ २२ ॥

**उरसः शिरसः कण्ठाच्च पञ्चमः ॥ २३ ॥**

उरःशिरःकण्ठेतिस्थानत्रयात्पञ्चमोऽभिव्यज्यते ॥ २३ ॥

**धैवतो ललाटात् ॥ २४ ॥**

ललाटस्थानाद्धैवतोऽभिव्यज्यते ॥ २४ ॥

**निषादः सर्वत इति ॥ २५ ॥**

निषादः स्वरस्तु—कण्ठादिसर्वस्थानादभिव्यज्यते । इतिशब्दः सामस्वरप्रकरणसमाप्तिज्ञापनार्थः ॥ २५ ॥

प्रसंगात्तैत्तिरीय ब्राह्मणस्वरमाह—

**मन्त्रस्वरवद्ब्राह्मणस्वरश्चरकाणाम् ॥ २६ ॥**

चरकाणां ब्राह्मणस्वरो मन्त्रेण तुल्यो भवति ॥ २६ ॥

तेषामेव विशेषमाह—

**तेषां खाण्डिकेयौखेयानां चातुःस्वर्यमपि क्वचित् ॥ २७ ॥**

तेषां चरकाणां मध्ये खाण्डिकेयानामौखेयानां च ब्राह्मणे चत्वारः स्वरा उदात्तानुदात्तस्वरितप्रचिताख्या भवन्ति । क्वचिद्ग्रहणात्त्रैस्वर्यमपि । अत्र चत्वारः स्वराः समाहृता इति चातुःस्वर्यमिति विग्रहः ॥ २७ ॥

तदन्यशाखिनां ब्राह्मणस्वरमाह—

**तानोऽन्येषां ब्राह्मणस्वरः ॥ २८ ॥**

अन्येषामुक्तव्यतिरिक्तशाखिनामाश्वलायनादीनां तानो ब्राह्मणस्वरो भवति । तान एकश्रुतिरित्यर्थः ॥ २८ ॥

अथाङ्गोपाङ्गानां स्वरमाह—

**तान एवाङ्गोपाङ्गानां तान एवाङ्गोपाङ्गानामिति ॥ २९ ॥**

इति श्रीभगवतः कात्यायनस्य कृतौ भाषिकपरिशिष्टसूत्रे तृतीया कण्डिका परिसमाप्ता ॥ [ ३ ]

इति श्रीमन्महर्षिकात्यायनप्रणीतं भाषिकपरिशिष्टं सूत्रं परिसमाप्तम् ॥

---

१—इतिकरणमधिकारोपसंहारार्थं, न तु चरमत्वद्योतनार्थम् । तथा यदत्राविहितं लक्षणमुदाहरणं लक्ष्यं च तच्छाखान्तरीयप्रातिशाख्यपाणिनीयादिशास्त्रेभ्योऽवगन्तव्यम् ॥ २—चरकाः कृष्णयजुर्वेदे ॥ ३—खाण्डिकेया औखेयाश्चापि कृष्णयजुर्वेदिन एवेति ॥ ४—अत्रत्यादिशब्देन शाकलशाखकाया ग्राह्याः । तेषामैतरेयब्राह्मणब्राह्मणादौ तानकृतानेकस्वरानुभवः सर्वैरनुभूयते ॥

शिक्षा कल्पो व्याकरणं नैरुक्तं छन्दो ज्यौतिषमिति षडंगानि । प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि । तेषामङ्गोपाङ्गानां तान एव तानस्वर एव भवति । द्विरभ्यासः शास्त्रपरिसमाप्त्यर्थः । इतिशब्दः शास्त्रवेदिनामभ्युदयसूचनार्थः ॥ २९ ॥

## तदत्रैते श्लोका भवन्ति ।

उदात्तः स्वर्यते नीचो नीच उच्चस्वरो भवेत् ।
ब्राह्मणस्य स्वरो ह्येष ज्ञायते वेदपारगैः ॥ १ ॥
ऋषिप्रोक्त्यनुसारेण स्वरं ज्ञात्वा द्विजः पठेत् ।
स वेदफलमाप्नोति ह्यन्यथा नरकं व्रजेत् ॥ २ ॥
एकं तु ब्राह्मणं सम्यक्स्वरार्थज्ञानपूर्वकम् ।
योऽधीते वेदवित्स स्यादन्यथा स्थाणुरुच्यते ॥ ३ ॥
अम्बा भागीरथी यस्य नागदेवः पिता सुधीः ।
तेनानन्तेन विवृतं भाषिकं सूत्रमुत्तमम् ॥ ४ ॥
अनेन प्रीयतां देवो रमानाथः सदा मम ।
ब्रह्मादिवन्दितपदो देवदेवशिखामणिः ॥ ५ ॥
वचनप्रसूनमाला याऽनन्ताख्येन सूरिणा रचिता ।
ध्रियतां हृदये सदये कमलामहिलेन पुरुषेण ॥ ६ ॥

इति श्रीकण्वशाखिनागदेवसुतश्रीमदनन्तदेवविरचिते भाषिकपरिशिष्टसूत्रभाष्ये तृतीया कण्डिका परिसमाप्ता ॥

## इति श्रीमदनन्तदेवीयं भाषिकपरिशिष्टसूत्रभाष्यं परिसमाप्तमभूत् ॥

---

१–अत एव श्रीमत्कात्यायनप्रणीतमुख्यपरिशेषभूतसर्वसूत्रेषु तानस्वरपाठो बाध्यः ॥

२–संहितायां यः स्वर उदात्तः स ब्राह्मणेऽनुदात्तो भवति । यश्चानुदात्तः संहितायां स ब्राह्मण उदात्तो भवतीति प्रायिकं तात्पर्यमिति भावः ।

३–वेदफलं वेदपाठजन्यं फलमित्यर्थः ।

THE AITAREYA BRĀHMAṆA

(WITH SUKHRPRDĀ SANSKRIT COMMENARY)

Ed. Ananta Krishna Shastri

The Aitareya Brāhamaṇa belong the Aitareya Āraṇyaka and Aitareya Ūpaniṣad. It is written about 600 B. C. The Aitareya Brāhmaṇa is divided into eight books (Panjikas) each containing five lectures. These are subdivided into 285 Kāṇdas. The work is mostly written in verse and only partly in prose. The first 16 chapters treat of some sacrifice called Agniṣṭoma lasting for one day. The next two chepters speak of Gavamayana which last for whole year. Chapter 19-24 treat of Dvadasha, chapter 25-32 are connected with Agnihotra and the last chapters (33-40) with Sāyaṇa Commentery describe Abhiṣeka ceremony, The thirty eighth chapter describes a supposed consecration of Indra and fortieth chapter refers to the benefit of entertaining a purohita. The longest and the most interesting legend found in the Aitareya Brāhmaṇa is the story of Sunahśepha.

ISBN 81-7081-224-0 (1991)

NAG PUBLISHERS

11A/U. A. Jawahar Nagar, Delhi-7 (India)